

श्रीस्वामिनारायणो जयति ।

# मानमेयप्रकाशिका

( औद्धवसंप्रदायानुसारिविशिष्टाद्वैतप्रकरणम् )

हरिजीवनदासशास्त्रिविरचिता ।

वृत्तालयपाठशालाप्रधानपण्डितेन

अ० भ० अणङ्गराचार्येण संशोधिता ।

सनातनधर्मधुरंधराचार्यश्री

आनन्दप्रसादमहाराजाज्ञया

शा० हरिजीवनदासेन मुद्राप्य प्राकाश्यं नीता ।

सं० २००५. सन १९४९.

निर्णयसागर प्रेस, मुंबई

श्रीस्वामिनारायणो विजयतेतराम्।

# विज्ञप्तिः।

योगिस्वान्तविहारी सहजानन्दो हरिर्जयत्यनिशम्।
रम्यो मुक्तिपथोऽयं प्रवर्तितो येन राजते नितराम्॥

वाङ्मनश्चक्षुरादीनां वाङ्मनश्चक्षुरादिकः।
स्वामिनारायणः सोऽयं भगवान् मे सदा गतिः॥

विदितमेवैतत्सर्वेषां यद्भगवता श्रीस्वामिनारायणेन प्रवर्तितः श्रीमानौद्धवः सम्प्रदायोऽयं वेदादिसच्छास्त्रमूलो विशिष्टाद्वैतावलम्बी विलसतितरां जगतीतले सर्वसम्प्रदायशेखरीभूत इति।

एतत्सम्प्रदायप्रबन्धेषु च शिक्षापत्री-सत्सङ्गिजीवन-हरिवाक्यसुधासिन्धु-प्रभृतिषु मुमुक्षुभिरास्तिकजनैः सर्वैरप्युपजीव्यतमं प्रमाणप्रमेयसर्वतत्त्वविज्ञानं क्लेशतो लब्धव्यं वर्तते सर्वतत्त्वनिरूपकेष्वपि, यतस्तत्र तत्र विप्रकीर्णतया तत्तत्तत्त्वमस्ति निरूपितम्। तच्चिरादियमुत्कण्ठा समनुवृत्ता नाम ममैतत्सम्प्रदायनिष्ठानां बहूनां विदुषामन्येषां च मनसि-सर्वतत्त्वसङ्ग्राहकं प्रकरणं सम्प्रदायस्यास्य किञ्चित्सर्वमूलग्रन्थाऽविसंवादि स्याच्चेद्वरम्, यतः सर्वेषां सर्वतत्त्वसुखग्रहणं सम्पत्स्यत इति। सेयं फलेग्रहिरभूच्छ्रीहरिकृष्णकृपाकटाक्षवीक्षणप्रसरणादधुना प्रकरणस्यास्य मानमेयप्रकाशिकानाम्नः प्रकटीभावतः।

एतत्प्रकरणसम्पादने मया भूतपूर्ववृत्तालयसंस्कृतपाठशालाप्रधानपण्डितानां प्रातःस्मरणीयकीर्तिवैभवानां विद्वद्वरेण्यानां मम विद्यागुरूणां श्रीपम्बार-कृष्णमाचार्याणां वर्तमानप्रधानपण्डितानां च प्रतिवादिभयङ्कराचार्यान्वयसम्भूतानां श्रीमतां अण्णाङ्गराचार्याणां सर्वविधं परिपूर्णं साहाय्यमधिगतमिति कृतज्ञता तेषु मदीया सादरं निवेद्यतेऽत्र।

मुद्रापणे पञ्चप्रकरणस्य धर्मधुरन्धराचार्यवर्यैः श्रीवृत्तालयस्थाचार्यपीठाधीश्वरैः श्री १०८ आनन्दप्रसादमहाराजश्रीश्रीपतिप्रसादमहाराजैः राज्ञा प्रदत्तेयं तेभ्यश्च धन्यवादा भूयांस उपहारीक्रियन्ते मया सादरम्।

मुद्रणकर्मणि पञ्चग्रन्थस्य सम्प्रसक्ते सर्वस्यापि महार्घतया महत्स्वर्थेष्वपि मार्थिकं साहाय्यमनर्घमाविष्कृतवतां सत्सङ्गिश्रेष्ठानां श्रेष्ठिनां—

१ गुलाबदास केवलराम (सुरत)
२ छबीलदास हरगोविंददास ”
३ पा-घेलाभाइ अंबरदास ”
४ धा माणेकचंद माधवजी (मुंबई)

इत्यमीषां च धन्यवादा भूयांसः।

पञ्चप्रकरणसङ्कलनप्रयासं च मदीयं सफलयन्तु सर्वेऽपि प्रेक्षावन्तः सहृदयाः पञ्चग्रन्थसारसङ्ग्रहमेनेनावलोक्येति। ततोऽस्यैतरां परिचर्यया यथाकथा-ञ्चनालया श्रीमद्विशिष्टाद्वैतसिद्धान्तस्य महत्त्व गौरवस्य च सम्प्रदायस्यैतत्प्रक-रणग्रन्थप्रणयनप्रकाशनलक्षणया प्रयासो भूयात्श्रीहरिरिति।

शास्त्री हरिजीवनदासः वडताल

श्रीः ।

जयति भगवान् श्रीवासुदेवः ।

श्रीमते रामानुजाय नमः ।

नमश्च गुरुपरम्पराभ्यः ।

# प्रस्तावना

प्रवृद्धतमसावृते भवपथं श्रितान् मुह्यतो
विलोक्य कृपया प्रदीपमिव सत्प्रमाणत्रयम् ।
विशोध्य वितरन् विभुस्त्रिविधतत्त्वनिर्वाहको
गुरुर्जयति लक्ष्मणो मुनिरसौ सतां सद्गतिः ॥

इह खलु प्राणिनां व्याहारा व्यवहारा वा प्रत्यक्षानुमानव्यपदेशस्मृत्याश्रया चरीवृतति । तथा हि—चक्षुषा तावदवलोकयन् कञ्चनार्थं यदीष्टं तत्साधनं वा तमनुसन्धत्ते तदोपादेयत्वबुद्ध्या प्रवर्तते । यदि वाऽनिष्टं तत्साधनं वा तदा परिहरणीयत्वबुद्ध्या निवर्तते । यदि वोदासीनं तदोपेक्षते । एवमेव रसयन् जिघ्रन् स्पृशन् शृण्वन् वा विषयं तं तं काम्यजातीयमेव पुनः पुनरुपादित्सति, द्वेष्यजातीयं च परिजिहीर्षतीत्यपरोक्षमेतत् । एवमनुकूलप्रतिकूलानुभयात्मना त्रिवर्गेष्विन्द्रियार्थेषु तत्तदैन्द्रियिकप्रत्यक्षप्रयोज्या व्यवहृतिभेदा न शक्या निन्होतुम् ।

एवमेवानुमानाश्रया अपि व्यवहारा बहुलमुपलभ्यन्ते । यथा—सौरभाभिलाषो कश्चिन्मूलं पश्यन् क्वचन चन्दनखण्डं तत्संस्थानस्य सौरभाविनाभावं च स्मरन् सौरभमनुमाय पुरोवर्तिनि प्रवर्तमानो दृष्टः । रसास्वादलम्पटश्च कश्चिन्नवोपनीते कस्मिंश्चित्फलमोदकादौ रूपविशेषं रसविशेषेणाविनाभूतं दृष्ट्वा तदनुमानेन प्रवृत्तः । एकार्थसमवायिलिङ्गकमनुमानमत्र । धूमादिना वह्न्याद्यनुमानं च कार्यलिङ्गकम् । उत्थापितां यष्टिमालोक्य ऊहित्वा मारणं पलायते पशुर्बालको वा । कारणलिङ्गकमिदम् । गाढान्धकारगतः कुड्यान्तरितो वा विलक्षणशब्दप्रयोगतोऽनुमीयते शब्दश्रोता । समवाय्यनुमानमेतत् । शीतत्वेनोष्णत्वेन चोपलभ्यमानः शिलासनादिः स्वसंयुक्तं जलांशमग्न्यंशं वा गमयति । संयोग्यनुमानमत्र । अनुपनिपतितेन च दुर्दिने वर्षापातेन प्रतिबन्धकं वाय्वभ्रसंयो-

गाद्युदयाम् । विरोधिलिङ्गकं चेदम् । त इमे व्यवहृतिभेदप्रयोजका अनुमानभेदा निर्दिष्टा कणभक्षेण 'संयोगि समवाय्येकार्थसमवायि विरोधि च' इति । चकारोऽत्र कार्यकारणलिङ्गकानुमानसमुच्चायकः । 'अनुमाय च गुरोर्ज्ञानवत्त्वं शिष्येणोपसत्तिः क्रियते' इति च श्रीमद्भाष्यकृतः । एवमनुमानाधीनं व्यवहारवैविध्यं निदर्शितम् ।

व्यपदेशः शब्दः । तदाश्रयाश्च व्यवहारा अनन्ता एव । व्युत्पन्नानां तावदाप्तोपदेशत एव अप्रतीतार्थप्रतिपत्तिर्बहुधा दृश्यते । शब्दमूला एव चार्यावर्तैकनिकेतनस्य पाश्चात्यादिदेशगतविशेषप्रतिपत्तयः । शब्दप्रमा हि यत्र चात्र बहूपकरोति । एतत्समानयोगक्षेमश्चाप्यदृश्यानां स्वर्गनरकादिकानामर्थानां सद्भावनिश्चयस्तत्त्वदृङ्महर्षिवचनादिमूलः । ततश्च नास्तिकता न साधीयसी वैदिकेष्वर्थेषु नास्ति कर्म पारलौकिकं नास्ति कर्मफलमिति ।

स्मरणाधीनाश्च व्यवहारा बहवोऽन्वहमनुभूयन्त एव । पूर्वाह्णे नेमकृतं स्मृत्वैव खलु पराह्णे तत्समापनप्रवृत्तिर्दृष्टा । देशान्तरगतमभिमतं वस्तु संस्मृत्य तदाहरणमपि दृष्टम् । प्रतिकूलं चात्मनोऽनुस्मृत्य तत्परिहरणोपायविचारोऽपि दृष्ट इति । चार्वाकोऽपि वराको बहिर्निर्गतो गृहपुत्रकलत्रादि संस्मृत्यैव गृहान् प्रतिनिवर्तत इति स्वमतत्वाविसंवदमानेन तेनापि स्मरणमपि शरणीकरणीयमेव व्यवहारपथ इति स्थितम् ।

तथा च लोकव्यवहारनिर्वाहकाणि प्रमाणानि परिगण्यन्ते श्रुतौ 'स्मृतिः प्रत्यक्षमैतिह्यमनुमानं चतुर्विधम्' इति ।

निःश्रेयसप्रासादारोहणसोपानपर्वाणि च श्रवणमनननिदिध्यासनदर्शनानि शब्दादिप्रभेदा एव । तथाहि—श्रवणं नाम गुरोर्मुखात् मीमांसासंस्कृतश्रुत्यर्थग्रहणं शाब्दबोधात्मकम् । मननं च श्रुत्यनुसारिणीभिः सद्युक्तिभिः श्रुतस्यार्थस्यात्मनि प्रतिष्ठापनमनुमानलक्षणम् । इदं चासम्भावनाविपरीतसम्भावनानिरासोपयोगि । श्रुतप्रतिष्ठापितस्योपास्यार्थस्यानवरतभावना निदिध्यासनम् । इदं च स्मृतिसन्ततिरेव । प्रेमपूर्वं क्रियमाणमिदमेव भक्तिशब्दवाच्यम् । 'स्नेहपूर्वमनुध्यानं भक्तिः' इत्यभिधानात् । भवति च स्मृत्यभ्यासात्स्फुटावभासः । यद्यपि स्मृतिरेव भवति लौकिकविषयिताशालिनी भावनाप्रकर्षत । अथ सा दर्शनशब्दमुख्यार्थः । न च तस्या यथार्थत्वनियमः कामिनीभावनाभावितात्मनः कामिन्यवभासवत् । तथापि प्रत्यगात्मपरमात्मभावनयोरव्यभिचार

चित्तशुद्धिद्वारा च यथार्थतत्स्फुटावभासयोर्मानसयथार्थतत्साक्षात्कारयोश्च समस्त्येव हेतुभावः। अन्तर्दृष्टीनां हि हृदयेऽवस्थितः प्रत्यगात्मा परमात्मा वा विशुद्धेन मनसा ग्राह्य एव भवति। श्रावयन्ति च श्रुतयो योगजमेनयोर्मानससाक्षात्कारमपि '**एषोऽणुरात्मा चेतसा वेदितव्यो यस्मिन् प्राणः पञ्चधा संविवेश**' '**न सन्दृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम्। हृदा मनीषा मनसाभिक्लृप्तो य एनं विदुरमृतास्ते भवन्ती**'त्याद्याः। परं मानसेऽपि साक्षात्कारे दर्शनशब्दस्यामुख्यत्वमेव स्याच्चाक्षुषवाचिनो दर्शनसमानाकारानुस्मृताविवेति न विस्मर्तव्यम्। नन्वेवमपि मानससाक्षात्कार एव स्यात्साक्षान्मोक्षसाधनं न भक्तिरूपापन्नं ध्रुवानुस्मरणमिति चेत्। मैवम्। सत्येव परमपुरुषसाक्षात्कारे ध्यानफले तदनन्तरभाव्युत्कटप्रेमगर्भतदनुध्यानस्यैव परमभक्तिशब्दितस्य साक्षात्तत्प्राप्तिलक्षणायां परममुक्तौ कारणत्वात्। तथा च गीता '**भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन। ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप**'॥ इति। अत्र तत्त्वतो ज्ञानदर्शनप्राप्तीनां त्रयाणामपि भक्तिसाध्यत्वमुक्तम्। एवंभेदाद्भक्तेः सर्वमुपपन्नमेव। तदेवं प्रत्यक्षादिचतुष्टयं मुमुक्षूणामप्युपादेयमिति न्यरूपि।

अत्र प्रमाणभूतामपि स्मृतिं पूर्वानुभवपारतन्त्र्यतः पृथगविवक्षित्वा पुनः प्रमाणत्रैधमभिदधते स्म प्रामाणिकाः। साक्षि चात्र मनुवचनम्—'**प्रत्यक्षमनुमानं च शास्त्रं च विविधागमम्। त्रयं सुविदितं कार्यं धर्मसिद्धिमभीप्सता॥**' इति।

यद्यपि प्रमाणसङ्ख्यायां विवादो वादिनाम्। यथोक्तं मानमेयोदये भाट्टप्रकरणे '**चार्वाकास्तावदेकं द्वितयमपि पुनर्बौद्धवैशेषिकौ द्वौ भासर्वज्ञश्च साङ्ख्यस्त्रितयमुदयनाद्याश्चतुष्कं वदन्ति। प्राहुः प्राभाकराः पञ्चकमपि च वयं तेऽपि वेदान्तविज्ञाः षट्कं पौराणिकास्त्वष्टकमभिदधिरे सम्भवैतिह्ययोगात्॥**' इति। अथाप्यधिकानां त्रितयेऽन्तर्भावात्प्रमाणेषु त्रित्वमेव साधीयः। अन्तर्भावप्रकारश्चात्रैव ग्रन्थे प्रदर्शितो ग्रन्थकृता। नचैवं त्रिष्वप्यन्यतमस्य द्वयोरेव वा परिशेषः शक्यशङ्कः। तथाहि—अक्षसन्निकृष्टविषयं प्रत्यक्षम्। अक्षासन्निकृष्टस्याप्यक्षसन्निकृष्टनिष्ठाविनाभावप्रतिसम्बन्धिनो भासकमनुमानम्। न चेदं स्मरणमात्रम्। धर्मिसम्बन्धस्यापूर्वस्य भासनात्। अपूर्ववाक्यार्थप्रत्यायकश्च व्युत्पन्नं प्रति शब्दः प्रमाणान्तरमिति।

यत्पुनरविनाभावस्य दुर्ग्रहत्वादप्रामाण्यमनुमानस्येष्यते चार्वाकैः; तन्न सम्यक्। साध्यहेत्वोर्भूयः सहचारदर्शनतो व्यभिचारादर्शनाच्चोपाधीनामनुपलम्भाच्च तस्य तस्य सुग्रहत्वात्। उपाधिव्यभिचारयोर्व्यभिचारशङ्कायाश्च तर्केणैव विमर्शो-त्पन्नेनापनयनात्। तर्कमूलव्याप्तावप्यतिचारः शङ्क्येत यदा तदा पुनस्तर्कान्तर-मन्वेष्टव्यम्। न चैवमनवस्थाप्रसक्तिः। अन्ततः शङ्काया व्याघातादेवानुद-यात्। देशान्तरादावतिचारशङ्कायामपि अनुमानसापेक्षत्वादपि नानुमानस्याप्रा-माण्यम्। तदुक्तं न्यायाचार्योदयनेन 'शङ्का चेदनुमास्त्येव न चेच्छङ्का ततस्तराम्। व्याघातावधिराशङ्का तर्कः शङ्कावधिर्मतः' ॥ इति। अतीन्द्रियोपाधिश्च न शङ्कनार्हः। तत्स्वरूपे तत्साध्यधर्मव्याप्त्यादौ च प्रमाणाभावात्। यदि स्यादिदम्, स्वयं निरुपाध्येव तत्साधनमिच्छतीत्यायातमनुमानप्रामाण्येन। अविचक्षणे तु निर्बीजे स्वकृतायां स्वपक्षादिकृतादौ चातिप्रसङ्गमापद्यते। तथा च सर्वव्यवहारोच्छेदप्रसक्तिः। 'संशयात्मा विनश्यति' 'न सुखं संश-यात्मनः' इत्याद्युक्तेरेवं च भगवतोऽपि शङ्कितेति। तस्मिन्नियतमविनाभावग्रहसम्भवा-दनुमानस्य प्रामाण्यम्।

न चैवमपि वैशेषिकप्रक्रियया शब्दस्यानुमानविधयैव बोधकत्वं स्याज्ज्ञात-लिङ्गसम्बन्धस्यैव लिङ्गस्य ज्ञातार्थसम्बन्धस्य। नैवम्। बोधनप्रतीतिभेदेन पृथक् प्रमाणत्वस्यैव सम्भवात्। अन्यथा हि तावदनुमानस्य प्रतीतिर्व्याप्त्यादिप्रतिस-न्धानपूर्विका, अन्यथा च शब्दस्य योग्यतादिपरामर्शपूर्विका। न च योग्यता दुर्ज्ञानविसम्भवत्येन तत्रापि व्याप्त्यादिप्रतिसन्धानविलम्बेनार्थबोधे विलम्बो दुरु-चर। अनुव्यवसायश्च शब्दादनुभवं प्रत्येमीत्येव, न तु शब्दलिङ्गादनुमिनोमीति।

अवश्यं चैषितव्यं प्रमाणान्तरत्वं शब्दस्य। अत्यन्तातीन्द्रियाणामनुमानस्य-पूर्वा ततोऽसिद्धेः। नहि दृष्टजातीयेन प्रतिबन्धः शक्यग्रहः। देशकालस्वभावविप्रकर्षेण प्रत्यक्षेणाऽप्रत्यक्षविलक्षणानुमानं तु सम्भवम्॥ सामान्यतोदृष्टस्य गमकत्वमस्त्यत्र प्रत्यक्षत्वेनात्यन्तातीन्द्रियस्याभावात्साध्यस्य। इत्येव सामान्यतोदृष्टं नाम। धूमा-द्वह्न्यनुमानादिकं तु विशेषतोदृष्टम्। पक्षीयवह्न्यादेरप्यत्यन्तातीन्द्रियत्वाभावात्। ननु स्यात्ताम केवलव्यतिरेकिणातीन्द्रियार्थसिद्धिः। यथा—ईश्वरः सप्रकाशः ईश्वि-त्वात्। यन्नैवं तन्नैव यथा घटः। वेदः सर्वज्ञप्रणीतो वेदत्वात् व्यतिरेकेणोदाहरणं कविकाव्यादीति। नैवम्। अप्रसिद्धत्वात्साध्यस्य तद्व्यतिरेकसाध्यसिद्धेश्च व्यतिरेक-व्याप्तेरपि दुर्ग्रहत्वात्। साध्यप्रसिद्धिरुपपन्ना आगमत एव प्रतीत्यपीति तत एव

सर्वेसिद्धौ कृतं केवलव्यतिरेकिणा। असाधकता चास्य प्रसाधिता ग्रन्थकृतास्मिन्नेव प्रकरणेऽनुसन्धेया।

नन्वेवमपि सामान्यधर्मपुरस्कारेण व्याप्तिग्रहणमेव दृष्टजातीयबाधसहकारतोऽदृष्टजातीयमनुमापयेत्। इदमेव च परिशेषानुमानमिति गीयत इति चेदत्र ब्रूमः। अष्टद्रव्यातिरिक्तद्रव्याश्रितः शब्दः, अष्टद्रव्यानाश्रितत्वे सति द्रव्याश्रितत्वादिति हि परिशेषानुमानं विवक्षितम्। अत्र च हेतुविशेषणासिद्धिः। वाय्वादिगुणत्वस्यैव शब्दे सम्भवादुपलम्भानुसारतः। न पृथ्व्यादिगुणः शब्दोऽपाकजाकारणगुणपूर्वकप्रत्यक्षत्वादित्यादेरप्रयोजकत्वादसिद्धेश्च। स्वच्छन्दपर्युदासाश्रयणं चातिप्रसञ्जकं भवेत्। यथा न विभुगुणः शब्दो बाह्येन्द्रियग्राह्यत्वाद्रूपवदिति। अस्याप्रयोजकत्वं चेत्पृथिव्यादिगुणत्वप्रतिषेधकानुमानस्यापि तुल्यमप्रयोजकत्वमिति। अत्यन्तातीन्द्रियस्यार्थस्यानुमानेन साधने च विशेषबाधकं नाम दूषणमुच्यते भाट्टैः—'व्याप्त्यैकशरणं तावदनुमानमिति स्थितम्। तद्व्याप्तिदर्शितान्मार्गाच्चलितुं क्षमते कुतः॥ ततश्च व्याप्तिविज्ञाने यादृशं वस्तु दृश्यते। तादृगेवानुमातव्यं यथोष्णो भास्वरोऽनलः॥ न चातीन्द्रियवस्तूनां प्राग्दृष्टाकारयोगिता। दृश्यत्वं तेजसां दृष्टं चक्षुषस्तदसम्भवात्। अत एव हि सर्वत्राप्यत्यन्तादृष्टसाधने। विशेषबाधकं नाम दोषं घोषयतास्महे। तस्माद्रूपादिसन्दर्शनान्यथानुपपत्तितः। चक्षुराद्याः प्रसाध्यन्ते न तेष्वनुमितिर्मता॥' इति। इयांस्तु विशेषः—अर्थापत्तेरप्यनुमानान्तर्भावात् सिद्धान्ते गोलकातिरिक्तेन्द्रियसिद्धिरप्यागमिक्येवेति। एवं साङ्ख्यानां जगत्सलक्षणतया त्रिगुणप्रधानस्योपादानतयाऽनुमानमप्यसम्भावि वेदितव्यम्। विलक्षणयोरप्युपादानोपादेयभावदृष्टेः। अत एवाभिहितं श्रीमन्निगमान्ताचार्यैस्तत्त्वमुक्ताकलापे 'स्वच्छन्देनागमेन प्रकृतिमहदहङ्कारमात्राक्षसिद्धिर्नाध्यक्षेणाप्रतीतेर्न पुनरनुमया व्याप्तिलिङ्गाद्यसिद्धेः' इति।

एवं देहादिव्यतिरिक्तात्मविनिर्णयोऽप्यागमत एवैकान्ततः सम्पत्स्यते। यद्यप्यात्माऽपरोक्ष एवाहमिति भासमानः। अथापि पामराणां देहादावेवाऽहम्बुद्ध्या न तान् प्रति विलक्षणात्मसद्भावप्रतिपादनक्षममध्यक्षम्। ज्ञानादिना च गुणेनानुमीयेताश्रयमात्रम्। देहादिव्यतिरिक्तेनैव तेन भाव्यमिति तु कुत.?। मास्तु नाम करचरणादेरात्मत्वम्। सूक्ष्मतमस्यैव कस्यचिदान्तरस्यान्तःकरणादेर्भवतु तदिति

सम्भावना हि निरर्गलप्रसरा । अत एव वर्णितं श्रीमद्यामुनमुनिभिरात्मसिद्धौ 'आनुमानिकीमप्यात्मसिद्धिमश्रद्दधाना श्रौतीमेव तां श्रोत्रियाः सङ्गिरन्ते' इति । प्राहुश्च वेङ्कटनाथार्याः 'साक्षादसौ घटदृष्टेरस्य मद्वसिति धीर्देह एवात्मबुद्धे निहते लोहपिण्डे हुतवहमतिवद्दृ-दृकाख्यातिमूला ॥ श्रुत्यर्थापत्तिभिश्च श्रुतिभिरपि च नः सर्वथा योजिताभिर्देही देहान्तरासिद्धम इह विदितः सच्चिदानन्दरूपः ॥' इति । एवमेव लोकदृष्टकर्तृविलक्षणस्येश्वरस्यापि नानुमानतः साधनसम्भवः । महीमहीधरादेः कार्यत्वे प्रमाणाभावात्, कार्यत्वे वा सकर्तृकत्वे प्रमाणाभावात्, सकर्तृकत्वे चैककर्तृकत्वे व्यवस्थापकाभावात् । तच्छास्त्रैकप्रमाणक ईश्वरः । तथा च सूत्रं 'शास्त्रयोनित्वात्' इति । 'नावेदविन्मनुते तं बृहन्तम्' 'तं त्वौपनिषदं पुरुषं पृच्छामी'ति च श्रुतिः । 'व्याहत्याद्यव्याकुलाभिः श्रुतिभिरधिगतो विश्वभेत्ता' इति च श्रुत्यन्ताचार्याः । नन्वेवं परमात्मनो मननं श्रौतमनुमानलक्षणं नोपपद्येत । नैष दोषः । स्वातन्त्र्यमेव ह्यनुमानस्यास्मिन्नर्थे निवार्यते । श्रुतिप्रतिपन्नस्य श्रुतिमूलाभिः श्रुत्यनुगृहीताभिश्च युक्तिभिरनुचिन्तनं तूपपन्नमेवेति । 'आप्तोपदेशसामर्थ्याच्छब्दादर्थसम्प्रत्ययः' इति न्यायसूत्रविवरणे च वात्स्यायनोद्योतकराभ्यां स्वर्गाद्यतीन्द्रियार्थप्रतिपत्तिर्लौकिकस्याप्तोक्तत्वबलादेव सेत्स्यतीति भणितम् । अत्रापि चानुमानस्य केवलस्यातीन्द्रियार्थविनिश्चायनेऽसामर्थ्यं ब्रूमः 'श्रुतिसाहाय्यरहितमनुमानं न कुत्रचित् । निश्चयात्साधयेदर्थं प्रमाणान्तरमेव च ॥' इति । तदिदं प्रमाणत्रयम् ।

प्रमाणेष्वान्तरो विभागश्चेत्थम्–प्रत्यक्षं तावद्द्वेधा बाह्येन्द्रियकरणकं बाह्येन्द्रियाकरणकं चेति । सामान्यलक्षणाप्रत्यासत्तिजनितं ज्ञानलक्षणाप्रत्यासत्तिजनितं च बाह्य एवान्तर्भूतम् । मानसं तूपनीतभानमतिरिक्तमस्तु वा स्मृत्यादिज्ञानद्वयमेव वा तत्स्थलाभिषिक्तं भवतु । ज्ञानद्वयाच्च विशिष्टव्यवहारो भ्रमस्थल इव नैरन्तर्यभानात्सम्भविष्यतीति । अनुमानं च द्विविधं सामान्यतोदृष्टं विशेषतोदृष्टं चेति । शाब्दोऽपि तथा दृष्टादृष्टार्थत्वात् पौरुषेयापौरुषेयभेदाद्वा । अन्वयबोधो भवति द्वेधा पदोपस्थितपदार्थकरणकः प्रकारान्तरोपस्थितपदार्थकरणकश्चेति च केचित् । आकरादौ तु विस्तरः ।

प्रमाणानां च प्रमेयावबोधनप्रवृत्तानां नैसर्गिकं तथाभूतार्थावबोधकत्वलक्षणं प्रामाण्यम् । क्वचिद्दोषतोऽभिभवात्पुनर्भ्रान्त्यादिजनकता । 'यथार्थं सर्व-

विज्ञान'मिति पक्षेऽपि भेदाग्रहसहितं ज्ञानद्वयादिकमेव भवति भ्रान्त्यादिव्यवहारालम्बनं व्यवहारविसंवादि। तत्र चास्त्येव दोषस्य प्रयोजकता। दोषश्च प्रत्यक्षेऽर्थगतोऽक्षगतश्च सम्भवति। अव्याप्ये व्याप्यत्वाभिमानादिरनुमाने दोषः। तत्र च मूलं सादृश्यादि। शब्दे तु वक्तुर्भ्रमप्रमादाशक्तिविप्रलिप्सा भवन्ति दोषाः। अतश्चापौरुषेयाणां वेदवचसामनायाससिद्धं प्रामाण्यम्। ननु आनुपूर्वीसामान्यमुच्चारणक्रमाधीनम्॥ तत्कथं वेदानुपूर्व्या अपौरुषेयता। उच्यते। उच्चारणं तावद्विविधं स्वतन्त्रपरतन्त्रभेदात्। पूर्वतनानुपूर्वीस्मरणपूर्वकं तत्क्रमेणैवोच्चारणं परतन्त्रम्। एतत्कर्तुर्न वाक्ये कर्तृत्वम्। यथास्मदादे रघुवंशश्लोकादौ। यः पुनः स्वातन्त्र्येणैव रचनाविशेषविशिष्टं समुच्चारयति स एव तु वाक्ये कर्तेति व्यपदिश्यते। तथा चेश्वरोऽपि गतकल्पीयानुपूर्वीविशिष्टमेव वेदमनुध्यायन् प्रतिकल्पं तथैव चतुर्मुखायोपदिशतीति न वेदापौरुषेयत्ववाचोऽयुक्तिः। स्वाज्ञारूपं वेदं सदैकरूपमेव व्यवस्थापयति सर्वेश्वर इति च युक्तिमत्। तथा च सदैकरूपत्वं नित्यत्वं च श्रूयते श्रुतेः **'वाचाऽविरूपनित्यये'ति**। अस्याश्च प्रमाणमूर्धन्यत्वं सर्वार्थाऽऽवेदकत्वात्। तथा चान्वर्था संज्ञा वेद इति।

प्रमाणानां यथाभूतार्थग्राहित्वं स्वभाव इत्युक्तम्। प्रमाणग्राह्योऽर्थतथाभावश्च तत्त्वम्। तदिदं तत्त्वं यत्र प्रतिपाद्यते तद्दर्शनमिति निगद्यते। तत्त्वं च प्रमातृमतिभेदाद्भिन्नं तद्ग्राहि प्रमाणमपि। तथा च प्रमाणत्वाभिमतेन प्रमेयत्वाभिमतार्थतत्त्वप्रतिपादकस्तीर्थकराणां सूक्तिसन्दर्भो दर्शनमित्युक्तं भवति। भूयांसि नाम प्रथन्तेतरां दर्शनानि, तत्त्वानि च भूयांस्येव। न च सर्वेषामेव वास्तवार्थत्वं परस्परविरुद्धरूपाणां सम्भवति, किन्तु आभिमानिकमेव। यथावस्थितप्रमाणप्रमेयावबोधकं तु स्यादेव दर्शनं यत्किञ्चित्। वस्तुतः सर्वत्रापि दर्शने य‍ः कश्चनार्थः पुमर्थोपयोगी वर्णित एवास्ति। अतः सर्वतन्त्रपरिश्रमोऽपि विधेय एव कुशलमतिभिः शान्तिसुखार्थिभिश्च। उक्तं च महाभारते **'शमार्थं सर्वशास्त्राणि विहितानि मनीषिभिः।'** इति।

दर्शनानि च द्वेधा विभक्तान्यास्तिकनास्तिकभेदतः। यो मन्यते वेदस्य प्रमाणतयास्तित्वं स आस्तिकः। तत्प्रवर्तितमास्तिकदर्शनम्। यश्च नास्तित्वं स नास्तिकः। तत्प्रणीतं नास्तिकमिति व्यवह्रियते। चार्वाकबौद्धार्हतानि तत्र नास्तिकेषु गण्यन्ते। न्याययोगमीमांसादीनि त्वास्तिकेषु। एषु च मीमांसादर्शनं काण्डत्रयात्मकं निशतिलक्षणं सर्वकर्मसमाराध्यसर्वदेवतान्तर्यामिमुमुक्षूपास्यपरब्रह्मभूत-

गमः प्रणीतः । वेदसिद्धान्तो भिन्न आगमसिद्धान्तश्च भिन्नः । अभिन्ननिमित्तोपादानं ब्रह्म वेदे । आगमे तूपादानं विष्णुः, महेश्वरश्चाधिष्ठाता । अयमेव सर्वस्मात्पर इति ।

श्रीवैष्णवदर्शनं तु न वेदान्तवादाननुगुणम् । किन्तु सेश्वरमीमांसाधारे विशिष्टाद्वैततत्परे पञ्चरात्रागममूलमपि पाञ्चरात्रस्य कार्त्स्न्येन वेदाविरुद्धत्वाद्वेदानुगुणत्वाद्वेदान्तसारार्थगर्भितत्वाद्वेदान्तसूत्रप्रतिष्ठापितप्रामाण्यकत्वाच्च वैदिकदर्शनत्वेन वेदान्तदर्शनत्वेन चाऽस्यैव व्यपदेशमर्हतीति विशेषः । न हि महता संरम्भेण मोक्षधर्मे पाञ्चरात्रस्य सर्ववेदानुकूलत्वेन प्रमाणतमत्वं निःश्रेयसाधिकारिभिरधिकर्तव्यत्वं चोपश्लोकयन् भगवान् बादरायणस्तस्यैव प्रामाण्यं ब्रह्मसूत्रेषु प्रतिचिक्षेपेति सुवचम् । प्रत्युत सम्भवदाशङ्कानिरासमुखेन तत्प्रामाण्यमेव प्रत्यतिष्ठिपत् साङ्ख्यवैशेषिकबौद्धार्हतपाशुपतमतप्रतिक्षेपपूर्वकमिति समञ्जसम् । निर्दिष्टस्य साङ्ख्यादिपञ्चकस्यैतत्सन्निधौ रात्रीयमाणत्वादस्य पञ्चरात्रमिति समाख्या च साधीयसी । तथा च पाद्मतन्त्रवचनं '**पञ्चेतराणि शास्त्राणि रात्रीयन्ते महान्त्यपि । तत्सन्निधौ समाख्याऽसौ ततो लोके प्रवर्तते ॥**' इति । बहुधा च पञ्चरात्रशब्दस्य निरुक्तिर्दृश्यते '**रात्रं च ज्ञानवचनं ज्ञानं पञ्चविधं स्मृतम् । तेनेदं पञ्चरात्रं च प्रवदन्ति मनीषिणः ॥**' (नारदपांचरात्रे) '**इदं महोपनिषदं चतुर्वेदसमन्वितम् । साङ्ख्ययोगकृतान्तेन पञ्चरात्रानुशब्दितम् ॥**' '**एवमेकं साङ्ख्ययोगं वेदारण्यकमेव च । परस्पराङ्गान्येतानि पञ्चरात्रं तु कथ्यते ॥**' (मोक्षधर्मे) इति । '**आद्यमेकायनं वेदं रहस्याम्नायसंज्ञितम् । दिव्यमन्त्रक्रियोपेतं मोक्षैकफललक्षणम् ॥ पञ्चापि पृथगेकैकदिवारात्रं जगत्प्रभुः । अध्यापयामास यतस्ततस्तन्मुनिपुङ्गवाः ॥ शास्त्रं सर्वजनैर्लोके पञ्चरात्रमितीर्यते**' इतीश्वरसंहितावचनाद्रहस्याम्नायपर्यायैकायनश्रुतेः पञ्चरात्रसंज्ञा ज्ञायते । तन्मूलकत्वाच्चागमस्यास्य पञ्चरात्रमिति पाञ्चरात्रमिति वा संज्ञा स्यान्नाम । एकायनश्रुतेर्मूलसंहितेत्यपि प्रसिद्धिः । अत्र वाक्यो निषदिति च व्यवहारः । सहस्रनामभाष्ये च मूलसंहितावचनोपादानं स्थाने स्थाने समवलोक्यते । वेदान्तसारार्थगर्भितत्वं च पाञ्चरात्रस्य '**वेदान्तेषु यथा सारं भगवान् हरिः । भक्तानुकम्पया विद्वान् सञ्चिक्षेप यथासुखम् ॥**' इत्यादिवचनैरवगम्यते । तदेकायनश्रुतिश्रुत्यन्तमूलकं पाञ्चरात्रं

श्रुतिगीतादिप्रसिद्धपरब्रह्मपरतत्त्वपरमपुरुषमिव पतिपारम्पर्यचरणारविन्दयुगलशा-रणागतिविशिष्टाधिकारिकृत्यादिप्रपञ्चप्रतिपादकं वैदिकमेव भवति सुतरामिति तच्छा-न्तरप्रामाण्यमत्र न शक्यग्रहमिति स्थितम्।

न्यायादिदर्शनानि च सूत्रनिबद्धानि महर्षिभिरक्षपादादिभिः। न चानुवे दर्शनमस्ति किञ्चित्। तत्र कृत्स्नवेदार्थविचारशास्त्रमारिरचयिषुर्भगवान् बादरा-यण आराध्यकर्मविचारशास्त्रं स्वशिष्येण जैमिनिना निर्वर्त्य स्वयं प्रधानब्रह्मभाग-विचारशास्त्रमारीरचदिति शक्यं सम्भावयितुम्। देवताकाण्डस्यापि जैमिनि-प्रणीतत्वं 'जैमिनीयेन षोडशलक्षणेने'ति हरिप्रपत्रतोऽवगम्यते। अन्य-थापि चैवमेव प्रस्थानभेदे मधुसूदनसरस्वतीभिः। काशकृत्स्नीयत्वप्रथा तु तस्य काशकृत्स्नद्वारा प्रवर्तितत्वनिबन्धना स्यात्। न्यायादिषु च दर्शनेषु कृतो नामा-त्मविचारः। परं तानि न तत्र तत्पराणि। तथा हि—न्यायदर्शनं तावत्परि-करप्रमाणनिरूपणे व्यापृतिमत्। काणादं तु सप्तपदार्थविवेचने। योगश्च योगवैभव-प्रतिपादने। मीमांसापूर्वभागश्च खलु धर्मस्वरूपनिरूपणे। यद्यपि कापिले पक्षप्र-णीलक्षणे वर्णितानि नाम तत्त्वानि पञ्चविंशतिधा। परन्तु युक्त्या केवलया। औप-निषदप्रक्रियाविरोधश्च बहुत्र। औपनिषदस्य परमपुरुषस्य कथा तु दूरे। तदात्म-परमात्मयाथात्म्यप्रतिपत्तौ मीमांसोत्तरभाग एव शरणं समेषामित्यविगीतमेतत्।

वेदान्तसूत्रेषु च स्वल्पाक्षरत्वविश्वतोमुखत्वादिसूत्रलक्षणसम्पन्नेषु सम्पन्नानां दैव्या शक्तिसम्पदा महनीयमतिविभवानां भाष्यकृतां भाष्याणि बहुधैव प्रावर्तन्त। भेदाभेदश्रुतिसमन्वये प्रतिभेदापेक्षेषु योजनाभेदः सम्भवन्। बाल्याद्-मतिभेदनिबन्धनश्चौपनिषदे तत्त्वे मतभेदः प्रथयतां द्वैतं केवलाद्वैतं द्वैताद्वैतं, शुद्धाद्वैतं विशिष्टाद्वैतमिति। समासत एवैतेषां मतानां स्वरूपाणि विवेचयामस्तावत्।

द्वैतमतस्य तावत्प्रवर्तकः पूर्णप्रज्ञाचार्यः प्रभञ्जनात्मा। मध्वाचार्य इति चास्यैव प्रथा। तत्त्वं चैतन्मते द्विविधं स्वतन्त्रपरतन्त्रभेदात्। 'स्वतन्त्रो भगवान् विष्णुर्निर्दोषोऽशेषसद्गुणः। अस्वतन्त्रमनेकं स्यादात्मानात्मादि भेदभाक्॥' (तत्त्वविवेके) भेदपञ्चकात्मकः प्रपञ्चोऽनादिः परमार्थश्च। 'जीवेश्वरभिदा चैव जडेश्वरभिदा तथा। जीवभेदो मिथश्चैव जड-जीवभिदा तथा॥ मिथश्च जडभेदोऽयं प्रपञ्चो भेदपञ्चकः। सोऽयं सत्योऽप्यनादिश्च सादिश्चेन्नाशमाप्नुयात्॥ न च नाशं प्रयात्येष न चासौ भ्रान्तिकल्पितः। कल्पितश्चेन्निवर्तेत न चासौ विनिव

र्तते ॥ द्वैतं न विद्यत इति त दज्ञानिनां म्। मतं हि ज्ञानिना-मेतत् मितं त्रातं च विष्णुना ॥ तस्मान्मात्रमिति प्रोक्तं परमो हरिरेव तु ॥' एतेन 'प्रपञ्चो यदि वर्तेत निवर्तेत न संशयः। मायामात्रमिदं द्वैतमद्वैतं परमार्थतः ॥' इति माण्डूक्यकारिकाऽपि गतार्था वेदितव्या। द्वयोर्भावो द्विता, द्वितैव द्वैतं भेदः, द्वैतं तत्वमस्मिन्मते। तथा चेदं द्वैतदर्शनमिति संज्ञां भजते।

सत्येव भेदे शरीरशरीरिणोः स्थूलदृष्ट्याऽभेदव्यवहाराः प्रवर्तन्ते। सूक्ष्मदृष्ट्या च भेदव्यपदेशाः। जीवब्रह्मणोरपि भेदः परमार्थ एव 'सत्य आत्मा सत्यो जीवः सत्यं भिदा' इत्यादिश्रुतेः। तथा च स्फुटमभिधीयते 'विष्णुं सर्वगुणैः पूर्णं ज्ञात्वा संसारवर्जितः। निर्दुःखानन्दभुङ्नित्यं तत्समीपे स मोदते ॥ मुक्तानां चाश्रयो विष्णुरधिकोऽधिपतिस्तथा। तद्वशा एव ते सर्वे सर्वदैव स ईश्वरः ॥' इति। 'ब्रह्म वेद ब्रह्मैव भवती'ति तु प्राशस्त्याभिप्रायं 'संपूज्य ब्राह्मणं भक्त्या शूद्रोऽपि ब्राह्मणो भवे' दिति यथा। ज्ञानानन्दगुणकत्वसाम्याच्चाभेदव्यपदेशो घटतेतराम्। तथा च श्रुतिस्मृतिसूत्राणि 'जीवस्य परमैक्यं तु बुद्धिसारूप्यमेव तु। एकस्थाननिवेशो वा व्यक्तिस्थानमपेक्ष्य सः। न स्वरूपैकता तस्य मुक्तस्यापि विरूपतः। स्वातन्त्र्यपूर्णते अल्पत्वपारक्ये विरूपते ॥' 'भिन्नाः जीवाः परो भिन्नस्तथापि ज्ञानरूपतः। प्रोच्यन्ते ब्रह्मरूपेण वेदवादेषु सर्वशः ॥' 'तद्गुणसारत्वात्तद्व्यपदेशः प्राज्ञव' दित्यादीनि। एतेन 'तत्वमसी' त्यादिकमपि व्याख्यातं सादृश्याभिप्रायम्। तत्पदोत्तरषष्ठ्या लुप्ता वा तच्छेषभूतस्त्वमित्येवंपरमिदम्। आधिपत्यनिबन्धनाश्च जगद्ब्रह्माभेदव्यपदेशाः। एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा च प्रधानज्ञानेनेव ग्रामस्य ब्रह्मज्ञानेन जगतो ज्ञातत्वपरा सादृश्यत एकस्य ज्ञानतोऽन्यज्ञानसम्भवपरा च। जीवानां ब्रह्मांशत्वं च सदृशत्वे सत्यल्पत्वलक्षणं महीधरादेरिवांशत्वं गोपुरादेर्बोध्यम्। अंशांशिभावेन वाभेदव्यपदेशोऽस्ति कुतो जीवब्रह्मणोः। अंशत्वाभिप्रायक एव स्यादभेदभावनोपदेशोऽपि। वस्तुतः स्वाधिकत्वेनैव हरेर्भावना स्यात् पुंसः श्रेयसे। तथा च लौकिकी नीतिः 'घातयन्ति हि राजानो राजाऽहमिति वादिनः। ददात्यखिलमिष्टं च स्वगुणोत्कर्षवादिने ॥' इति।

जीवानामणुत्वं ज्ञातृत्वादि च। अस्ति च जीवेषु स्त्रीपुंजातिभेदः। मोक्षे चानन्द-

तारतम्यं मुक्तानां मतम् । नित्यमुक्ता मात्र सम्मता । लक्ष्मीरेकैव तु जीवकोटिप्रविष्टा नित्यदेहवती मता बिम्बी च । तत्परश्च पुरुषोत्तमः सद्गुणगणो विष्णुर्नारायणो मुक्तेश्वरः शास्त्रैकवेद्यः परं ब्रह्म । यथोच्यते 'सदागमैकविज्ञेयं समतीतक्षराक्षरम् । नारायणं सदा वन्दे निर्दोषाशेषसद्गुणम् ॥' (विष्णुतत्त्वे) इति । 'ब्रह्मा शिवः सुराद्याश्च शरीरक्षरणात् क्षराः । लक्ष्मीरक्षरदेहत्वादक्षरा तत्परो हरिः ॥ स्वातन्त्र्यशक्तिविज्ञानसुखाद्यैरखिलैर्गुणैः । निःसीमत्वेन ते सर्वे तद्वशाः सर्वदैव च ॥' इति च । शास्त्रस्वरूपं च वर्णितं स्कान्दे 'ऋग्यजुःसामाथर्वाश्च भारतं पाञ्चरात्रकम् । मूलरामायणं चैव शास्त्रमित्यभिधीयते ॥ यच्चानुकूलमेतस्य तच्च शास्त्रं प्रकीर्तितम् । अतोऽन्यो ग्रन्थविस्तारो नैव शास्त्रं कुवर्त्म तत् ॥' इति ।

परमपुरुषगुणगणज्ञानपूर्विका सेवाभक्तिश्च पुरुषस्य निःश्रेयससाधनम् । सेवा च त्रिविधा अङ्कननामकरणभजनभेदात् । अङ्कनमत्र तप्तचक्रादिमुद्राधारणं भगवद्रूपस्मारकम् । भगवतस्तन्नाम्ना नामकरणं च पुत्रादेर्भगवन्नामस्मरणार्थम् । भजनं च दशधा । वाचा सत्यं हितं प्रियं स्वाध्यायः । कायेन दानं परित्राणं परिरक्षणम् । मनसा दया स्पृहा श्रद्धा च । एकैकमपि निष्पाद्य नारायणे समर्पणं भजनम् । एवंविधभजनादिप्रीतपरमपुरुषप्रसादादेव निःश्रेयसं निर्विघ्नं निष्पद्यते 'यस्य प्रसादात्परमार्तिरूपादस्मात्संसारान्मुच्यते नापरेण । नारायणोऽसौ परमो विचिन्त्यो मुमुक्षुभिः कर्मपाशादमुष्मात्' (नारायणस्मृतौ) इत्यादिवचननिचयप्रामाण्यादित्येतन्मतसङ्क्षेपः ।

एतन्मतेऽभेदश्रुतीनाममुख्यार्थता । जीवानां ब्रह्मांशत्वमप्यमुख्यमेव । एकवस्त्वेकदेशत्वं हि मुख्यमंशत्वम् । समाप्तेति ।

केवलाद्वैतस्य च प्रवर्तकाः शङ्करभगवत्पादाः शङ्कराचार्याः । एतन्मतसङ्क्षेपो यथा— अभिन्नस्य भेदः सम्भवेन्नामोपाधिभेदतः । भिन्नस्य त्वभेदो नैव घटेत । अतोऽभेदश्रुतयो मुख्यार्थाः । भेदश्रुतयस्तु कल्पितभेदावलम्बना बोध्याः । निरस्तसमस्तभेदमखण्डानन्दैकरसं सन्मात्रं ब्रह्म परमार्थतः 'सत्यं ज्ञानमनन्तं ब्रह्म' 'आनन्दो ब्रह्म' 'एकमेवाद्वितीयम्' इत्यादिश्रुतेः । अनाद्यविद्यया तिरोहितस्वरूपे तस्मिन्नेव नानाविधा भेदाभासाः । तत्राचेतनभेदमात्रमविद्याविलासनादपरमार्थमेव । जीवस्वरूपं तु परमार्थम् । 'तत्सत्यं स आत्मा'

तत्त्वमसी' ति सत्यब्रह्माभेदस्य तस्मिन् बोधनात्। जीवभावः पुनः कल्पित एव। एवमीश्वरभावोऽपि मायोपाधिकत्वान्मिथ्यैव बोध्यः। मायोपहितं चैतन्यमीश्वरः। अन्तःकरणोपहितं चैतन्यं जीवः। ईश्वरस्य चैतन्यस्य वान्तःकरणेषु प्रतिबिम्बभेदा जीवा इति च भूयोवादः। उपहितवादे महाकाशांशत्वमिव घटाकाशादेर्जीवस्य ब्रह्मांशत्वम्। परिमाणं चास्य पारमार्थिकमनवच्छिन्नमेव। औपाधिकं तु परिच्छिन्नम्। ईश्वरस्तु सगुणब्रह्मशब्दितो मायोपाधेर्व्यापकत्वाद्व्यापक एव। सृष्ट्यादिकार्योपयोगितयाऽनेनैव उद्भूततत्तद्गुणमायामयचतुर्मुखादिरूपपरिग्रहात् त्रिमूर्तिसाम्यं च व्यवहारदशायाम्।

अविद्या च प्रपञ्चोपादानभूताऽनादिरनिर्वचनीया तत्त्वज्ञानोदयादन्तवती च। तत्त्वज्ञानं च 'तत्त्वमसी' ति वाक्यजनितमपरोक्षात्मकं निर्विशेषब्रह्मात्मैक्यविज्ञानमेव। एवम्भूतनिर्गुणपरब्रह्मविद्यानधिकारिणोऽप्यनुकम्पयितुं पुनः सगुणापरब्रह्मोपासाविधयः प्रवृत्ताः। गुणाश्चोपासनार्थाः मायिका एव। उपासनया सगुणब्रह्मणस्तल्लोकं प्राप्तानां तत्रैव चित्तपरिपाकान्निर्गुणब्रह्मविद्याधिक्रियायां पुनः परमा मुक्तिरपि नासम्भवा। उक्तं च कल्पतरौ **'निर्विशेषं परंब्रह्म साक्षात्कर्तुमनीश्वराः। ये मन्दास्तेऽनुकम्प्यन्ते सविशेषनिरूपणैः॥ वशीकृते मनस्येषां सगुणब्रह्मशीलनात्। तदेवाविर्भवेत्साक्षादपेतोपाधिकल्पनम्॥'** इति।

केवलस्य निर्विशेषस्य ब्रह्मण एकस्यैव पारमार्थ्योपगमात्केवलाद्वैतनाम्नाऽद्वैतनाम्ना च व्यपदिश्यते मतमिदम्।

ब्रह्मण्येवाविद्यादिकल्पनं ईश्वरतद्गुणानां मायिकत्वकल्पनं च मतेऽस्मिन् श्रुतिविप्रतीपम्। अचितोऽपारमार्थ्यवर्णनं चानन्तत्वप्रतिपादनात्तस्यानुपपन्नमेव। गीतायामपि मायायास्तरणमेव नद्या इव परपारप्राप्तिफलं वर्ण्यते। न तावता मायाया विनाशः सिद्ध्येन्नद्या इव। अविनाशिभावस्य चापारमार्थ्यं नोपगमार्हमिति दिक्।

अथ भेदाभेदमतम्। एतस्य प्रस्थानभेदतः प्रवर्तकास्त्रयो भास्करो यादवप्रकाशो निम्बार्कश्चेति। एषु चावान्तरमतभेदो जागर्ति।

भास्करपक्षस्तावत्। न हि निर्गुणं वस्त्वस्ति। स्वभावत एव सर्वज्ञः सर्वशक्तिरपरिच्छिन्नानन्दः स्वतन्त्रः परमेश्वरः। स एव परंब्रह्म। तथा चोक्तं ब्रह्मजिज्ञासेयम 'ब्रह्मशब्देनेश्वरो गृह्यते' इति। ब्रह्म चावस्थितं त्रेधा कारणा-

त्मना कार्यात्मना जीवात्मना च । तथा च श्रुतिः 'त्रिविधं ब्रह्ममेतत्' इति । द्वे च शक्ती स्त ईश्वरस्य भोग्यशक्तिर्भोक्तृशक्तिश्चेति । भोग्यशक्तिर्नाम आकाशादिरूपाचेतनपरिणामापत्तिः । भोक्तृशक्तिश्चेतना जीवरूपेण व्यवतिष्ठते । तथा चाचेतनप्रपञ्चोऽपि ब्रह्मकार्यत्वात्परमार्थ एव । वाचारम्भणश्रुतिश्च न कार्यमिथ्यात्वमाह किं तु कारणानन्यत्वम् । कारणमेव तु कार्यात्मनाऽवतिष्ठते । मृत्समन्वितं हि कार्यमुपलभ्यते । त्रिष्वपि कालेषु कारणाधीनं कार्यम् । नापि तद्विषयदेशतः कालतो वा व्यतिरिक्तमुपलभ्यते । कारणस्यावस्थामात्रं च कार्यं व्यतिरिक्ताव्यतिरिक्तं व्यवहारालम्बनम् । आगमापायित्वाच्चैतदनृतमनित्यमिति च व्यपदिश्यते । तदर्थमेव 'मृत्तिकेत्येव सत्य'मित्युक्तम् । एवं च कार्यस्य सत्यत्वं कारणतो भिन्नाभिन्नत्वं च न तु मिथ्यात्वमिति स्थितम् । कार्यमिथ्यात्वाय मायावादिभिराश्रिताऽनिर्वचनीयाविद्या त्वनिर्वचनीयैव । यथोच्यते 'यस्या कार्यमिदं कृत्स्नं व्यवहाराय कल्पते । निर्वक्तुं सा न शक्येति वचनं वञ्चनार्थकम् ॥' इति ।

शक्तिविक्षेपेण भवत्युपादानं ब्रह्म प्रपञ्चं प्रति । 'अप्रच्युतस्वरूपस्य शक्तिविक्षेपलक्षणः । परिणामो यथा तन्तुनाभस्य पटतन्तुवत् ॥' परिणामपक्ष एव च श्रुतिसूत्रसिद्धो वृत्तिकारादिसम्प्रदायागतः । तथा च वाक्यं 'परिणामस्तु स्याद्दध्यादिव' दिति । ब्रह्मकार्यस्य च ब्रह्मावस्थारूपस्य जगतो ब्रह्मणो भेदोऽभेदश्च । उक्तं च 'कार्यरूपेण नानात्वमभेदः कारणात्मना । हेमात्मना यथाऽभेदः कुण्डलाद्यात्मना भिदा ॥' इति । न च भेदाभेदयोर्विरोधः । प्रमाणप्रतिपन्नत्वादेव । 'एकस्यैकत्वमस्तीति प्रमाणादेव गम्यते । नानात्वं तस्य तत्पूर्वं कस्माद्भेदोऽपि नेष्यते ॥' तथा च 'यत्प्रमाणैः परिच्छिन्नमविरुद्धं हि तत्तथा । वस्तुजातं गवाश्वादि भिन्नाभिन्नं प्रतीयते ॥' इति ।

जीवास्तु नात्यन्तं भिन्ना ईश्वरात् । किन्त्वग्नेर्विस्फुलिङ्गा इव वायोः प्राणादय इव घोषाणीव च नभसोऽशभूतास्तस्यान्तःकरणोपाध्यवच्छिन्नप्रदेशभेदात्मकाः । शुद्धौ तु तदभेद एव । परमेश्वरभावयोग्यानामप्येषामप्रतिपत्तिविप्रतिपत्तिलक्षणानाद्यविद्यया रागद्वेषदूषितान्तःकरणानां नानाविधक्लेशकर्मगतिभिर्भवति संसाराटव्यां परिभ्रमणम् । शास्त्रोपदेशतोऽधिगतात्मतत्त्वहितानां ब्रह्माभेदभावनाजनितैश्वर्यसाक्षात्कारेण तु व्यपनीतौ भवत्यपवर्गः । कर्मसमुच्चितमेव च ज्ञानं मतं

मुक्तिसाधनं 'सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्' इति सूत्रयतः। कर्म चारादुपकारकमभिमतम्। अविद्याकर्ममूलकस्य बन्धस्य निवृत्तौ च ज्ञानकर्मविशेषयोरपेक्षा युज्यत एव। पारमार्थ्येऽपि प्रपञ्चस्य स्वाविद्याकर्ममूलस्य स्वीयानर्थस्यैवं सदुपायतः परिहरणसम्भवान्न मुक्तिसिद्ध्यर्थमपि मिथ्यात्वं तस्याभिमन्तव्यम्। मुक्तिश्च न निःसम्बोधलक्षणा चैतन्यमात्रपरिशेषात्, निरास्वादलक्षणा वा। किन्तु सार्वज्ञ्यसर्वशक्त्याविष्कारेण निरतिशयसुखसंवेदनलक्षणैवेति।

भिन्नाभिन्नत्वाभ्युपगमस्तावद्विरुद्धः। न च दृष्टत्वादविरोध.। धर्मिभेदस्य धर्माभेदस्यैव च दर्शनात्। न च तयोरपि भेदाभेदौ सम्भवतो विरोधादेव। एवं शक्तिशक्तिमतोरपि भेदाभेदौ न सम्भवतः। अभेदे ब्रह्मण्येव विकारापत्तिः। भेदे च शक्तेरेवोपादानता स्यात्, न तु ब्रह्मणः। एवं ब्रह्मणः सर्वज्ञत्वेन स्वांशभूतजीवदुःखप्रतिसन्धानावश्यम्भावेनापुरुषार्थान्वयप्रसङ्गश्चेति विचारणीयं सुधीभिः।

यादवप्रकाशीयप्रक्रिया यथा—सच्चिदानन्दमात्रं परंब्रह्मैव सर्वशक्तिमदीश्वररूपेण विचित्रजडजीवरूपतश्च विपरिणतं भवति समुद्र इव फेनबुद्बुदतरङ्गभेदतः। उपादानोपादेययोश्च भेदाभेदौ स्वाभाविकौ। तत्राऽचिच्चिदंशेषु विकारदोषप्रसङ्गेऽपि निर्दोषः समस्तकल्याणगुणक एवेश्वरांशो व्यवतिष्ठते। सर्वत्र तादात्म्येनाऽनुवृत्तावपि ब्रह्मणश्चैतन्यस्याचिदंशेषु नित्यमनुद्भवो रत्नगन्धादिनयात्। भेदतो गुणदोषव्यवस्था। अभेदतश्च समानाधिकरणव्यपदेशाः। भेदसमानाधिकरणाभेदलक्षणं तादात्म्यं च सामानाधिकरण्यार्थः। चिदचितौ ब्रह्मणो भेदभेदाभावावेकरूपावेव वक्तव्यौ, तथैव श्रुते.। बन्धः परमार्थ एवात्रापि मते। प्रतिबन्धनिवृत्तिब्रह्मसम्पत्तिलक्षणे द्विरूपे मोक्षे साधनमपि द्विरूपमेव मतं कर्मज्ञानलक्षणम्। तथा च श्रुति 'विद्यां चाऽविद्यां च यस्तद्वेदोभयं सह। अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते॥' इति।

निष्पत्तिपर्यन्तं विद्यायां सन्निपत्योपकारकत्वमपि सम्मतं निष्कामकर्मणः 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' इत्यादिश्रुतेः। अत्र च सनन्तस्थले सन्प्रकृत्यर्थे करणतृतीयार्थान्वयव्युत्पत्त्या असिना जिघांसतीत्यादिस्थलसिद्धया यज्ञादिकरणत्वं वेदनस्यैव सिसाधयिषितस्य विवक्षितमिति। माध्वैश्च मोक्षगतनानाविशेषाणां कर्मापेक्षत्वमिष्यते। मायावादिनस्तु विविदिषायामेव कर्मणामुपयोगमाहुः, न विद्यायाम्। अस्तु नामायं विचारः।

त्मना कार्यात्मना जीवात्मना च । तथा च श्रुतिः 'त्रिविधं ब्रह्ममेतत्' इति । द्वे च शक्ती स्त ईश्वरस्य भोग्यशक्तिर्भोक्तृशक्तिश्चेति । भोग्यशक्तिर्नामाकाशादिरूपाचेतनपरिणामापत्तिः । भोक्तृशक्तिश्चेतना जीवरूपेण व्यवतिष्ठते । तथा चाचेतनप्रपञ्चोऽपि ब्रह्मकार्यत्वात्परमार्थ एव । वाचारम्भणश्रुतिश्च न कार्यमिथ्यात्वमाह, किन्तु कारणानन्यत्वम् । कारणमेव तु कार्यात्मनाऽवतिष्ठते । सूत्रमन्वितं हि कार्यमुपलभ्यते । त्रिष्वपि कालेषु कारणाधीनं कार्यम् । नाथ मद्विषयदेशतः कालतो वा व्यतिरिक्तमुपलभ्यते । कारणस्यावस्थामात्रं च कार्यं व्यतिरिक्ताव्यतिरिक्तं व्यवहारालम्बनम् । आगमापायित्वाच्चैतदनृतमनित्यमिति च व्यपदिश्यते । तदर्थमेव 'मृत्तिकेत्येव सत्य'मित्युक्तम् । एवं च कार्यस्य सत्यत्वं कारणतो भिन्नाभिन्नत्वं च न तु मिथ्यात्वमिति स्थितम् । कार्यमिथ्यात्वाय मायावादिभिराश्रिताऽनिर्वचनीयाविद्या त्वनिर्वचनीयैव । यथोच्यते 'यस्याः कार्यमिदं कृत्स्नं व्यवहाराय कल्पते । निर्वक्तुं सा न शक्येति वचनं वञ्चनार्थकम् ॥' इति ।

शक्तिविक्षेपेण भवत्युपादानं ब्रह्म प्रपञ्चं प्रति । 'अप्रच्युतस्वरूपस्य शक्तिविक्षेपलक्षणः । परिणामो यथा तन्तुनाभस्य पटतन्तुवत् ॥' परिणामपक्ष एव च श्रुतिसूत्रसिद्धो वृत्तिकारादिसम्प्रदायागतः । तथा च भाष्ये 'परिणामस्तु स्याद्दध्यादिव'दिति । ब्रह्मकार्यस्य च ब्रह्मावस्थारूपस्य जगतो ब्रह्मणो भेदोऽभेदश्च । उक्तं च 'कार्यरूपेण नानात्वमभेदः कारणात्मना । हेमात्मना यथाऽभेदः कुण्डलाद्यात्मना भिदा ॥' इति । न च भेदाभेदयोर्विरोधः, प्रमाणप्रतिपन्नत्वात् । 'एकस्यैकत्वमस्तीति प्रमाणादेव गम्यते । नानात्वं तस्य तत्पूर्वं कस्माद्भेदोऽपि नेष्यते ॥' तथा च 'यत्प्रमाणैः परिच्छिन्नमविरुद्धं हि तत्तथा । वस्तुजातं गवाश्वादि भिन्नाभिन्नं प्रतीयते ॥' इति ।

जीवास्तु नाम ते भिन्ना ईश्वरात् । अग्नेर्विस्फुलिङ्गा इव वायोः प्राणा इव घटाकाशादीनीव च नभसोंऽशभूता अन्तःकरणोपाध्यवच्छिन्नप्रदेशभेदात्मकाः । मुक्तौ तु तदभेद एव । परमेश्वरमात्मनोऽज्ञानामप्येषामप्रतिपत्तिविप्रतिपत्तिलक्षणानाद्यविद्यया रागद्वेषदूषिता तरङ्गाणां नानाविधकर्मगतिभिर्भवति येषां संसारे परिभ्रमणम् । शास्त्रोपदेशतोऽधिगतात्मतत्त्वपरिहितानां ब्रह्माभेदभावनाया नित्यैन्यसाक्षात्कारेण तु बन्धनिवृत्तौ भवत्यपवर्गः । कर्मसमुच्चितमेव च ज्ञानं मतं

मुक्तिसाधनं 'सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्' इति सूत्रयतः। कर्म चारादुपकारकमभिमतम्। अविद्याकर्ममूलकस्य बन्धस्य निवृत्तौ च ज्ञानकर्मविशेषयोरपेक्षा युज्यत एव। पारमार्थ्येऽपि प्रपञ्चस्य स्वाविद्याकर्ममूलस्य स्वीयानर्थस्यैवं सदुपायतः परिहरणसम्भवान्न मुक्तिसिद्ध्यर्थमपि मिथ्यात्वं तस्याभिमन्तव्यम्। मुक्तिश्च न निःसम्बोधलक्षणा चैतन्यमात्रपरिशेषात् निरास्वादलक्षणा वा। किन्तु सार्वज्ञ्यसर्वशक्त्याविष्कारेण निरतिशयसुखसंवेदनलक्षणैवेति।

भिन्नाभिन्नत्वाभ्युपगमस्तावद्विरुद्धः। न च दृष्टत्वादविरोधः। धर्मिभेदस्य धर्माभेदस्यैव च दर्शनात्। न च तयोरपि भेदाभेदौ सम्भवतो विरोधादेव। एवं शक्तिशक्तिमतोरपि भेदाभेदौ न सम्भवतः। अभेदे ब्रह्मण्येव विकारापत्तिः। भेदे च शक्तेरेवोपादानता स्यात्, न तु ब्रह्मणः। एवं ब्रह्मणः सर्वज्ञत्वेन स्वांशभूतजीवदु खप्रतिसन्धानावश्यम्भावेनापुरुषार्थान्वयप्रसङ्गश्चेति विचारणीयं सुधीभिः।

यादवप्रकाशीयप्रक्रिया यथा—सच्चिदानन्दमात्रं परंब्रह्मैव सर्वशक्तिमदीश्वररूपेण विचित्रजडजीवरूपतश्च विपरिणतं भवति समुद्र इव फेनबुद्बुदतरङ्गभेदतः। उपादानोपादेययोश्च भेदाभेदौ स्वाभाविकौ। तत्राऽचिच्चिदंशेषु विकारदोषप्रसङ्गेऽपि निर्दोषः समस्तकल्याणगुणक एवेश्वरांशो व्यवतिष्ठते। सर्वत्र तादात्म्येनाऽनुवृत्तावपि ब्रह्मणश्चैतन्यस्याचिदंशेषु नित्यमनुद्भवो रत्नगन्धादिनयात्। भेदतो गुणदोषव्यवस्था। अभेदतश्च समानाधिकरण्यपदेशाः। भेदसमानाधिकरणाभेदलक्षणं तादात्म्यं च सामानाधिकरण्यार्थः। चिदचितौ ब्रह्मणो भेदभेदाभावावेकरूपावेव वक्तव्यौ, तथैव श्रुतेः। बन्धः परमार्थ एवात्रापि मते। प्रतिबन्धनिवृत्तिब्रह्मसम्पत्तिलक्षणे द्विरूपे मोक्षे साधनमपि द्विरूपमेव मतं कर्मज्ञानलक्षणम्। तथा च श्रुतिः 'विद्यां चाऽविद्यां च यस्तद्वेदोभयं सह। अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते॥' इति।

निष्पत्तिपर्यन्तं विद्याया सन्निपत्योपकारकत्वमपि सम्मतं निष्कामकर्मणः 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' इत्यादिश्रुतेः। अत्र च सनन्तस्थले सन्प्रकृत्यर्थे करणतृतीयार्थान्वयव्युत्पत्त्या असिना जिघांसतीत्यादिस्थलसिद्धया यज्ञादिकरणत्वं वेदनस्यैव सिसाधयिषितस्य विवक्षितमिति। माध्वैश्च मोक्षगतनानाविशेषाणां कर्मापेक्षत्वमिष्यते। मायावादिनस्तु विविदिषायामेव कर्मणामुपयोगमाहुः, न विद्यायाम्। अस्तु नामायं विचारः।

'ईश्वराव्याकृतप्राणैर्विराट् सिन्धुरिवोर्मिभिः । यत्प्रणूत्यदिवा-भाति तस्मै सद्ब्रह्मणे नमः ॥' (कात्यायनकारिका) इति प्राचीनैरुपक्षिप्त सर्वानुगतसल्लक्षणब्रह्मवाद एव शाब्दप्रकाशादिभिः परिष्कृत इति ध्येयम् ।

अत्र तज्जजीवरूपेण ब्रह्मण एव परिणामादत्र तद्विकारादिदोषासत्त्वादनिर्मोक्ष एव । भेदाभेदविरोधोऽपि तदवस्थ । सर्वेश्वरस्यैव सर्वस्मात्परत्वस्य 'तमीश्वराणां परमं महेश्वरं तं देवतानां परमं च दैवतम्' 'न तत्समश्चाभ्यधिकश्च दृश्यते' इत्यादिषु श्रुतत्वेन तदधिकस्य मानब्रह्मकल्पनाऽसम्भवश्चेत्यादि समाकलनीयमत्र मते ।

निम्बार्कीयतत्त्वनिरूपणप्रणाली चेयम् । स्वतन्त्रसत्ताश्रयो विभुरेकश्चेतनो देवदेवो रमाकान्तो वासुदेवः परंब्रह्म । स एवाचिन्त्यस्वाभाविकस्वरूपगुणशक्तिभिर्बृहत्तमः सर्वनियन्ता संसारस्य सृष्टिस्थितिमोक्षाणां भवति निर्वाहकः । परतन्त्रसत्ताश्रयाश्चेतना जीवा अणवोऽसङ्ख्याता नित्याश्च । द्वेधा च ते बद्धमुक्तभेदात् । मुक्ता अपि द्वैधैव—नित्यनिवृत्ततमसो गरुडविष्वक्सेनसनन्दनादयो नित्यसिद्धा उपायनिवृत्ततमसः साधनसिद्धाश्च ध्रुवकादय इति । परतन्त्रसत्ताकं त्रिविधं प्रकृतिकालकर्मभेदात् । परतन्त्रसदजडमपि विशुद्धसत्त्वात्मकं द्रव्यमप्राकृतमचेतनमस्तीत्येके । भगवदभिन्ना परा शक्तिर्या सप्रकाशास्ति चेतना सैव भगवद्विग्रहात्मना भगवल्लोकात्मना च भवतीति मन्यन्ते परे । 'साक्षात्प्रकृतिपरोऽयमात्मा गोपालः' 'साक्षाद्ब्रह्म गोपालपुरी' इत्यादिश्रुतेः 'दर्शयामास स्वं लोकं गोपानां तमसः परम् । सत्यं ज्ञानमनन्तं यद्ब्रह्मज्योतिः सनातनम् ॥' इत्यादिस्मृतेश्च । निम्बार्कीयवेदान्तकौस्तुभभाष्ये विस्तरः ।

चेतनाचेतनानां परमात्मनः शक्तिभूतानां ततो भेदोऽस्त्येव परमार्थतः । तदधीनवृत्तित्वतद्व्याप्यत्वाभ्यां शक्तिमत्तदात्मकत्वेन चाभेदव्यपदेशमपि नानुपपन्नम् । तथा च स्मर्यते 'सर्वं समाप्नोषि ततोऽसि सर्वः' 'योऽयं तवागतो देव समीपं देवतागणः । स त्वमेव जगत्स्रष्टा यतः सर्वगतो भवान् ॥' इति । 'प्रकृतिर्याऽस्योपादानमाधारः पुरुषः परः । सतोऽभिव्यञ्जकः कालो ब्रह्म तत्त्रितयं त्वहम् ॥' इति च । उपश्लोकितश्चायमर्थो दशश्लोक्यां निम्बार्काचार्येण 'सर्वं हि विज्ञानमतो यथार्थकं श्रुतिस्मृतिभ्यो निखिलस्य वस्तुनः । ब्रह्मात्मकत्वादिति वेदविन्मतं त्रिरूपतापि श्रुतिसूत्रसाधिता ॥' इति । समन्वयसूत्रव्याख्याने

चाभापि 'तस्मात् सर्वज्ञः सर्वाचिन्त्यानन्तशक्तिर्विश्वजन्मादिहेतुर्वेदैकप्रमाणगम्यः सर्वभिन्नाभिन्नो भगवान् वासुदेवो विश्वात्मैव जिज्ञासाविषयः, तत्रैव सर्वं शास्त्रं समन्वेतीत्यौपनिषदानां सिद्धान्तः' इति।

भगवद्गुणविग्रहाणां तु भगवतोऽनन्यत्वमेव। अथापि भेदप्रतिपत्तिव्यवहारौ विशेषात्सङ्गच्छेते। विशेषो नाम भेदप्रतिनिधिः सत्ता सत्तावतीत्यादिप्रतीतेर्निर्वाहकः। माध्वैरप्ययं विशेषोऽङ्गीकृत इति बोध्यम्।

परब्रह्मभूतः पुरुषोत्तमः सर्वावतारस्वरूपधारी श्रीकृष्ण एव सह राधया मुमुक्षूपास्यः। तदुक्तं दशश्लोक्याम्—'स्वभावतोऽपास्तसमस्तदोषमशेषकल्याणगुणैकराशिम्। व्यूहाङ्गिनं ब्रह्म परं वरेण्यं ध्यायेम कृष्णं कमलेक्षणं हरिम्॥ अङ्गे तु वामे वृषभानुजां मुदा विराजमानामनुरूपसौभगाम्। सखीसहस्रैः परिसेवितां सदा स्मरेम देवीं सकलेष्टकामदाम्॥ उपासनीयं नितरां जनैः सदा प्रहाणयेऽज्ञानतमोनुवृत्तेः। सनन्दनाद्यैर्मुनिभिस्तथोक्तं श्रीनारदायाखिलतत्त्वसाक्षिणे॥ नान्या गतिः कृष्णपदारविन्दात्सन्दृश्यते ब्रह्मशिवादिवन्दितात्। भक्तेच्छयोपात्तसुचिन्त्यविग्रहादचिन्त्यशक्तेरविचिन्त्यसाशयात्॥' इति। (अविचिन्त्या ब्रह्मादिभिः सा लक्ष्मीः, तस्या आशयो भावो यस्मिन् तस्मात्) अत्र च 'व्यूहाङ्गिन'मिति नानावतारस्वरूपवत्त्वं श्रीकृष्णस्योक्तम्। 'नेह नानास्ति किञ्चन' 'सर्वत्र च स्वगतभेदविवर्जितात्मा' इति ब्रह्मणि भेदनिषेधाच्चैकस्यैव नानावतारस्वरूपधारकत्वं युक्तम्। अन्यथा तु नृसिंहादीनामपि परब्रह्मत्वस्य नृसिंहतापनीयादिसिद्धत्वेनावतारेषु चेतनभेदे ब्रह्मणि भेदः प्रसज्येत। चेतनैक्येऽप्यवतारेषु कलांशादिभेदवर्णनं त्वनन्तगुणशक्तेर्गुणशक्त्याविष्कारतारतम्यनिबन्धनं स्यात्। कृष्णस्य तु षोडशकलापरिपूर्णत्वमेव 'कृष्णस्तु भगवान् स्वयम्' इत्यादिवचननिचयप्रामाण्यादित्याशयः।

अर्थपञ्चकं च ज्ञातव्यत्वेन सङ्गृहीतं यथायथं त्यागायोपादानाय वा 'उपास्यरूपं तदुपासकस्य च कृपाफलं भक्तिरसस्ततः परम्। विरोधिनो रूपमथैतदाप्तेर्ज्ञेया इमेऽर्था अपि पञ्च साधुभिः॥' इति। (कृपाफलं प्रपत्तिः) भक्तिरसश्च भवति पञ्चधा स्मर्तृभावनाभेदाच्छान्तिदास्यसख्यवात्सल्यौज्ज्वल्यपूर्वः। तत्राद्यो वामदेवादेः। द्वितीय उद्धवादेः। तृतीयोऽर्जुनादेः। चतुर्थो वसुदेवादेः। पञ्चमो राधारुक्मिण्यादेः। प्रेमविशेषलक्षणायाः

परमभक्तेर्हेतुः श्रवणादिका नवविधा भक्तिरपरा। तथा च दशश्लोक्यां पठ्यते 'कृपास्य दैन्यादियुजि प्रजायते यया भवेत् प्रेमविशेषलक्षणा। भक्तिर्ह्यनन्याधिपतेर्महात्मनः सा चोत्तमा साधनरूपिका परा॥' इति। इयं च द्वेधा विधिप्रवृत्ता रुचिप्रवृत्ता चेति। महैश्वर्यप्रधाना द्वारकेशादिविषयादिमा। माधुर्यैश्वर्यप्रधाना व्रजेशविषया चान्तिमा। इयं च क्रमान्माहेश्वरी भक्तिर्माधुरी भक्तिरिति संज्ञां लभते। विस्तरस्तु दशश्लोकीभाष्यादौ द्रष्टव्यः।

अयमाचार्यो नियमानन्दापरनामधेयः सुदर्शनांशो वर्ण्यते। एतदात्मकसुस्पष्टं च दशश्लोकीभाष्यस्थः श्लोकोऽयमुद्ध्रियते 'ब्रह्म सत्यं जगत्सत्यं सत्यमेवमपि ध्रुवम्। निम्बार्को भगवान् विद्धि सत्यवादी निगद्यते॥' इति।

चिदचिच्छक्तिमत्त्वेन जगद्ब्रह्मणोरभेद उच्यतेऽत्र। ननु शक्तिमतः स्वरूपाद्भेदे पदार्थस्य सति कथमभेदो मुख्यः स्यात्। मा भूच्चेदभेदोऽपृथक्सिद्धत्वादेवं चेत् तर्हि विशिष्टाद्वैतस्य प्रद्यासजनैव मतमिदं सम्पद्येत। गुणगुणिनोरपि पृथक्सिद्धत्वाभावमात्रम्। न त्वभेदो मुख्यः। गुणानां बहुत्वाद्गुणिनस्त्वेकत्वात्। न च गुणानां सङ्घात एव गुणीति वाच्यम्। सङ्घातस्य सङ्घातिभ्योऽनतिरिक्तत्वादतिरिक्तत्वे वा तद्धर्मभूतस्य धर्मित्वायोगात्। गुणातिशयविवक्षया पुनः क्वचिदभेदव्यपदेशः 'तेजोबलैश्वर्यमहावबोधसुवीर्यशक्त्यादिगुणैकराशिः॥' इत्यादौ तपोऽतिशयविवक्षया तप एव मूर्तिमदित्यादिव्यपदेशवत्। ब्रह्मण एव लोकरूपेण विग्रहरूपेण चावस्थानमिति च मतं न चान्तरम्। सावयवत्वादेस्तस्मिन् प्रसङ्गात्। प्रमाणस्य चाऽपर्यात्। किञ्च ब्रह्मस्वरूपत्वे त्रिपाद्विभूतेस्तदपेक्षयाल्पीयस्या लीलाविभूतेरपि ब्रह्मस्वरूपत्वमेव कुतो नेष्यते। वस्तुतः परस्य ब्रह्मणः परशक्तिरूपस्य विग्रहाद्यात्मना परिणामशीलस्याप्राकृतस्यापि द्रव्यस्य स्वप्रकाशस्य प्रकाशमयस्य ब्रह्मशब्देन व्यवहारोऽस्ति न तु वादेषु। निरवद्यमङ्गलगुणकत्वसाम्याच्च रूपस्वरूपयोरभेदनिर्देशोऽपि सङ्गच्छत इति ध्येयम्।

अथ शुद्धाद्वैतम्। प्रवर्तकश्चास्य श्रीवल्लभाचार्यो वैश्वानरः। प्रक्रिया चैतदीया समनुवर्ण्यते—एकमेव तत्त्वं परं ब्रह्म। तदेव रिरंसु सङ्कल्पादात्मनो बहुभावं स्वस्मादुच्चरितैः सच्चिदानन्दांशैर्जडजीवान्तर्यामिरूपैर्विवर्तते हेमेव कटकमुकुटाद्यात्मना। तथा च श्रुतिः 'स एकाकी न रमते स द्वितीयमैच्छत्' 'तदैक्षत बहु स्यां प्रजायेयेति' 'तदात्मानं स्वयमकुरुत' इत्यादिका। स्वतोऽनव-

च्छिन्नज्ञानानन्दैकलक्षणस्य ब्रह्मणो गुणतिरोधानमन्तरा कार्यवैचित्र्यस्य रमणप्रयोजकस्याघटमानतया तदिच्छात एव चिदंश आनन्दस्य सदंशे ज्ञानानन्दयोश्च भवति तिरोधिः। तदुक्तं तत्त्वदीपनिबन्धे वल्लभाचार्येण 'बहु स्यां प्रजायेयेति वीक्षा तस्य ह्यभूत्सती। तदिच्छामात्रतस्तस्माद्ब्रह्मभूतांशचेतनाः॥ सृष्ट्यादौ निर्गताः सर्वे निराकारास्तदिच्छया। विस्फुलिङ्गा इवाग्नेस्तु सदंशेन जडा अपि॥ आनन्दांशस्वरूपेण सर्वान्तर्यामिरूपिणः। सच्चिदानन्दरूपेषु पूर्वयोरन्यलीनता॥ अत एव निराकारौ पूर्वावानन्दलोपतः। जडो जीवोऽन्तरात्मेति व्यवहारस्त्रिधा मतः॥' इति। तिरोहितमानन्दमनु तिरोधीयते षाड्गुण्यमपि। तथा च सूत्रं 'पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ' इति। तत्रैश्वर्यतिरोधानाद्दीनत्वपराधीनत्वे। वीर्यस्य तिरोधानात्सर्वदुःखसहत्वम्। यशस्तिरोधेः सर्वहीनत्वम्। श्रियस्तिरोधानाज्जन्मादिसर्वापत्। ज्ञानतिरोधानाद्विपर्ययः। वैराग्यतिरोधेर्विषयासक्तिः। ऐश्वर्यादिचतुष्टयतिरोधानाद्बन्धः शेषयोस्तिरोधानादहन्ताममतालक्षणो विपर्ययश्चेति भावः। पञ्चपर्वा चाऽविद्या स्वरूपाज्ञानं देह इन्द्रियेष्वन्तःकरणे प्राणे चात्मभावाध्यास इति। अविद्याप्रसक्ताभ्यां रागद्वेषाभ्यां प्रयुक्तेन विविधकर्मकरणाद्भवति संसरणं जीवानां चिदंशानाम्। अन्यच्चेदमविद्याकार्यं संसरणम्। अन्यदेव तु ब्रह्मणो बहुभवनसामर्थ्यलक्षणमायाकार्यं जगद्रूपात्मकम्। कारणावस्थायां कार्यावस्थायां च विशुद्धमेव ब्रह्मेष्यते हेमव[illegible] सिद्धान्तः प्रथामश्नुते 'शुद्धाद्वैत'मिति। ब्रह्मण एव। जगद्भावो[illegible] इति च। विद्यया च पञ्चपर्वयाऽविद्यानिवृत्तिः। यथोक्तं निबन्धे 'कैवल्यमविद्याविनिवृत्तितः। वैराग्यं सांख्ययोगौ [illegible] क्लेशवे॥ पञ्चपर्वेति विद्येयं यया विद्वान् [illegible] [illegible]ष्टिप्रवृत्तानां देवानां मुक्तियोग्यता॥' इति।

त्रिविधं च परब्रह्मणः स्वरूपमाधिदैविकमाध्यात्मिकमावि[illegible] भौतिकं जगत्। आध्यात्मिकमक्षरं ब्रह्म। आधिदैविकं [illegible] क्रमाच्चैतत्त्रितयं प्राप्यं कर्ममार्गतो ज्ञानमार्गतो भक्तिमार्ग[illegible]। [illegible]दानन्दलक्षणस्यैव पुरुषोत्तमापेक्षया किञ्चिदानन्दांश[illegible] [illegible]च्छया व्यापृतत्वात्। अत एव गणितानन्दत्वम्। [illegible] पुरुषोत्तमत्वमिति च वर्ण्यते। आनन्द एव च [illegible]

परब्रह्मणि 'आनन्दमात्रकरपादमुखोदरादि' रित्यादिरूपते । अक्षरब्रह्मणः कर्मांशावेव च प्रकृतिपुरुषौ, ततो महदादिसृष्टिः । इदमेव सकलजगत्कारणम् । पुरुषोत्तमाधारभूतमिदं धामरूपं चरणरूपं तस्य हंसाकृतौ पुच्छरूपं च भवति । एतदुपासनया निष्पन्नेन विशदज्ञानेनाखिलैव परमात्मानुभवो भवति याव कल । कृष्णस्तु भक्तिप्राप्य उत्कृष्ट एतस्मात्। वर्णितं चैतत्सर्वं निबन्धादौ 'प्रकृतिः पुरुषश्चोभौ परमात्माभवत् पुरा । यद्रूपं समधिष्ठाय तदक्षरमुदीर्यते । आनन्दांशतिरोभावः सत्त्वमात्रेण तत्र हि । मुक्तजीवस्ततः भोक्ता स्वेच्छावशगो हरिः । इच्छामात्रात्तिरोभावस्तस्याप्यनुपचर्यते । ब्रह्म कूटस्थाव्यक्तादिशब्दैर्वाच्यो निरन्तरम् ॥ सर्वावरणयुक्तानि तस्मिन्नण्डानि कोटिशः । मूलाविच्छेदरूपेण तदाधारतया स्थितः ॥ प्रभुत्वेन हरेः स्फूर्तौ लोकत्वेन तदुच्यते । अन्तर्यामिचरणादिरूपे पादत्वमस्य हि ॥ हंसाकृतिनिरूपणे पुच्छत्व परमात्मनः । तदुपासनया ज्ञानात्परमात्मत्वमस्य हि ॥ ज्ञानमार्गे स्थितदेव सेव्य कृष्णास्ततोऽधिकः । इत्यादौ ।

अव्यक्तोपासनमार्गाद्भगवद्भक्तिमार्ग एव सुकरो रसपूर्णश्च । ज्ञाननिष्ठानामक्षरब्रह्मण्येव लय । भक्तिनिष्ठानां तु अलौकिकाकारसम्पत्त्यर्थमेव तत्र प्रवेश । तत परमपुरुषेण स्वकीयतावरणेन कृपात उद्धारणं स्वीयदिव्यलीलानन्दानुभावनं चेति विशेष । उक्तं च शुद्धाद्वैतमार्तण्डे 'मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते । इति वाक्यात्तु भक्तानामविद्यापि निघृहिता ॥ अलौकिकाकारसिद्धयै प्रवेशो हरिणोदितः । अव्यक्तोऽक्षर इत्युक्तस्तमाहुः परमां गतिम् ॥ यं प्राप्य न निवर्तन्ते तद्धाम परमं मम । इति वाक्येन भगवद्ब्रह्म प्रकीर्तितम् ॥ पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया । इत्यभिन्नेन वाक्येन भेदाभावो निरूपितः ॥ भक्त्या त्वामो हि निर्दिष्टो भक्तिश्चाचार्यसंश्रयात् । श्रीमदाचार्यचरणभजनादेव नान्यथा ॥ ब्रह्मभाव तु सम्पाद्य परमानुग्रहाद्विभुः । गूढस्थितं स्वीयजीव समुद्धरति पक्षतः ॥ जनुषो परमश्रेष्ठो विरहानलसम्भवः । यदा देहादिनाशाय समर्थो जायते तदा ॥ निजं श्रीमत्कृष्णचन्द्रः स्वाधिकारानुसारतः । परमानन्दलीलां तामनुभावयति प्रभुः ॥ इति श्रीवल्लभाचार्यचरणाब्जकृपामरात् । प्राप्यते

नान्यथा चैतद्ब्रह्मादीनां सुदुर्लभम् ॥ ये तु ज्ञानैकसन्निष्ठास्तेषां तु लय एव हि । भक्तानामेव भवति लीलास्वादोऽतिदुर्लभः ॥' इति । अतो भक्तिरेव कार्येति सिद्धम् ।

यत श्रीमत्कृष्णचन्द्रे परभक्तिरसस्य परिपोषकं श्रीमद्भागवतमेवातस्तच्छिल्य-दाभ्यसनीयमिति च निर्दिदिशे निबन्धे 'प्रेम्णोऽन्यत्साधनं लोके नास्ति मुख्यं परं महत् । श्रीभागवतमेवात्र परं तस्य हि साधनम् ॥' 'पठनीयं प्रयत्नेन निर्हेतुकमदम्भतः' इति । प्रमाणानि चात्र परिगणितानि 'वेदाः श्रीकृष्णवाक्यानि व्याससूत्राणि चैव हि । समाधिभाषा व्यासस्य प्रमाणं तच्चतुष्टयम् ॥ उत्तरं पूर्वसन्देहवारकं परिकीर्तितम् । अविरुद्धं तु यत्त्वस्य प्रमाणं तच्च नान्यथा ॥' इति । (समाधिभाषा श्रीमद्भागवतम्) 'शङ्खचक्रादिकं धार्यं मृदा पूजाङ्गमेव तत् । तुलसीकाष्ठजा माला तिलकं लिङ्गमेव तत् ॥' इति बाह्यं लिङ्गं च वर्णितमस्ति । तप्तमुद्राधारणं तु नानुमन्यतेऽत्र ।

मर्यादा पुष्टिरिति मार्गद्वयं प्रथतेऽत्र । अनयोः स्वरूपं चाभ्यधायि 'कृतिसाध्यं साधनं ज्ञानभक्तिरूपं शास्त्रेण बोध्यते । ताभ्यां विहिताभ्यां मुक्तिर्मर्यादा । तद्रहितानामपि स्वस्वरूपबलेन स्वप्रापणं पुष्टिरित्युच्यते' इति । 'पुष्टिमार्गोऽनुग्रहैकसाध्यः प्रमाणमार्गाद्विलक्षण' इति च । 'पोषणं तदनुग्रह' इति श्रीभागवतवचनं चात्र मूलम् । पुष्टिप्राधान्योपगमात् 'पुष्टिसम्प्रदाय' इति चास्य प्रसिद्धिरिति दिक् ।

अत्रेदं विमर्शनीयम् । यत्तु ब्रह्मण एव रमणार्थं बहुभवनेच्छया स्वांशेष्वानन्दादिस्वगुणतिरोधानं जीवादिभावश्चेति । तन्न युक्तम् । तिरोधानाभ्युपगमे हि ब्रह्मगुणानां ब्रह्मण सदाऽतिरोहितस्वभावत्वपरश्रुतिव्याकोप । ब्रह्मांशानां जडजीवानां ब्रह्माभिन्नत्वोपगमाद्ब्रह्मण्येव सकलदोषप्रसक्तिश्च । न च हेमनिदर्शनेन निर्दोषत्वं साधयितुं शक्यते वैषम्यात् । कटकाद्यवस्थायामपि न हि हेयधर्मसम्बन्धोऽस्ति । जगति तु हेयधर्मा बहव समुपलभ्यन्त एवेति । ब्रह्मांशानां तेषां ब्रह्माभिन्नत्वोपगमे तु विशिष्टाद्वैतसिद्धान्त एवोररीकृतः स्यात् । स्वात्मानन्दमसन्तमिव कृत्वा स्वात्मैकदेशेष्वेव दुःखाद्युत्पादनेन रमणमपि तामसकृत्यं न परस्मिन् ब्रह्मणि सङ्गच्छेततराम् । किञ्च निरंशस्याखण्डस्य च भगवतः स्वरूप एवांशभेदपरिकल्पनं तेषां ततो व्युच्चरणकल्पनमप्ययुक्तम् । न चाऽद्वितीयत्वश्रुत्याग्रे जडजी-

स्वभेदः पृथग् ब्रह्मणो न स्वीकर्तुमुचित इति वाच्यम् । समाभ्यधिकद्वितीयनिषेधपरतया अस्या ब्रह्मविशेषणनिषेधकत्वायोगात् । न चैवमपि भगवत एकाकित्वश्रवण विरुध्येत तदा जडजीवभेदस्वीकार इति वाच्यम् । शुद्धलीलाप्रविष्टानां वा बहूनामुपगमेनैतद्विरोध प्रसज्येतेति तुल्य दूषणम् । जगल्लीलानन्दप्रयोजकबहुभावाभावविषयमिदमिति चेत्परिहार सोऽपि तुल्य एव, सत्येव जडजीवभेदेऽपि तद्गतनानात्वस्थाल्यभावस्य लीलानन्दप्रयोजकस्य तदा विरहादिति दिक् ।

विशिष्टाद्वैतस्य तु प्रतिष्ठापका श्रीभगवद्रामानुजाचार्या अत्र तावतार । एतत्सिद्धान्तसारो यथा—प्रमाण प्रमेयमिति द्वेधा तत्त्वम् । यद्यपि प्रमेयमेव भवति प्रमाणमपि । तथाप्यर्थप्रमितिकरणत्वप्रमाणग्राह्यार्थत्वरूपोपाधिभेदविवक्षयाऽस्य विनिर्देशः । तत्र प्रमाण त्रिविधं प्रत्यक्षानुमानशब्दभेदात् । त्रिधैव मितेर्नामैवमथ- स्वात् । प्रमेयमपि त्रिविधं चिदचिदीश्वर इति । चिच्छब्दोऽत्र कर्तरि क्विपि ज्ञातृत्वो ज्ञानाश्रयवाची बोध्य । द्रव्याद्रव्यविभागप्रविष्टानामद्रव्याणां प्रकृतिकालधर्मभूतज्ञाननित्यविभूतीनां च द्रव्यविभागप्रविष्टानामचित्स्वेव समावेश । ज्ञानाश्रयत्वा चिच्छब्देन ग्राह्योऽपीश्वर प्राधान्यात्पृथग् व्यपदिष्ट । निरीश्वरवादप्रसक्तो मा भूदिति च । अतश्चिच्छब्द परिशेषाद्बद्धमुक्तनित्यलक्षणत्रिविधजीवपरो व्यवह्रियते । अत्र चाद्रव्याणां द्रव्यप्रकारत्व नियतमेव । द्रव्येष्वपि चेतनाचेतनानां परमचेतन सर्वेश्वरं प्रति नियतप्रकारत्वमेव तच्छरीरत्वात् । चेतनापृथक्सिद्धविशेषणद्रव्यत्व च निष्कृष्ट शरीरलक्षणम् । शरीरात्मभावश्च जगद्ब्रह्मणोरन्तर्यामिब्राह्मणादौ । यदि परमात्मशरीरत्व नाभ्युपगम्यते चिदचितो तर्हि स्वरूपैक्य तत प्रतिपत्तुमशक्यतापि बाधकप्रक्रियया । शरीरशरीरिणोश्च भेद एव नियतः । न च शरीरात्मभावः कल्पित एवोपासनार्थतया न तु वास्तविक इति वाच्यम् । तत्त्वप्रकरण एव सृष्टिप्रलयादिनिरूपणावसरे शरीरात्मभावस्य प्रकीर्तनात् ।

भिन्नत्वेऽपि चिदचितोर्नियतविशेषणतया विशिष्टब्रह्मैक्यपरत्वमिष्टा त्वैक्यश्रुति । यथा प्रभादेः प्रभावन्मात्रावगाहित्वम् । तथा च सूत्रं 'प्रकाशादिवत्तु नैवं परः' इति । अनेन विशेष्यविशेषणभावानादरेण स्वरूपैक्यत्वे स्वीक्रियमाणे तु ब्रह्मण्येव दोष प्रसज्येतेति सूच्यते । अतिसूक्ष्मदशापन्ना प्रलये परमात्मनि अविभागशब्दितनिलक्षणसंयोगवतां जडजीवानां सृष्ट्यारम्भकाले कार्ययोग्यावस्थापत्त्या स्थूलत्वाभिप्रायाच व्युच्चरणश्रुति । कार्याणां कारणापेक्षयाऽतिक्षुद्रत्वे विस्फुलिङ्गो दृष्टान्ततोऽणीयाधनिर्गतत्वे च । नैयमता ब्रह्मस्वरूपैकदेशत्व जडजी

वानां सिद्ध्यति। आर्द्रैधोऽग्निधूमनिदर्शनेनोर्णनाभिनिदर्शनेन च विशिष्टस्यैव ब्रह्मणो जगद्धेतुभावोऽवगम्यते। यथोर्णनाभिः स्वशरीरैकदेशोर्णाविशिष्टवेषेण लूतायामुपादानं विहरणेच्छया निमित्तं च। एवं सूक्ष्मचेतनाचेतनशरीरकं ब्रह्मोपादानं जगत्प्रति सङ्कल्पतो निमित्तं च। विशेष्यविशेषणभावापन्नतत्त्वत्रयसङ्घातात्मकं च जगत्। '**हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि**' '**इदं सर्वमसृजत यदिदं किञ्च तत्सृष्ट्वा तदेवानुप्राविशत् तदनु प्रविश्य सच्च त्यच्चाभव**'दित्यादिश्रुतेः। तथा च कारणभूतसूक्ष्मचेतनाचेतनविशिष्टब्रह्मणो ज्ञानेन कार्यभूतस्य स्थूलचेतनाचेतनविशिष्टब्रह्मरूपस्य जगतो ज्ञातता कार्यकारणयोरनन्यतया सम्भवतीति सत्कार्यवादनिरूपणेन जगतो ब्रह्मात्मकत्ववर्णने विशिष्टैक्यव्यवस्थापने च सद्विद्यायास्तात्पर्यम्। एतेन मृत्पिण्डघटादिनिदर्शनेन क्षीरनिदर्शनेन च स्वरूपपरिणाम एव स्याद्विवक्षितो न तु विशिष्टस्य विशिष्टं प्रत्युपादानभाव इति शङ्काऽपास्ता। क्षीरत्वदधित्वपिण्डत्वघटत्वादिहेतुहेतुमद्भावावच्छेदकधर्मस्थानीयत्वात्सूक्ष्मस्थूलचिदचिद्वत्त्वस्य। अवस्थान्तरापत्तिमात्रे मृत्पिण्डघटादिदृष्टान्तोपपत्तेः सहकार्यनपेक्षकार्यकरत्वे क्षीरनिदर्शनोपपत्तेश्च। तथा च सूत्रं '**उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि**' इति। तत्तत्स्थूलसूक्ष्मचेतनाचेतनशरीरविशिष्टवेषेण ब्रह्मण एव कार्यत्वं कारणत्वं च स्वरूपपरिणामाभावेऽपि तत्तदवस्थचेतनाचेतननियमनविशेषलक्षणावस्थाभेदतो मुख्यमेव प्रसिद्धं श्रुतिस्मृतिषु। शास्त्रैकप्रमाणके च यथाशास्त्रमेव प्रतिपत्तव्यम्। विशिष्टयोः कार्यकारणयोरैक्योपगमाच्चायं सिद्धान्तो '**विशिष्टाद्वैत**'नाम्ना प्रथते नाम।

तत्त्वत्रये तावदचेतनं भोग्यजातं भोक्ता च जीववर्गः प्रसिद्धतर एव लोके। एताभ्यामेव सकललोकयात्रानिर्वाहे कृत नियन्त्राऽन्येनेति निरीश्वरवादस्तु न शोभनः। सर्वनियन्तुर्विरहे कस्यचिदराजकराज्यवद्बहुराजकराज्यवद्वा लोकव्यवस्थाविप्लवस्यावर्जनीयत्वात्। अतः शक्यमभ्यूहितुं स्यात् कश्चित्सर्वेषां नियन्ता यच्छासनतोऽनादेः कालादविच्छिन्नस्रोतोरूपेण प्रवर्तते लोकयात्रा व्यवस्थितया मर्यादयेति। श्रावयति च श्रुतिः सर्वनियन्तारमानन्दमयं परमात्मानमरविन्दाक्षं '**भीषास्माद्वातः पवते भीषोदेति सूर्यः। भीषास्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चम**' इत्यादिका। अतः सर्वेश्वरोऽपि माननीय एव यथाप्रमाणमिति स्थितम्। एतेषां तत्त्वानां स्वरूपभेदोपगमाद्भेदश्रुतेर्मुख्यत्वम्।

शारीरशब्दो हि सकलचिदचिच्छरीरके परमात्मन्येव मुख्य उपनिषदि प्रसिद्धश्च 'तस्यैष एव शारीर आत्मा' इति। कृतयुगसिद्धान्त इति चास्य प्रसिद्धिः। जगद्ब्रह्मणो: शरीरात्मभावो नारायणस्यैव सकलजगत्कारणत्वं निरुपाधिकं सर्वेश्वरत्वं विलक्षणविग्रहवत्त्वं मुमुक्षुध्येयत्वमित्याद्यर्थजातं हि सिद्धान्तेऽस्मिन् प्रसिद्धं स्मृतं मनुना स्वनिबन्धे कृतयुग एवेति।

यत्त्वत्र चोद्यते कैश्चित्-जडजीवयोर्ब्रह्मतो भेदमाश्राय पुनर्विशिष्टब्रह्मान्तर्भावलक्षणैक्यस्वीकारापेक्षया साक्षादेव भेदाभेदौ लाघवादुपगमार्हौ। किञ्च चिदचितोर्विशेषणत्वमपि न घटते। व्यावर्तकत्वस्वाभाव्याद्विशेषणानां प्रकृते च व्यावर्त्यस्याभावात्। किञ्च सशरीरत्वे ब्रह्मणो भोगप्रसक्तिश्चेति। तन्मन्दम्। साक्षाद्भेदाभेदयोर्विरुद्धयोरुपगमे जैनगनिश्चताप्रसक्तेः। सकलचेतनाचेतनात्मकविभूतिवैशिष्ट्यस्य च कतिपयचिदचिद्विभूतिकाद्देवतान्तरात्परब्रह्मणो व्यावर्तकत्वोपपत्तेः। छत्रचामरादिपरिच्छदजातं सार्वभौमलक्षणं स्वयं व्यावर्त्यकोटिघटितमेव यथा तस्य व्यावर्तकं भवति तथा ह्यत्र भाव्यम्। सशरीरत्वेऽप्यनन्यवश्यत्वादेव भोगाप्रसक्तेश्च। तथा च सूत्राणि 'सम्भोगप्राप्तिरिति चेन्न वैशेष्यात्' 'भोक्त्रापत्तेरविभागश्चेत् स्याल्लोकवत्' 'न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि' इति। सर्वत्र सदोषेषु स्वेच्छयैवान्तर्यामितया प्रविश्य स्थितस्यापि परस्य ब्रह्मणोऽलेपस्वभावस्य नैव दोषप्रसक्तिः सर्वास्वप्युपनिषत्सु निर्दोषत्वसमस्तकल्याणगुणाकरत्वलक्षणोभयलिङ्गस्यास्मिन् व्यवस्थापितत्वादिति 'न स्थानतोऽपी'ति सूत्रार्थः। नैवात्र सूत्रे निर्विशेषत्वं स्थाप्यते किन्तु निर्दोषत्वमेव। गुणतोऽपि बृहत्त्वपरब्रह्मशब्देन वेदान्तवेद्यपरतत्त्वनिर्देशपूर्वकं विचारशास्त्रमुपक्रममाणस्य भगवतो बादरायणस्य सविशेष एव तात्पर्यं हि शक्यमुन्नेतुम्।

मायिमतवैलक्षण्यं चात्र मते स्फुटं समाटङ्कि तत्त्वसारे 'आदौ भेदश्रुतीनामनृतविषयता लक्षणा चैक्यवाचां दूरे तावत् प्रहाणं तदुभयघटनातत्पराणां श्रुतीनाम्। प्रत्यक्षादिप्रमाणस्वरसगतिहतिस्तर्कबाधोऽपि भूयान् मायावादे तदेतत्सकलमितरथा लक्ष्मणार्यस्य पक्षे॥' इति। तत्त्वमुक्ताकलापे च दर्शनान्तरेभ्यो वैलक्षण्यं व्यपदिदिशे 'दृष्टेऽपह्नुत्यभावादनुमितिविषये लाघवस्यानुरोधात् शास्त्रेणैवावसेये विहतिविरहिते नास्तिकत्वप्रहाणात्। नाथोपज्ञं प्रवृत्तं बहुभिरुपचितं यामुनेयप्रबन्धैस्त्रातं सम्यग्यतीन्द्रैरिदमखिलतमः-

कर्षेण दर्शनं नः ॥' इति । प्रत्यक्षापहारका बाह्यादय । अनुमितौ मुख्यं प्रक्रिया समाश्रिता नैयायिकादिभिः । यथा अत्यन्तातीन्द्रियाणामप्यनुमानेन प्रसाधनम् । केवलव्यतिरेकिप्रामाण्योपगम । मणिविद्यादिषु व्याहृतसाध्यविपर्ययकव्यतिरिक्तस्यापि केवलव्यतिरेकिण प्रमाणत्वोरीकरणमिति । शास्त्रैकवेद्येषु च ब्रह्मसद्भाव स्वसाक्षात्त्वोभयविमुक्तियोगादिषु नास्तिकता तेषाम् । नैवमत्र सिद्धान्त इति भाव । श्रीमन्नारायणपारम्योपगमाच्चायमेव वैदिकोत्तमसिद्धान्त । तथा हि तस्यैव पारम्यं सकलश्रुतिसम्मतम् । तथा च वचनानि 'नारायणपरा वेदाः' 'वासुदेवपरा वेदाः' 'मुख्यं च सर्ववेदानां तात्पर्यं श्रीपतौ परे । उत्कर्षे तु तदन्यत्र तात्पर्यं स्यादवान्तरम्' इत्यादीनि । सर्ववेदसारस्य प्रणवस्याप्यत्रैव प्रावण्यम् । तथा हि स्वाध्यायप्रवचनप्रारम्भावसानयो 'हरिःओं' इति सार्थकप्रणवसङ्कीर्तनं समञ्जसतराम् । नारायणपारम्ये मुख्यानि प्रमाणानि च समुल्लिखितानि तत्त्व मुक्ताकलापे–'आद्यं रामायणं तस्य च निगमगणो पञ्चमं पाञ्चरात्रं सत्त्वोपघ्नं पुराणं मनुमुखमुनिभिर्निर्मितं धर्मशास्त्रम् । त्यक्ताव्यो मूलवेदः पठपरिपठिता वल्लिकास्तापनीयं सौवालव्रह्मबिन्दुप्रमुतिकमपि न त्वत्परं तत्परं वे ॥' इति । पत्युरिव श्रिय श्रियोऽपि शेषित्वपार वश्यभाक्त्वाद्युपगतान्यत्र राद्धान्ते । एतत्सिद्धान्तप्रवर्तकगुरुपरम्पराया श्रियो घटकतया च 'श्रीसम्प्रदाय' इति प्रसिद्धिरेतत्सम्प्रदायस्य ।

अत्र च गतिद्वयं प्रथवे उपासना प्रपत्तिरिति । आद्या साधनभक्तिरन्त्या साध्य भक्तिरिति च व्यपदिश्यते । शरणागतिनिष्ठानां तु भगवदनुग्रह एव केवलं भव समुत्तारक । अत शरणागतिमार्ग एव भवति पुष्टिमार्ग । पुष्टिशब्देन व्यवहार पुनर्नात्र प्रसिद्ध । पुष्टिप्रपञ्चनं बहुधा वल्लभीये कृतमिति नात्र प्रसङ्गे निवेदयाम सौष्ठवेन ।

शरणागतावधिकृतस्य च वैष्णवा पञ्च पारमैकान्त्यहेतव उपदिष्टा भगवच्छास्त्रेषु शास्त्रतः । नित्य च चैषां स्मृतम् 'अग्निहोत्रं यथा नित्यं वेदस्याध्ययनं यथा । ब्राह्मणस्य तथैवेदं तप्तमुद्रादिधारणम् ॥' 'उपवीतादिवद्धार्याः शङ्खचक्रगदादयः । ब्राह्मणस्य विशेषेण वैष्णवस्य विशेषत ॥' इति । चक्रवर्तेरिव पतिसम्बन्धस्य परसम्बन्धस्यानेकत्वात् 'वैष्णवस्य विशेषत' इत्युक्तम् । निरुक्तं च वैष्णवत्वं 'विष्णूपायो विष्णुफलो वैष्णवः' इति । सात्त्विकस्य सर्वाश्रमिणश्च तप्तमुद्रादिधारणं विधीयते

'अङ्कयेत्तप्तचक्राद्यैरात्मनो बाहुमूलयोः। कलत्रापत्यभृत्येषु पश्वादिषु च सर्वशः॥' 'पशुपुत्रादिकं सर्वं गृहोपकरणानि च। अङ्कयेच्छङ्खचक्राभ्यां नाम कुर्याच्च वैष्णवम्॥ स्त्रिया सहैव कर्तव्यं गृहस्थस्य विधानतः। संस्कारपञ्चकं तेन भवेत्सा धर्मचारिणी॥ तापाद्याः पञ्च संस्कारा गृहस्थस्य यथाविधि। आचार्येण सदा कार्याः स्वगृह्योक्तविधानतः॥' 'प्रथमं तापसंस्कारं तापसैर्मुनिभिः स्मृतम्। सर्वाश्रमेषु वसतां स्त्रीणां च द्विजसत्तमाः'॥ इति। पञ्चायुधमुद्राधारणं शङ्खचक्रमुद्रामात्रधारणं वा यथासम्प्रदायम्। रामानुजीये तु शङ्खचक्रमुद्राधारणमेव 'ब्राह्मणः क्षत्रियो वैश्यः शूद्रश्च श्रद्धयान्वितः। चक्रं च पाञ्चजन्यं च बिभृयादग्निसंयुतम्॥' (विष्णुस्मृतौ) 'दक्षिणे तु भुजे विप्रो बिभृयाद्वै सुदर्शनम्। सव्ये तु शङ्खं बिभृयादिति ब्रह्मविदो विदुः॥' (पाद्मे) इत्यादिस्मृत्यनुसारात्। ऊर्ध्वपुण्ड्रे श्वेतमृत्तिका परिगृहीता 'श्वेतं वैष्णवमुच्यते' इति स्मरणात्। नाम्नि च भगवत्सम्बन्धि। 'एकान्तीव्यपदेष्टव्यो नैव ग्रामकुलादिभिः। विष्णुना व्यपदेष्टव्यस्तस्य सर्वं स एव हि॥' इति विधानात्। मन्त्रे श्रीमदष्टाक्षरमहामन्त्रादिः। यागो नामात्महविषो भगवति समर्पणात्मा दण्डवत्प्रणिपातो भगवत्सन्निधावाचार्येण कार्यमाणः, आचार्यप्रसादितप्रतिमापूजनं वा। तुलसीमणिमालिका पद्माक्षमालिका च कण्ठे धार्या शुचिसमये पुम्भिरिति व्यवस्थात्र संदृश्यते। औद्धवाऽन्यपि संस्कारपञ्चकमभ्युपगतमेव। पुण्ड्रद्रव्ये कण्ठमालिकायामुपदेश्यमन्त्रे च विशेषः। स चाग्रे प्रपञ्चयिष्यते। निरुक्तसंस्कारसंस्कृतानां वैष्णवानां महिमा च बहुधा प्रपञ्चितो महर्षिभिः 'शङ्खचक्राङ्कितनतुस्तुलसीमालिकाधरः। गोपीचन्दनलिप्ताङ्गो दृष्टश्चेत्तदघं कुतः॥' 'ये कण्ठलग्नतुलसीनलिनाक्षमाला ये बाहुमूलपरिचिह्नितशङ्खचक्राः। ये वा ललाटफलके कलितोर्ध्वपुण्ड्रास्ते वैष्णवा भुवनमाशु पवित्रयन्ति॥' 'अतिपापप्रसक्तोऽपि विष्णुचक्राङ्कितस्य तु। पादोदकं पिबेद्यस्तु सर्वपापैः प्रमुच्यते॥' इत्यादौ। तप्तमुद्राधारणनिषेधतन्निन्दादिवाक्यानां समन्वयश्च सुदर्शनसुरद्रुमादिषु कृतो द्रष्टव्यः। औद्धवसम्प्रदायीये शिक्षापत्रीभाष्येऽपि सुष्ठु विचार्य निर्धारितो विलोकनीयः कुतुकिभिरित्यलं विस्तरेण।

अथोद्धव सम्प्रदाय । प्रवर्तकश्चास्य श्रीस्वामिनारायण । श्रीहरिर्हरिकृष्ण सहजानन्दस्वामी नारायणमुनिः इत्यादिनाम्ना चास्य प्रसिद्धिरत्र । श्रीमद्रामानुजाचार्यप्रवर्तितं विशिष्टाद्वैतराद्धान्तमेवायं स्वमतत्वेन पर्यग्रहीत्। तथा च शिक्षापत्री 'मतं विशिष्टाद्वैतं मे' इति । चिदचिदीश्वरात्मकं तत्त्वत्रयमभिमतं श्रीहरेः, जगद्ब्रह्मणो शरीरात्मभावश्च । शिक्षापत्र्यां हरिगीतायामपि चेदमेव तत्त्वत्रयं विवेचितं नाम । अध्यात्मज्ञानसिद्धौ च श्रीमद्भगवद्रामानुजप्रणीता एव ग्रन्था मुख्यतया व्यवस्थापिता अनेन । गुरुपरम्परायां च स्वगुरो रामानन्दस्वामिनो गुरुत्वेन रामानुजस्वामी व्यपदिष्टः ।

अक्षराख्यमप्राकृतं धाम दिव्यगोलोकमध्यस्थं प्राप्यतया प्रथितेऽत्र सम्प्रदाये । श्रीकृष्णश्च राधालक्ष्मीयुत एतद्धामाधिपतिरभिमत उपास्य इष्टदेवश्च । वैकुण्ठादिधामान्तराण्यपि स्वीकृतानि यथाप्राप्तानि धामभेदेन नामाकारभेदेऽपि भगवतो धर्मिण एकत्वं च । तथा च शिक्षापत्री 'स राधया युतो ज्ञेयो राधाकृष्ण इति प्रभुः । रुक्मिण्या रमयोपेतो लक्ष्मीनारायणः स हि ॥ ज्ञेयोऽर्जुनेन युक्तोऽसौ नरनारायणाभिधः । बलभद्रादियोगेन तत्तन्नामोच्यते स च ॥ एते राधादयो भक्तास्तस्य स्युः पार्श्वतः क्वचित् । क्वचित्तदङ्गेऽतिस्नेहात्स तु ज्ञेयस्तदैकलः ॥ अतश्चास्य स्वरूपेषु भेदो ज्ञेयो न सर्वथा । चतुरादिभुजत्वं तु द्विबाहोस्तस्य चैच्छिकम् ॥' इति । मायाजीवेश्वरब्रह्मपरब्रह्मलक्षणा पञ्चार्थाश्च तत्त्वत्रयान्तर्गता एव विशेषतः समनुवर्णिताः साम्प्रदायिकग्रन्थे तत्र तत्र । क्वचित्क्वचित्तत्त्वनिरूपणादौ वल्लभादिप्रक्रियानुरोधः प्रतीयते नामापाततः । विशिष्टाद्वैतप्रक्रियाया अविरोधेन तत्समन्वयः कृत एव व्याख्यातृभिः सम्प्रदायवर्यैः । मुख्यार्थाविरोधेनार्थान्तरोपजीवनं च नैव दोषाय । श्रीभागवतप्रक्रियैव चात्र सर्वैः समादृता विशेषत इति चावधेयम् ।

वैष्णव्यां च दीक्षायामत्र श्रीकृष्णाष्टाक्षरमन्त्रोपदेशः प्रवर्तितः । अत 'कृष्णदीक्षा' इति व्यपदेशः कृतोऽस्ति शिक्षापत्र्याम् । अस्यां च कृष्णाङ्गरागरक्तगोपीसम्बन्धयुक्तोत्तमपात्रोपीचन्दनमूर्ध्वपुण्ड्रद्रव्यत्वेन संगृहीतम् । राधालक्ष्मीप्रसादीभूतं कुङ्कुमं च पुण्ड्रमध्ये करणीयचन्द्रद्रव्यत्वेन । द्विसरतुलसीकाष्ठादिमालिकायाश्च दीक्षितैः सर्वैः सदा कण्ठे धारणीयत्वं व्यवस्थापितम् ।

पुम्भ्य एवाचार्य उपदिशेत्साक्षात्। स्त्रीभ्यस्तु स्वपत्नीमुखत एव। पत्न्योपदिष्टस्य मन्त्रस्याज्ञया पत्युरुपदेशेऽधिकारः पत्न्याः शास्त्रानुमत एव। 'धर्मोपदेशं या नारी दानं तीर्थं व्रतानि च। करोति निष्फलं तद्वै विनाज्ञां पत्युरात्मनः ॥' इत्यनाज्ञयोपदेशस्यैव निन्दितत्वात्। आसन्नसम्बन्धहीनस्त्रीपुंप्रसङ्गस्यानर्थावहत्वादियमेव रीतिर्धर्म्या साधीयसीति श्रीहरेराशयः। तथा च व्यवस्थाऽकारि शिक्षापत्र्यामनेन 'मज्ज्येष्ठावरजभ्रातृसुताभ्यां तु कदाचन। स्वासन्नसम्बन्धहीना नोपदेश्या हि योषितः ॥' 'मदाश्रितानां सर्वेषां धर्मरक्षणहेतवे। गुरुत्वे स्थापिताभ्यां च ताभ्यां दीक्ष्या मुमुक्षवः ॥' 'अथैतयोस्तु भार्याभ्यामाज्ञया पत्युरात्मनः। कृष्णमन्त्रोपदेशश्च कर्तव्यः स्त्रीभ्य एव हि ॥' इति।

वर्णाश्रमभेदेन च समाख्याभेदो दीक्षितानां मोक्षाधिकारिणां प्रसिद्धोऽत्र वर्णी साधुर्भक्तः सत्सङ्गीति। वैष्णवापरपर्यायाणां सत्सङ्गिनां वैष्णवोत्तमापरपर्यायाणामात्मनिवेदिनां च दिनचर्यावृत्तिरपि प्रपञ्चिता शिक्षापत्र्यां सत्सङ्गिजीवनादौ चानुसन्धेया। समुल्लिखामश्च वचनानि कानिचनात्र 'प्रत्यहं तु प्रबोद्धव्यं पूर्वमेवोदयाद्रवेः। विधाय कृष्णस्मरणं कार्यः शौचविधिस्ततः ॥ उपविश्यैव चैकत्र कर्तव्यं दन्तधावनम्। स्नात्वा शुच्यम्बुना धौते परिधार्ये च वाससी ॥ उपविश्य ततः शुद्ध आसने शुचिभूतले। असङ्कीर्ण उपस्पृश्यं प्राङ्मुखं वोत्तरामुखम् ॥ कर्तव्यमूर्ध्वपुण्ड्रं च पुम्भिरेव सचन्द्रकम्। कार्यः सधवनारीभिर्भाले कुङ्कुमचन्द्रकः ॥ पुण्ड्रं वा चन्द्रको भाले न कार्यो मृतनाथया। मनसा पूजनं कार्यं ततः कृष्णस्य चाखिलैः ॥ प्रणम्य राधाकृष्णस्य लेख्यार्चां तत आदरात्। शक्त्या जपित्वा तन्मन्त्रं कर्तव्यं व्यावहारिकम् ॥' इति। 'ये त्वम्बरीषवद्भक्ताः स्युरिहात्मनिवेदिनः। तैश्च मानसपूजान्तं कार्यमुक्तक्रमेण वै ॥ शैली वा धातुजा मूर्तिः शालग्रामोऽर्च्य एव तैः। द्रव्यैर्यथाप्तैः कृष्णस्य जप्योऽथाष्टाक्षरो मनुः ॥ स्तोत्रादेरथ कृष्णस्य पाठः कार्यः स्वशक्तितः। तथानधीतगीर्वाणैः कार्यं तन्नामकीर्तनम् ॥ हरेर्विधाय नैवेद्यं भोज्यं प्रासादिकं ततः। कृष्णसेवापरैः प्रीत्या भवितव्यं च तैः सदा ॥ प्रोक्तास्ते निर्गुणा भक्ता निर्गुणस्य हरेर्यतः। सम्बन्धात्तत्क्रियाः

पुम्भ्य एवाचार्य उपदिशेत्साक्षात्। स्त्रीभ्यस्तु स्वपत्नीमुखत एव। पत्न्योपदिष्टस्य मन्त्रस्याज्ञया पत्युरुपदेशोऽविकारः पत्न्याः शास्त्रानुमत एव। 'धर्मोपदेशं या नारी दानं तीर्थं व्रतानि च। करोति निष्फलं तद्वै विनाज्ञां पत्युरात्मनः॥' इत्यनाज्ञयोपदेशस्यैव निन्दितत्वात्। आसन्नसम्बन्धहीनस्त्रीपुंप्रसङ्गस्यानर्थावहत्वादियमेव रीतिर्धर्म्या साधीयसीति श्रीहरेराशयः। तथा च व्यवस्थाऽकारि शिक्षापत्र्यामनेन 'मज्ज्येष्ठावरजभ्रातृसुताभ्यां तु कदाचन। स्वासन्नसम्बन्धहीना नोपदेश्या हि योषितः॥' 'मदाश्रितानां सर्वेषां धर्मरक्षणहेतवे। गुरुत्वे स्थापिताभ्यां च ताभ्यां दीक्ष्या मुमुक्षवः॥' 'अथैतयोस्तु भार्याभ्यामाज्ञया पत्युरात्मनः। कृष्ण मन्त्रोपदेशश्च कर्तव्यः स्त्रीभ्य एव हि॥' इति।

वर्णाश्रमभेदेन च समाख्याभेदो दीक्षितानां मोक्षाधिकारिणां प्रसिद्धोऽत्र वर्णी साधुर्भक्तः सत्सङ्गीति। वैष्णवापरपर्यायाणां सत्सङ्गिनां वैष्णवोत्तमापरपर्यायाणामात्मनिवेदिनां च दिनचर्यावृत्तिरपि प्रपञ्चिता शिक्षापत्र्यां सत्सङ्गिजीवनादौ चानुसन्धेया। समुल्लिखामश्च वचनानि कानिचनात्र 'प्रत्यहं तु प्रबोद्धव्यं पूर्वमेवोदयाद्रवेः। विधाय कृष्णस्मरणं कार्यः शौचविधिस्ततः॥ उपविश्यैव चैकत्र कर्तव्यं दन्तधावनम्। स्नात्वा शुच्यम्बुना धौते परिधार्ये च वाससी॥ उपविश्य ततः शुद्ध आसने शुचिभूतले। असङ्कीर्ण उपस्पृश्यं प्राङ्मुखं वोत्तरामुखम्॥ कर्तव्यमूर्ध्वपुण्ड्रं च पुम्भिरेव सचन्द्रकम्। कार्यः सधवनारीभिर्भाले कुङ्कुमचन्द्रकः॥ पुण्ड्रं वा चन्द्रको भाले न कार्यो मृतनाथया। मनसा पूजनं कार्यं ततः कृष्णस्य चाखिलैः॥ प्रणम्य राधाकृष्णस्य लेख्यार्चां तत आदरात्। शक्त्या जपित्वा तमन्त्रं कर्तव्यं व्यावहारिकम्॥' इति। 'ये त्वम्बरीषवद्भक्ताः स्युरिहात्मनिवेदिनः। तैश्च मानसपूजान्तं कार्यमुक्तक्रमेण वै॥ शैली वा धातुजा मूर्तिः शालग्रामोऽर्च्य एव तैः। द्रव्यैर्यथाप्तैः कृष्णस्य जप्योऽथाष्टाक्षरो मनुः॥ स्तोत्रादेरथ कृष्णस्य पाठः कार्यः स्वशक्तितः। तथानधीतगीर्वाणैः कार्यं तन्नामकीर्तनम्॥ हरेर्विधाय नैवेद्यं भोज्यं प्रासादिकं ततः। कृष्णसेवापरैः प्रीत्या भवितव्यं च तैः सदा॥ प्रोक्तास्ते निर्गुणा भक्ता निर्गुणस्य हरेर्यतः। सम्बन्धात्तत्क्रियाः

अथोद्धव सम्प्रदाय । प्रवर्तकश्चास्य श्रीस्वामिनारायणः । श्रीहरिहरिकृष्ण सहजानन्दस्वामी नारायणमुनि इत्यादिनाम्ना चास्य प्रसिद्धिरस्ति । श्रीमद्रामानुजाचार्यप्रवर्तित विशिष्टाद्वैतराद्धान्तमेवायं स्वमतत्वेन पर्यगृह्णात् । तथा च शिक्षापत्री 'मतं विशिष्टाद्वैतं मे' इति । चिदचिदीश्वरात्मकं तत्त्वत्रयमभिमतं श्रीहरेः, जगद्ब्रह्मणोः शरीरात्मभावश्च । शिक्षापत्र्यां हरिगीतायामपि चेदमेव तत्त्वत्रयं विवेचितं नाम । अध्यात्मज्ञानशिक्षा च श्रीभगवद्रामानुजप्रणीता एव ग्रन्था मुख्यतया व्यवस्थापिता अनेन । गुरुपरम्परायां च स्वगुरो रामानन्दस्वामिनो गुरुत्वेन रामानुजस्वामी व्यपदिष्टः ।

अक्षराख्यमप्राकृतं धाम दिव्यगोलोकमध्यस्थं प्राप्यतया प्रमतेऽत्र सम्प्रदाये । श्रीकृष्णश्च राधालक्ष्मीयुत एतद्धामाधिपतिरभिमत उपास्य इष्टदेवश्च । वैकुण्ठादिधामान्तराण्यपि स्वीकृतान्येवाप्राकृतानि धामभेदेन नामाकारभेदेऽपि भगवतो धर्मिण एकत्वं च । तथा च शिक्षापत्री 'स राधया युतो ज्ञेयो राधाकृष्ण इति प्रभुः । रुक्मिण्या रमयोपेतो लक्ष्मीनारायणः स हि ॥ ज्ञेयोऽर्जुनेन युक्तोऽसौ नरनारायणाभिधः । बलभद्रादियोगेन तत्तन्नामोच्यते स च ॥ एते राधादयो भक्तास्तस्य स्युः पार्श्वतः क्वचित् । क्वचित्तदङ्गेऽतिस्नेहात्स तु ज्ञेयस्तदैकलः ॥ अतश्चास्य स्वरूपेषु भेदो ज्ञेयो न सर्वथा । चतुरादिभुजत्वं तु द्विबाहोस्तस्य चैच्छिकम् ॥' इति । मायाजीवेश्वरब्रह्मपरब्रह्मलक्षणाः पञ्चार्थाश्च तत्त्वत्रयान्तर्गता एव विशेषतः समनुवर्णिता साम्प्रदायिकग्रन्थे तत्र तत्र । क्वचित्क्वचित्तत्त्वनिरूपणादौ वल्लभादिप्रक्रियानुरोध प्रतीयते नामापातत । विशिष्टाद्वैतप्रक्रियाया अविरोधेन तत्समन्वय कृत एव व्याख्यातृभि सद्गुरुवर्यैः । मुख्यार्थाविरोधेनार्थान्तरोपवर्णनं च नैव दोषाय । श्रीभागवतप्रक्रियैव चात्र सर्वत्र समादृता विशेषत इति चावधेयम् ।

वैष्णव्यां च दीक्षायामत्र श्रीकृष्णाष्टाक्षरमन्त्रोपदेश प्रवर्तितः । अतः 'कृष्णदीक्षा' इति व्यपदेश कृतोऽस्ति शिक्षापत्र्याम् । अस्यां च कृष्णानु-रागत्वगोपीसम्बन्धप्रयुक्तोर्ध्वपुण्ड्रोऽपि च चन्दनपूर्वपुण्ड्रद्रव्यत्वेन अनुष्ठितम् । राधालक्ष्मीप्रसादीभूत कुङ्कुमं च पुण्ड्रमध्ये करणीयचन्द्रकद्रव्यत्वेन । द्विसरतुलसीकाष्ठादिमालिकायाश्च दीक्षितैः सर्वैः सदा कण्ठे धारणीयत्वं व्यवस्थापितम् ।

सर्वा भवन्त्येव हि निर्गुणाः ॥ अकृतैरेतैस्तु कृष्णायानर्पितं यद्यपि कश्चित् । न पेयं नैव भक्ष्यं च पत्रकन्दफलाद्यपि ॥' इति । 'आर्षभो भरतः पूर्वं जडविप्रो यथा भुवि । अवर्तताऽत्र परमहंसैर्वृत्त्या तथैव तैः ॥' इति च । धर्मं वर्णाश्रमाणां धर्मांश्च देशिकादीनां निर्मथ्य धर्मशास्त्राब्धि सारेण स्फुटमुपवर्णिता अनायासेनैव मन्दमतीनामपि ग्रहणसौकर्याय शिक्षापत्र्यामिति च सादरं निवेदयाम । नैष्ठिकव्रतपरिपालनस्य सर्वतो मुख्यत्वं चात्र प्ररूपितमतोऽवधेयम् ।

स्वधर्मज्ञानवैराग्यसाहिता भक्तिश्च मुक्तिसाधनमिष्यतेऽत्र । स्वरूपं च संगृहीतं धर्मादीनां श्रीहरिणा शिक्षापत्र्यां 'धर्मो ज्ञेयः सदाचारः श्रुतिस्मृत्युपपादितः । माहात्म्यज्ञानयुग्भूरिस्नेहो भक्तिश्च माधवे ॥ वैराग्यं ज्ञेयमप्रीतिः श्रीकृष्णेतरवस्तुषु । ज्ञानं च जीवमायेशरूपाणां सुष्ठु वेदनम् ॥' इति । जीवादीनां स्वरूपं च 'हृत्स्थोऽणुसूक्ष्मश्चिद्रूपो ज्ञाता व्याप्याखिलां तनुम् । ज्ञानशक्त्या स्थितो जीवो ज्ञेयोऽच्छेद्यादिलक्षणः ॥ त्रिगुणात्मा तमः कृष्णशक्तिर्देहतदीययोः । जीवस्य चाहंममताहेतुर्मायाऽवगम्यताम् ॥ हृदये जीववज्जीवे योऽन्तर्यामितया स्थितः । ज्ञेयः स्वतन्त्र ईशोऽसौ सर्वकर्मफलप्रदः ॥ स श्रीकृष्णः परं ब्रह्म भगवान् पुरुषोत्तमः । उपास्य इष्टदेवो नः सर्वाविर्भावकारणम् ॥' इति । तत्त्वत्रयज्ञानफलं च ब्रह्मात्मकनिष्कृष्टस्वरूपानुसन्धानपूर्वकं भगवद्भजनमनुशिष्टं 'निजात्मानं ब्रह्मरूपं देहत्रयविलक्षणम् । विभाव्य तेन कर्तव्या भक्तिः कृष्णस्य सर्वदा ॥' इति । द्विविधा च भक्तिर्मताऽत्रापि श्रवणाद्यात्मिका नवविधा साधनभक्तिः, निरतिशयप्रेमलक्षणा च गोपिकानामिव श्रीकृष्णे साध्यभक्तिरिति । भक्त्यङ्गं शरणागतिरपि नवविधभक्तावेवान्तर्भवत इति चावधेयम् ।

श्रीकृष्णोत्सवसेवाप्रकारास्तु श्रीविठ्ठलेशकृतव्रतोत्सवनिर्णयोदिता समादृताः । यथैव धर्माहिंसे श्रीहरेरेकमते । शङ्करोऽपि वैष्णवराजत्वात्सम्मान्यो मतः । महद्वैलक्षण्यमिदं वैष्णवमतान्तरेभ्य एतन्मतस्य । सर्वलोकप्रियत्वं चातः सम्पन्नमस्य । समादृतेऽपि सर्वधर्मेषु अन्नदाने विद्यादाने चात्यन्ताभिमतिः स्वीया प्रकटीकृता श्रीहरिणा 'भगवन्मन्दिरं प्राप्तो योऽन्नार्थी कोऽपि मानवः । आदरात्स तु सम्भाव्यो दानेनान्नस्य शक्तितः ॥'

'संस्थाप्य विप्रं विद्वांसं पाठशालां विधाप्य च। प्रवर्तनीया सद्विद्या भुवि यत् सुकृतं महत् ॥' इति विशिष्यानुशासनात्।

अष्टौ च सच्छास्त्राणि श्रेष्ठत्वेन परिगणितानि 'वेदाश्च व्याससूत्राणि श्रीमद्भागवताभिधम्। पुराणं भारते तु श्रीविष्णोर्नामसहस्रकम्॥ तथा श्रीभगवद्गीता नीतिश्च विदुरोदिता। श्रीवासुदेवमाहात्म्यं स्कान्दवैष्णवखण्डगम्॥ धर्मशास्त्रान्तर्गता च याज्ञवल्क्यऋषेः स्मृतिः। एतान्यष्ट ममेष्टानि सच्छास्त्राणि भवन्ति हि॥' इति। व्याख्यानतो विशेषप्रतिपत्तिरेतेषु। अत्र च श्रीभागवतदशमस्कन्धस्य श्रीकृष्णविषयकभक्तिरसपरिपोषकतया श्रवणपठनाद्यनुदिष्टं यथाशक्ति करणीयत्वेन, पुरश्चरणं चाभीप्सितफललाभाय श्रीविष्णुनामसहस्रादेरपि। भूताद्युपद्रवप्रसङ्गे चैवं नियम्यते 'भूताद्युपद्रवे क्वापि वर्म नारायणात्मकम्। जप्यं च हनुमन्मन्त्रो जप्यो न क्षुद्रदैवतः' ॥ इति। वेदादीनां मूलत्वेन परिगणनादेतत्सम्प्रदायस्य रीतिर्वैदिक्येवेति च विभावनीयम्।

श्रीमदुद्धवावतारेण रामानन्दस्वामिना व्यवस्थापितत्वात् सम्प्रदायोऽयमन्वाख्यायते 'उद्धवसम्प्रदाय' इति। श्रीकृष्णावतारेण स्वामिनारायणेन प्रवर्तितत्वाच्च 'स्वामिनारायणसम्प्रदाय' इति। अस्यैव श्रीस्वामिनारायणाख्यप्रादुर्भावस्य प्राधान्येनोपासनादिकं सम्प्रदायेऽस्मिन् प्रचलतितरामित्यलं पल्लवितेन।

तस्य तस्य मतस्येत्थं सङ्क्षेपाद्वर्णनं कृतम्।
सुखबोधाय मोदाय सुधियां च यथामति॥
एकैकत्र च योऽर्थोऽस्ति युक्तियुक्तः प्रकीर्तितः।
अविरोधश्चेदुपयुक्तश्चेदन्यत्रापि स गृह्यताम्॥
तत्तद्देशादिदाकालाद्यनुसाराच्च भूतये।
तदा तदा सम्प्रदायः स स आविष्कृतो भुवि॥
प्रथमं शङ्कराचार्यस्ततो भास्करयादवौ।
ततो रामानुजाचार्यो मध्वाचार्योऽप्यनन्तरम्॥
निम्बार्को वल्लभः पश्चात् स्वामिनारायणस्त्वथ।
तत्तन्मतस्थापकानां देशिकानां क्रमस्त्वयम्॥

प्रकृतमनुसरामः। श्रीहरिणा श्रीकृष्णार्चनादिविधावनुसृतेऽपि वल्लभीये निर्णये तत्त्वनिर्णये तु श्रीविशिष्टाद्वैतप्रक्रियैव समादृता नामैतद्वैशिष्ट्यपर्यालोचनया। अस्य

च श्रीहरिसम्मानितस्य विशिष्टाद्वैतसिद्धान्तस्य सन्ति नाम प्राकरणिका ग्रन्थाः प्राचीना महान्तः तत्त्वत्रयं यतिपतिमतदीपिका न्यायपरिशुद्धिः न्यायसिद्धाञ्जनं तत्त्वमुक्ताकलापः सर्वार्थसिद्धिरित्यादिकाः। एषु च तत्त्वत्रयं प्रमेयमात्रनिरूपणविशदम्। प्रमाणप्रमेयनिरूपणे व्यापृताऽपि यतिपतिमतदीपिकातिसङ्कुचितप्रवृत्तिस्तर्ककौमुद्यादिवत्। न्यायपरिशुद्ध्यादयस्त्वतिविस्तृताः कर्कशतर्कजालजटिलशरीरा नैव मितप्रज्ञमतीनां झटिति सुभगावगाहा भवन्ति न्यायमञ्जरीकिरणावल्यादिवत्। अतोऽनतिविस्तारसङ्क्षेपया शैल्या बृहत्तर्कप्रकाशादिव मानमेये निरूपयन्तीयं कृतिर्नाम्ना च मानमेयप्रकाशिका सम्प्रति कं बोधयां कस्य वा विशिष्टाद्वैतिनः सचेतसश्चेतः प्रसादं नोपजनयेत्। यावदुपयुक्तविषयविचारप्रचुरेयं कृतिर्न्यायपरिशुद्ध्यादिगतविचारधारादिक्प्रदर्शिका च मानमेययोस्तत्त्वं जिज्ञासमानानां प्रविविक्षूणां च प्रौढग्रन्थेषु महते प्रकल्पेतोपकारायेति न संशयः।

श्रीरामानुजसम्प्रदायप्रसिद्धं प्रमेयं तं तं प्रमाणोपपत्तिभ्यां व्यवस्थाप्य प्रथमतः श्रीउद्धवसम्प्रदायस्य संवादश्च तत्र तत्र प्रदर्शितोऽत्र ग्रन्थकृता। श्रीउद्धवसम्प्रदायप्रसिद्धा वस्तुविशेषाश्चोऽपि प्रदर्शिताः तत्र तत्र। अत इदं विशिष्टाद्वैतप्रकरणमथ श्रीउद्धवसम्प्रदायानुसारि। सम्प्रदायद्वयप्रमेयैक्यकरसमभिनिष्पादितं चैतस्य च लक्षणवत्त्वं प्रायशः। श्रीउद्धवसम्प्रदायप्रणीतप्रकारमथ जिगमिषूणामपि भविष्यति कृतिरियमुपकारिणी अत एतत्परिचयोऽपि यतोऽस्यात्र समासतो ग्रन्थकृता। तत्समेषां भवेदिदमुपादेयं विस्तरजन्यमिति प्रतीमः।

प्रकरणस्य चास्य सङ्ग्रहीतारो गृहीतपरमहंसदीक्षाः सद्गुरवः शास्त्रिश्री हरिजीवनदास नाम्ना विख्याताः गूर्जरेषु वटालये (वडताल) कृतवसतयः श्रीस्वामिनारायणचरणकमलसमाश्रिताः। एते च साम्प्रदायिकग्रन्थानां दशोपनिषद्भाष्यशिक्षापत्रीटीकाभाष्यसत्सङ्गिजीवनवचनामृतप्रभृतीनां संशोधनपरिष्करणटिप्पणीभूमिकागूर्जरभाषानुवादकरणे प्रसिद्धतराः साम्प्रदायिकजनसमुदाये। अस्मत्प्रियसुहृत्तमैरेतैः प्रकरणस्यास्य संशोधने परिष्करणे च प्रोत्साहिता वयं यथामतिविमर्शं संशोधनायाकार्ष्म। तथापि पुरुषत्वतया भ्रमप्रमादयोरत्र समापतिताः सर्वेऽपि दोषा दोषज्ञैरपि गुणैकपक्षपातिभिः सहृदयैरनुकम्पयाऽकम्पया मर्षणीया इति शम्।

श्रीस्वामिनारायणसंस्कृतपाठशाला
वडताल
वि. सं. २००५

P. B. अण्णङ्गराचार्यः (तिरुनागूर)
न्यायव्याकरणशिरोमणिः वेदान्तविद्वान्
प्रधानपण्डितः ।



श्रीस्वामिनारायणो विजयतेतराम् ।

# मानमेयप्रकाशिका ।



अनादिनिधनं वस्तु परमेकमुपास्महे ।
व्यक्ताव्यक्तात्मकमिदं विश्वं यस्मिन् प्रतिष्ठितम् ॥ १ ॥
स वासुदेवो भगवान् वेदवेदान्तगोचरः ।
धर्मभक्तिसमाराध्यः श्रेयसे भूयसेऽस्तु नः ॥ २ ॥
योऽसावक्षरनायको गुणनिधिः श्रुत्यन्तसंविश्रुतो
यं धीरा अनुमातुमीशमभितो वाञ्छन्ति सद्युक्तिभिः ।
योऽष्टाङ्गेन समाधिना सुविमले चित्ते स्फुरत्यञ्जसा
सोऽयं वै पुरुषोत्तमो विजयते श्रीस्वामिनारायणः ॥ ३ ॥
यन्मायाकर्मपाशग्रथित इह पुमान् संसरन् मुह्यति द्राक्
यस्योपास्त्यैव मुक्तोऽश्नुते पुनरनघो धीविकासं समन्तात् ।
यो मुक्तैरक्षरे धाम्न्युपचरितपदो मोदते श्र्यादिभिः स
स्वामी सर्वस्य नारायण इह सहजानन्दरूपोऽस्तु ऋद्ध्यै ॥ ४ ॥
जयन्तु ते प्रमातारः सात्त्विकास्तत्त्वदर्शिनः ।
तत्त्वावबोधोऽप्यस्माकमेष येषामनुग्रहात् ॥ ५ ॥
श्रीमद्रामानुजाचार्यैः श्रीभाष्यादिषु वर्णितः ।
विशिष्टाद्वैतसिद्धान्तः सर्वश्रुत्यन्तसम्मतः ॥ ६ ॥
स्वीकृतः स्वमतत्वेन शिक्षापत्र्यां समादरात् ।
भगवत्सहजानन्दस्वामिना येन हि स्वयम् ॥ ७ ॥
तत्सिद्धान्तानुसारेण मानमेयप्रकाशिकाम् ।
कुर्वते मे स भगवान् धियं शुद्धां प्रयच्छतु ॥ ८ ॥

## प्रमाऽप्रमाभेदनिरूपणम्—

प्रमाणाधीनः प्रमेयनिर्णय इति प्रथमतः प्रमाणं निरूपयामः । यथावस्थितव्यवहारानुगुणं ज्ञानं प्रमाणम् । प्रमाणमिति भावे ल्युट् । प्रमेति यावत् । फलमिष्टाधिगमादि । करणल्युडन्ततां प्रमाणशब्दस्येच्छन्तः प्रमाकरणं प्रमाणम्, अर्थपरिच्छित्तिः फलमिति केचित् । भ्रमस्तु न यथावस्थितव्यवहारानुगुणः । न हि भवति शुक्तिरूप्यज्ञानेन यथावस्थितव्यवहारः । भ्रमाज्जायमानो व्यवहारो हि बाध्यते 'नेदं रजत'मिति । अबाध्यो यो व्यवहारः स तु यथावस्थितव्यवहारः ।

ननु—स्मृत्या धारावाहिज्ञानाच्च भवत्यबाधितो व्यवहारः । का क्षतिः ? । ननु ते अपि प्रमाणे स्याताम् । को नेति ब्रूते ? । दृष्टमनु प्रवर्तमानस्येव स्मृतमनु प्रवर्तमानस्यापि हि भवत्यविसंवादिनी प्रवृत्तिः । क्वचित् प्रवृत्तेर्विसंवादस्तु उभयत्र तुल्यः । स्मृतिमात्रस्याप्रामाण्यमनुभूतिमात्रस्य च प्रामाण्यमिच्छन्तः केचित् 'अनुभूतिः प्रमाण'मिति वर्णयन्ति । स्मृतेः प्रामाण्ये प्रद्वेषः कस्मादेषामिति विचारयन्तो वयं कारणं नोपलभामहे । ननु—स्मृतिरसदर्थावलम्बिनी कथं प्रमाणं भवितुमर्हति । कथं वाऽतीतानागतावलम्ब्यनुमानम् । ननु—अतीतमनागतं वा तथैवावलम्ब्य प्रवर्ततेऽनुमानम् न वर्तमानतयेति चेत् स्मृतिरपि तथैवेति तुल्यम् । ननु—स्मृतिः पूर्वानुभवपुरस्कारेण प्रादुर्भवति । सत्यम् । कुतस्तावताऽप्रामाण्यम् । किञ्चैवं प्रत्यभिज्ञाया अप्यप्रामाण्यमापद्येत, तस्या अपि तथात्वात् । अनुभवपारतन्त्र्यमात्रात्राप्रामाण्यम् । कार्यस्य स्वहेतुपारतन्त्र्यं हि न वैगुण्याय । तस्मात् स्मृतिस्वादप्रामाण्यमित्येतत् परास्तम् ।

अनुभूतिमात्रस्य वा कथं प्रामाण्यम् ? । शुक्तिं पश्यतो या 'इदं रजत'मिति अनुभूतिः सा हि 'नेदं रजत'मिति बाध्यते । ननु भोः ! भ्रमस्थले नैका विशिष्टधीः, अपि तु 'इद'मिति सन्निकृष्टस्य भवत्यनुभूतिः, 'रजत'मित्यापणे दृष्टस्य भवति स्मृतिः, दृश्यमानस्मर्यमाणयोर्भेदाग्रहात् जायमाना रजतार्थिनः प्रवृत्तिर्भवति विसंवादिनी, ततोऽयं भ्रान्त उच्यते । 'नेदं रजत'मिति तु पश्चाद्भेदो गृह्यते, न तु विशिष्टधीर्जातपूर्वा बाध्यते । अस्तु नाम, 'पीतः शङ्ख' इति भ्रमे कं निर्वाहं पश्यसि ?, शङ्ख इव पीतमपि चक्षुषैव गृह्यते । 'शङ्खो दृश्यते, पीतं स्मर्यते' इति भेदकल्पना नेह घटते । तदिह पीतज्ञानमनुभवात्मकमप्यप्रमाणमेव ।

ननु नाप्रमाणं; अनुभूतित्वादेव । किन्तु शारीरमान्तरं पित्तद्रव्यमेव नयनरश्मिभिः सह विनिर्गतं शङ्खे निपतितं चक्षुषा गृह्यते, तयोरसंसर्गाग्रहात् भ्रम उच्यते । अनुभूतिमात्रस्य प्रामाण्यं वदता भवता नैवं वक्तुं शक्यते 'अनुभूतिरथापि भ्रम' इति । प्रमा च भ्रमश्चेति व्याहतं वचः । उक्तं च वेदान्ताचार्यैः—"पीतशङ्खभ्रमादौ च न ह्येतदुपपद्यते । चक्षुषैव हि शङ्खादेः पीतिमादेश्च तत्र धीः ॥" इति ।

ननु—'सर्वं ज्ञानं यथार्थ'मिति वदतो भवतो वा कस्तत्र निर्वाहः? । न वयमनुभूतित्वात् प्रमात्वं स्मृतित्वादप्रमात्वं वा ब्रूमः । किन्तु विषयव्यवहारबाधाबाधाभ्यां भ्रमत्वप्रमात्वे । आश्रितश्चास्माभिर्भ्रमस्थले सत्ख्यातिवादः । शुक्तिं पश्यतो 'यदिदं रजत'मिति

---

१ अयं प्राभाकरः पक्षः पार्थसारथिमिश्रैरप्येवमेव निरस्तः । 'पीतशङ्खज्ञानमप्यनुभूतित्वात् प्रमाणं स्यात् । इष्टमेवेति वदतो लोकविरोधः' इति ।

भवति ज्ञानम्, यस्मिन् सदेव रजतं विषयीभवति । ननु सन्नि-
कृष्टा तु शुक्तिः, असन्निकृष्टं रजतं कथं विषयो भवितुमर्हति ? । येयं
सन्निकृष्टा शुक्तिः सा हि अल्पीयसा रजतांशेन सवलिता शुक्त्यंश-
भूयिष्ठा शुक्तित्वाभिलप्या, पञ्चीकरणप्रक्रियया रजतांशो ह्यस्ति
शुक्तौ । तदुक्तम्—श्रीभाष्ये—"सोमाभावे च पूतीकग्रहणं श्रुति-
चोदितम् । सोमावयवसद्भावादिति न्यायविदो विदुः ॥
व्रीह्यभावे च नीवारग्रहणं व्रीहिभाववत् । तदेव सदृशं
तस्य यत्तद्द्रव्यैकदेशभाक् ॥" इति । भ्रमस्थले दोषवशाद्भूया-
नपि शुक्त्यंशो न गृह्यते, रजतांशोऽल्पीयांस्तु गृह्यते, तस्मात्
सदेव तु रजतं ख्यायते । ख्यायमानश्चायं रजतांशो न व्यवहार-
योग्यः, न हि तेन घटेत चषककलशाद्याधानम् । भ्रमस्थले तु
विषयस्य रजतस्यास्ति व्यवहारयोग्यता । अयं व्यवहारयोग्योऽयं
तु नेति योग्यायोग्यविभेदाग्रहात् रजतार्थिनो भवति प्रवृत्तिः,
व्यवहारबाधात् भ्रम उच्यते । उक्तं च वेदान्ताचार्यैः—"शुक्तौ
रूप्यं प्रभाम्भः श्रुतिनयवशतः स्वाप्नमप्यस्तु सत्यं योग्या-
योग्यादिभेदाग्रह इह चरमा गाहते संप्रतिष्ठाम् ।" इति ।
व्याख्यातं च तैरेव 'यत्तु शुक्तौ सादृश्याद्रजतसद्भावो मरी-
चिकायां पञ्चीकरणानुरोधेन तोयसद्भावः स्वप्ने च रथादेः सृष्टि-
विषयतया सत्यत्वं भाषितं तत्र विषयसत्यत्वेऽप्यप्रमाणव्यवहार-
निदानमाचिख्यासुर्यथाभाषितमनुभाषते—शुक्ताविति । प्रभाम्भः—
सूर्यप्रभायां दृश्यमानं तोयमित्यर्थः । स्वाप्नं—स्वप्नसिद्धं रथादि ।
यद्यप्यत्रावसितसद्बुद्धिर्नोक्ता तज्जातीयभेदाग्रहश्च न प्रवर्तकः,
तथापि तज्जातीये स्वाभीष्टयोग्यायोग्यादिभेदाग्रहात्प्रवृत्त्या व्यवहृति-

विसंवदेतेत्यप्रमाणव्यवहारोऽत्यर्थं घटेतेत्यभिप्रायेणाह—योग्येति । शुक्तिलीनं रजतं मरीचिकास्थं जलं चाङ्गुलीयकसेकाद्यनर्हम्, अतस्तदनर्हे तदर्हभेदाग्रहात्प्रवृत्तिर्वितथा भवति, एवं स्वाप्नेष्वपि धनपित्रादिषु जागरदृष्टसरूपेषु तत्तद्भेदाग्रहात्प्रवृत्ता दुराशा मोघा भवति। आदिशब्देन नष्टानष्टादिसङ्ग्रहः । चरमां संप्रतिष्ठां—व्यवहारविसंवादनिदानतामित्यर्थः' इति ।

यत्तु भ्रमे रजतभेदाग्रहात्प्रवृत्तिरिति; न तद्युज्यते । नह्यग्रहस्य क्वापि दृष्टा हेतुता । किञ्च—रजतभ्रमास्थले रजताभेदग्रहस्य प्रवर्तकत्वं दृष्टमिति, तस्येहाभावात् न प्रवर्तेत । ननु तत्रापि रजतभेदाग्रह एव प्रवर्तकः । अथ रजतार्थिनो जात्वरजतान्निवृत्तिरपि रजताभेदग्रहाभावात् दृष्टेति इह निवृत्तिकारणीभूतरजताभेदग्रहाभावसद्भावात्ततो निवर्तेतापि ।

ननु—सत्ख्यातिमाश्रयताऽपि भवता ख्यायमाने रजतांशे व्यवहारायोग्यता नावधृतेत्यतः प्रवृत्तिरिति प्रवृत्त्युपपादनेऽख्यातिरेव शरणमाश्रीयते । ननु भोः ! महदस्ति वैषम्यम् । पञ्चीकरणप्रक्रियया स्वाप्नसृष्टिश्रुत्या च श्रौतो नः सत्ख्यातिवादः । ख्यायमाने तस्मिन् सत्यपि, व्यवहारायोग्यमिदमित्ययोग्यताग्रहे प्रतिरुध्यते प्रवृत्तिः । असति च तस्मिन् इष्टसाधनजातीयताज्ञानाद्भवति प्रवृत्तिः । अयोग्यताग्रहस्य प्रतिबन्धकता लोकदृष्टा नाम । पल्वले हि पङ्कभूयिष्ठमल्पावशिष्टमपि तोयं दूरात्पश्यन् निदाघतप्त इष्टसाधनजातीयताज्ञानादभिधावति । स्नानपानादिव्यवहारायोग्यमित्ययोग्यतामवधारयति चेत् समुपरुद्धप्रवृत्तिर्न तदभिधावति । तत् न वयं केवलमख्यातिवादिनो यूयमिव ।

इदमत्र तत्त्वम्—भ्रमस्थले 'इद'मिति भास्वरद्रव्यं चक्षुःसन्निकर्षादिदन्त्वेन गृह्यते, तथा चक्षुःसन्निकर्षाद्दोषवशादगृहीतशुक्त्यंशो रजतांशोऽस्तीयानन्यदृष्टवशात् रजतत्वेन गृह्यते। तदिह भवति चाक्षुषं ज्ञानद्वयम्। विषययोस्तादात्म्याभेदेऽपि धर्मधर्मिभावाभेदेऽपि च तद्वद्विरोधिग्रहाभावविशिष्टतया रजतार्थिनः प्रवृत्तिं प्रति भवति कारणम्। उक्तं च टीकाकारैः—'इष्टरूपरूपिनिरन्तरमानात्प्रवृत्तिः, द्विष्टरूपरूपिनिरन्तरमानान्निवृत्तिः। रूपरूपिणोर्धर्म्यन्तरनिष्ठत्वविरोधिधर्मान्तराश्रयत्वमानविरहेण विशेषितं मानं निरन्तरमान'मिति। इष्टं रूपं रजतत्वं, रूपि 'इद'मिति प्रतीयमानं धर्मि, तयोर्निरन्तरमानात्प्रवृत्तिः। द्विष्टं रूपं सर्पत्वं, रूपि 'अय'मिति प्रतीयमानो धर्मी, तयोर्निरन्तरमानान्निवृत्तिः। भ्रमप्रमासाधारण्येनायं कार्यकारणभावः। भ्रमे ज्ञानद्वयं प्रमायां विशिष्टं ज्ञानम्, उभयसाधारण्येनैतदेवम्। इष्टरूपरूपिणोर्द्विष्टरूपरूपिणोः सान्तरे तु माने न प्रवृत्तिर्न वा निवृत्तिः। इष्टस्य रूपस्य रजतत्वस्य द्विष्टस्य रूपस्य सर्पत्वस्य च प्रकृतधर्म्यवृत्तित्वग्रहेण बाधकज्ञानसद्भावात्। पीतः शङ्ख इत्यादिभ्रमेऽप्येवमेव।

ननु—यद्येवं प्राभाकरैरिव स्मृतिरित्येवेष्यताम्, किं सत्ख्यात्याश्रयणेन[1]। नैवम्। 'रजतं पश्यामी'त्येव ह्यनुव्यवसायः, न 'स्मरामी'ति। श्रुतिमूलश्चायं सत्ख्यातिवादः। "योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते।" इत्यादिवचनसारस्यादन्यथाख्यातिमप्येकदेशिनोऽभ्युपगच्छन्ति। नाथयामुनादिपूर्वाचार्यपरिगृहीतस्तु सत्ख्यातिपक्ष एव।

---

1 टीकाकाराः श्रुतप्रकाशिकाचार्याः।

प्रसङ्गात् भ्रमस्थले तैस्तैर्वादिभिरादृतान् ख्यातिभेदान् निरूपयामः । योगाचारास्तावद्बाह्यानर्थान् सांवृतान् व्याचक्षाणा ज्ञानमेवार्थात्मना भासत इति वदन्त आत्मख्यातिमाश्रयन्ते । आत्मा ज्ञानं, तस्यैवार्थात्मना ख्यातिरवभासः । माध्यमिकास्तु—न बाह्यः कश्चिदर्थः, नाप्यान्तरं विज्ञानम्, शून्यमेव तु सर्वमिति वदन्तः 'असदेव सर्वत्र ख्यायते' इति असत्ख्यातिमाश्रयन्ते । नित्यविज्ञानवादिनस्तु—क्षणिकविज्ञानवादिन इव विज्ञानादन्यदविद्याकल्पितं वदन्तो नित्यविज्ञानेऽधिष्ठानेऽविद्यया सदसद्विलक्षणस्य सर्वस्यास्य प्रपञ्चस्योत्पादमधिष्ठानस्वरूपसाक्षात्कारेण बाधं चाभ्युपगच्छन्तः सदसदनिर्वचनीयख्यातिमाश्रयन्ते । ख्यायमानतया शशशृङ्गवन्नासत्, ज्ञानबाध्यतया च नात्मेव सत्, अत इदं सदसद्विलक्षणमनिर्वचनीयमित्युच्यत इति च वदन्ति । काणादास्तु—दोषवशादन्यस्यान्यथाख्यातिमाश्रयन्ते । शुक्तिः पुरःसन्निकृष्टा असन्निकृष्टरजतात्मना ख्यायते इति । मीमांसकेषु प्राभाकराः—भ्रमस्य ज्ञानद्वयात्मकतामाश्रित्य भेदाग्रहेण भ्रमरूपतां निर्वहन्तो भेदस्याख्यातिमाहुः । सत्ख्यातिवादे विशेषस्तूपदर्शितः । तमिमं सत्ख्यातिपक्षं श्रीभाष्यश्रुतप्रकाशिकादिपूर्वाचार्यश्रीसूक्तिगतं विमृशन्तो भ्रमस्थले ज्ञानद्वयीयविशेष्यताप्रकारतयोर्निरूप्यनिरूपकभावाश्रयणेन परिष्कुर्वन्ति भ्रमलक्षणम्[1] । ग्रन्थविस्तरभयात्ख्यात्यन्तरनिरासपूर्वकं सत्ख्यातिसमर्थने नाद्य वयमवतरामः ।

---

१ भ्रमस्थले 'इद'मित्येकं ज्ञानं 'रजत'मिति चापरम् । तत्र पूर्वज्ञानीया या इदमर्थनिष्ठा विषयता, द्वितीयज्ञानीया या, रजतत्वनिष्ठाविषयता, तयोर्निरूप्यनिरूपकभाव इष्यते, नान्यत्र । प्राभाकरैरप्यङ्गीकृतमेतत् । यद्येवमन्यथाख्यातिरभ्युपेतैव भवति, रजतत्वाभाववन्निष्ठविशेष्यतानिरूपितरजतत्वनिष्ठप्रकारता-

एवं संशयेऽपि नान्यथाख्यातेरवसरः । सामान्यतो धर्मिस्फुरणे सति अप्रतिपन्नतद्विरोधयोः प्रतिपन्नमिथोविरोधयोर्धर्मयोर्धर्मिणां वा स्मरणं संशयः । यथा—स्थाणुपुरुषसाधारणोर्ध्वताविशिष्टस्य अगृहीतविशेषस्य धर्मिमात्रस्यायमित्यनुभवः । स्थाणुपुरुषसाधारणोर्ध्वतादर्शनोद्बोधितसंस्काराभ्यां स्थाणुत्वपुरुषत्वयोः स्मरणम्—स्थाणुर्वा पुरुषो वेति । तस्मात् अयं स्थाणुर्वा पुरुषो वेति नैका धीरिति नान्यथाख्यातिः । यथा चोक्तमाचार्यैः सर्वार्थसिद्धौ—'यदि स्थाणुत्वविशिष्टतया पुरोवर्ति भायात् पुरुषत्वविशिष्टतया न भायादेव, यथाऽन्यत्र सर्वत्र दृष्टे । ततश्च पुरोवर्तिभानं स्थाणुपुरुषभानं च मिथो भिन्नमिति सिद्धम् । तस्मादूर्ध्वव्यक्तिभानमनुभवः, स्थाणुपुरुषभानं तु स्मरणम्' इति । अनुभूतिस्मृत्योर्निरन्तरभानमिति तु संशय उच्यते । परिष्कर्तारस्तु—भ्रम इव संशयेऽपि अनुभवीयधर्मिविषयतायाः स्मरणीयधर्मविषयतायाश्च निरूप्यनिरूपकभावमुररीकुर्वन्ति ।

अत्र कश्चिदाह—ये चानिर्वचनीयं भ्रमस्थले ख्यायते इति वदन्ति, ये च सदेव ख्यायते इति वदन्ति, उभाभ्यामपि ख्यायमानस्य व्यवहाराननुगुणस्यापि व्यवहारानुगुणतया भानमवश्यमेव स्वीकार्यम्, तथा सत्यन्यथाख्यातिरवर्जनीयैवेति । अत्र ब्रूमः—व्यवहाराननुगुणत्वाग्रहादेव भ्रान्तः प्रवर्तते, न तु तस्य नियमेन भवति 'इदं व्यवहारानुगुण'मित्यपि ज्ञानम् । तदख्यातिसंवलिता सत्ख्यातिरेव भ्रमस्थले सर्वत्रेति युक्तम् ।

---

भाविस्यात् रजतज्ञानस्य । नैतत् । ज्ञानैक्ये तु तथात्वम् । ज्ञानभेदान्नान्यथाख्यातेरवसरः । ज्ञानविशिष्टज्ञानत्वं भ्रमत्वम् । वैशिष्ट्यं च स्वभिन्नत्वस्वनिष्ठविषयिता-निरूपितविषयतानिरूपितविषयतानिरूपकविषयिताभयत्वोभयसम्बन्धेन । विषयते च विशेष्यताप्रकारते इति तदाशयः ।

यत्तु एकाग्रया दृष्ट्या पुरःस्थितं पश्यतो 'घटोऽयं घटोऽय'मिति भवति धारावाहि ज्ञानं तस्याप्रामाण्यमिच्छन्तः केचन अनधिगतार्थग्राहित्वेन प्रमाणलक्षणं विशेषयन्ति । वयं तु तस्याप्रामाण्ये कारणं न पश्यामः, तेन जायमाना प्रवृत्तिरप्यविसंवादिन्येव हि । अत्र पूर्वाचार्येष्वस्ति मतभेदः, स च न्यायसिद्धाञ्जने निरूपितः—'अत्र धारावाहिकविज्ञानं नीरन्ध्रनिर्यातमणिमयूखवदेकरूपं वा स्नेहदशादिसमवायसन्तन्यमानदीपवत् सन्ततिरूपं वेति चिन्तनीयम्, तत्र वरदनारायणभट्टारकैः प्रथमः पक्ष उक्तः । तथाहि—प्रज्ञापरित्राणे स्मृत्यप्रामाण्यप्रसङ्गेनोक्तम्, 'धारावाहिकपङ्क्तिश्च स्वकालीनार्थभासिका । मेधातिरेकसद्भावात् नैरपेक्ष्यादपि प्रमा ॥ भः स्तम्भः स्तम्भ इति धीर्धारावाहिका मता । धारावाहिकविज्ञानमेकरूपं मतं हि नः ॥' इति । अत्र पूर्वश्लोकेन परपक्ष उत्तरश्लोकेन च स्वपक्षः प्रदर्शितः । 'धारावाहिकपङ्क्तिश्चे'ति पङ्क्तिशब्दस्वारस्यान्नैकं ज्ञानम्, किन्तु सजातीयज्ञानधारेति स्पष्टं गम्यते । अस्मिंश्च पक्षे "ध्यानं च तैलधारावदविच्छिन्नस्मृतिसन्तानरूपा ध्रुवानुस्मृति"रिति श्रीभाष्यस्वारस्यानुगुण्यमिति । 'स्वकालीनार्थभासिके'त्यतः पूर्वपूर्वज्ञानागृहीततत्तत्क्षणविशेषग्रहणादनधिगतार्थग्राहिता चोत्तरोत्तरज्ञानधाराया गम्यते । षडिन्द्रियवेद्यता च कालस्याभ्युपगतैव । मीमांसकसमयसम्प्रतिपन्नं चैतत् । पक्षद्वयेऽपि धारावाहिज्ञानस्य प्रामाण्यमनपायम्, यथावस्थितव्यवहारानुगुणत्वात् । संशयस्थलेऽनवस्थितव्यवहाराद्भ्रमस्थलेऽयथाव्यवहाराच्च न तयोः प्रमाणत्वव्यवहारः । प्रमात्मकज्ञान एव च ज्ञानपदस्य निरुपपदस्य स्वारसिकः प्रयोगः । तत्त्वदर्श्येव हि ज्ञानीति व्यप-

दिश्यते न तु भ्रान्तं । एतदभिप्रेत्यैव ज्ञानस्वरूपमभिहितं सत्सङ्गिजीवने—"यद्वस्तु यादृशं तस्य तादृक्त्वेन प्रमाणतः । वेदनं यत्समुदितं मानज्ञानस्य लक्षणम् ॥" इति । 'तादृक्त्वेन वेदन'मित्युक्त्या यथावस्थितव्यवहारानुगुणं ज्ञानं लभ्यते । अतो यथावस्थितव्यवहारानुगुणं ज्ञानं प्रमाणमिति सिद्धम् ।

―•―

## प्रमाणविभागः ।

तत्करणानि च प्रमेयसिद्ध्यर्थानि प्रमाणानि प्रत्यक्षमनुमानं शब्दश्चेति त्रीण्येव । यथाह मनुः—"प्रत्यक्षमनुमानं च शास्त्रं च विविधागमम् । त्रयं सुविदितं कार्यं धर्मसिद्धिमभीप्सता ॥" इति । 'प्रत्यक्षेणानुमानेन शाब्देन च विवेकिभिः । असत्यता-ऽऽकृतीनां च निश्चिता सत्यताऽऽत्मनाम् ॥' इति च वासुदेव-माहात्म्ये । प्रमाणान्तराणां च वाद्यन्तराभिमतानामत्रैव यथाऽन्त-र्भावस्तथानन्तरमेव स्फुटीभविष्यति ।

ननु—स्मृतेरपि प्रामाण्याङ्गीकारात् कथं त्रीण्येव प्रमाणानि ? (सत्यम् । प्रत्यक्षादिमूलकतया तदनधिकार्थतया च तदविशेषमभि-प्रेत्य तु पृथगनुक्तिः । (आर्हता परोक्षापरोक्षभेदेन प्रमाणस्य द्वैविध्यं वदन्तोऽनुमानादिपरोक्षकोटौ स्मृतिं वर्णयन्ति ) श्रीभाष्ये च यथार्थख्यातिसमर्थनावसरे 'प्रत्यक्षानुमानागमाख्यं प्रमाणत्रयं अभ्युपगच्छतामस्माकम्' इति प्रमाणत्रित्वमेव मुक्तकण्ठ-मुक्तं श्रीमद्रामानुजाचार्यैः ।

सोऽयं देवदत्त इति प्रत्यभिज्ञाया अपि अक्षसन्निकृष्टविषयतया प्रत्यक्ष एवान्तर्भावः । तस्याः संस्कारसापेक्षत्वेऽपि न स्मृतित्वम् ।

संस्कारमात्राजन्यत्वात् । संस्कारसहकृतादेवेन्द्रियात्तत्ताविशिष्टेदमंशसाक्षात्कारः । अनूदितं च न्यायपरिशुद्धौ श्रीविष्णुचित्तार्यवचनमत्र—'अपरोक्षैक्यसाधिका । सा प्रत्यभिज्ञा सोऽयं वै पुमानित्येवमात्मिका । संस्कारमात्रजन्यत्वान्न स्मृतिर्मानमेव तत् ॥' इति ।

अभावस्य भावान्तररूपत्वेन भावग्राहकप्रमाणादेवाभावप्रमितिसिद्धेर्नाभावग्राहकतया पराभिमतमनुपलब्ध्याख्यं प्रमाणान्तरमस्माभिरभ्युपगम्यते । गां पश्यतो गौरियमिति भवति धीः, तथा नायमश्व इति च । उभाभ्यामपि योऽयमसाधारणो गवां संस्थानविशेषलक्षणो भावः स एव गृह्यते । यदा पुनः प्रतियोगिनोऽश्वस्य स्मरणं भवति तदा ततो भेदात्मना तदेव संस्थानं गृह्यते, न भावतोऽन्यदभावाख्यं तत्त्वम् । प्रतियोगिस्मरणसापेक्षतामात्रेण च न प्रत्यक्षाद्यतिरिक्तप्रमाणसिद्धिः । तथा चोक्तं न्यायपरिशुद्धौ—'अभावस्त्वस्मन्मते भावान्तरात्मा, स चाक्षादिभिर्यथासम्भवं सिद्ध्यति । अभावात्मना तु ग्रहणेऽपि प्रतियोगिस्मरणादिसहकृतानि तान्येव प्रमाणानीति न तदतिरिक्तकल्पनावसरः' इति ।

ननु—अभावमपलपता वक्तव्यम्—घटो नास्तीति प्रतीतेः किमालम्बनम् ? । नन्वधिकरणं भूतलमेव । सत्यसति च घटे तत्तुल्यम् । ननु भूतलमात्रम् । मात्रमिति किं व्यावर्त्यते ? । घटसंयोगश्चेत् तर्हि अभावोऽभ्युपगत एव । उच्यते—न वयमपलपामोऽभावम् । भावस्यैवावस्थाद्वयं अस्तित्वं नास्तित्वं च । यथा दुग्धे दध्नो योऽभावः प्रागभाव इति त्वयोच्यते स हि दुग्धत्वावस्थैव, सा च विशिष्टरूपरसादिलक्षणैव । अक्षग्राह्यैव तु सा । एवं दध्नि यो दुग्धाभावः

प्रध्वंसाभावतयाऽभ्युपगतं साऽपि दधित्वावस्थैव विशिष्टरूपरसादिलक्षणा। यश्च गवि अश्वभेदः स च गोः संस्थानविशेषः। नन्वननुगतोऽयमापतेत्, गवाद्यधिकरणभेदात्। का हानिस्तत्र?। कथमनुगतप्रतीतेर्निर्वाहः?। केयमनुगतप्रतीतिः?। न अश्वो नेति। नैतत्। नहि प्रतियोगिनमिवानुयोगिनमन्तराऽप्यभावः प्रतीयते। अयमयं नेत्येव हि प्रतीतिः, न केवलमयं नेति। अश्वतादात्म्यधीविरोधित्वेन विरोधिधर्माणामनुगमाच्च 'गवादिकमश्वभिन्न'मित्यनुगतप्रतीतेरपि नाऽनुपपत्तिः। यश्च वायौ रूपाभावस्त्रैकालिकाभावसंज्ञः स च वाय्वात्मा वायुस्वभाव एव नातिरिक्तः। ननु तर्हि वायो रूपाभावस्य चाक्षुषं न स्यात्। वायुस्वभावस्याचाक्षुषत्वात्। मास्तु चाक्षुषम्। अनुमानादित एव तत्सिद्धेः, वायू रूपाभाववान् अचाक्षुषत्वात् रूपवत्त्वावेदकप्रमाणरहितत्वादित्यादेः। यस्तु कैश्चित् सामयिकाभाव इतीष्यमाणो भूतले घटाभावः स च भूतलस्य विशिष्टदेशतालक्षणावस्थाविशेष एव। ननु स कः?। अथ सः—अयमिहेदानीं नास्तीत्येव हि प्रतीयते, न तु कालविशेषासंवलितो देशविशेषासंवलितो वा?, तथा च सिद्धः तत्तत्क्षणविशेषविशिष्टतत्तद्देशतालक्षणो विशेष इति, विशेषश्चायं नोपनीते घटे, अपनीत एव तु तस्मिन्। एतेनानुपलब्धिप्रामाण्यवादिनां भाट्टानामाक्षेपः परास्तः।

यत्तु वदन्ति—सर्वं वस्तु सदसदात्मकतया द्विविधम्, तद्यदा यत्र सद्रूपेण वर्तते घटादि तदा प्रत्यक्षेण गृह्यते, यदा त्वसद्रूपेण वर्तते तदा दृश्यादर्शनलक्षणेन योग्यानुपलब्धिप्रमाणेन गृह्यत इति। तान् पृच्छामः—असद्रूपेण वर्तत इति किमभिप्रेतम्?। व्याहतं तु तद्-

चः, न ह्यसता रूपेण कस्यचित् वृत्तिरवच्छेत्तुं शक्यते । यदि घटो वर्तेत; स्वेनैव रूपेण वर्तेत न पररूपेणासता । परैरप्ययं पक्षोऽनूद्य निरस्तः—"स्वरूपपररूपाभ्यां नित्यं सदसदात्मके । वस्तुनि ज्ञायते किञ्चित् रूपं कैश्चित्कदाचन ॥ प्रत्यक्षाद्यवतारश्च भावांशो गृह्यते यदा । व्यापारस्तदनुत्पत्तिरभावांशे जिघृक्षिते ॥ स्वरूपमेव वस्तूनां ननु व्यावृत्तमिष्यते । तेनात्मना सदेतच्च प्रत्यक्षममुनाऽऽत्मना ॥" इति । यच्च कार्यस्य कारणमसद्रूपं कारणस्य कार्यमसद्रूपमित्यभिप्रेत्य कारणे कार्यस्य प्रागभावः कार्ये च कारणस्य प्रध्वंसाभावः षष्ठप्रमाणगम्य इति । तदपि तैर्निरस्तम्—"कार्यादीनामभावो हि यो भावः कारणादिना । स चापरविविक्तात्मा प्रत्यक्षेणैव गम्यते ॥" इति । न च नेति नञुल्लेख्यप्रतीतिविषयत्वात् भावादन्येनाभावेन भाव्यम् । प्रतीत्युल्लेखकशब्दभेदमात्रतोऽर्थान्तरकल्पना ह्यप्रामाणिकी ।

इदमत्र केचिद्विमृशन्ति—एकस्यैव द्रव्यस्य दुग्धदधिनवनीतावस्थाभेदा विपरिवर्तन्ते । तत्र दध्यवस्थायां दुग्धाभावप्रतीतिर्नवनीताभावप्रतीतिश्च भवति । प्रतीतिभेदेऽपि विषयस्तु दध्यवस्थातो नातिरिच्यते इति सत्यम् । किन्तु अतीतेनानागतेन च रूपेण नास्तीत्येव भवति प्रतीतिः । प्रतियोगिज्ञानादिसापेक्षतया क्षणविलम्बभाविन्याश्चक्षुरुन्मीलनक्षण एव जायमानचाक्षुषे कथं समावेशः ? । नापि स्मरणं, संस्कारनिरपेक्षत्वात् । अतोऽनुपलब्धिसहकृतं चाक्षुषमध्यक्षमिति ।

अर्थापत्तिरपि न प्रमाणान्तरम्, अनुमानेनैव गतार्थत्वात् । दिवाऽभुञ्जानत्वविशिष्टेन पीनत्वेन लिङ्गेन रात्रिभोजनसिद्धेः । एवं

जीवतो गृहास्थित्या लिङ्गेन बहिःस्थितिसिद्धेः। तत्र दिवाऽभुञ्जानस्य पीनत्वं च प्रत्यक्षेणावगतपूर्वम्, तद्भवति रात्रिभोजने लिङ्गम्। एवं जीवित्व गृहेऽसत्त्व च प्रमाणान्तरेणावधृते भवति बहि स्थितौ लिङ्गम्। ननु गृहे चैत्रमपश्यतस्तज्जीवनेऽपि स्यात्संशय, तत् कथं भवेत् गृहेऽभावो बहिर्भावे लिङ्गम्?। ननु को ब्रूते केवल गृहेऽभावो लिङ्गमिति?, जीवनविशिष्टो हि स लिङ्गमुच्यते। ननु गृहेऽसतो यावत् बहिर्भावो नावधार्यते तावज्जीवने स्यादेव सशय इति सन्दिग्धेन लिङ्गेन कथ साध्यसिद्धि.?। अवधृते च बहिर्भावे सिद्ध-साध्यता। ननु भो अर्थापत्तिं प्रमाणान्तरमिच्छताऽप्यत्र प्रति-वक्तव्यम्। न च संशयाधायकस्य प्रामाण्यम्। जीवनं चेदाप्तवच-नादवगतपूर्वम्, तुल्य तदनुमानेऽपीति किं प्रमाणान्तरेण?।

अनभिज्ञो भवानर्थापत्तिस्वरूपस्य। प्रमाणयोर्मिथो विरोधे प्राप्ते विरोधप्रशमनायार्थकल्पना अर्थापत्ति। सा यथा—जीवति देव-दत्त इति त्ववधृतम्, जीवतः क्वचित्सत्ता च नियता, तेन गृहेऽपि सत्ता प्राप्ता, अथ गृहे अदर्शनात् असत्ताऽपि प्राप्ता, तदेव प्रमाण-द्वयप्रतिपन्नयोरर्थयोर्विरोधे नैकार्थावगति, तदुपशमनाय या बहि-र्भावकल्पना सेयमर्थापत्तिः। विरोधोपशम यावन्न लिङ्गावगतेर-वसर.। उपशान्ते तु नावशिष्यते साध्यम्। व्याख्यातं चैतत्पार्थ-सारथिमिश्रैः शास्त्रदीपिकायाम्—"ननु प्रमाणा तरत्वेऽपि जीवन मात्रस्य गृहाभावमात्रस्य वा गमकत्वाभावात्संसृष्टमुभय गमकमि-त्यङ्गीकर्तव्यम्, संसृष्टधियैव च बहिर्भावस्य बुद्धत्वात्र पश्चात्प्रमेय किञ्चिदवशिष्यत इति तुल्योऽय दोष। उच्यते। इयमेव संसृष्ट धीरर्थापत्तिरित्यभ्युपगम्य शाम्यतु भवान्। किं पुनस्तस्याः कारणम्?

द्वयोर्गृहाभावजीवनयोः परस्परप्रतिघात इति ब्रूमः। यथा खल्वेकेन नद्यास्तीरे पञ्च फलानि सन्तीत्युक्ते अपरेण च न सन्तीत्युक्ते बलाबलविशेषमजानानः श्रोता मिथः प्रतिहतमुभयं बुध्यते, न चान्यतरदपि ग्रहीतुं त्यक्तुं वा शक्नोति, तथापि तु न सत्त्वासत्त्वे समुच्चिनोति विरोधात्। एवमिहापि गृहे वा वहिर्वाऽवस्थित इति केनचित्प्रमाणेन प्रतीतम्, अन्येन च गृहे नास्तीति, तदुभयं समुच्चितं परस्परप्रतिघाति प्रतीयते।......तेन प्रमाणसिद्धयोर्द्वयोरर्थयोः परस्परं प्रतिघातोऽर्थान्तरकल्पनया समाधेयत्वेनालोच्यमानोऽर्थापत्तेः कारणम्, तत्समाधानाय चार्थान्तरकल्पनाऽर्थापत्तिः प्रमाणान्तरमनुमानात्।" इति।

अत्र ब्रूमः--मिथः प्रमाणयोरिह विरोध इतीदमस्थाने, जीवता क्वचित् सता भाव्यमिति सत्यम्, गृहेऽसत्तावगमान्नोपमृद्यते तस्य क्वचित्सत्ता, क्वचिदित्यतोऽनिर्धारितदेशविशेषं सामान्यतो देशसत्त्वं हि गम्यते, देशत्वरूपसामान्यधर्मावच्छिन्नाधिकरणतानिरूपिताधेयता तु सा, प्रत्यक्षप्रमाणेन तु गृहत्वावच्छिन्नाधिकरणतानिरूपिताधेयत्वाभावो गृह्यते। न च विरोधोऽनयोः। न हि नीलघटाभाववत्ताज्ञानेन घटवत्ताज्ञानस्योपरोधः। तदेवमविरोधात्प्रमाणद्वयावगतेन जीवनविशिष्टेन गृहाभावेन लिङ्गेन बहिर्भावोऽनुमीयते इति अर्थापत्तेः प्रमाणान्तरत्वं नेति सुस्थितम्।

आचार्यैर्न्यायपरिशुद्धौ तदेतत्परपक्षनिरसनपुरःसरं सम्यक् समर्थितम्। तथा हि--"अर्थापत्तिस्त्वनुमानमेव, तथाहि--अनुपपद्यमानदर्शनादुपपादककल्पनं च व्याप्याद्व्यापकविज्ञानम्, अव्याप्यस्य तेन विनाऽनुपपद्यमानत्वाभावात्, अव्याप च तदुप-

पादकत्वायोगादिति । प्रमाणद्वयविरोधे सति विषयव्यवस्थापनमर्थापत्तिरित्यपि न वाच्यम्, प्रमाणयोः सतोर्विरोधाभावात् । विरुद्धयोरपि प्रामाण्यायोगात् । ननु देवदत्तस्य जीवने कुतश्चित् प्रमाणात्प्रमिते जीवता क्वचित्स्थातव्यमित्यविशेषेण देशसामान्यसम्बन्धावगतौ गृहमध्यात्कन्दन्त्यां सत्यां प्रत्यक्षे च गृहे तदभाव प्रतिपादयति स्पष्टो विरोधः, अतस्तच्छान्त्यै बहिर्भावकल्पनमर्थापत्तिरिति । नैवम् । क्वचिदिति विदितस्य जीवनस्य नियमाभावाद्बहिर्विद्यमानतासन्देहे, निश्चयरूपेण गृहाभावप्रत्यक्षेण प्रतिस्पर्धितुमसामर्थ्यात् । न च विरुद्धविषययोर्योरत्र कुत्रापि समबलत्वमस्ति, उभयाप्रामाण्ये तु कथञ्चित्स्यात्” इति ।

उपमानमपि न प्रमाणान्तरम्, अन्यत्र एव तदवसिद्धेः । यत्तु कश्चिदाह—कीदृग्गवय इति पृष्ट कश्चिदाह गोसदृशो गवय इति, तदिदमुपमानमिति । अस्य च शब्द एवान्तर्भावः, तेनैव वाक्येन गोसदृशो गवय इति गवयत्वावधारणात् । अपरे आहु —प्रागेव नगरे गां दृष्टवतोऽप्यगतगोजाते गोसदृशो गवय इत्यारण्यकवाक्य श्रुतवतस्ततो जातु गवय पश्यत स गवयोऽयमिति यज्ज्ञान भवति तदुपमानमिति । एतदपि न युज्यते, अयमिति चाक्षुष विज्ञान स इति तु आरण्यकवाक्यश्रवणसमयावधृतस्य गोसादृश्यस्य संस्कारतः स्मर्यमाणस्य सन्निकृष्टस्य गवयस्य विशेषणतया भानम् । तदिद प्रत्यक्ष एवान्तर्भवतीति नोपमान प्रमाणान्तरम् । यत्तु परैरुच्यते—गोसदृशो गवय इति आरण्यकवाक्य श्रुतवतो जात्वरण्य गतस्य गवय पश्यतः ‘अय गवयपदवाच्य’ इति भवति शक्तिग्रह । तत्रातिदेशवाक्यार्थज्ञानमुपमानम्, तत्स्मरण व्यापारः, शक्तिग्रहः फलम् ।

गोसादृश्यविशिष्टपिण्डदर्शनं तु संस्कारोद्बोधकतया व्यापारांश उपयुज्यते। तदुपमानं प्रमाणान्तरमिति। अत्रापि न शब्दादन्यस्य प्रमाणस्यावसरः। शक्तिग्रहो हि आप्तस्यारण्यकस्य वचनादेवावगतः। ननु वचनान्न तदवगमः। संज्ञाप्रवृत्तौ यन्निमित्तं गवयत्वं तत्तु गवयदर्शनानन्तरमेव हि प्रतीयते। नैवम्। गवयपदप्रवृत्तौ निमित्तं हि गवयत्वलक्षणो जातिविशेषः। स च गोसादृश्येनोपलक्षितः प्रागेवावगतो नाम। गोसादृश्योपलक्षितः कश्चिद् गवय इति वाक्यादेव ह्यवगतम्। उक्तं च न्यायपरिशुद्धावाचार्यैः—"यत्तु 'सादृश्यस्यानिमित्तत्वान्निमित्तस्याप्रतीतितः। समयो दुर्ग्रहः पूर्वं शब्देनानुमयापि वा॥' इति। तत्र निमित्तस्याप्रतीतित इति त्वसिद्धम्। गवयत्वादेरेव जातिविशेषस्य गोसादृश्याकारोपलक्षितस्य प्रथममेव वाक्यार्थतया प्रतीतिः, गोसादृश्योपलक्षितः कश्चिदर्थविशेषो गवय इति हि प्रतीतिः। पश्चात्प्रत्यक्षितगवयस्य तद्वैशद्यमात्रमेव" इति।

यत्तु शाबरैरुच्यते—गृह्यमाणपदार्थगतसादृश्यविज्ञानात्स्मर्यमाणपदार्थगतसादृश्यविज्ञानमुपमानमिति। तन्न। स्मृतिमात्रं हि तत्। गोसदृशगवयदर्शनाद्भवति पूर्वदृष्टगोस्मृतिः। ननु सादृश्यमधिकं स्मर्यमाणस्य विशेषणतया भासते। भासताम्, तच्च सादृश्यं भूयोऽवयवसामान्ययोगः, अवयवसामान्यं च तत्तत्संस्थानान्नातिरिक्तम्, तच्च दृष्टपूर्वमेवेति किमधिकमुपमानप्रमाणस्य प्रमेयम्। प्रतियोगिपरामर्शोपाधिकस्तु गवयसदृशी सेति व्यवहारः। यद्वा—गवये दृष्टे गौः स्मर्यते सादृश्यात्। सादृश्यं संस्कारोद्बोधकः सम्बन्धः, तच्च 'गोसदृशोऽयं गवयः' 'गवयसदृशी सा गौ'रिति वा उदी-

प्त्यबोधे विषयीभवतीति । किञ्च मिथः सदृशयोर्दृष्टसादृश्यस्य गोसदृशं गवयं पश्यतः गवयसदृशगवानुमानमेवेदमित्यपि वक्तुं शक्यते। उक्तं चाचार्यैर्न्यायपरिशुद्धौ—"उपमानमपि यदि गृह्यमाण-पदार्थगतसादृश्यविज्ञानात्स्मर्यमाणपदार्थगतसादृश्यविज्ञानम्, तदा स्मृतिः, तत्तद्वस्तुसंस्थानविशेषाद्यतिरिक्तस्य सादृश्यस्याभावात्, तस्य च पूर्वदृष्टत्वात्, स्मर्यमाणत्वाच्च । व्यवहारस्त्वपूर्वस्तत्प्रय-हारयप्रतिसम्बन्धिविशेषपरामर्शोपाधिकः। यद्वा—यो यत्सदृशः स तद्गतसादृश्यप्रतियोगी, यथा मिथः सदृशौ, इति व्याप्तिसिद्धौ, गौरेतत्सदृशी, एतद्गतसादृश्यप्रतियोगित्वात्, इत्यनुमानात् स्मर्य-माणगतसादृश्यसिद्धिः ।" इति ।

किञ्च—गृह्यमाणवैसादृश्यविज्ञानात्स्मर्यमाणवैसादृश्यविज्ञानमपि प्रमाणान्तरत्वेन किं नेष्येत । दृष्टतुरगविसदृशं गवयं पश्यत एत-द्विसदृशस्तुरग इति हि वैसादृश्यग्रहणं भवति । एवं तरुश्रेण्यां दृश्यमानायां प्रथमतरुदर्शनेऽनवगते तरोराद्यत्वे द्वितीयतरुदर्श-नानन्तरं प्रथमदृष्टे तरौ विज्ञायते 'स तरुराद्य' इति । तदस्या अपि प्रतीतेः प्रमाणान्तरत्वं स्यात् । तथा चोक्तं परैः—'गवयस्योपलम्भे तु तुरङ्गादौ प्रवर्तते । तद्वैसादृश्यविज्ञानं यत् तदन्या प्रमा न किम् ॥ तरुपङ्क्त्यादिसम्दृष्टावेकपादपदर्शनात् । द्वि-तीयशाखिविज्ञानादाद्योऽसाविति निश्चयः ॥ प्रमाणान्तरमा-सक्तं सादृश्याद्यनपेक्षणात् ।' इति । न्यायपरिशुद्धावप्युक्तम्— 'गृह्यमाणवैसादृश्यविज्ञानात्स्मर्यमाणवैसादृश्यविज्ञानमपि मानान्तरं स्यात्' इति ॥ अनुमानगतार्थता चेत्प्रकृतेऽपि सा तुल्येति । 'शते पञ्चाशत्सम्भवती' त्यादेः सम्भवस्य, 'इह घटे यक्षस्तिष्ठती'त्यादेरै-

तिह्यस्य चाज्ञातमूलवक्तृकव्यवहारपारम्पर्यलक्षणस्य यथायोगमनुमाने शब्दे चान्तर्भावः । अतः सिद्धं त्रिविधान्येव प्रमाणानीति ॥



# प्रत्यक्षपरिच्छेदः ।

## प्रत्यक्षलक्षणम् ।

अथ प्रत्यक्षं निरूप्यते—साक्षात्कारिप्रमा प्रत्यक्षं, तत्करणं प्रत्यक्षप्रमाणम् । साक्षात्करोमीत्यात्मसाक्षिकः कश्चित् ज्ञानस्य स्वभावविशेषः प्रत्यक्षत्वम् । तथा च न्यायपरिशुद्धौ—'तत्र साक्षात्कारिप्रमा प्रत्यक्षम्, साक्षात्त्वं जातिरूप उपाधिरूपो वा कश्चित् ज्ञानस्वभावविशेषः स्वात्मसाक्षिकः । 'ज्ञातकारणजज्ञानस्मृतित्वरहिता मतिः । अपरोक्षेति निष्कर्षे नाव्याप्त्यादिप्रसञ्जनम् ॥' इति । ज्ञातकरणजत्वरहिता स्मृतित्वरहिता च या मतिः साऽपरोक्षेत्यर्थः । प्रथमविशेषणेनानुमानादिव्यावृत्तिः, द्वितीयेन स्मृतिव्यावृत्तिः । अनूदितं च तत्रैव प्राचामाशयवैविध्यम् 'प्रमेयसङ्ग्रहे त्वेवमुक्तम्—साक्षादनुभवः प्रत्यक्षम्, साक्षात्त्वं जातिरिति । वरदविष्णुमिश्रैर्मानयाथात्म्यनिर्णये त्वेवमुक्तम्—अपरोक्षप्रमा प्रत्यक्षम्, प्रमाया आपरोक्ष्यं नाम विशदावभासत्वमिति ब्रूमः । किमिदं वैशद्यं नाम ?, असाधारणाकारेण वस्त्ववभासकत्वं इत्यादी'ति ।

तच्च प्रत्यक्षं द्विविधम्—निर्विकल्पं सविकल्पकं चेति । निष्प्रकारकं ज्ञानं निर्विकल्पकं, सप्रकारकं ज्ञानं सविकल्पकमिति तु तार्किकाः । नैतद्युज्यते । न हि किमपि ज्ञानमविशिष्टवस्त्ववभासकम्, गुणसंस्थानादिविशेषणविशिष्टमेव तु ज्ञानेन गोचरीक्रियते ।

बालमूकतिर्यगादीनां ज्ञानं सञ्ज्ञाविकल्परहितमपि गुणसंस्थानादिविकल्पविशिष्टविषयमेव ।

## निर्विकल्पकविचारः ।

यत्तूक्तम्—'अस्ति ह्यालोचनाज्ञानं प्रथमं निर्विकल्पकम् । बालमूकादिविज्ञानसदृशं शुद्धवस्तुजम् ॥' इति । किमभिप्रेतमेवंवदता ? । 'न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते' इति वैयाकरणैर्यत् शब्दानुगतया प्रत्ययमात्रस्य सविकल्पतेष्यते तन्निरासमात्रं चेत्, न तत्र नो विवादः । यदि तु 'जात्यादिकं न गृह्यते' इति निर्विकल्पतोच्यते, तन्न मृष्यामहे वयम् । यद्वस्तु-पथमुपैति योग्यं न तद्गृह्यते इति ह्यसम्भावितम् । संस्थानविशेषादनतिरिक्तैव तु जातिः । अन्यैव वा भवतु । सा च योग्यग्रहणयोग्यैव । जातिव्यक्त्योरभेदमपीष्यता भवता च व्यक्तौ गृह्यमाणायां जातिर्न गृह्यत इति कथं वक्तुं शक्येत । ननु भो वयं जातिव्यक्त्योर्भेदाभेदं सत्यं ब्रूमः । किन्तु यदेव तु सामान्यं अस्येदं सामान्यमयं तु विशेष इति प्रथमदर्शने नावधार्यते, द्वितीयादिदर्शने तु भवत्यवधारणं अस्येदं सामान्यमिति । यद्येवं तर्हि जाते प्रथमपिण्डदर्शने अयमित्थमिति प्रकारप्रकारिभावेनानवधृताया या जातिता सामान्यता बह्वनुगतत्वलक्षणा सा न गृह्यते, सा तु द्वितीयपिण्डदर्शन एवेत्यभ्युपगतं भवति, तदिष्टमेव नः । एवं संस्थानातिरिक्तत्वे भेदाभेदे च विवादः । प्रथमपिण्डग्रहणे यद्यपि 'अयमेतज्जातीयः' इति न गृह्येत कामम् । 'अयं कोऽपि विजातीयः' इति दृष्टेभ्यो वैजात्यं तु गृह्यत एव, तथा शुक्लनीलादिवैषम्यमपि । शुद्धवस्तुजमिति च किमभिप्रेतम् ? विशेषशून्येन वस्तुना जातमिति मयता न शक्यते वक्तुम्,

अपसिद्धान्तापातात् । अगृहीतधर्मधर्मिभाववस्तुमात्रविषयमिति च प्रतीतिस्वभावविरुद्धम् । दृष्टमात्रमिदमित्थमित्येव प्रतीयते इति ।

ननु—अवश्यमेवाभ्युपगन्तव्यं निष्प्रकारकं ज्ञानम् । विशिष्टज्ञानेन हि विशेषणज्ञानपूर्वकेण भाव्यम् । 'सुरभि चन्दन'मिति विशिष्टप्रत्यक्षं हि सौरभज्ञानपूर्वकमेव भवति । तथा च 'अयं गौ'रिति गोत्वविशिष्टज्ञानं गोत्वज्ञानपूर्वकमेवेति सिद्धम् । तच्च गोत्वज्ञानं विशेष्यविशेषणभावानवगाहीति । मैवम् । सर्वेणैव विशिष्टज्ञानेन विशेषणज्ञानपूर्वकेणैव भाव्यमिति हि न नियमः । ययोर्विशेषणविशेष्ययोर्नैकेन्द्रियग्राह्यता तत्र विशेषणग्रहेण पूर्वमेव भाव्यम् । यथा 'सुरभि चन्दन'मित्यत्र सौरभं विशेषणं घ्राणेन्द्रियग्राह्यम्, चन्दनं तु चाक्षुषम्, तस्मात् प्राक् घ्राणेन्द्रियेण गृहीतं सौरभं पूर्वानुभवजनितसंस्कारबलेन स्मृतं सन्निकृष्टचन्दनस्य विशेषणतयाऽवभासते । तस्मात् विशेषणस्वाभाव्यान्न पूर्वग्रहणम्; अपि तु भिन्नेन्द्रियग्राह्यत्वात् । गोतत्संस्थानादि तु एकेन्द्रियग्राह्यमिति सेयं विशिष्टधीर्न विशेषणग्रहणं पृथगपेक्षते इति । यत्तु योगशास्त्रे निर्विकल्पकसमाध्युपदेशान्निष्प्रकारकज्ञानमेपितव्यमिति । तन्न । निर्विकल्पकसमाधावपि प्रह्लादादीनामनन्तगुणविशिष्टस्य ब्रह्मण एवानुभाव्यत्वदर्शनात् । यत्र च ध्याने ध्येयापेक्षया ध्यानस्य ध्येयस्य च पृथग्भानमस्ति, तत्सविकल्पकम् । यत्र तु ध्येयार्थस्याऽत्यन्तवैशद्यात्तन्निगीर्णतया ध्यातुर्ध्यानस्य च पृथगवभासो नास्ति सतोऽपि, तन्निर्विकल्पकमित्येव योगशास्त्रतात्पर्यम् । न च तावता निष्प्रकारकज्ञानसिद्धिरित्यन्यत्र विस्तरः ।

## सविकल्पकवर्णनम् ।

सप्रत्यवमर्शं प्रत्यक्षं सविकल्पकं, तद्रहितं क्षं निर्विकल्प-

क्षम् । अदृष्टपूर्वं पिण्डविशेषं गवादिकं पश्यतः 'अयमीदृशः कोऽपि पशु'रिति भवति प्रत्यवमर्शरहितं प्रत्यक्षम् । अथापरं तज्जातीयं पश्यतः 'अयमपि स एवे'ति भवति प्रथमं दृष्टस्य जातिविशेषस्य प्रत्यवमर्शः, प्रत्यवमर्शे चास्मिन् पूर्वानुभवजनितसंस्कारोद्बोधः सहकारी । संस्कारस्य सहकारितामात्रेण न प्रत्यक्षत्वभङ्गः, अक्षप्राधान्यात् । उक्तं च न्यायपरिशुद्धौ—'सहकारिविशेषेण न वैजात्यं प्रसज्यते । तज्जातीये तु यत्किञ्चिद्वैषम्यं सम्भवेदपि ॥ यत्र दृश्येत वैजात्यं तथा तत्राभ्युपेयते । तावता नैव सर्वत्र भवेदेतस्य कल्पनम् ॥ केवलेन्द्रियजं चापि न किञ्चित् ज्ञानमिष्यते । सहकारिविशेषा हि विभिद्यन्ते प्रतीन्द्रियम् ॥ अतः संस्कारसम्भेदेऽप्यपरोक्षत्वयोगतः । प्रत्यक्षत्वं विकल्पस्य न क्वचिद्विनिवर्तते ॥' इति । तथा चैतत् निष्कृष्टं लक्षणम्—संस्कारोद्बोधसहकृतेन्द्रियजं ज्ञानं सविकल्पकं प्रत्यक्षम्, संस्कारोद्बोधनिरपेक्षेन्द्रियजं ज्ञानं निर्विकल्पकं प्रत्यक्षमिति । द्वितीयपिण्डग्रहणेऽपि दृष्टमात्रे सपदि समुद्भवति प्रत्यवमर्शरहितं निर्विकल्पकम्, अथ संस्कारोद्बोधसहकृतेनेन्द्रियेण भवति सप्रत्यवमर्शं सविकल्पकं प्रत्यक्षमित्येष विशेषः । अनूदितं च न्यायपरिशुद्धौ श्रीविष्णुचित्तवचनमत्र संवादितया, 'संस्कारोद्बोधसहकृतेन्द्रियजं ज्ञानं सविकल्पकम्, एकजातीयेषु प्रथमपिण्डग्रहणं द्वितीयपिण्डग्रहणेषु पक्षभास्पातसन्निपातजं च ज्ञानं निर्विकल्पकम्' इति ।

## प्रत्यक्षविभागः ।

द्विविधं पुनः प्रत्यक्षमर्वाचीनमनर्वाचीनं चेति । अर्वाचीनं द्विविधम्—इन्द्रियसापेक्षं तन्निरपेक्षं चेति । इन्द्रियनिरपेक्षमपि द्विविधम्—स्वयंसिद्धं दिव्यं चेति । योगजं स्वयंसिद्धमुच्यते, भगवत्प्रसादजं तु

दिव्यमुच्यते। योगाभ्यासतपश्चर्यादिजः प्रकृष्टादृष्टविशेषो भवति निमित्तं योगजे। एतेन योगजस्य केवलभावनाबलजत्ववादो निरस्तः। श्रीभाष्यादौ तु भावनाबलमात्रजस्यादृष्टासहकृतस्य प्रामाण्यप्रतिक्षेपः कृतो नादृष्टसहकृतविशुद्धमनोनिष्पाद्यस्येति बोध्यम्। योगजं महर्षीणाम्। दिव्यं पराङ्कुशादिभक्तवर्याणां गोपालानन्दस्वामिप्रभृतीनां च। अनर्वाचीनं नित्यानां मुक्तानामीश्वरस्य च। प्रज्ञापरित्राणे तु इन्द्रियनिरपेक्षस्य सर्वस्य दिव्यत्वमुक्तम्—'अत्रेन्द्रियानपेक्षं यत् ज्ञानमर्थावभासकम्। दिव्यं प्रमाणमित्येतत्प्रमाणज्ञाः प्रचक्षते॥ परमेश्वरविज्ञानं मुक्तानां च धियस्तथा। सञ्जयार्जुनवाल्मीकिप्रभृत्यार्षधियोऽपि तत्॥ स्वाभाविकस्य ज्ञानस्य स्वतः सर्वावभासिनः। अविद्याप्रतिबद्धस्याप्रतिबन्धोऽक्षयोगतः॥ अविद्याहानितो मुक्तपुरुषाणां हि संविदाम्। स्वाभाविकस्वरूपेण निखिलार्थावभासिता। परेणानुगृहीता धीः ऋषीणां सर्वभासिका॥' इति।

अर्वाचीनं त्वस्मदादीनामिन्द्रियसापेक्षं प्रत्यक्षम्। अनुमानादीनामप्येतदुपजीव्यत्वेनास्य ततः प्राधान्यम्। परितः प्रसरणशीलस्याप्यात्मधर्मभूतस्य ज्ञानस्याविद्ययोपरुद्धस्येन्द्रियादिप्रसरणे भवति निमित्तम्। इन्द्रियद्वारकप्रसरणविशिष्टं प्रत्यक्षमुच्यते। लिङ्गज्ञानादिना लिङ्ग्याद्दिप्रकाशकं त्वनुमानादि।

तत्र सन्निकृष्टमेवार्थं ग्राहयतीन्द्रियम्। सन्निकर्षश्च संयोगार्हेष्वर्थेषु संयोगः, अतदर्हेषु रूपादिषु संयुक्तापृथक्सिद्धिः। यथोक्तं तत्त्वरत्नाकरे—'अत्र वृद्धा विदामासुः संयोगः सन्निकर्षणम्। संयुक्ताश्रयणं चेति यथासम्भवमूह्यताम्॥' इति। यद्यपि चक्षुः स्वदेशान्नान्यत्र प्रसर्पति, घटादिरर्थोऽपि तथा, अथापि चक्षुषो

कम् । अदृष्टपूर्वं पिण्डविशेषं गवादिकं पश्यतः 'अयमीदृश कोऽपि पशु'रिति भवति प्रत्यवमर्शरहितं प्रत्यक्षम् । अथापरं तज्जातीयं पश्यतः 'अयमपि स एवे'ति भवति प्रथमं दृष्टस्य जातिविशेषस्य प्रत्यवमर्शः, प्रत्यवमर्शे चास्मिन् पूर्वानुभवजनितसंस्कारोद्बोधः सहकारी । संस्कारस्य सहकारितामात्रेण न प्रत्यक्षत्वभङ्गः, अक्षप्राधान्यात् । उक्तं च न्यायपरिशुद्धौ—'सहकारिविशेषेण न वैजात्यं प्रसज्यते । तज्जातीये तु यत्किञ्चिद्वैषम्यं सम्भवेदपि ॥ यत्र दृश्येत वैजात्यं तथा तत्राभ्युपेयते । तावता नैव सर्वत्र भवेदेतस्य कल्पनम् ॥ केवलेन्द्रियजं चापि न किञ्चित् ज्ञानमिष्यते । सहकारिविशेषा हि विभिद्यन्ते प्रतीन्द्रियम् ॥ अतः संस्कारसम्भेदेऽप्यपरोक्षत्वयोगतः । प्रत्यक्षत्वं विकल्पस्य न क्वचिद्विनिवर्तते ॥' इति । तथा चैतत् निष्कृष्टं लक्षणम्—संस्कारोद्बोधसहकृतेन्द्रियजं ज्ञानं सविकल्पकं प्रत्यक्षम्, संस्कारोद्बोधनिरपेक्षेन्द्रियजं ज्ञानं निर्विकल्पकं प्रत्यक्षमिति । द्वितीयपिण्डग्रहणेऽपि दृष्टमात्रे सपदि समुद्भवति प्रत्यवमर्शरहितं निर्विकल्पकम्, अथ संस्कारोद्बोधसहकृतेनेन्द्रियेण भवति सप्रत्यवमर्शं सविकल्पकं प्रत्यक्षमित्येष विशेषः । अनूदितं च न्यायपरिशुद्धौ श्रीविष्णुचित्तवचनमत्र संवादितया, 'संस्कारोद्बोधसहकृतेन्द्रियजं ज्ञानं सविकल्पकम्, एकजातीयेषु प्रथमपिण्डग्रहणं द्वितीयपिण्डग्रहणेषु पक्षमाक्षपातसन्निपातजं च ज्ञानं निर्विकल्पकम्' इति ।

### प्रत्यक्षविभागः ।

द्विविधं पुनः प्रत्यक्षमर्वाचीनमनर्वाचीनं चेति । अर्वाचीनं द्विविधम्—इन्द्रियसापेक्षं तन्निरपेक्षं चेति । इन्द्रियनिरपेक्षमपि द्विविधम्—स्वयंसिद्धं दिव्यं चेति । योगजं स्वयंसिद्धमुच्यते, भगवत्प्रसादजं तु

दिव्यमुच्यते । योगाभ्यासतपश्चर्यादिजः प्रकृष्टादृष्टविशेषो भवति निमित्तं योगजे । एतेन योगजस्य केवलभावनाबलजत्ववादो निरस्तः । श्रीभाष्यादौ तु भावनाबलमात्रजस्यादृष्टासहकृतस्य प्रामाण्यप्रतिक्षेपः कृतो नादृष्टसहकृतविशुद्धमनोनिष्पाद्यस्येति बोध्यम् । योगजं महर्षीणाम् । दिव्यं पराङ्कुशादिभक्तवर्याणां गोपालानन्दस्वामिप्रभृतीनां च । अनर्वाचीनं नित्यानां मुक्तानामीश्वरस्य च । प्रज्ञापरित्राणे तु इन्द्रियनिरपेक्षस्य सर्वस्य दिव्यत्वमुक्तम्—'अत्रेन्द्रियानपेक्षं यत् ज्ञानमर्थावभासकम् । दिव्यं प्रमाणमित्येतत्प्रमाणज्ञाः प्रचक्षते ॥ परमेश्वरविज्ञानं मुक्तानां च धियस्तथा । सञ्जयार्जुनवाल्मीकिप्रभृत्यार्षधियोऽपि तत् ॥ स्वाभाविकस्य ज्ञानस्य स्वतः सर्वावभासिनः । अविद्याप्रतिबद्धस्याप्रतिबन्धोऽक्षयोगतः ॥ अविद्याहानितो मुक्तपुरुषाणां हि संविदाम् । स्वाभाविकस्वरूपेण निखिलार्थावभासिता । परेणानुगृहीता धीः ऋषीणां सर्वभासिका ॥' इति ।

अर्वाचीनं त्वस्मदादीनामिन्द्रियसापेक्षं प्रत्यक्षम् । अनुमानादीनामप्येतदुपजीव्यत्वेनास्य ततः प्राधान्यम् । परितः प्रसरणशीलस्याप्यात्मधर्मभूतस्य ज्ञानस्याविद्ययोपरुद्धस्येन्द्रियादिप्रसरणे भवति निमित्तम् । इन्द्रियद्वारकप्रसरणविशिष्टं प्रत्यक्षमुच्यते । लिङ्गज्ञानादिना लिङ्ग्यादिप्रकाशकं त्वनुमानादि ।

तत्र सन्निकृष्टमेवार्थं ग्राहयतीन्द्रियम् । सन्निकर्षश्च संयोगार्हेष्वर्थेषु संयोगः, अतदर्हेषु रूपादिषु संयुक्तापृथक्सिद्धिः । यथोक्तं तत्त्वरत्नाकरे—'अत्र वृद्धा विदामासुः संयोगः सन्निकर्षणम् । संयुक्ताश्रयणं चेति यथासम्भवमूह्यताम् ॥' इति । यद्यपि चक्षुः स्वदेशान्नान्यत्र प्रसर्पेति, घटादिरर्थोऽपि तथा, अथापि चक्षुषो

वृत्ति प्रसरणशीलाऽर्थदेशं प्राप्नोति, ततश्च तद्वारा भवति सन्निकर्षः। अन्येषामिन्द्रियाणां तु स्वदेशप्राप्तार्थग्राहकतैव। यथा वायूपनीतपार्थिवांशगतगन्धेन सह स्वदेशस्यैव घ्राणस्य भवति सन्निकर्षः। वायोः श्रोत्रदेशप्राप्त्या भवति शब्देन श्रोत्रस्य सन्निकर्षः। शब्दो ह्याकाशस्येव तद्विकृतेर्वायोरपि गुणः। प्रत्यक्षसिद्धश्च वायावपि। उक्तं च सर्वार्थसिद्धौ—'अत्र केचित् शब्दस्याकाशमात्राश्रितत्वमाहुः, तन्नेति प्रतिपादयती'त्यादिना। यत्तु वीचीतरङ्गन्यायेन श्रोत्रदेशं यावत् शब्दधारा जायते, तत्र यः शब्दः श्रोत्रप्रदेशे समुत्पन्नः, स एव श्रोत्रेण सन्निकृष्टः प्रत्यक्षीक्रियत इति। तन्न। प्राच्यां दिशि जात श्रूयते शब्दः प्रतीच्यां दिशि श्रूयते शब्दः, अयं शब्दः समीपे श्रूयतेऽयं तु दूरे इत्यादिप्रतीतेरनुपपत्तेः। केचित्तु श्रोत्रस्यापि चक्षुष इव वृत्तिरर्थदेशं यावत् प्रसरतीत्याहुः।

चक्षुरादीनामिन्द्रियाणां प्रतिनियतरूपादिविषयतया च चाक्षुषं श्रावणं रासनं त्वाचं घ्राणजमिति पञ्चविधं तावदिदं प्रत्यक्षम्। ननु मानसं सुखादिप्रत्यक्षमस्तीति कथं पञ्चधैवेति। अत्र पूर्वाचार्या वदन्ति। सुखादिकं हि ज्ञानस्यैवावस्थाविशेषः। ज्ञानं ज्ञाताऽऽत्मा च स्वयं प्रकाशेते इति न तस्य मनःसापेक्षप्रत्यक्षविषयता। तस्माच्चक्षुषो रूपादिकमिव मनसो न कश्चिदसाधारणोऽर्थः। ज्ञानस्य सुखाद्यवस्थाप्राप्तौ पुनर्मनसो व्यापारो न निवार्यते। प्रकाशस्तु स्वयमेव सम्भवतीति। अणुत्वनित्यत्वप्रत्यक्त्वेपरत्वादिविशिष्टस्य योगाभ्यासजनितादृष्टसंस्कृतमनोनिष्पाद्यो विशदावभासस्त्वात्मन इष्यत एव। विस्तरस्त्वन्यत्र द्रष्टव्यः।

॥ इति प्रत्यक्षपरिच्छेदः ॥

# अनुमानपरिच्छेदः ।

## अनुमानप्रामाण्यसमर्थनम् ।

अथानुमानं निरूप्यते—भूयोदर्शनसापेक्षत्वेन व्याप्तिनिश्चयस्य भवत्यनुमानं प्रत्यक्षोपजीव्यकम्, वृद्धव्यवहाराधीने शक्तिग्रहे भवत्यनुमानं मूलमिति प्रत्यक्षनिरूपणानन्तरं शब्दनिरूपणतः प्रागनुमानं निरूप्यते ।

ननु—अनुमानं न प्रमाणम् । तथाहि—अनुमितेः पूर्वं विशेषाग्रहात् ( पर्वतीयवह्नेरग्रहात् ) न विशेषयोर्व्याप्तिग्रहः । सामान्ययोश्चेत्; हन्त पर्वतीयवह्निरपि सामान्यतः सिद्ध एवेति सिद्धसाधनम् । तथा चोक्तम्—'विशेषेऽनुगमाभावः सामान्ये सिद्धसाधनम् । अनुमाभङ्गपङ्केऽस्मिन् निम वादिदन्तिनः ॥' इति । ननु पर्वते धूमं पश्यतो वह्न्यर्थिनो भवति प्रवृत्तिः । असत्यनुमानप्रामाण्ये कथं प्रवृत्तिर्घटेत । नैवम् । संशयादपि प्रवृत्तेः । अत्रोच्यते—अनुमानप्रामाण्यं निरस्यतस्तव वचनमेवानुमानप्रामाण्यं समर्थयतीति व्याहतं स्ववचनेनैव । तथाहि—अनुमानस्याप्रामाण्यं साधयता त्वया 'विशेषानुगमाभावः सामान्ये सिद्धसाधनम्' इत्यनेन व्याप्त्ययोगो हेतुरुक्तः । स किमनुमानाप्रामाण्येन व्याप्तो न वा, यदि व्याप्तस्तर्हि अभ्युपगतमनुमानप्रामाण्यम् । यदि न व्याप्तो हेतुः, अनुमानप्रामाण्यपक्षोऽस्मदीयो दूषणासंस्पर्शेन विजयत एव । तथा चोक्तम्—'न व्याप्तिर्नियमायोगादिति व्याप्तमिदं न वा । व्याप्तं चेत्स्वीकृता व्याप्तिः न व्याप्तं चेन्न दूषणम् ॥' किञ्च—अनुमानमात्रस्याप्रामाण्यं समर्थयता त्वया सर्वो हेतुर्व्यभिचारीति साध्यते उत यः कश्चिदिति । आद्ये व्यभिचारि-

त्वसाधकतया त्वया प्रयुज्यमानोऽपि सर्वान्तर्गत इति न स्वेष्टसिद्धि । अथ य कश्चित्तदाऽन्यस्याव्यभिचारित्वमप्रतिद्वन्द्विमित्यनुमानप्रामाण्यमभ्याहृतम् । तथा चोक्तम्—'सर्वस्य व्यभिचारित्वे व्यभिचारो न सिद्ध्यति । एकस्याव्यभिचारित्वे न सर्वव्यभिचारिता ॥' इति । किञ्च—गृहीतव्याप्तिक लिङ्ग पक्षे दृष्ट सत् तत्र लिङ्गिनमुपस्थापयतीत्येतदनुभवबलसिद्धम् । धूम पश्यतो वह्नौ प्रवृत्ति सशयादिति वदता सशये कारण वाच्यम् । तच न धूमदर्शनमात्रम् । धूमवह्न्योः सम्बन्धेऽगृहीते नहि तेन सशयो भवति । भूयोदर्शनजनितो वह्निसामान्यधूमसामान्ययो नियतसाहचर्यरूपसम्बन्धग्रहस्तु पक्षधर्मताग्रहसहकृतो निश्चयाकारामेवानुमितिं जनयेत्, न संशयम् । सामान्यत प्रसिद्धस्य धर्मस्य पक्षे धर्मिणि सम्बन्धावधारणमात्रमनुमितिः, तेन नाप्रसिद्धस्य साध्यता, न वा सिद्धसाधनप्रसङ्ग इति ।

ननु—लिङ्गदर्शनाज्जायता धर्मिणि लिङ्गिनिश्चय , परं स प्रत्यक्षान्नातिरिच्यते । प्रत्यक्षमूलको हि स । नैवम् । चक्षुरादिसन्निकर्षघटिता हि प्रत्यक्षसामग्री लिङ्ग ग्राहयित्वा तावन्मात्रे विश्राम्यति । ननु लिङ्गदर्शन द्वारम् । नैतद्युक्तम् । निमीलितनयनस्याप्यपगतेऽपि चाक्षुषे स्मरतो लिङ्ग भवति साध्यनिश्चयजननदर्शनात् । न च स्मरण चक्षुरादेर्द्वारं भवति । ननु—संस्कारप्रभृतिप्रत्यासत्त्या मानसं तदस्तु । नैवम् । तथासति तुल्यनयेन सर्वेषामेव चाक्षुषादीना तत्तदिन्द्रियसन्निकर्षप्रत्यासत्त्या मानसप्रत्यक्षत्वापात्तः । सर्वाण्यपीन्द्रियाणि विना मन सम्बन्ध न हि प्रभवन्ति प्रत्यक्षाय । यदि च मनसो बहिरस्वातन्त्र्याच्चक्षुरादे पृथक् प्रमाणत्व तर्ह्यनुमानस्यापि तुल्यम् । तस्मात् अनुमान प्रमाणान्तरमेवेति सुस्थितम् ।

## व्याप्यव्यापकभावनिरूपणम् ।

व्याप्यस्य व्याप्यत्वानुसन्धानात् व्यापकविशेषप्रमितिरनुमितिः, तत्करणमनुमानम् । अव्याप्ये धूलीपटले धूमत्वभ्रमात्स्यात् व्याप्यत्वानुसन्धानं न ततो व्यापकविशेषप्रमितिः, अतो व्याप्यस्य व्याप्यत्वानुसन्धानादिति । व्यापकविशेषप्रमितिरनुमितिः, तत्करणमनुमानम्, तच्च व्याप्यस्य व्याप्यत्वानुसन्धानमित्युक्तं भवति । तत्र व्याप्यमनधिकवृत्ति, व्यापकमन्यूनवृत्ति । धूमो वह्निदेश एव वर्तते, न ततोऽधिकदेशे । वह्निर्धूमतोऽन्यूनवृत्ति, न हि वह्निर्धूमवति देशे नेति । यत् यदधिकरणनिष्ठाभावाप्रतियोगि तत्तस्य व्यापकम् । व्यापकत्वे निरूपिते तत्प्रतिसम्बन्धित्वलक्षणं व्याप्यत्वमपि निरूपितप्रायम् ।

अत्र कश्चिदाह—व्याप्यमनधिकवृत्तीति लक्षणमसङ्गतम्, न हि ज्ञेयत्वेन वाच्यत्वे साध्ये वाच्यत्वव्याप्यता ज्ञेयत्वस्य घटेत, अधिकदेशाप्रसिद्धेः । वाच्यत्वं हि केवलान्वयि । सत्यं केवलान्वयि, अत एवाधिकदेशाप्रसिद्ध्याऽधिकदेशवृत्तित्वलक्षणव्यभिचारस्याभावात् व्याप्यता तस्य युक्तैव । तथा चोक्तं न्यायपरिशुद्धौ—'तर्हि विपक्षरहितस्य केवलान्वयिनो विपक्षवृत्त्यभावः कथमिति चेत्, हन्त किं तस्य विपक्षवृत्तित्वमस्ति, तदपि नास्तीति चेत् तर्हि तावदेवानुमानाङ्गमित्युक्तम्, तदभावेऽपि तद्वृत्तित्वलक्षणविशिष्टस्याप्रसिद्धेरिति' इति । अयमाशयः—अनुमानाङ्गभूतैः पञ्चभी रूपैरुपपन्नं लिङ्गं प्रभवति साध्यसाधने । तानि च पक्षसत्त्वं सपक्षसत्त्वं विपक्षासत्त्वं अबाधितविषयत्वमसत्प्रतिपक्षत्वं चेति । केवलान्वयिलिङ्गमभ्युपगच्छद्भिर्विपक्षाद्व्यावृत्तिरुपपादनीया, सा

चोक्तयैव दिशा। केचित्तु–सति विपक्षे तद्व्यावृत्तिरङ्गम्, असति तु न तदङ्गमिति वदन्ति।

व्याप्यव्यापकभावश्च कयोश्चित् कालतो देशतश्च। यथा–धूमवह्न्योः। कयोश्चित् कालमात्रतः। यथा–छायाविशेषसूर्यस्थितिविशेषयोः। पुरुषो हि स्वच्छायया मूललग्नतया स्वचरणमानमितया नभोभागविशेषे सूर्यस्य स्थितिमनुमिनोति। देशमात्रतो यथा–रूपान्तरेण विलक्षणतेजःसंयोगलक्षणपाकस्यातीतस्य। प्रवहता विशिष्टनदीपूरेणोपरितनदेश्यतीताऽपि वृष्टिरनुमीयते, तत्रापि नदीतीरप्रदेशत्वेन देशैक्यं वृष्टिपूरयोरविनाभावप्रयोजकं मन्तव्यम्।

ननु–धूमो महानसीयवह्नेरधिकदेशवर्ती कथं व्याप्यो भवितुमर्हति, वह्निर्वा महानसीयो धूमसामान्यतो न्यूनवृत्तिः कथं व्यापको भवितुमर्हति। नैवम्। धूमसामान्यवह्निसामान्ययोरस्त्येव व्याप्यव्यापकभावः। धूमत्वावच्छिन्नाधेयतानिरूपिताधिकरणतावन्निष्ठात्यन्ताभावप्रतियोगितानवच्छेदकत्वात् वह्नित्वस्य, वह्नित्वावच्छिन्नप्रतियोगिताकाभाववद्वृत्तितानवच्छेदकत्वाच्च धूमत्वस्य। सूचितं चैतन्न्यायपरिशुद्धौ–'अत्रेदं तत्त्वम्–यादृग्रूपस्य यद्देशकालवर्तिनो यस्य यादृग्रूपेण यद्देशकालवर्तिना येनाविनाभावः, तदिदमविनाभूतं व्याप्यं तत्प्रतिसम्बन्धि व्यापक'मिति।

## व्याप्तिग्रहोपायवर्णनम्।

व्याप्तिग्रहश्च भूयोदर्शनेन। सकृत्सहचारदर्शनं व्यभिचारिण्यपि स्यात्। नापि जायेत व्याप्तिग्रहः सकृत्सहचारदर्शनमात्रेणेति। यद्यपि भूयसां सहचारदर्शनानां नैकदा समवायः, येन सम्भूय व्याप्तिग्रहं जनयेयुः, क्षणविनाशीनि हि तानि। तथापि भूयोदर्श-

नजनितसंस्कारप्रचयसहकृतचरमसहचारदर्शनाद्भवति व्याप्त्यवधारणम् । तच्च चाक्षुषमुदीच्यमानसं वेत्यन्यदेतत् । ननु वह्निधूमव्यक्त्योऽसङ्ख्येयाः, तासु कतिपयव्यक्तीनां सहचारदर्शनमात्रेण कथं धूमसामान्यवह्निसामान्ययोर्व्याप्तिग्रहः । देशविशेषे पिण्डखर्जूरादपि वृश्चिकोत्पत्तिर्दृष्टा, तदयं धूमः कारणान्तरजन्यः किं न स्यादिति स्यादेव शङ्का । मैवम् । सेयं शङ्कापिशाचिका ह्यस्थाने दत्तावसरा सर्वत्रैव प्रसर्पेत्, तथा सत्यनुमानकथैव विलुप्येत । उपाधिशङ्कायां तु स्यान्नाम व्यभिचारशङ्का; तदा तु व्याप्त्यवधारणं माभूत् । अन्यथा तूत्सर्गतः स्यादेव व्याप्त्यवधारणं भूयोदर्शनतः ।

इदमिहावधेयम्—भूयोदर्शनतो जायमानं व्याप्त्यवधारणं किं लौकिकं प्रत्यक्षमुतालौकिकमित्यत्र केचिदाचक्षते—वह्नित्वधूमत्वसामान्यलक्षणाप्रत्यासत्त्या जायमानमलौकिकं प्रत्यक्षमिति । केचिदाचार्यास्तु—चक्षुःसंयुक्ताश्रिताश्रयत्वं लौकिकः सन्निकर्षः, सोऽयं तृतीयः सन्निकर्षः । तथा चोक्तं तत्त्वरत्नाकरे—'तृतीयः सन्निकर्षोऽयं सन्निकर्षनिरूपणे । अनुक्तस्तत्प्रमेयस्य व्याप्तेरत्रैव साधनात् ॥' इति । अनेन सन्निकर्षेण धूमवह्न्योः सकृत्सहचारदर्शनतोऽपि भवति व्याप्त्यवधारणम् । तथा चोक्तं तत्रैव—'सम्बन्धोऽयं सकृद् ग्राह्यः प्रतीतिस्वरसात्तथा । प्रतीतयो हि स्वरसाद्धर्मधर्म्यवधीन् विदुः ॥' इतीति वदन्ति । प्रौढवादोऽयमिति तु मन्यामहे । यद्ययं तृतीयः सन्निकर्षो लौकिकः, एकस्यां गोव्यक्तौ दृष्टायां सर्वासामेव गोव्यक्तीनां दृष्टत्वमापतेत् । नन्वेकस्यां दृष्टायामपरास्सजातीया दृष्टप्राया एव । एवमपि गवि दृष्टायां चक्षुःसंयुक्ताश्रितपशुत्वाश्रयत्वेन सन्निकर्षेण सर्वेषामेव पशूनां दृष्टताप्रसङ्गो दुष्परि-

दूरः । चक्षुःसंयुक्ताश्रितप्रमेयत्वाश्रितत्वेन सन्निकर्षेण दृश्यानामदृश्यानां च प्रत्यक्षताप्रसङ्गश्च । तस्मात् भूयोदर्शनजनितसंस्कारसमुदायाधीनविमर्शविशेषादुपाधिशङ्कानिरासे भवति व्याप्त्यवधारणमित्येव युक्तम् ।

सौगतास्तु भूयोदर्शनस्य व्याप्त्यवधारकत्वं न सहन्ते । आहुश्च—'कार्यकारणभावाद्वा स्वभावाद्वा नियामकात् । अविनाभावनियमो दर्शनान्न न दर्शनात् ॥' इति । (अन्वयात् व्यतिरेकाद्वा नेत्यर्थः ) तत्र धूमवह्न्योः कार्यकारणभावः, वृक्षशिंशुपयोः स्वभावः—स्वो भावः, तादात्म्यम् । तादात्म्यं तदुत्पत्तिर्वा अविनाभावे प्रयोजकं नेतरद्भूयोदर्शनादि इति । अत्र ब्रूमः—'रूपे न रसतादात्म्यं न चैव रसजन्यता । रसाद्रूपानुमानं तु दृष्टं तद्धटते कथम् ॥ कृत्तिकोदयतो रोहिण्युदयो ननु साध्यते । न तादात्म्यं तयोर्नैव कार्यकारणताऽपि वा ॥ तादात्म्ये न च भेदोऽस्ति तस्मिन्नसति सा कथम् । व्याप्तिर्नियतसम्बन्धः सोऽविनाभाव उच्यते ॥ केन कस्याविनाभावः स हि भेदमपेक्षते । ननु सामान्यरूपेण वस्तुन्यपि तदात्मनि ॥ भेदो विशेषरूपेणेत्यापातमधुरं वचः । अन्यदेव हि सामान्यं विशेषस्त्वन्य एव हि ॥ वृक्षत्वं खलु सामान्यं विशेषस्त्वाम्रतादिकम् । ऐक्ये तयोरिष्यमाणे स्यादाम्रः सकलस्तरुः ॥ साध्यहेत्वोस्तथा चैक्यं न सामान्यविशेषयोः । अतोऽकार्यानात्मना च भवेद्व्याप्तिरसंशयम् ॥

अन्वयतो व्यतिरेकतश्च भवति व्याप्तिः । साधनान्वयतः साध्यान्वयविधानमुखेन प्रवृत्ताऽन्वयतो व्याप्तिः । साध्यव्यतिरे-

कतः साधनव्यतिरेकविधानमुखेन प्रवृत्ता च व्यतिरेकतो व्याप्तिः । सेयं द्विविधाऽपि व्याप्तिरसत्युपाधौ । सत्युपाधौ तु व्याप्तिभ्रमादेवानुमितिः । न हि धूमेन वह्निरिव वह्निना धूमो भूयोदृष्टसाहचर्योऽप्यनुमातुं शक्यते । तत्र ह्यार्द्रेन्धनसंयोग उपाधिः ।

## उपाधिनिरूपणम् ।

यो हि भवति साध्यव्यापकः साधनाव्यापकश्च सोऽयमुपाधिः । यत्र यत्र धूमस्तत्र तत्रास्ति आर्द्रेन्धनसंयोगः, यत्र यत्र वह्निस्तत्र तत्र नार्द्रेन्धनसंयोगः, अयोगोलके सत्यपि वह्नौ तदभावात् । सावयवत्वेनानित्यत्वसाधने कृतकत्वमुपाधिर्माभूदिति साधनाव्यापकत्वं विशेषणम् । कृतकत्वेनानित्यत्वे साध्ये सावयवत्वमुपाधिर्माभूदिति साध्यव्यापकत्वं विशेषणम् । नहि कृतकमपि रूपादि सावयवम्, तथाऽऽनित्यमपि तत्र सावयवम् । असम्बद्धस्यापि स्वसम्बन्धात् सम्बन्धमापादयतीत्यतः सोऽयमुपाधिशब्देन व्यवह्रियते । वह्नेर्धूमेनाविनाभावलक्षणसम्बन्धेऽसत्यपि आर्द्रेन्धनसंयोगः स्वसम्बन्धात्तस्य तं सम्बन्धमापादयतीति सोऽयमुपाधिः । तथा चोक्तं तत्त्वरत्नाकरे—'केनचिद्यस्य सम्बन्धे योऽवच्छेदक एव हि । तस्योपाधिर्यथा वह्नेरार्द्रेधो धूमसङ्गमे ॥ श्रोत्रत्वयोगे नभसो यथा वा कर्णशष्कुली । संसारयोगे जीवस्य कर्माविद्यादि वा यथा ॥' इति । सोपाधिकतया हेतुर्व्याप्यत्वासिद्ध उच्यते ।

## रूपपञ्चकवर्णनम् ।

हेतोरनुमित्यङ्गभूते द्वे रूपे—पक्षधर्मता व्याप्तिश्चेति । यानि पक्षे

१ इदं च परमताभिप्रायेण, सिद्धान्ते सावयवस्यापि भगवद्दिव्यविग्रहस्य नित्यत्वाभ्युपगमात् । उभयसाधारण्येन तु धूमेन वह्नौ साध्ये इन्धनसंयोगस्योपाधित्वव्यावृत्तिः साधनाव्यापकत्वविशेषणस्य प्रयोजनं बोध्यम् ।

सत्त्वं सपक्षे च सत्त्वं विपक्षात् व्यावृत्तिः अबाधितविषयत्वमसत्प्रतिपक्षत्वं चेति पञ्च रूपाण्यनुमित्यङ्गानि कैश्चिदुच्यन्ते, तानि त्वनयोरेव प्रपञ्चरूपाणि । तथा--असति सपक्षेऽव्यावृत्ते च विपक्षात् व्याप्त्यसिद्धिः । असति पक्षे न पक्षधर्मता । तथा बाधिते च व्यापकबाधात् व्याप्यस्यापि बाध इति न पक्षधर्मता, ह्रदे वह्नेर्बाधे धूमस्यापि बाध इति । यदि पुनः प्रमेयत्वं हेतुस्तदा तु साधारण्याद्व्याप्तिभङ्गः, यदि पुनः पक्षासाधारणो जलादिर्हेतुस्तदा विरोधाद् व्याप्तिभङ्गो विरुद्धसाधकतया वैपरीत्यं च । सत्प्रतिपक्षे तु द्वयोः साधनयोरन्यतरस्य व्याप्तिभङ्गः पक्षधर्मताभङ्गो वा नियत इति । एतेन साधनाङ्गवैकल्यनिबन्धना साधनदोषा अप्युक्तप्रायाः । साधने पक्षेऽसत्यसिद्धिर्दोषः, सपक्षेऽसति ( पक्षमात्रवृत्तौ ) असाधारण्यम्, विपक्षेऽपि सत्यनैकान्त्यम्, विपक्षमात्रवृत्तौ विरोधः, साध्ये बाधिते बाधितविषयता, साध्यतदभावसाधकसाधनद्वयप्रयोगे च सत्प्रतिपक्षतेति । तत्र बाधसत्प्रतिपक्षयोः साक्षादनुमितिविरोधिता । अन्येषां तु कारणज्ञानविघटकत्वमिति बोध्यम् ।

## अनुमानत्रैविध्यम् ।

अन्वयव्यतिरेकि केवलान्वयि केवलव्यतिरेकीति त्रैविध्यं लिङ्गस्याक्षपादैरभ्युपगम्यते । तत्र पूर्वयोर्द्वयोर्न विवादः । तृतीये तु विवादः, पक्षमात्रवृत्तितयाऽसाधारणाख्यदुष्टसाधर्म्यात् । पक्षमात्रे सता भाव्यं केवलव्यतिरेकिणा । पक्षादन्यत्र चेत्सोऽन्यः सपक्षश्चेत्तदाऽन्वयी ॥ विपक्षश्चेदनैकान्त्यं पक्षासाधारणस्ततः ॥ उक्तं चात्मसिद्धौ--'केवलव्यतिरेकि तु साधनदशामेव नासादयति, सपक्षान्वयविरहादसाधारणवत्' इति ।

## केवलव्यतिरेकिविचारः ।

तथा हि । यथाऽसाधारणस्य साध्यान्वयादर्शनादाभासत्वं, एवं केवलव्यतिरेकिणोऽप्याभासत्वमेवोचितम् । यद्यत्र पक्ष एव साध्यान्वय इष्यते, तर्ह्यसाधारणेऽपि तथा किं न स्यात् । किञ्चानुमानाद्धेतोः साध्यान्वयग्रहः, ततश्चानुमानमित्यन्योन्याश्रयणम् । अभावव्याप्तिवैपरीत्येन भावव्याप्तेः सार्वत्रिकत्वाद्विनाऽप्यनुमानं हेतोः साध्यान्वयः शक्यावगम इति चेत्तुल्यमसाधारणेऽपि । यथा पृथिवी नित्या गन्धवत्त्वादित्यत्र नित्यत्वाभावव्यापकत्वं गन्धवत्त्वाभावस्य जलादौ गृह्यते स च पक्षाद्व्यावर्तमानः स्वव्याप्यं नित्यत्वाभावमपि व्यावर्तयतीति नित्यत्वव्याप्यता गन्धवत्त्वस्य प्राप्नोतीति । नन्वेवं साध्यविरुद्धधर्मेणानित्यत्वेनापि व्याप्तिग्रहस्य सम्भवादाभासत्वं तस्येति चेत् वस्त्वन्तरासाधारणधर्मस्यापि प्रकृतसाध्येन व्यतिरेकव्याप्तिर्ग्रहीतुं शक्यत इति केवलव्यतिरेकिणोऽप्याभासता समाना । यथा—अनुभूतिरननुभाव्या अनुभूतित्वात् यन्नैवं तन्नैवं यथा घट इत्यत्र व्यतिरेकव्याप्तिरनुभूतित्वस्य यथेष्यते एवं पटत्वादेरपि सा सुवचा, पटोऽननुभाव्यः पटत्वात् यन्नैवं तन्नैवं यथा घट इति । अनुभाव्यत्वेऽननुभूतित्वप्रसङ्ग इति तर्कानुग्रहात्पूर्वस्य सल्लिङ्गत्वमिति चेदनुभाव्यत्वे पटस्य घटवदपटत्वप्रसङ्ग इति तर्कस्यात्रापि सुवचत्वात् । आभासोऽयं तर्क इति चेत्पूर्वस्य वाऽनाभासत्वं कुतो निश्चितम् । बाधश्चोभयत्र समानः । पूर्वानुभवादेर्ज्ञानान्तरेण ग्रहणदर्शनात् ।

किञ्च—केवलव्यतिरेकिस्थलेऽनुमानात्पूर्वं साध्यं गृहीतं न वा । गृहीतं चेत्पक्षे; सिद्धसाधनम्, अन्यत्र चेत्तत्र हेतोरन्वयेऽन्वयित्वं,

अनन्वयित्वे त्वसाधारण्यम्। अथागृहीत क्वचिदपि, तर्हि साध्या प्रसिद्धि। साध्यस्याग्रहे तत्प्रतियोगिकत्वोपरक्तवेषेण व्यतिरेकस्य साधनाभावव्याप्तिश्च दुर्ग्रहा। नन्वस्त्वेव भावसाध्यके। अभाव-साध्यके तु केवलव्यतिरेकिणि साध्याभावस्य भावरूपतयाऽगृही-त्वैव साध्य व्यतिरेकव्याप्ति सुग्रहेति चेत्। मैवम्। प्रकृतसाध्य-प्रतियोगिकत्वोपरागेण व्यतिरेके गृह्यमाणाया व्याप्तेरेव प्रकृतसा-ध्यगमकतौपयिकत्वादिति।

ननु—केवलव्यतिरेकिण प्रामाण्यानङ्गीकारे लक्षणानामितरव्या वर्तकत्वादि न स्यादिति चेत्। मैवम्। अन्वयिव्यतिरेकिविधयैव तत्सम्भवात्। यथा—इय गौः सास्नादिमत्त्वात् यथा मदीया, अय महिषादिभिन्नः सास्नादिमत्त्वात् यथा सम्प्रतिपन्न, इद शरीर पार्थिव गन्धवत्त्वात् घटवत्, इद आप्यादिक न भवति गन्धव-त्त्वात् घटवत्, इत्यादिबहुलमुपलभ्यते हि। गवादिसामान्यपक्षी-कारेण प्रयोगे चाशत सिद्धसाधनम्। अवच्छेदकावच्छेदेन साध्य-सिद्धेरुद्देश्यत्वादशत सिद्धसाधन न दोषायेति चेत्। एवमपि सम्प्रतिपन्नगवाद्यन्तर्भावेनान्वयव्याप्तिरपि ग्रहीतु शक्यत एवेति न केवलव्यतिरेकिता गन्धवत्त्वादे।

स्यादेव नानाव्यक्तिलक्ष्यके लक्षणे। एकव्यक्तिलक्ष्यके कथम्। यथा सर्वजगत्कारणत्वादिरूपे ब्रह्मलक्षणे। सत्यम्। लक्ष्यासाधार-णाकारविज्ञान हि लक्षणस्य फलम्। तच्च तत्र 'यतो वा' इत्यादि-शास्त्रत एव सिद्ध्यतीति न केवलव्यतिरेकिणोऽवसरः। ब्रह्मल क्षणव्यतिरेकेणालक्ष्यभूतेषु चतुर्मुखादिषु लक्ष्यभेदेऽन्वयिना साध्य-मानेऽलक्ष्यव्यावृत्तिरपि लक्ष्यभूतस्य ब्रह्मणोऽर्थसिद्धैव, वह्निप्राप्त्यो-

न्याभावप्रतियोगिनस्तत्प्रतियोगिकान्योन्याभाववत्त्वनियमादिति । नेतरव्यावृत्तिसिद्ध्यर्थमपि केवलव्यतिरेकिण आवश्यकता समस्ति । विस्तरतः केवलव्यतिरेकिभङ्गप्रकारस्तु न्यायपरिशुद्ध्यादावन्वेष्टव्यः । उक्तं च न्यायकुलिशे 'न च सिद्धान्तिनोऽयं प्रसङ्गः । केवलव्यतिरेकिप्रामाण्यानभ्युपगमात्' । इति । केषाञ्चित्केवलव्यतिरेकिनिरूपणं तु परमतानुसारेणेति ध्येयम् ।

## पञ्चावयववर्णनम् ।

इदं चानुमानं स्वार्थपरार्थभेदेन द्विविधमिति बहवः । अत्रेदं विवेचनीयम् । न हि परस्यानुमानेन परस्यानुमितिः । परकीयन्यायप्रयोगलक्षणाद्वाक्याद्भवत्यनुमितिरिति चेत् ततः किं परस्यानुमानात्परस्यानुमितिः ? । न च वाक्यादेव साक्षादनुमितिः । वाक्यप्रयोज्यादनुमानादेव तु भवत्यनुमितिः । तस्माद्भूयोदर्शनं न्यायप्रयोगश्चेति अनुमानसामग्रीद्वैविध्यमेव तु युक्तम् ।

न्यायश्च—प्रतिज्ञाद्यवयवसमुदायः । प्रतिज्ञाहेतूदाहरणोपनयनिगमनानीति न्यायस्यावयवाः पञ्च । तत्र पक्षवचनं प्रतिज्ञा, तच्च धर्मिणमुद्दिश्य साध्यधर्मस्य विधानात्मकम्—पर्वतो वह्निमानिति । लिङ्गवचनं हेतुः, साधकत्वप्रकाशकविभक्तिसमभिव्याहृतं हेतुवचनमिति यावत्, धूमात् इति । व्याप्तिनिर्देशपूर्वकं दृष्टान्तवचनमुदाहरणम्, तच्चान्वयव्याप्तिव्यतिरेकव्याप्तिभेदात् द्विविधम्, यो यो धूमवान् सो सोऽग्निमान् यथा महानसः, यो यो निरग्निः स स निर्धूमः, यथा महाह्रदः इति । दृष्टान्तनिदर्शनेन व्याप्यतयाऽवगतस्य तेनैवाकारेण पक्षे उपसंहरणमुपनयः, व्याप्तिविशिष्टपक्षधर्मतावचनमित्येतत्, स यथा—अयं च तथा धूमवानित्यन्वयेनोपनयः,

श्च न तथा निर्धूम इति व्यतिरेकेणोपनयः। हेतुपूर्वं पक्षे साध्यो-पसंहरणं निगमनम्, यथा तस्मादयमग्निमानिति। इदं चान्वयेन। व्यतिरेकेण तु तस्मादयं न निरग्निरिति। अत्र नैयायिकाः पञ्चा-नामप्यवयवानां प्रयोक्तव्यतां मन्यन्ते, त एते पञ्चावयववादिनः। मीमांसकास्तु प्रतिज्ञाहेतूदाहरणानां त्रयाणाम्, उदाहरणोपनयनिग-मनानां वा त्रयाणामवश्यं प्रयोक्तव्यतां मन्यन्ते, त एते त्र्यवयव-वादिनः। सौगतास्तु उदाहरणोपनययोर्द्वयोरेवावश्यं प्रयोक्तव्यतां मन्यन्ते, त एते द्व्यवयववादिनः। स्थूलमध्यमसूक्ष्ममतितारतम्या-नुरोधेन पञ्चानां त्रयाणां द्वयोर्वा प्रयोक्तव्यतयाऽनियमवादिनः सिद्धान्तिनः। दृष्टश्च मृदुमध्यतीक्ष्णधियां विषये विस्तरसङ्ग्रहाभ्यां व्यवहारः। निरूपित एतावता सदनुमानभेदः।

अत्रेदं बोध्यम्। व्याप्तिपक्षधर्मताज्ञानाभ्यामेवानुमितेः सम्भवे तृतीयलिङ्गपरामर्शस्य न सर्वत्रानुमितेः प्राक्काले नियतत्वं कल्प्यम्। वह्निव्याप्यवानयमित्यादिस्थले न लिङ्गतावच्छेदकस्य विशेषणोऽ-ज्ञानेऽपि व्याप्यतावच्छेदकयत्किञ्चिद्धर्मवत्तावधारणादेवानुमितिः। तथा च पक्षधर्मताज्ञानसहकृतं व्याप्तिज्ञानमेव भवत्यनुमितिकर-णम्। फलायोगव्यवच्छेदात्। एवं प्रत्यक्षादिस्थलेऽपि तत्तदर्थस-न्निकृष्टाक्षादेरेव तत्र तत्र करणत्वं सम्भवति। तत्र व्याप्तिग्रहण-प्रकारः सामान्यलक्षणयोक्तः। सामान्यलक्षणानङ्गीकारेऽपि यो यो धूमसंस्थानः स स वह्निसंस्थानेनाविनाभूत इति संस्थानप्रकारेणा-विनाभावनिश्चयबलादेवापूर्वहेतुपिण्डदर्शनस्थलेऽपि व्याप्तिस्मृतेर्ना-नुमितेरनुपपत्तिः। पक्षधर्मताशरीरप्रविष्टा पक्षता च सन्दिग्ध-साध्यकता सिषाधयिषितसाध्यकता वा। घनगर्जितेन मेघानुमान-

स्थले च मेघध्वनिश्रुत्या स्मृतस्य मेघस्य गगने संशये सिषाधयिषा-पूर्विकाया एव व्याप्त्यादिप्रतिसन्धानादनुमित्युत्पत्तेः सम्भवात्। सिद्धिकालिकानुमितौ चाहार्यसंशयस्यैव पक्षतात्वं बोध्यम्। यद्वा सिषाधयिषायोग्यतैव सर्वत्र पक्षता। सा च बाधनिश्चयाभावरूपा। सिद्धिकालीनानुमितौ च सिषाधयिषाया विशेषहेतुत्वं कल्पनीयम्। सिषाधयिषाविरहविशिष्टसिद्ध्यभावस्यैव सर्वत्र पक्षतात्वं वाऽस्तु। तत्र पक्षत्वोपलक्षितधर्मिवृत्तिता ज्ञाताऽनुमितिकारणं पक्षता च स्वरूपसतीति विवेकः। इति।

## हेत्वाभासनिरूपणम्।

पक्षसत्त्वादिरूपपञ्चकोपेतो हि सद्धेतुः। तदन्यस्त्वसद्धेतुः हेत्वाभास इति चोच्यते। निरूपयामश्चैतत्स्वरूपादिकं सङ्क्षेपतः। स्वपक्षसाधकहेतोर्निर्दोषत्वाय प्रतिपक्षसाधनप्रतिक्षेपाय चैतदवगतिर्ह्यपेक्षिता। हेतुभिन्नत्वे सति हेतुव्यवहारविषयो हेत्वाभासः। भवति चाहेतुष्वपि हेतुव्यपदेशोऽनिरूपकाणां हेतुरूपैकदेशयोगमात्रतः। पक्षसत्त्वादिरूपान्यतमराहित्यं हेत्वाभाससामान्यलक्षणम्, निश्चितव्याप्तिपक्षधर्मतारहितत्वं वा। यथोक्तं तत्त्वरत्नाकरे—'सर्वानुमानाभासानां तल्लक्ष्मावयवक्षतिः। व्याप्यत्वपक्षधर्मत्वहानिर्वा लघुलक्षणम्॥' इति। रूपपञ्चकोपपन्नत्वरूपं यदनुमानस्य लक्ष्म तदन्यतमवैकल्यमिति पूर्वार्धस्यार्थः। व्याप्यत्वपक्षधर्मत्वहानिरित्यस्य निश्चितव्याप्तिपक्षधर्मताविरह इत्यर्थः।

समासतो द्विविधो हेत्वाभासः—अव्याप्तोऽपक्षधर्मश्चेति। असिद्धादिविभेदस्त्वस्यैव प्रपञ्चः कथासु पृथगुद्भाव्यत्वाय कल्पते। यथोक्तं न्यायपरिशुद्धौ—'अव्याप्तापक्षधर्मौ द्वौ हेत्वाभासौ'

सतः । तयोरेव प्रपञ्चेन स्यादसिद्धादिकल्पना ॥' इति । असिद्धोऽनैकान्तिको विरुद्धः कालात्ययापदिष्टः प्रकरणसम इति पञ्चधा विभागः प्रतिपादितस्तत्र । यद्यपि हेत्वाभासत्रैविध्यमुक्तं न्यायतत्त्वे—'असिद्धानैकान्तिकविरुद्धा हेत्वाभासाः' इति । इदं चोपलक्षणं कालात्ययापदिष्टप्रकरणसमयोः । अत्र पक्षादीनां स्वरूपमेवासिद्धमिति भवति प्रथममुपस्थितिरसिद्धेः । सिद्धत्वेऽपि न साधनस्यान्यतरपक्षैकान्तत्वमित्यनन्तरमनैकान्तिकस्य । अथैकान्तत्वेऽपि प्रकृतसाध्यविपरीतैकान्तं साधनमिति विरोधस्य । अथ प्रकृतसाध्यैकान्तमपि न साध्यं साधयितुमलं, धर्मिणि साध्याभावनिश्चयादिति बाधस्य । अथ धर्मिणि बाधस्यादर्शनेऽपि प्रकृतसाध्यविपरीतसाधकं लिङ्गान्तरं दृश्यत इति सत्प्रतिपक्षस्य । एवं सम्भाव्यमानदोषोपस्थितिक्रममनुसन्धायासिद्धादिविभजनक्रम आश्रितो न्यायसूत्रोक्तक्रमं परित्यज्येति विभाव्यम् ।

## असिद्धवर्णनम् ।

तत्र व्याप्तिपक्षधर्मतानिश्चयरहितोऽसिद्धः । यद्यपि व्याप्तिपक्षधर्मतयोरनिश्चयः सत्प्रतिपक्षादावपि वर्तते, अथापि तद्भिन्नत्वविशेषितं व्याप्तिपक्षधर्मतानिश्चयराहित्यमसिद्धलक्षणं बोध्यम् । व्याप्त्यादेरज्ञानकाले सद्धेतोरप्यसिद्धत्वात् व्याप्तिपक्षधर्मताराहित्यं लक्षणतया नाश्रितम् । व्याप्त्यादेरज्ञानात्सन्देहाद्विपरीतनिश्चयाद्वाऽसिद्धो भवति । आद्याऽज्ञानासिद्धिर्द्वितीया सन्दिग्धासिद्धिः । तत्र व्याप्यत्वासिद्धः साध्याप्रसिद्धेस्तद्विशेषणाप्रसिद्धेर्व्योप्यसिद्धेर्वा सम्भवति । पक्षधर्मत्वासिद्ध आश्रयासिद्धेस्तद्विशेषणासिद्धेः पक्षत्वासिद्धेः स्वरूपासिद्धेर्भागासिद्धेर्वा । हेत्वप्रसिद्धेस्तद्विशेषणाप्रसिद्धे-

श्चोभयासिद्धसम्भवः । हेतौ हि व्याप्तिपक्षधर्मतयोः सिद्धिरनुमित्यङ्गम् । न हि तस्यैवासिद्धौ तद्वृत्तित्वविशिष्टयोस्तयोः सिद्धिरिति । न्यायपरिशुद्धौ असिद्धभेदाः क्रोडीकृताः—'पक्षतद्धर्मभागानां साध्यतद्धर्मयोस्तथा । हेतुतद्व्याप्तिधर्माणां स्वरूपेणाप्रसिद्धितः ॥ हेत्वंशयोरिहासिद्धेर्वा वैयधिकरण्यतः ॥' इत्यादिना ।

साध्याप्रसिद्धिः—पर्वतः काञ्चनमयवह्निमानित्यादौ । नहि काञ्चनमयवह्निः प्रसिद्धः । तत्रैव काञ्चनमयधूमहेतौ साधनाप्रसिद्धिरनुसन्धेया । साध्यविशेषणाप्रसिद्धिः—इदं धनुः शशशृङ्गजन्यं सुन्दरत्वादित्यादौ । अत्र हि जन्यत्वरूपसाध्यविशेषणं शशशृङ्गमप्रसिद्धम् । अत्रैव साध्यसाधनयोः साधनसाध्यभावे हेतुविशेषणाप्रसिद्धिर्बोध्या । व्याप्त्यसिद्धिः क्वचिद्व्याप्तिग्राहकप्रमाणाभावात् । यथा—विमतं क्षणिकं सत्त्वात् । नह्यत्र सत्त्वक्षणिकत्वयोर्व्याप्तिग्राहकं प्रमाणं सम्भवति, तद्धि भूयः सहचारदर्शनम्, तच्च स्थिरत्वे घटत इति । क्वचिदुपाधिसद्भावात् । यथा—भगवत्सेवा दुःखहेतुः सेवात्वात् राजसेवावत् । अत्र पापारब्धत्वमुपाधिः । नहि भगवदनुभवजनितप्रीत्या किञ्चिदकृत्वा स्थातुमशक्नुवतः प्रीतिकारिता सेवा दुःखाय कल्पेत, किन्त्वमन्दानन्दायैव स्यादिति । अत एव श्रीकृष्णसेवा मुक्तिरिति भगवतैव प्रतिपादितं शिक्षापत्र्याम्—'मतं विशिष्टाद्वैतं मे गोलोको धाम चेप्सितम् । तत्र ब्रह्मात्मना कृष्णसेवा मुक्तिश्च गम्यताम् ॥' इति । सर्वेषु सपक्षेषु साध्येन दुःखहेतुत्वेन सहचरितं दृष्टं पापारब्धत्वम् । तेन विना पक्षे स्थितं सेवात्वं सन्दिग्धव्याप्तिकं भवति किमस्य स्वाभाविकः साध्यसम्बन्ध उत परप्रयुक्त इति । अतः सोपाधिकः सन्दि-

ग्धव्याप्तिक इति केचित्। यथाऽनूदित न्यायपरिशुद्धौ—'साध्या-दन्येन धर्मेण सपक्षेष्वनुयायिना। विना पक्षे स्थितो धर्म सन्दिग्धव्याप्तिको मत ॥' इति। सर्वसपक्षानुगतस्यैव साध्य-प्रयोजकत्वे सम्भवति न्यूनवृत्तिरप्रयोजक । अत एव सोपाधिको हेतुरप्रयोजक इत्यप्युच्यते। तदुक्त—'समासमाविनाभूतावेकत्र स्तो यदा तदा। समेन यदि नो व्याप्तस्तयोर्हीनोऽप्रयोजक ॥' इति। साध्यसमव्याप्तविषमव्याप्तयोर्हेत्वो समव्याप्ताव्याप्यो विष-मव्याप्तो हेतुरप्रयोजक इत्यर्थ । यथा—अग्नीषोमीयहिंसा अधर्म-हेतु हिंसात्वात् क्रतुबाह्यहिंसावत् इत्यत्राधर्मसाधकत्वेन साध्येन समव्याप्त यन्निषिद्धत्व तदव्याप्य हिंसात्वमप्रयोजकम्। अधर्म-साधनत्वाभावेऽपि विहितहिंसाया परमदयाविष्टहृदयपारमैका-न्तिकजनानधिकारिकतामभिप्रेत्य तु भगवाननुशास्ति शिक्षापत्र्या—'देवतापितृयागार्थमप्यजादेश्च हिंसनम्। न कर्तव्यमहिंसैव धर्म मोक्षोऽस्ति यन्महान् ॥' इति। अहिंसैव महान् धर्म—पारमैकान्तिकधर्म इति भाव । विस्तरस्तु तद्भाष्यादावनुसन्धेयः। अप्रयोजकस्थले च विपक्षे बाधकविरहात् व्याप्यत्वासिद्धि । तदुक्त न्यायपरिशुद्धौ—'विपक्षे नहि निर्बाधे व्याप्ति क्वापि प्रसि-द्ध्यति।' इति। नीलधूमादौ व्यर्थविशेषणे व्याप्यत्वासिद्धिं वदन्ति नैयायिका । तन्न युक्तम्। नहि धूमे वर्तमानस्याविनाभावस्य नीलत्वविशेषिते विरहः सुवचः। व्यर्थाभिधानेन वादी तु निगृह्ये-तार्थान्तरेण, न पुनर्हेतोराभासतेति।

आश्रयासिद्धि.—मणिमयगिरिर्वह्निमान् धूमादित्यादौ। आश्रय-विशेषणासिद्धि —मणिमयगिरिमान् देश सुन्दरो विलक्षणदेशत्वा-

दियादौ। पक्षताया असिद्धिः सिद्धसाधनस्थले। रूपपञ्चकोपपन्नो हि हेतुर्गमकः। धर्मिणि साध्यनिश्चये तु तस्य सपक्षान्तर्भावान्न पक्षतेति न रूपपञ्चकसम्पत्तिः। एवं बाधस्थले धर्मिणो विपक्षान्तर्भावान्न पक्षतेति हेतोः पक्षधर्मतावैकल्यं स्फुटम्। यादृशधर्मिवृत्तित्वं हेतोर्गमकत्वायापेक्षितं न तत्सिद्धिकाले साधननिश्चयकाले वा। एतेनासङ्कीर्णबाधस्थले हेत्वाभाससामान्यलक्षणस्याव्याप्तिः। तत्र हेतौ व्याप्तिपक्षधर्मतयोरनपायादित्यपि समाहितम्। नन्वेवं सिद्धसाधनवत् बाधितस्यापि असिद्ध एवान्तर्भावोऽस्तु, किं बाधितहेतोः पृथग्गणनया। सत्यम्। तत्रासिद्धिसम्पादकस्य बाधस्यैव नियमतो दोषत्वस्य सम्भवात् बाधितः पृथगुपदिष्टः। सिद्धसाधनस्य तु न नियमेन दोषरूपता, सत्यामपि सिद्धौ सिषाधयिषयाऽनुमानोदयात्। अतः सिद्धसाधनस्थले पक्षधर्मत्वासिद्धिरेव दूषणमभ्युपगम्यत इति सूक्ष्मेक्षिकयाऽऽलोचनीयम्। पक्षमात्रावृत्तिः स्वरूपासिद्धः, अयमेव व्यधिकरणासिद्ध उच्यते। यथा—जीवः प्रमेयः चाक्षुषत्वात्। नह्यत्र पक्षे जीवे हेतुरस्ति। पक्षैकदेशावृत्तिर्भागासिद्धः। यथा—आत्मानो दुःखवन्तः संसारित्वात्। नहि संसारित्वं यावत्पक्षवृत्ति। नित्यमुक्तादौ पक्षैकदेशभूतेऽवृत्तेः। इति।

## व्यभिचारिनिरूपणम्।

अनैकान्तिकः सव्यभिचारः। व्यभिचारो नाम स्वस्थानातिक्रमः। पक्षसपक्षमात्रविषयस्य हेतोरन्वयस्य विपक्षगामिता व्यभिचारः, सपक्षैकदेशमात्रविषयस्य हेतोर्व्यतिरेकस्य सपक्षव्याप्तिश्च। आद्यः साधारणे द्वितीयोऽसाधारणे। तथाहि—पक्षसपक्षविपक्ष-

वृत्ति साधारण । पक्षत्रयव्यापक, पक्षत्रयैकदेशवृत्ति, पक्ष-व्यापक सपक्षविपक्षैकदेशवृत्ति, सपक्षव्यापक पक्षविपक्षैक-देशवृत्ति, विपक्षव्यापक पक्षसपक्षैकदेशवृत्ति, पक्षसपक्ष-व्यापको विपक्षैकदेशवृत्ति, सपक्षविपक्षव्यापक पक्षैकदेशवृत्ति, पक्षविपक्षव्यापक सपक्षैकदेशवृत्तिरिति स भवत्यष्टधा । यथोक्त न्यायपरिशुद्धौ—'त्रयाणामपि पक्षाणा व्यापकोऽव्यापकस्तथा । एकद्विव्यापकाः षट् चेत्येव साधारणोऽष्टधा ॥' इति ।

पक्षत्रयव्यापको यथा—क्षित्यादिक सकर्तृक प्रमेयत्वात् घटवत् । हेतु प्रमेयत्व यावत्पक्षसपक्षविपक्षवृत्ति, केवलान्वयित्वात् । पक्षत्रयैकदेशवृत्तिर्यथा—क्षित्यादिक सकर्तृक परिमितपरिमाणत्वात् घटवत् । अत्र हेतु पक्षसपक्षैकदेशयोर्गुणकर्मणोर्विपक्षैकदेशे चेश्वरादौ नास्ति । यस्य गुणादे कार्यस्य सकर्तृकत्व न सिद्ध तस्य सर्वस्य पक्षान्तर्भावोऽत्र विवक्षित । परमाण्वाद्यन्तर्भावेण विपक्ष वृत्तित्व बोध्यम् । पक्षमात्रव्यापको यथा—पर्वता विनाशिन ऐन्द्रिय-कत्वात् घटवत् । ऐन्द्रियिकत्व सपक्षैकदेशे द्व्यणुकादौ विपक्षे चेश्वरादौ नास्ति । विपक्षवृत्तित्व घटत्वादिसामान्यान्तर्भावेण । (इद च वैशेषिकमतेन ) सपक्षमात्रव्यापको यथा—कालजीवौ अनित्यौ अचे-तनत्वात् पृथिवीवत् । अत्र पक्षैकदेशे जीवे विपक्षे चेश्वरे हेतुर्नास्ति । विपक्षमात्रव्यापको यथा—कालजीवौ अनित्यौ कालघटव्यतिरिक्त-त्वात् पटवत् । पक्षैकदेशे काले सपक्षे च घटे हेतुर्नास्ति । पक्षसप-क्षमात्रव्यापको यथा—त्रसरेणु सावयवो द्रव्यत्वात् घटवत् । अत्र विपक्षे रूपादौ हेतुर्नास्ति । सपक्षविपक्षमात्रव्यापको यथा—घट-

---

१ सन्दिग्धसाध्यवान् पक्ष । निश्चितसाध्यवान् सपक्ष । निश्चितसाध्याभाव वान् विपक्षः । तदिद पक्षत्रयम् ।

जीवौ अनित्यौ घटव्यतिरिक्तत्वात् पटवत् । पक्षैकदेशे घटे हेतुर्नास्ति । यद्यपि पक्षैकदेशमात्रवर्तिनां भागासिद्धिरस्ति, अथापि व्यभिचारादनैकान्तिकत्वमपि । उपधेयसङ्करेऽप्युपाधेरसङ्कर इति न्यायात् । पक्षविपक्षमात्रव्यापको यथा—जीवो नित्यः कालव्यतिरिक्तत्वात् ईश्वरवत् । अत्र सपक्षस्य कालस्य न कालव्यतिरिक्तत्वम् ।

पक्षमात्रवृत्तिरसाधारणः । स च सपक्षविरहितो विपक्षविरहितः सपक्षविपक्षविरहितः सपक्षविपक्षवानिति चतुर्धा । चतुर्विधस्यास्य पक्षव्यापकत्वपक्षैकदेशवर्तित्वाभ्यां भवत्याष्टविध्यम् । तथा चोक्तं न्यायपरिशुद्धौ—'निःसपक्षो निर्विपक्षो द्वयं निर्विपर्ययं तथा । पक्षव्याप्तितदव्याप्त्योरष्टाऽसाधारणा मताः ॥' इति । तत्र सपक्षशून्यः केवलव्यतिरेकी । यथा—संवित् निर्विशेषा संवित्त्वात् । न ह्यत्र साध्यसाधनयोः सम्बन्धः सुग्रहः । न च सपक्षे सति तद्व्यावृत्तस्यैवासाधारणत्वम्, न त्वसत्सपक्षस्येति वाच्यम् । असत्सपक्षस्यापि दुष्टतायाः क्वचिद्दृष्टव्यत्वात् । यथा—सर्वं नित्यं सत्त्वात् । नन्वनुपसंहारीदं हेत्वाभासान्तरम् । मैवम् । साध्यसाधनयोरन्वयोपसंहारस्थलाभाववत्त एवानुपसंहारिशब्दार्थतयाऽसाधारण्यस्यैव तत्र सम्भवे हेत्वाभासान्तरकल्पनाया अनवसरात् । यथा सपक्षे सत्यपि ततो हेतोर्व्यावृत्त्या न साध्यसाधनसम्बन्धग्रहसम्भवः, एवं सपक्षाभावेऽपि समानं सम्बन्धाग्रहणं अनुपसंहारिकेवलव्यतिरेकिणोरित्यसाधारणान्तर्भाव एव हि तयोरुचितः ॥ ननु केवलव्यतिरेकिणि विशेषव्यापकासंवित्त्वनिवृत्त्या विशेषाभावसाधनं सम्भवत्यन्वयव्याप्त्यग्रहेऽपि । मैवम् । आभाससमानयोगक्षेमत्वादस्य । घटेऽपि पक्षे विशेषव्यापकाघटत्वव्यावृत्त्या

विशेषाभावसाधनं हि तुल्ययुक्त्या प्रसज्यते । अप्रयोजकत्वादस्या-साधकत्वमिति चेत्तुल्यं प्रकृतेऽपि । सविशेषत्वग्राहिप्रत्यक्षबाधश्च समानः । सविशेषोऽपि प्रत्यक्षत्वचाक्षुषत्वादिविशेषाणामनुभूयमानत्वात् । किञ्च विशेषसामान्यशून्यत्वसाधने व्याहतिश्च । हेतुसाध्यलक्षणधर्मान्वयस्यावश्यम्भावात् । किञ्च—केवलव्यतिरेकिणि साध्यं चेत्प्रसिद्धं यत्र कुत्रचित्, तत्र हेतोरन्वये केवलव्यतिरेकित्वभङ्गः । अनन्वये च सपक्षव्यावृत्तत्वादसाधारण्यं भवताऽप्येष्टव्यमेव । साध्यं चेदप्रसिद्धं तदप्रसिद्धताऽपि सम्भिधत्त इति । विपक्षरहितोऽसाधारणस्तत्र, सर्वं कार्यं पक्षीकृत्य यत्र प्रयुज्यते—विमतं नित्यं कादाचित्कत्वात् इति । सर्वस्य कार्यस्य पक्षीकारान्न विपक्षः कोऽपि । पक्षमात्रवृत्ति च कादाचित्कत्वं भवत्यसाधारणम् । सपक्षविपक्षरहितो यथा—सर्वमनित्यं सत्त्वात् । अत्र सर्वस्यापि पक्षत्वान्न सपक्षो नापि विपक्षः । पक्षमात्रवृत्ति च सत्त्वम् । सपक्षविपक्षवान् यथा—आत्मा अनित्यः चेतनत्वात् । अस्यत्र सपक्षो घटादिर्विपक्षश्च कालादिः । तद्व्यावृत्तं च चेतनत्वं पक्षमात्रवृत्तीति भवत्यसाधारणम् । सर्वेऽप्येते पक्षव्यापका असाधारणाः । पक्षैकदेशवर्तिनस्तु स्वयमूह्याः ।

## विरुद्धविवेचनम् ।

साध्यविपरीतव्याप्तो विरुद्धः । अयं च पक्षव्यापको विपक्षव्यापक उभयव्यापक उभयैकदेशवृत्तिरिति चतुर्धा भवति । सपक्षसद्भावासद्भावाभ्यामष्टविधमत्राप्यनुसन्धेयम् । यथोक्तं न्यायपरिशुद्धौ—'सपक्षे सत्यसति च पृथक्पक्षविपक्षयोः । व्याप्त्यव्याप्त्योर्द्वयोश्चेति विरुद्धोऽप्यष्टधा मतः ॥' इति । तत्र पक्ष-

व्यापको विपक्षैकदेशवृत्तिर्यथा—जीवोऽनित्यश्चेतनत्वात् । अनित्यत्वविपरीतेन नित्यत्वेन व्याप्तं चेतनत्वमिति भवति विरुद्धम् । यावत्सु जीवेषु पक्षभूतेषु विपक्षैकदेशे चेश्वरे वर्तत इदम्, न विपक्षे कालादौ । विपक्षव्यापकः पक्षैकदेशवृत्तिर्यथा—पृथिव्यात्मानौ नित्यौ कृतकत्वात् । नित्यत्वविपरीतव्याप्तं कृतकत्वं पक्षैकदेश आत्मनि न वर्तते । पक्षविपक्षव्यापको यथा—नित्यः शब्दः कृतकत्वात् । कृतकत्वं पक्षभूते शब्दे विपक्षेषु च घटादिषु सर्वत्र वर्तत इति । उभयाव्यापको यथा—पृथिवीजीवौ अनित्यौ चेतनत्वात् । अनित्यत्वाभावव्याप्तं चेतनत्वं भवति विरुद्धम् । इदं च पक्षैकदेशे जीवे विपक्षैकदेशे चेश्वरेऽस्ति, न तु पृथिव्यां कालादौ वेति । अत्र सर्वत्र सपक्षोऽस्ति । सपक्षरहितास्तु विरुद्धभेदा ऊह्याः । पक्षमात्रावृत्तिरपि विरुद्धभेदोऽस्ति । यथा—आत्मा नित्यः कृतकत्वात् । अयं च हेतुर्विपक्षव्यापको न पक्षभूतेष्वात्मस्वस्ति । पक्षमात्रावृत्तिर्विपक्षैकदेशवृत्तिरपि भवति । यथा—आत्मा नित्यो जन्यपरिमाणवत्त्वात् । रूपादौ विपक्षे न हेतुरिति । अत्र सपक्षोऽस्ति । एवं सपक्षाभावेऽप्युदाहरणमन्वेष्टव्यम् ।

## बाधितवर्णनम्

कालात्ययापदिष्टः प्रबलप्रमाणबाधितसाध्यकः । हेतुप्रयोगयोग्यस्य धर्मिणि साध्यसन्देहकालस्यात्ययेऽपदिष्टः प्रयुक्तो हेतुः कालात्ययापदिष्टः । साध्यविपरीतनिर्णयाद्धि धर्मिणि न साध्यसन्देहस्यावसरः । सिद्धसाधनस्थले तु नैकान्ततः कालात्ययापदेशः । सत्यामपि सिद्धौ सिषाधयिषया हेतुप्रयोगस्य सम्भवात् । सति तु बाधनिर्णये न सिषाधयिषयाऽप्यनुमानस्य प्रवृत्तिः । आहार्यपरोक्षा-

सिद्धेरिति विवेकः । वस्तुतस्तु व्युत्पत्तिनिमित्तमात्रमिदम् । प्रबल-प्रमाणबाधितसाध्यकत्वमेव तु व्यवहारनिमित्तं बोध्यम् ।

अयं च प्रत्यक्षबाधितोऽनुमानबाधित आगमबाधितः प्रत्यक्षा-नुमानाभ्यां बाधितोऽनुमानशब्दाभ्यां बाधितः प्रत्यक्षशब्दाभ्यां बाधितः प्रत्यक्षानुमानशब्दैर्बाधित इति साप्तविध्यं भजते । यथोक्तं न्यायपरिशुद्धौ—'कालात्ययापदिष्टस्तु बलवन्मानबाधितः । कालातीतोऽतीतकालो बाधितश्च स उच्यते ॥ एकैकद्वित्रि-बाधेन सप्तधा स विभागवान् ।' इति । तत्र प्रत्यक्षबाधितो यथा—वह्निरनुष्णः पदार्थत्वात् । अत्र वह्नेरुष्णत्वं प्रत्यक्षेणैव गृह्यते । नन्वेवं ज्वालैक्यग्राहिप्रत्यक्षबाध्यत्वं ज्वालाभेदानुमानस्य स्यात्, प्रत्यक्षस्यानुमानबाधकत्वात् । नैवम् । न वयमेकान्ततोऽनुमानस्य बाध्यत्वं प्रत्यक्षस्य बाधकत्वं च ब्रूमः । किन्त्वनन्यथासिद्धं बाध-कमितरद्बाध्यमिति । तत्र हि ज्वालैक्यप्रत्यक्षं सादृश्यमूलतया-ऽन्यथासिद्धम् । निर्वापितपुनरारोपितदीपादौ तथादृष्टेः । भेदसा-धिकायां वर्तिकावयवविशेषतैलसंयोगादिलक्षणदीपसामग्र्यनुवृत्तेर्नै-वमन्यथासिद्धिः सम्भवति । अतो भिन्नसामग्रीजन्यत्वलिङ्गकं ज्वालाभेदानुमानं बाधकम् । एवमग्न्युष्णताग्राहिप्रत्यक्षस्यापि नान्य-थासिद्धिः सम्भाव्यते । अग्नेरन्यस्य स्वत उष्णस्पर्शस्यानुपलब्धेः । येन तत्संसर्गौपाधिकताऽग्न्युष्णतायाः शक्यते निरूपयितुम् । अत-स्तत्र प्रत्यक्षं बाधकमिति स्थितम् ।

अनुमानबाधितो यथा—प्रथमाद्यास्तिथयः सम्भवद्दुसूर्यो-परागाः तिथित्वात्पर्ववत् इति । अत्र पर्वो तनियतभावित्वग्राहिणा गणितानुमानेन बाधितताऽवसेया । शास्त्रबाधितो यथा—भगव-

द्विग्रहादिरुत्पत्तिविलयवान् सावयवत्वादस्मद्देहवत्। अस्य भगवद्विग्रहादेर्नित्यत्वग्राहिभिः 'नित्यं नित्याकृतिधरम्' 'नित्याऽलिङ्गा स्वभावसंसिद्धिः' 'दिव्यं स्थानमजरं चाप्रमेयम्' 'स्थानमेतन्महाराज ध्रुवमक्षरमव्ययम्' इत्यादिभिः शास्त्रैरबाधितैर्बाधः। नहि शास्त्रमन्तरा पक्षसिद्धिः। न चासिद्धे पक्षे हेतोः साधकत्वम्। धर्मिग्राहकप्रमाणसमानयोगक्षेमाणि चेमानि वचनानीत्येतैरनुमानबाधो युक्त एव।

प्रमाणत्रयेण तत्र बाधो यत्र घटभिन्नं सर्वं पक्षीकृत्योच्यते विप्रतिपन्नं सर्वं दण्डाधीनोत्पत्तिविलयं वस्तुत्वात्सम्प्रतिपन्नघटवत् इति। अत्र सर्वान्तर्गते पटादौ प्रत्यक्षबाधः। कालादावागमबाधः। तत्तत्प्रमाणविरुद्धानेकसाध्यस्य सह साधने त्रिभिरपि बाधः सम्भवति। यथा—घटो नित्यः स्वयंप्रकाशः स्वनिष्ठश्च वस्तुत्वादीश्वरवत्। अत्र नित्यत्वे प्रत्यक्षबाधः। स्वयंप्रकाशत्वेऽनुमानबाधः। चाक्षुषत्वादिनाऽस्वयंप्रकाशताया अनुमानात्। स्वनिष्ठत्वे च शास्त्रबाधः। सर्वस्य परमात्मशरीरतायाः शास्त्रेषूपदिष्टत्वादिति।

## सत्प्रतिपक्षप्रतिपादनम्।

प्रकरणसमः सत्प्रतिपक्षः तुल्यप्रमाणतयाऽभिमतेन प्रतिरुद्धकार्यकः। यथा—वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वात् घटवदित्यस्य वायुरप्रत्यक्षो नीरूपत्वात् व्योमवदित्यनेन सत्प्रतिपक्षितता। एकत्र धर्मिणि विरुद्धभावाभावव्याप्तलिङ्गदर्शने हि भवत्युभयत्रापि व्याप्तिपक्षधर्मत्वयोः सन्देहः। प्रकरणं पक्षः, स यथा साध्यवत्तया सन्दिग्धः, एवं तत्साधकतया प्रयुक्तो हेतुरपि व्याप्तिपक्षधर्म-

तावत्त्वेन सन्दिग्धो विरुद्धलिङ्गदर्शनादिति भवति प्रकरणसम-संज्ञः सत्प्रतिपक्षः। तत्राऽऽभासेन मानस्य, मानेनाऽऽभासस्य, आभासेनाऽऽभासस्येति त्रिधा भवति प्रतिरोधः। तथा चोक्तं न्यायपरिशुद्धौ—'मानमाभाससंरुद्धं मानरुद्धस्तथेतरः। आभा-सरुद्ध आभासः प्रतिरुद्धस्त्रिधा मतः॥' इति। वस्तुत आभा-सोऽप्याभासत्वाज्ञानदशायां समबलतयाऽभिमतोऽविदिताधिक-बलस्य मानस्य प्रतिरोधको भवति। एतदप्युक्तं तत्रैव—'अतुल्यं तुल्यमपि वा यं तुल्यमभिमन्यते। तेन यः प्रतिरुद्धयेत तमाहुः प्रक्रियासमम्॥' इति। आभासेन मानस्य प्रतिरोधो यथा—देवदत्तात्मा यज्ञदत्तात्मनो भिन्नः तदनुभवजन्यस्मृतिरहि-तत्वात् घटवत् इत्यस्य अयं तस्मादभिन्नः आत्मत्वात् तद्वदेव इत्याभासेन प्रतिरोधः। अत्रैव द्वितीयस्य प्रथमेन प्रतिरोधो माने-नाभासस्य प्रतिरोधे समुदाहर्तव्यः। आभासेनाऽऽभासस्य प्रति-रोधो यथा—शब्दो नित्यः श्रावणत्वात् शब्दत्ववत् इत्यस्य अनित्यः शब्दः प्रत्यक्षत्वात् घटवत् इत्यतः।

मानेन तु मानस्य प्रतिरोधो न भवति। तयोरभिन्नविषयत्वेऽ-स्यन्तभिन्नविषयत्वे वाऽविरोधात्। विरुद्धभावाभावग्राहित्वे त्वन्य-तरस्यामानत्वध्रौव्यात्। 'अतिरात्रे षोडशिनं गृह्णाति' 'नाति-रात्रे षोडशिनं गृह्णाति' इत्यादौ कथम्? । तत्रापि तात्पर्यविष-यीभूतार्थेऽविरोध एव। प्रयोगभेदविषयत्वाद्विधिनिषेधयोः। प्रयो-गभेदे चाश्रीयमाणे व्रीहियवद्विकल्पेनोभयोरप्यनुष्ठानं सेत्स्यति। एवमन्यत्राप्यापाततो विरुद्धार्थतया प्रतीयमानानां वैदिकवाक्या-नामविरुद्धेऽर्थान्तरे तात्पर्यान्मानत्वमनपेतमिति यावत्।

प्रतिरोधोऽयं हेतोर्हेत्वन्तरेणैवेति नियमो नास्ति । प्रमाणान्तरेऽपि बलाबलाग्रहदशायां परस्परप्रतिरोधोपपत्तेः । यथा— 'ब्राह्मणः सुरां न पिबेत्' इति श्रौतस्य वाक्यस्य सुरायाः पातव्यत्वपरात्कापालिकादिबाह्यागमवाक्यात्प्रतिरोधः । वस्तुतो यज्ञीयस्य देवतानिवेदितस्यापि मद्यादेर्भक्षणं मद्यादिरसास्वादलम्पटताप्रसञ्जकत्वेन निषिध्यते ऐकान्तिकभक्तान्प्रति भगवता शिक्षापत्र्यां 'न भक्ष्यं सर्वथा मांसं यज्ञशिष्टमपि क्वचित् । न पेयं च सुरामद्यमपि देवनिवेदितम् ॥' इति ध्येयम् । आर्हतस्य मोक्षहेतुतया केशोल्लुञ्छनकर्तव्यत्वोपदेशस्य प्रतिरोधश्च तदकर्तव्यत्वपरादयादिमोक्षोपायत्वप्रतिपादकाद्बौद्धवाक्यात् ।

एवमनुमानाभासा निरूपिता नाम । त इमे कथासु स्वप्रयोक्तुर्निग्रहं प्रयोजयन्तीति न्यायसूत्रे निग्रहस्थानेष्वेतेषां परिगणनमक्षपादस्य युक्तमेव । परन्त्वेवं प्रत्यक्षाद्याभासानामपि प्रयोक्तुर्निग्रहप्रयोजकताया अविशिष्टत्वात्तेषामपि निग्रहस्थाने परिगणनं न्याय्यम् । अत एव प्रमाणाभासत्वेनैषां सर्वेषां निग्रहस्थानेऽन्तर्भावो न्यायपरिशुद्धौ वर्णितः ।

## कथानिरूपणम् ।

प्रसङ्गादत्र कथास्वरूपादि वर्णयामः । विचारविषयगोचरो वादिप्रतिवादिनोर्वाक्यसन्ततिविशेषः कथा । सा द्विविधा— वीतरागकथा विजिगीषुकथा चेति । आद्या वादकथा तत्त्वनिर्णयार्था । द्वितीयाऽपि द्विविधा जल्पवितण्डाभेदात् । 'वादजल्पवितण्डाभिः' इत्याद्यागमसम्प्रतिपन्नं च कथात्रयम् । श्रीभाष्यकारैरपि कथात्रयमभ्युपगतम् । 'वादः प्रवदतामहम्' इति गीता-

श्लोकव्याख्याने 'जल्पवितण्डादि कुर्वतां तत्त्वनिर्णयाय प्रवृत्तो वादो यः सोऽहम्' इति भाषितत्वात्। कथात्रयस्य लक्षणमुक्तं न्यायतत्त्वे श्रीमन्नाथमुनिभिः—'प्रमाणतर्काभिमानास्पदसाधननिश्चितार्थगोचरो व्यवहारो वादः, स्वपक्षप्रामाण्यपरपक्षाप्रामाण्यनिश्चयार्थो व्यवहारो जल्पः, प्रतिपक्षाप्रामाण्यमात्रनिश्चयार्थो व्यवहारो वितण्डा' इति। प्रामाणिकत्वेनाभिमतैरेव प्रमाणतर्कैः साधनोपालम्भौ वादे। इतरयोऽस्तु दुष्टत्वेन ज्ञातैरपि। तत्रोभयपक्षस्थापनावती कथा जल्पः, एकतरपक्षमात्रस्थापनावती वितण्डेति विवेकः। स्वपक्षस्थापनपरपक्षदूषणात्मिकायाः कथायाश्चत्वार्यङ्गानि—सभ्यसमापतिसंवरणं, वादिप्रतिवादिनियमः, कथाविशेषव्यवस्था, निरूप्यनिर्णय इति। यत्र नानासिद्धान्तसाधारणोऽर्थो विचारविषयस्तत्र सिद्धान्तविशेषनियमोऽप्यपेक्षितः। अन्यथा हि व्यवहारसाङ्कर्यं स्यात्, कथाया अपर्यवसानं च। तदेवमङ्गेषु चतुर्षु पञ्चसु वा सिद्धेष्ववहितेषु सभ्यप्रतिवादिषु वादिना स्वसाध्यमुद्दिश्याभिमतस्य प्रमाणविशेषस्योपन्यासः करणीयः। तत्र प्रतिवाद्युद्भावितो दोषश्च परिहरणीयः। विपक्षे बाधकाभावे च्यापादिते तर्को वाच्यः। प्रतिवादिना तत्तदनुभाषणपूर्वकं तत्र तत्र दूषणं वाच्यम्। वादजल्पयोः स्वपक्षश्च स्थाप्यः। अनन्तरं वादिना प्रतिवाद्युक्तानुवादपूर्वकं स्वपक्षे दोषाणामुद्धारः करणीयः परकीयस्थापने च दूषणं वाच्यम्, अनन्तरं प्रतिवादिना, इत्येवं परस्परवाक्यानुवादप्रतिक्षेपाभ्यामुक्तिप्रत्युक्तिरूपो यो व्यवहारो वादिप्रतिवादिनोर्भवति सैव कथा। एवंविधे च व्यवहारे निग्रहस्थानानि यथायथमाविर्भवन्ति। यस्यां कक्ष्यायां यन्निग्रहस्थानं यस्य भवति तदनन्तरकक्ष्यायामितरेण तस्योद्भावनं

कर्तव्यम् । तत्र वादकथा तत्त्वनिर्णयपर्यन्ता वा स्यादशक्तिपर्यन्ता वा । विजिगीषुकथा च निग्रहस्थानपर्यन्ता । तदुक्तं प्रज्ञापरित्राणे— 'निग्रहस्थानपर्यन्ता विजिगीषुकथा मता । तत्त्वनिर्णयपर्यन्तो वादः स्याच्च पुनः पुनः ॥' इति । उक्तं च न्यायपरिशुद्धौ कथासामान्यपर्यवसाने निदानं 'हेत्वाभासापसिद्धान्ताननुयोज्यानुयुक्तयः । दृश्यन्ते यत्र वा तत्र वादोऽवसितवान्भवेत् ॥' इति ।

## निग्रहस्थाननिरूपणम् ।

तत्त्वाप्रतिपत्तिसूचकं वक्तुरपजयप्रयोजकं निग्रहस्थानम् । तथा च न्यायसूत्रं 'अप्रतिपत्तिर्विप्रतिपत्तिश्च निग्रहस्थानम्' इति । अज्ञानेऽन्यथाज्ञानेऽपि च समाना तत्त्वाप्रतिपत्तिः । एवं च किञ्चिदप्रतिपत्तिसूचकं किञ्चिदन्यथाप्रतिपत्तिसूचकं चेति द्वैराश्यं निग्रहस्थानानाम् । एकविंशतिधा भवन्तीमानि—उक्तहानिः, उक्तविशेषणं, उक्तापलापः, उक्तविरोधः, अपसिद्धान्तः, अवाचकं, अनन्वितं, अप्राप्तकालं, अविज्ञातार्थं, अर्थान्तरं, न्यूनं, अधिकं, पुनरुक्तं, अननुभाषणं, अज्ञानं, अप्रतिभा, विक्षेपः, मतानुज्ञा, पर्यनुयोज्योपेक्षणं, निरनुयोज्यानुयोगः, प्रमाणाभासाश्चेति ।

लक्षणानि चैतेषां संगृहीतानि प्राचीनैराचार्यैः सुखग्रहणाय प्रदर्श्यन्ते—(१) कथायां स्वोक्तपक्षाध्यक्षादावन्येन दूषिते । स्वेनैव तत्परित्याग उक्तहानिरितीष्यते ॥' यथा—नित्यः शब्द इति साङ्ख्येन प्रतिज्ञातेऽपसिद्धान्तेन दूषिते परेण त्यज्यत इयं प्रतिज्ञा अनित्योऽस्तु शब्द इति । एवं हेत्वादिहानिरूह्या । (२) 'अविशेषितपूर्वोक्तिदूषणे तद्विशेषणे । तेनैव दत्तेऽभिज्ञास्तत्प्राहुरुक्त-

विशेषणम् ॥'। यथा—अनित्यः शब्दः प्रत्यक्षत्वादित्युक्ते नैयायिकेन सामान्यादावनैकान्त्येन दूषिते अस्तु तर्हि सामान्यवत्त्वे सति अस्मदादिलौकिकप्रत्यक्षत्वादिति । एवं प्रक्षविशेषणादिकमपि बोध्यम् । (३) 'स्वयकृतस्य सम्यादिविदितस्यान्यदूषणे । निगूहनं स्यादुक्तापलापः स बहुधा मतः ॥' श्लोके इत्यादौ परेण दूषणे दत्ते नाथ मयोक्त इत्यपलापः । (४) 'स्ववाचः स्वाङ्गीकृतेर्वा स्वकृतिश्चेद्विरोधिनी। तदा स्वुक्तविरोधः स्यात्स च नैकविधः स्मृतः॥' यथा—ईश्वरोऽनीश्वर इत्यादिः । (५) 'आदौ सिद्धान्तमेकं तु समालम्ब्य ततः परम् । तद्विरुद्धाभ्युपगमेऽपसिद्धान्तः प्रचक्षते ॥' प्रामाणिकत्वेनाभ्युपगतोऽर्थः सिद्धान्तः । स च त्रिविधः—सर्वतन्त्रप्रतितन्त्राभ्युपगमसिद्धान्तभेदात् । तत्र प्रमाणात्प्रमेयसिद्धिरित्यादि सर्वतन्त्रसिद्धान्तः, सर्वैरपि वादिभिरभ्युपेतत्वात् । स्वतन्त्रमात्रसिद्धः परतन्त्रासिद्धः प्रतितन्त्रसिद्धान्तः । यथा—विशिष्टाद्वैतिना परमात्मनः सर्वशरीरित्वमित्यादि । तन्त्रद्वयसाधारणोऽर्थोऽभ्युपगमसिद्धान्तः । यथा—ज्ञानातिरिक्तापारमार्थ्यं योगाचारमायावादिनोः । एवमुदाहरणान्तराण्यपि बोध्यानि । अधिकरणसिद्धान्तोऽप्यानुषङ्गिकार्थसिद्धिलक्षणः त्रैविध्यान्तर्भावादेव पृथङ्नोपदिष्ट इति बोध्यम् । स्वाभ्युपगतसिद्धान्तविरुद्धाभ्युपगमोऽपसिद्धान्तः । यथा—साङ्ख्यस्य आत्मा कर्तेति, यथा वा वैशेषिकस्य आत्मा ज्ञानरूप इति । (६) 'शब्दशास्त्रविरुद्धं यत्पदवाचकमुच्यते । तत्तद्वाधाव्याकरणं शब्दशास्त्रमिहेष्यते ॥' यद्भाषया कथा, प्रवर्तते तद्भाषाव्याकरणसिद्धमेव पदं प्रयोक्तव्यं तत्र । व्याकरणविरुद्धं तु अयुक्तमवाचकम् । (७) 'आकाङ्क्षासत्तिविरहाद्यत्र नान्वयसं-

सम्भवः । अनन्वितं तद्भेदः स्यात्पदवाक्यप्रभेदतः ॥' पदाना-मनन्वयो यथा—स्तम्भः कुम्भः कुड्यं कुसूलमित्यादिषु । वाक्यानन्वयो यथा—गिरिर्वह्निमान् ह्रदो वकवानित्यादिषु । अत्र पूर्वोत्तर-वाक्ययोरनाकाङ्क्षितार्थपरत्वादनन्वयो बोध्यः । (८) 'विवक्षित-क्रमो यत्र विपर्यासं प्रपद्यते । अप्राप्तकालता तत्र सेयं बहुविधा स्मृता ॥' प्रतिज्ञाहेतुदृष्टान्तानां विपर्यासेन वचनेऽवयवविपर्यास इत्यादिः । (९) 'त्रिवारमभिधानेऽपि सभ्यैश्च प्रतिवादिना । अज्ञातार्थं वचो यत्तदविज्ञातार्थमुच्यते ॥' अप्रसिद्धप्रयोग उदा-हरणम् । यथा—अहार्यो वीतिहोत्रवानित्यादि । अहार्यः पर्वतः । वीतिहोत्रोऽग्निः (१०) 'प्रकृतानुपयुक्तानामुक्तिरर्थान्तरं मतम् । अयं राजा महान् गुण्य इत्यादिकमुदाहृतिः। (११) 'वक्तव्यस्य स्वसिद्धान्तसिद्धस्यैकांशकीर्तनम् । न्यूनं स्यात्तत्प्रभेदस्तु न्याया-यावयवभेदतः ॥' यथा—पञ्चावयववादिनो नैयायिकस्य त्र्यवयव-प्रयोगादि न्यूनम् । (१२) अन्वितस्योपयुक्तस्य पौनरुक्त्यमग-च्छतः । कृतकार्यतया स्वाङ्गीकृतस्योक्तिरिहाधिकम् ॥' यथा—धूमवत्त्वादालोकवत्त्वादिति हेत्वधिकम् । एवमन्यदपि बोध्यम् । (१३) स्वोक्त्या शब्दादर्थतो वा योऽर्थोऽन्यस्य धियं गतः। तस्योक्तिरर्थरहिता पुनरुक्तिर्निगद्यते ॥' देवदत्तो गृह एवास्ति बहिर्नास्तीत्यादिकमुदाहरणम् । (१४) 'त्रिरुक्त्या सभ्यविदित-स्यानुक्तस्याप्रतीतिना । योग्यानुवादाभावोऽननुभाषणमिहो-च्यते ॥' (१५) 'त्रिरुक्तेऽर्थे सदस्येषु केनापि विदिते सति । न मया ज्ञायत इति वचोऽज्ञानमिदं मतम् ॥' (१६) 'यदा-ऽङ्गीकृतवादः सन् कथनाय न कल्पते । अप्रतीत्या तदो-

द्भाव्या सेयमप्रतिभा मता ॥' (१७) 'वादाहवावतीर्णस्तद्विच्छेदेच्छावशाद्यदा । आवश्यकेतरद् ब्रूयात्तदा विक्षेपसम्भव ॥' (१८) 'स्वदोषमभ्युपेत्यैव परदोषप्रसञ्जनम् । मतानुज्ञा स्वदोषाङ्गीकाराशेनेह दूषणम् ॥' (१९) 'अवश्योद्भावनीयस्यावसरे सत्युपेक्षणम् । तज्ज्ञै पर्यनुयोज्योपेक्षणमित्यभिधीयते ॥' यदा निग्रहस्थान प्रसज्यत एकस्य, तदनन्तरकक्ष्यायां परेण तस्योद्भावन करणीयम् । अकरणे पर्यनुयोज्योपेक्षण नाम निग्रहस्थान परस्य भवेत् । इद च मध्यस्थैरुद्भाव्य न पूर्वेण स्वदोषाविष्करणस्यानौचित्यादिति केचित् । अत्रेद बोध्यम्—तत्त्वनिर्णयार्थत्वाद्वादस्य तत्र वादिनापीदमुद्भावयितु शक्यते । जल्पवितण्डयोस्तु यावन्निग्रहस्थानोद्भावननियमे कृतेऽकृते वा परस्य निग्रहस्थानान्तरसन्निपाते तदुपसर्जनतयैवमप्युद्भाव्यम् । एतत्परीक्षार्थमसदेव मयोक्त तदप्यनेन न ज्ञातमित्येष स्वस्यावष्टम्भविजयावहत्वादिति । (२०) निरनुयोज्यानुयोगोऽसदनुयोग । स चतुर्धा—अनवसरग्रहण निग्रहस्थानान्तरे निग्रहस्थानान्तरोद्भावन छलोत्तर जात्युत्तरं चेति । तत्राद्य यथा—चतुर्थकक्ष्याया स्थित प्रतिवादी वादिनमाह प्रथमकक्ष्यायां त्वयाऽपसिद्धितमिति । द्वितीय यथा—वक्तव्यादिप्रसङ्गेऽपलापाद्युद्भावनम् । तृतीय यथा—अविवक्षितशब्दार्थारोपेण दूषणम् । यथा—नूतनकम्बलवत्त्वतात्पर्येण नवकम्बलोऽयमित्युक्ते परो यत्र दूषयति सङ्ख्याविशेषमर्थमारोप्य, कुतोऽस्य नव कम्बला एक एव तु दृश्यत इति । चतुर्थं—स्वव्यापिदूषणं जाति । यथा—स्थावरशरीरं मोक्षमधिष्ठित जीवननिद्राप्रबोधयुक्तत्वात् मनुष्यशरीरवत् इति साधर्म्येण वा, यन्न मोक्षधिष्ठितं तन्न निद्रावियोगि

घटवत् इति वैधर्म्येण वोक्ते यदि मनुष्यादिशरीरसाधर्म्याद्घटादिवैधर्म्याद्वा भोक्त्रधिष्ठितत्वमुच्यते स्थावरशरीरस्य; तर्हि घटादिसाधर्म्यात्पाणिपादादिराहित्यान्मनुष्यादिशरीरवैधर्म्याद्वा भोक्त्रनधिष्ठितत्वमेव किं न स्यादिति दूषणं जातिः। तथा च न्यायसूत्रं—'साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानं जातिः' इति। साधर्म्येण प्रत्यवस्थाने साधर्म्यसमा। वैधर्म्येण तु वैधर्म्यसमा। अनित्यसमादिकमपि एवमुदाहर्तव्यम्। असदुत्तरं चैतत्, साधर्म्यमात्रस्य वा वैधर्म्यमात्रस्य वाऽसाधकत्वात्। स्वपक्षस्यापि विरुद्धयत्किञ्चित्साधर्म्याद्विरुद्धपक्षताप्रसङ्गात्स्वव्याघातकत्वमत्र बोध्यम्। छलजात्योरसदुत्तरत्वेऽपि परस्य एतद्दूपणासामर्थ्ये विजयावहत्वात्प्रयोक्तुर्विजिगीषुकथायामेनयोरुपयोगः। सत्प्रमाणैरेव तत्त्वावधारणं भवति। तदर्थं च वाद एव शरणीकरणीयः। प्रमाणाधीने तत्त्वनिर्णये विश्वासमान्द्यापादकानां बाह्यकुदृष्ट्युत्प्रेक्षितानां कल्पनाविशेषाणां निरसनाय तु जल्पवितण्डयोरुपयोगः। तदुक्तं न्यायसूत्रे—'तत्त्वाध्यवसायसंरक्षणार्थं जल्पवितण्डे बीजप्ररोहसंरक्षणार्थं कण्टकशाखावरणवत्' इति। (२१) प्रमाणाभासेषु अनुमानाभासा निरूपिताः। दोषसहकृतेन्द्रियजन्यं ज्ञानं प्रत्यक्षाभासः। भ्रमविप्रलिप्सादिमूला बाह्यकुदृष्टीनां प्रबन्धा आगमाभासा अनुसन्धेयाः। आगमाभासता चैषां मनुनैवोक्ता 'या वेदबाह्याः स्मृतयो याश्च काश्च कुदृष्टयः। सर्वास्ता निष्फलाः प्रेत्य तमोनिष्ठा हि ताः स्मृताः॥' इति। कृतं विस्तरेण।

इति अनुमानपरिच्छेदः।



## शब्दपरिच्छेदः ।

अथ शब्दो निरूप्यते—अनाप्तानुक्तं वाक्यं शब्दप्रमाणम् । तज्जनितदर्थविज्ञानं शाब्दप्रमा । अनाप्तोक्तवाक्यस्य प्रामाण्यव्युदासाय अनाप्तानुक्तेति । वेदप्रामाण्यसंरक्षणाय अनाप्तानुक्तेति नञ्द्वयनिवेशः ।

### वेदस्यापौरुषेयत्वम् ।

नहि वेदो भारतादिवत् पौरुषेयः, येनाप्तोच्चरितत्वेन तस्य प्रामाण्यं घटेत । स ह्यपौरुषेयः । पुरुषबुद्धिमूलकत्वाभावात् तत्प्रयुक्तभ्रमविप्रलम्भाद्यनवकाशात् प्रामाण्यमस्य सुस्थितम् । ननु वाक्यं सर्वमेव पौरुषेयम्, नैकमपि वाक्यं पुरुषरचनाऽगोचरम्, वर्णनित्यत्वपक्षेऽपि तेषां पौर्वापर्यस्य पुरुषप्रणयनाधीनत्वात् । नैतत् । लौकिकेषु वाक्येषु तथैव । वैदिकेषु यो वर्णपदानां पौर्वापर्येनियमः स न पुरुषरचनाविशेषमूलः । स चानादिरध्यापकपरंपरया पाठक्रमप्राप्तः । पुरुषस्वातन्त्र्याधीनरचनाविशेषवैशिष्ट्यमेव पौरुषेयत्वं, तदभाव एव त्वपौरुषेयता । सर्वस्मिन्नेव सर्गादौ सर्वेश्वरोऽपि अप्रस्खलितवर्णस्वरादिनियमं पूर्वपूर्वकल्पीयं वेदं तथैव स्मृत्वाऽध्यापक इवाध्यापयति केवलं हिरण्यगर्भम्, इति तस्यापौरुषेयता । ननु वाक्ये पौरुषेयापौरुषेयविभागोऽनुपपन्नः । तथाच प्रयोगः—वेदः पौरुषेयः वाक्यत्वात् भारतादिवत् । इति चेन्न । वाक्येन पौरुषेयेणैव भाव्यमिति कोऽयमभिनिवेशः । नहि विपक्षे बाधकं पश्यामः । ननु अस्ति बाधकम्, असति कारणे कार्योत्पत्तिप्रसङ्ग इति । यदि कार्यता वाक्यमात्रे निश्चिता तदाऽयं प्रसङ्गो घटेत, पौरुषेयत्वं प्रसाधयता त्वया कार्यता हीदानीमेव साध्यते, तत्रैव

विप्रतिपत्तिरिति किमत्र बाधकापादनम् । ननु श्रुत्यैव श्रुतेः पौरुषेयत्वं गम्यते । तथा च श्रुतिः—'तस्य हवा एतस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदः' 'ऋचः सामानि जज्ञिरे छन्दांसि जज्ञिरे तस्मात् यजुस्तस्मादजायत' 'मन्त्रकृद्भ्यः' इति । 'प्रतिमन्वन्तरं चैषा श्रुतिरन्या विधीयते' इति च स्मृतिः । तथा काठकादिसमाख्या च पौरुषेयत्वं गमयति । न च प्रवचनमात्रतः सा समाख्या भवितुमर्हति, अनेकसाधारण्यात्प्रवचनस्य । कादाचित्कानां पुरुषविशेषाणां कथाश्च श्रूयमाणा वेदस्यानित्यतां गमयन्ति । प्रयोगश्च—वेदः सर्वज्ञप्रणीतः वेदत्वात्, यन्नैवं तन्नैवम्, यथा किरातादिः, इति । मैवम् । प्रलयेऽध्ययनाध्यापनपरम्परोच्छेदेनान्तर्हितान् वेदान् सर्गादौ सर्वेश्वरो ब्रह्माणं व्यष्टिसृष्टिद्वारभूतं सृष्ट्वा तस्मै स्वयमुपादिशत् । तिरोहितानां वेदानां प्रथमप्रकाशकत्वात् तस्माद्वेदानां प्रादुर्भावः श्रूयते । न त्वपूर्वस्योत्पत्तिः । तथा ब्रह्मणो नियोगात्तपसा लब्धमहिमानो महर्षयोऽनधीतानपि तांस्तान् वेदभागानुपलभ्य प्रावर्तयन् । ततः प्रथमप्रवर्तकतया तत्तद्वेदभागस्य तत्तत्समाख्यायोगः । अत एव मन्त्रकृत्त्वव्यपदेशोऽपि । तथा च श्रुतिस्मृती—'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै' 'वाचा विरूपनित्यया पूर्वेपूर्वेभ्यो वच एतदूचुः' 'अजान् ह वै पृश्नींस्तपस्यमानान् ब्रह्म स्वयम्भ्वभ्यानर्षत् । तदृषयोऽभवन् तदृषीणामृषित्वम्' 'अनादिनिधना ह्येषा वागुत्सृष्टा स्वयंभुवा' 'युगान्तेऽन्तर्हितान् वेदान् सेतिहासान् महर्षयः । लेभिरे तपसा पूर्वमनुज्ञाताः स्वयम्भुवा' इति । इतिहासशब्दोऽत्र तत्तद्वृत्तान्तपरः । तेन भारतादेरपि वेदवदनादित्वशङ्का परास्ता । येषां चरितं श्रूयते ते चाधिकारिकपुरुषाः प्रतिसर्गं सृज्यन्ते, अतो

स अनित्यसंयोगो दूषणम्। तथा चोक्तं वासुदेवमाहात्म्ये 'प्राक्कल्पे याद्दशी सृष्टा वेदाः शास्त्राणि च क्रियाः। कल्पेऽन्ये ताद्दशाः सर्वे धर्माः स्युश्चाधिकारिणः॥' इति। प्रपञ्चितं चैतत्सर्वं न्यायपरिशुद्धौ। अनूदितं चात्र प्राचां वचनम्—'याद्दक्प्रभावाः श्रूयन्ते ऋष्याद्या वेदराशिषु। ताद्दशा एव सृज्यन्ते वेदान् दृष्ट्वा स्वयम्भुवा॥ अतस्तेभ्यः पुरा वेदसत्त्वाद्वेदस्य नित्यता। अनधीत्यैव वेदानामाविर्भावयितृत्वतः॥ तपसा प्राप्य संस्कारान् तत्सूक्तत्वादिसम्भवः। काठकादिसमाख्याया निमित्तं वेदमेव वा। प्रकृष्टं वा प्रवचनं तत्सिद्धा वेदनित्यता॥' इति। यत्र वेदस्य सर्वज्ञेश्वरप्रणीतत्वे केवलव्यतिरेकि लिङ्गमुक्तं, तत्र विपक्षे बाधकाभावादप्रयोजकम्। अनुमाने निरस्तं च केवलव्यतिरेकि।

सत्सङ्गजीवने च वेदानां सनातनत्वं अत एव स्वयम्भूत्वं प्रमाणतमत्वं पुरातनानामेव सर्गादौ नारायणादाविर्भूतत्वं च प्रतिपाद्यन्ते—'नारायणात्मको वेदो यतः प्रोक्तः सनातनः। वेदो नारायणः साक्षात्स्वयम्भूरिति गीयते। प्रमाणानां हि सर्वेषां वेद एव पुरातनैः। प्रमाणं परमं प्रोक्तः सद्भिस्तत्त्वार्थवेदिभिः॥ इत्थं नारायणादेव साक्षाच्छ्रीपुरुषोत्तमात्। आविर्बभूव सृष्ट्यादौ वेदः सर्वार्थबोधकः॥' इति।

ननु वेदस्य कथं प्रामाण्यम्। प्रामाण्यं हि गुणायत्तम्। वाक्यस्य गुणस्त्वाप्तोच्चरितत्वम्। वेदे च न तदिष्यते भवता। नैवम्। वाक्यमात्रस्य प्रामाण्यं स्वत एव। औत्सर्गिकं चैतत्। सति बाधे तु न। बाधस्तु दोषात्। दोषश्चानाप्तोक्तत्वम्। तथा च वाक्यस्याप्रामाण्यं

परतः। प्रामाण्यं तु स्वतः। ननु भवति 'किमस्य वक्ता आप्तः' इति गुणजिज्ञासा। सत्यम्। दोषशङ्काप्रसङ्गे तन्निराकरणाय तु तज्जिज्ञासा। उक्तं च न्यायपरिशुद्धौ—'गुणास्तु सम्भावितदोषस्थले दोषनिराकरणौपयिकाः' इति। उक्तं च श्रीयामुनाचार्यैः—'नैव शब्दे स्वतो दोषाः प्रामाण्यपरिपन्थिनः। सन्ति किन्तु स्वतस्तस्य प्रमाणत्वमिति स्थितिः॥ वक्तुराशयदोषेण केषुचित्तदपोह्यते। अङ्गुल्यग्रे हि मातङ्गयूथमित्येवमादिषु॥' इति।

ये पुनः परमेश्वरप्रणीतत्वेन वेदानां तस्य चाप्ततमत्वेन गुणप्रयुक्तमेव प्रामाण्यं मन्यन्ते तान् पृच्छामः—वेदप्रणयनकारणभूतं यत्तस्य ज्ञानं तत्र कं गुणं पश्यति भवान्, न ह्यस्मदादीनामिव अदुष्टेन्द्रियजन्यत्वलक्षणो गुणोऽस्तीति वक्तुं शक्यते। ईश्वरस्य ज्ञानं हि नित्यम्। ननु नित्ये ज्ञाने तदनपेक्षा इति चेत्, नित्येऽपि वाक्ये तथैवेति साम्यं किं न पश्यति भवान्। उक्तं च न्यायपरिशुद्धौ—'नित्ये हेतुगुणापेक्षा वेदे नास्तीशबुद्धिवत्। हेत्वभावान्न दोषश्चेद्धेत्वभावादिहापि नः॥ अकारणं यथा ज्ञानं प्रमात्वमधिगच्छति। अकारणं तथा वाक्यं स्वतः प्रमितिकारणम्॥ यदि हेतुगुणाभावादप्रामाण्यं प्रसज्यते। तदेश्वरप्रमायामप्यनिवार्यमिदं तव॥' इति। अतः सिद्धं नित्यनिर्दोषत्वाद्वेदानां प्रामाण्यम्। लौकिकानि च कारणदोषबाधकप्रत्ययरहितानि वाक्यानि प्रमाणान्येव 'अस्त्युत्तरस्यां दिशि महान् गिरिराजो हिमालयो नामे'त्यादीनि। इत्थं च सिद्धं शब्दप्रमाणस्य पौरुषेयापौरुषेयवाक्यभेदेन द्वैविध्यम्॥

## पदवृत्तिनिरूपणम् ।

शक्तं पदम् । पदानामर्थावबोधकत्वमग्नेरौष्ण्यमिव जलस्येव च शैत्यं स्वभावः । सोऽयमभिधेति शक्तिरिति चोच्यते । इयमेव पदानामर्थे मुख्या वृत्तिः । ज्ञाता चेयमुपयुज्यते शाब्दबोधे न स्वरूपतः । ज्ञानं चैतस्याः पदशक्तेर्व्याकरणादितः । तथा चोक्तम्—'शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद्व्यवहारतश्च । वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः ॥' इति । मुख्यार्थबाधे तदासन्नार्थे वृत्तिरौपचारिकी । सा च लक्षणा गौणी चेति द्विविधा । यत्र मुख्यार्थबाधे तत्सम्बन्धिनो भवति बोधस्तत्र लक्षणा । शक्यार्थसम्बन्धो लक्षणेति यावत् । यथा—गङ्गायां घोष इत्यत्र प्रवाहार्थबाधेन तत्सम्बन्धिनि तीरे लक्षणावृत्तिराश्रीयते । सिंहो देवदत्त इत्यत्र सिंहगतशौर्यगुणयोगेन देवदत्ते भवति सिंहशब्दप्रयोगः । सेयं गौणीवृत्तिरुच्यते । शक्यार्थसम्बन्धः क्वचित्संयोगादिः क्वचित्सादृश्यमिति सम्बन्धत्वाविशेषाल्लक्षणानतिरिक्ता गौणीति काणादा मन्यन्ते । लक्षितलक्षणास्थले च शक्यार्थेन परम्परासम्बन्धो द्विरेफादिपदे । तत्त्वरत्नाकरे च वृत्तिद्वयमुक्तम्—'अभिधानाभिधेयत्वमेव शब्दार्थयोः स्थितम् । सम्बन्धोऽत्राभिधा द्वेधा बोध्या मुख्यजघन्यतः ॥ अभिधाऽर्थावगत्यात्मा शब्दं व्यापारयिष्यतः । शब्दशक्तिनिमित्ता सा स्वार्थे मुख्याऽभिधीयते ॥ स्वार्थाभिधानद्वारा स्याज्जघन्यार्थान्तरे मता' इति । मुख्या वृत्तिस्तु रूढियोगतत्समुच्चयभेदाद्भवति बहुविधा । रूढिस्तु

---

१ बोध्यबोधकभावः, न तु वाच्यवाचकभावः ।

जातियोगाद्गुणयोगाद्वा । यथा—गवादि पदं रूढं गोत्वादिजातियोगात् गवाद्यर्थे प्रवर्तते, शुक्लमधुरादिपदं च शौक्ल्यमाधुर्यादिगुणयोगाद्द्रव्ये । अवयवार्थयोगो योग उच्यते । पाचकादिपदं हि यौगिकं पाककर्तृत्वाद्यवयवार्थयोगात् पाककर्त्रादिविशिष्टबोधकम् । पङ्कजादिपदमुभययोगात् । पङ्कजनिकर्तृत्वमवयवार्थः । पद्मत्वजातिः रूढ्यर्थः । योगरूढिभ्यां विशिष्टार्थवाचकं योगरूढमित्युच्यते । अवयवशक्त्या रूढ्या च भिन्नभिन्नार्थोपस्थापकं तु पदं यौगिकरूढमित्युच्यते । यथोद्भिदादिपदम् । तद्धि उद्भिद्यतेऽनेनेति योगव्युत्पत्त्या खनित्रादेर्वाचकम् । रूढ्या च यागविशेषस्येति ।

## पदशक्तेर्धर्मिपर्यन्तत्वसमर्थनम् ।

तत्र गवादिपदानां जातावेव शक्तिः इति जैमिनीयाः । तत्र प्राभाकरास्तु जातौ शक्तिग्रह एव जातिं पुरस्कृत्य व्यक्तिमपि ज्ञापयतीति मन्यन्ते । गवादिपदस्य गोत्वे शक्तिग्रहादेव गोत्वप्रकारेण व्यक्तिस्मृतिः, तत्प्रकारकव्यक्तिबोधश्च भवतीति यावत् । जातावेव शक्तिः, व्यक्तिभानं लक्षणयेति तु भाट्टाः ।

अत्र ब्रूमः—लक्षणा हि तत्रैव कल्प्यते; यत्र पदार्थयोरन्वयानुपपत्तिः प्रतिसन्धीयते । न चैतदस्ति 'गौरस्ति' 'गौः प्रमेयः' इत्यादौ । विनाऽप्यन्वयानुपपत्तिप्रतिसन्धानं स्वरसतोऽनुभूयमानो व्यक्तिबोध औत्सर्गिके पदानां व्यक्तिपर्यन्तबोधनसामर्थ्ये भवति लिङ्गम् । किञ्च यदि पदानां जातावेव मुख्या वृत्तिः व्यक्तौ च लक्षणा तर्हि जातौ गवादिपदानां प्रचुरप्रयोगो भवेत् । मुख्यार्थ एव हि पदानां प्रयोगः प्रचुरो दृश्यते । यथा गङ्गापदस्य प्रवाहे । यथा वाऽग्निशब्दस्य ज्वलने । व्यक्तौ प्रयोगप्राचुर्यस्योपलम्भाच्च गवादिपदानां तत्र मुख्या वृत्तिरव-

सीयते। किञ्च यदि जातिरेव मुख्योऽर्थस्तर्हि तद्बोधनाय त्वतलोर्नैर-पेक्ष्यं प्रसज्यते। भावार्थे च तयोरनुशासनं 'तस्य भावस्त्वतलौ' इति। भावो नाम प्रकृत्यर्थतावच्छेदको धर्मः, न तु प्रकृत्यर्थवृत्तिध-र्ममात्रम्। पृथिवीत्वपदाद्गन्धवत्त्वस्याबोधात्। गोत्वपदाद्गोत्वजाते-र्बोधाच्च गोपदस्य गोत्वविशिष्टवाचित्वमेषितव्यम्। जातिशक्तिरेवा-विनाभावलक्षणादर्थसम्बन्धविशेषाज्जात्याश्रयव्यक्तिबोधं प्रयोजय-तीति पक्षे तु समायात व्यक्तिशक्तया। औत्सर्गिकमर्थविशेषस्य बोध-कत्वं हि शक्तिर्नाम। किञ्च अर्थसामर्थ्याद्यदि व्यक्तिबोध इष्यते तर्हि जातिः सामान्यमित्यादिपदादपि व्यक्तिबोधापत्तिः। ननु जात्यादि-पदं स्वतन्त्रां जातिं बोधयति, गवादिपदं तु व्यक्तिपरतन्त्राम्, अतो गवादिपदादेव व्यक्तिबोधो न जात्यादिपदात्। यद्येवं, सिद्धं नः स-मीहितम्। न खलु व्यक्तिमनवबोध्य तस्याः पारतन्त्र्येण जातिरवबोधयितुं शक्यते। अतः पारतन्त्र्यावबोधनाय व्यक्तिबोधकत्वमावश्यकम्। इदमेव च व्यक्तिपारतन्त्र्येण भानं जातेः, यत्तत्प्रकारतया भानम्। अतो गवादिपदानां जातिप्रकारकव्यक्तिबोधसामर्थ्यं वाच्यमिति सिद्धा व्यक्तिपर्यन्ता गवादिपदशक्तिः। उक्तं च न्यायपरिशुद्धौ—'गवादिशब्दाभिहितगोत्वाद्यर्थस्वभावतः। व्यक्तिधीर्यदि तद्व-त्स्यात्सिध्यर्थकपदेष्वपि। गवादिशब्दा जात्यादीन् परतन्त्रान् प्रचक्षते॥ तेनाश्रयप्रतीतिश्चेत्तत्र सिद्धं समीहितम्। परं कथमविज्ञाप्य पारतन्त्र्यस्य बोधनम्॥ विज्ञाप्य यदि शब्दस्य तत्र शक्तिर्न किं भवेत्।' इति। न च व्यक्तीनामानन्त्यात्तत्र व्युत्पत्तिर्दुःशका, यत्र गोत्वं तत्र गोपदस्य शक्तिरिति सामान्यत-स्तस्याः सम्भवात्। अव्युत्पत्ते तु पिण्डविशेषेऽप्रमपि गोपद-

वाच्य इति भवति विशेषतः प्रतिपत्तिमात्रमिति । एवं घटादिशब्दा अपि न जातिमात्रं बोधयन्ति; किन्तु तद्विशिष्टां व्यक्तिमेवोत्सर्गतो बोधयन्ति । त इमे जातिप्रवृत्तिनिमित्तकाः शब्दाः जातिशब्दा इत्युच्यन्ते । ननु जातिशक्तानां पदानां व्यक्तौ निरूढलक्षणा वाच्या । नैवम् । अनादितात्पर्यसिद्धा हि लक्षणा निरूढलक्षणेत्युच्यते । अनादेः कालाच्चेत् गवादिपदानां व्यक्तिबोधनाय प्रयोगतात्पर्यम्, तर्हि तत्र मुख्यवृत्तेः स्वीकारे किं बाधकम्? । अनादितः कालादौत्सर्गिकमर्थविशेषबोधनसामर्थ्यमेव हि पदानां तत्र मुख्या वृत्तिरिति ।

एवं गुणवाचकानां शुक्लनीलादिपदानामपि गुणिपर्यन्तबोधनसामर्थ्यमौत्सर्गिकम्, अनादितः कालाद्गुणिपर्यन्तबोधनार्थं स्वरसतः प्रयुज्यमानत्वात् । गुणिवाचिपदवैयधिकरण्येन प्रयोगे तु तत्पर्यन्तबोधनसामर्थ्यं कुण्ठितप्रसरं गुणबोधनमात्रे विश्राम्यति घटस्य शुक्ल इत्यादौ । रूपं वर्ण इत्यादिकं पदं तु गुणवाच्यपि न गुणिपर्यन्तबोधनसामर्थ्यवत्; नियतनिष्कर्षकत्वात् जात्यादिशब्दवत् । अतस्तत्सामानाधिकरण्येन प्रयोगेऽपि गुणमात्रे विश्राम्यति शुक्लादिपदं शुक्लं रूपमित्यादौ । बाधकाभावे तु गुणिपर्यन्तं बोधयत्येवाकुण्ठितप्रसरेण स्वसामर्थ्येन । 'गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वति' इति चामरः । यद्यपि परवल्लिङ्गत्वमुक्तं शुक्लादिशब्दानां पाणिनिना 'गुणवचनं च' इति । अथापि विशेष्यवाचिपदसमभिव्याहाराभावे गुणमात्रपरत्वे पुंलिङ्गता । गुणिपर्यन्ततात्पर्ये तु यल्लिङ्गं गुणि विवक्षितं तल्लिङ्गतेत्यस्याशयः । अनेन चौत्सर्गिकं गुणिपर्यन्तबोधनसामर्थ्यं शुक्लादिपदानामुपोद्बल्यते । न

त्र गुणवाचकानां गुणिनि लक्षणा। विनाऽप्यन्वयानुपपत्तिज्ञानं नीलो घट इत्यादितो नीलादिविशिष्टबोधस्यानुभाविकत्वात्। ननु शुक्लादिपदानां गुणमात्रवाचित्वमेव, गुणिपर्यन्तता तु मतुबन्तस्यैव। ननु नीलो घट इत्यादौ न मतुप् दृश्यते। सत्यम्। जात एव तु लुका लुप्तः। प्रत्ययलक्षणेन तु भवति मतुबन्तं शुक्लादिपदम्। आह च कात्यायनः—'गुणवचनेभ्यो मतुपो लुग् वक्तव्यः, तथा च लिङ्गवचनसिद्धिः, स्वरविशेषाय च भवति' इति। अत्रोच्यते—स्वतो गुणिपर्यन्तबोधनसमर्थानामेव लिङ्गाद्यर्थं स्यान्मतुब्लुगनुशासनम्, न पुनर्मतुब्लोपेनैव गुणिपर्यन्तबोधकता। अन्यथा तु स्वतो गुणिबोधनासमर्थानां रागादिपदानामपि स्याद्द्रव्यपर्यन्तता निरुक्तानुशासनबलात्। न हि क्वचिदपि रागपदस्य द्रव्यपरतया प्रामाणिकः प्रयोगो दृष्टचरः। तथा च सिद्धम्, यथा द्विशब्देनैव द्वित्वविशिष्टप्रतिपत्तेः सम्भवेऽपि साधुत्वार्थं द्विवचनप्रयोगः, एवं गुणिपर्यन्तबोधनसमर्थानामेव लिङ्गाद्यर्थं मतुब्लुगनुशासनमिति। उक्तं च न्यायपरिशुद्धौ—'गुणवाचिन्यपि पदे जातिशब्दोक्तनीतितः। अपृथक्सिद्धवाचित्वान्न युक्ता गुणिलक्षणा॥ स्वरलिङ्गविशेषार्था मतुब्लोपेन संस्क्रिया। विशिष्टवाचकत्वं तु तदायत्तं न मन्महे॥' इति। एते शुक्लादिशब्दा गुणप्रवृत्तिनिमित्तका गुणशब्दा इत्युच्यन्ते। एवं क्रियाप्रवृत्तिनिमित्तकाः क्रियाशब्दाः। यथा पाचकादिशब्दाः। पिण्डविशेषेष्वाधुनिकैः सङ्केतिता डित्थादिशब्दा यदृच्छाशब्दा इत्युच्यन्ते। अत्र तु वक्तृसंज्ञैव प्रवृत्तिनिमित्तम्। डित्थो डित्थसंज्ञक इत्यर्थः। पाणिनिना कृता अणादिसंज्ञा अपि अत्रैवान्तर्भवन्ति। शास्त्रिकसङ्केतः परिभाषा। एवम्भूतांश्च शब्दान् पारिभाषिकशब्दत्वेन व्यवहरन्ति। इत्याख्यातं प्राक्।

ननु—अपृथक्सिद्धविशेषणवाचिनां शब्दानां विशेष्यपर्यन्तवाचित्वं चेदभ्युपगम्यते, तर्हि प्रभा संयोगः शक्तिः पाको गमनमित्यादिपदानामपि धर्मिपर्यन्तवाचित्वं प्रसज्येत, प्रभादीनामपि प्रदीपाद्यपृथक्सिद्धविशेषणत्वात् । मैवम् । न खल्वपृथक्सिद्धविशेषणवाचित्वमात्रं धर्मिपर्यन्तत्वे प्रयोजकम्, जात्यादिपदेषु धर्मिपर्यन्तताया अदर्शनात् । किन्तु नियतनिष्कर्षकेतरत्वसनाथम् । प्रभादिशब्दास्तु नियतनिष्कर्षकाः । तथाहि—शब्दा द्विविधाः निष्कर्षका अनिष्कर्षकाश्चेति । निष्कर्षका धर्मनिष्कर्षहेतवः; यथा जातिः सामान्यमित्यादयः । अविशिष्टेऽपि जातिवाचित्वे गवादिपदं व्यक्तौ प्रयुज्यते; न जात्यादिपदम् । नहि कदाचिदप्येषां जातिरूपादिपदानां व्यक्तिगुणिपर्यन्तप्रयोगः क्वचिद्दृष्टचरः । अतो जातिरूपादिशब्दा विशेषणमात्रवाचिनो व्यक्तिगुण्यपेक्षया जातिगुणयोर्विवेकप्रतिपादनोपयुक्ता नियतनिष्कर्षका उच्यन्ते । एवं प्रभादिशब्दा अपि । अर्थविशेषवाचित्वे हि पदानामनादिप्रयोग एव शरणम् । तुल्यं चेदं निष्कर्षकानिष्कर्षकविभागेऽपीति ।

नियतनिष्कर्षकेतरेषां शुक्लादिपदानामपृथक्सिद्धविशेषणवाचिनां यथा धर्मिपर्यन्तबोधकत्वं मुख्यम्, एवं देवादिशब्दानां पिण्डविशेषवाचिनामप्यात्मपर्यन्तबोधकत्वं मुख्यम् । आत्मोत्क्रमणे विशीर्यमाणत्वाच्च देहानामात्मप्रकारतैकस्वभावत्वं शक्यं ज्ञातुम् । न चात्माऽपृथक्सिद्धत्वे देहस्य तदुपलब्धिवेलायामात्माऽप्युपलभ्येतेति शङ्क्यम् । न ह्येवं नियमो नियतप्रकारप्रकारिणोः सहैवोपलब्धिरिति । न हि घटचाक्षुषे गन्धो विषयः । न वा गन्धघ्राणजे

घटः। न च तावता नियतप्रकारप्रकारिभावस्तयोर्व्यपैति । क्वचित्सहोपलम्भस्तु एकसामग्रीवेद्यत्वात्तयोः । आत्मनस्त्वचाक्षुषत्वान्न देहोपलब्धिकाल उपलब्धिः। नैतावताऽऽत्मप्रकारत्वं देहस्यापैति । दृश्यन्ते च देहात्मनोः समानाधिकरणप्रयोगाः प्रामाणिकाः 'सोऽयं मनुष्यो देवः पुरुषो योषित् षण्ढ आत्मा कर्मभिर्जातः' इत्यादयः । 'वाचिकैः पक्षिमृगतां मानसैरन्त्यजातिताम् । शरीरजैः कर्मदोषैर्याति स्थावरतां नरः ॥' इति च मनुः । न ह्यविकारस्वरूपस्यात्मनो देवमनुष्यपक्षिस्थावरादिशरीरतया परिणामित्वं सम्भवति । अतो मनुष्यादिशब्दास्तच्छरीरकजीवात्मपराः प्रयुक्ता इत्येष्टव्यम् । न च पामरव्यवहारा इव देहात्मैक्यभ्रान्तिमूला इमे श्रुत्यादिगता व्यपदेशा इति शक्यमुद्भावयितुम् । नापि लक्षणयैते प्रयोगा निर्वाह्याः । सम्भवन्त्यां मुख्यवृत्तौ लक्षणाश्रयणस्यानौचित्यात् । न हि मन्वादयोऽपि महर्षयो बहुशो लाक्षणिकं प्रायुञ्जतेति शक्यमुत्प्रेक्षितुम् । देहतन्वादिशब्दास्तु नियतनिष्कर्षकाः । तद्भिन्नानां च देवादिशब्दानां स्वारसिकप्रामाणिकप्रयोगप्राचुर्येणात्मपर्यन्तमुख्यवृत्तत्वमेव युक्तम् ।

यथा शरीरवाचकानां शब्दानां शरीरिणि मुख्या वृत्तिस्तथैवचेतनाचेतनवाचिनोऽपि शब्दास्तच्छरीरके परमात्मनि मुख्यवृत्ता एव भवन्ति । अत 'सर्वं खल्विदं ब्रह्म' 'अयमात्मा ब्रह्म' 'तत्त्वमसि' 'इदं हि विश्वं भगवान्' 'ज्योतींषि विष्णुर्भुवनानि विष्णुः' 'क्षेत्रज्ञं चापि मां विद्धि' इत्यादयः समानाधिकरणव्यपदेशाः श्रौताः स्मार्ताश्च मुख्यतयैवोपपद्यन्ते । 'राजा राष्ट्र'मित्यादिवत्तदाधिपत्यमात्रनिबन्धनं सामानाधिकरण्यं जगद्ब्रह्मणोर्वदन्ति

नैयायिकाः । शरीरशरीरिभावेन मुख्ये तस्मिन् सम्भवत्यमुख्याश्रयणं न युक्तिमत् । सर्वशब्दमुख्यवृत्तिविषयत्वं परमात्मन उच्यते 'वचसां वाच्यमुत्तमम्' इति । सर्वशब्दवाच्यत्वे हेतुः सर्वत्रान्तर्यामितया व्याप्तत्वमिति च गीयते 'सर्वं समाप्नोषि ततोऽसि सर्वः' इति । तैत्तिरीयके च सृष्टेषु चेतनाचेतनेष्वन्तर्यामितया स्थितत्वात्तत्तद्वाचिसत्त्यदादिशब्दवाच्यं ब्रह्माभूदित्यन्वाख्यायते 'तदनुप्रविश्य सच्च त्यच्चाभवत्' इति । चेतनाचेतनवाचिनां शब्दानां ब्रह्मणि मुख्यवृत्तत्वं सहेतुकं सूत्रितं च भगवता बादरायणेन 'चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशोऽभाक्तस्तद्भावभावित्वात्' इति । चेतनाचेतनवाचिनां ब्रह्मणि प्रयुक्तानां शब्दानां तत्राभाक्तत्वं मुख्यवृत्तत्वमेव । सत्यन्तर्यामितया तस्मिन् सर्वेषां पदार्थानां नामरूपयोर्भावित्वादिति सूत्रार्थः । इदमेव ब्रह्मपर्यन्तबोधनसामर्थ्यमपर्यवसानवृत्तिरित्युच्यते । विशिष्टशक्तस्य पदस्य विशेषणमात्रेऽवस्थानं ह्यशक्यम् । चिदचिद्वाचिनः शब्दा ब्रह्मण्येव प्रतिष्ठिताः । स्वार्थमात्रेऽपर्यवस्यच्छक्त्या तत्तच्छरीरके ॥ स्मर्यते च सर्वशब्दानां पर्यवसानभूमित्वं परमात्मनः 'नताः स्म सर्ववचसां प्रतिष्ठा यत्र शाश्वती' इति । परमात्मपर्यन्तबोधनसमर्थानामपि पदानां सामर्थ्यभञ्जनेन क्वचित्क्वचिच्चेतनाचेतनमात्रेऽपि प्रयोगो बोध्यः । 'चराचरे'ति सूत्रे भाक्त इति पदच्छेदेनायमर्थो लभ्यते । भङ्क्त्वा प्रयुक्तो भाक्तः । 'यस्यात्मा शरीरं' 'यस्य पृथिवी शरीरं' इत्यादौ च नियतनिष्कर्षकशरीरपदसमानाधिकरणत्वादात्मादिशब्दास्तन्मात्रवाचिनः । व्यधिकरणप्रयोगाच्च । 'दासभूताः स्वतः सर्वे ह्यात्मानः परमात्मनः' इत्यादौ च तथात्वं बोध्यम् ।

घटः । न च तावता नियतप्रकारप्रकारिभावस्तयोर्व्यपैति । क्वचि-त्सहोपलम्भस्तु एकसामग्रीवेद्यत्वात्तयोः । आत्मनस्त्वचाक्षुषत्वान्न देहोपलब्धिकाल उपलब्धिः । नैतावताऽऽत्मप्रकारत्वं देहस्यापैति । दृश्यन्ते च देहात्मनोः समानाधिकरणप्रयोगाः प्रामाणिकाः 'गौरश्वो मनुष्यो देवः पुरुषो योषित् षण्ड आत्मा कर्मभिर्जातः' इत्यादयः । 'वाचिकैः पक्षिमृगतां मानसैरन्त्यजातिताम् । शारीरजैः कर्मदोषैर्याति स्थावरतां नरः ॥' इति च मनुः । न ह्यविकारस्वरूपस्यात्मनो देवमनुष्यपक्षिस्थावरादिशरीरतया परि-णामित्वं सम्भवति । अतो मनुष्यादिशब्दास्तच्छरीरकजीवात्म-परा प्रयुक्ता इत्येष्टव्यम् । न च पामरव्यवहारा इव देहात्मैक्य-भ्रान्तिमूला इमे मुख्यादिगता व्यपदेशा इति शक्यमुद्भावयितुम् । न वा लक्षणयैते प्रयोगा निर्वोढाः । सम्भवन्त्यां मुख्यवृत्तौ लक्षणाश्र-यणस्यानौचित्यात् । न हि मन्वादयोऽपि महर्षयो बहुवद्व लाक्षणिकं प्रायुञ्जतेति शक्यमुत्प्रेक्षितुम् । देहतन्वादिशब्दास्तु नियतनिष्क-र्षकाः । तद्भिन्नानां च देवादिशब्दानां स्वारसिकप्रामाणिकप्रयोग-प्राचुर्येणात्मपर्यन्तमुख्यवृत्तत्वमेव युक्तम् ।

यत शरीरवाचकानां शब्दानां शरीरिणि मुख्या वृत्तिरतश्चेतना-चेतनवाचिनोऽपि शब्दास्तच्छरीरके परमात्मनि मुख्यवृत्ता एव भवन्ति । अत 'सर्वं खल्विदं ब्रह्म' 'अयमात्मा ब्रह्म' 'तत्त्व-मसि' 'इदं हि विश्वं भगवान्' 'ज्योतींषि विष्णुर्भुवनानि विष्णुः' 'क्षेत्रज्ञं चापि मां विद्धि' इत्यादयः समानाधिकरणव्य-पदेशाः श्रौताः स्मार्ताश्च मुख्यतयैवोपपद्यन्ते । 'राजा राष्ट्र'मित्या-दिवदाधिपत्यमात्रनिबन्धनं सामानाधिकरण्यं जगद्ब्रह्मणोर्वदन्ति

नैयायिकाः । शरीरशरीरिभावेन मुख्ये तस्मिन् सम्भवत्यमुख्याश्रयणं न युक्तिमत् । सर्वशब्दमुख्यवृत्तिविषयत्वं परमात्मन उच्यते 'वचसां वाच्यमुत्तमम्' इति । सर्वशब्दवाच्यत्वे हेतुः सर्वत्रान्तर्यामितया व्याप्तत्वमिति च गीयते 'सर्वं समाप्नोषि ततोऽसि सर्वः' इति । तैत्तिरीयके च सृष्टेषु चेतनाचेतनेष्वन्तर्यामितया स्थितत्वात्तद्वाचिसत्त्यदादिशब्दवाच्यं ब्रह्माभूदित्यन्वाख्यायते 'तदनुप्रविश्य सच्च त्यच्चाभवत्' इति । चेतनाचेतनवाचिनां शब्दानां ब्रह्मणि मुख्यवृत्तत्वं सहेतुकं सूत्रितं च भगवता बादरायणेन 'चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशोऽभाक्तस्तद्भावभावित्वात्' इति । चेतनाचेतनवाचिनां ब्रह्मणि प्रयुक्तानां शब्दानां तत्राभाक्तत्वं मुख्यवृत्तत्वमेव । सत्यन्तर्यामितया तस्मिन् सर्वेषां पदार्थानां नामरूपयोर्भावित्वादिति सूत्रार्थः । इदमेव ब्रह्मपर्यन्तबोधनसामर्थ्यमपर्यवसानवृत्तिरित्युच्यते । विशिष्टशक्तस्य पदस्य विशेषणमात्रेऽवस्थानं ह्यशक्यम् । चिदचिद्वाचिनः शब्दा ब्रह्मण्येव प्रतिष्ठिताः । स्वार्थमात्रेऽपर्यवस्यच्छक्त्या तत्तच्छरीरके ॥ स्मर्यते च सर्वशब्दानां पर्यवसानभूमित्वं परमात्मनः 'नताः स्म सर्ववचसां प्रतिष्ठा यत्र शाश्वती' इति । परमात्मपर्यन्तबोधनसमर्थानामपि पदानां सामर्थ्यभञ्जनेन क्वचित्क्वचिच्चेतनाचेतनमात्रेऽपि प्रयोगो बोध्यः । 'चराचरे'ति सूत्रे भाक्त इति पदच्छेदेनायमर्थो लभ्यते । भङ्क्त्वा प्रयुक्तो भाक्तः । 'यस्यात्मा शरीरं' 'यस्य पृथिवी शरीरं' इत्यादौ च नियतलिङ्कपंकशरीरपदसमानाधिकरणत्वादात्मादिशब्दास्तन्मात्रवाचिनः । व्यधिकरणप्रयोगाच्च । 'दासभूताः स्वतः सर्वे ह्यात्मानः परमात्मनः' इत्यादौ च तथात्वं बोध्यम् ।

ननु सर्वेषां शब्दानां परमात्मपर्यन्तवाचित्वे लौकिकव्युत्पत्ति-प्रकारो विरुध्यते । लोके हि तत्तदर्थमात्रे त त शब्दं व्युत्पादयन्ति शिक्षका, व्युत्पद्यन्ते च बालाः । सत्यम् । अतीन्द्रियत्वात्परमात्मन सत्तोऽपि तत्प्रकारत्वस्यानवगमात्तत्पदार्थमात्रे व्युत्पत्तिर्वेदान्त-ज्ञानरहितानाम् । यदा तु वेदान्तवाक्यैः सर्वेषां पदार्थानां ब्रह्मप्रका-रैकस्वभावत्वमवगम्यते तदा तद्वाचिशब्दानामपि तत्पर्यन्तबो-धकत्वं शक्यावगमम् । यथावस्थितवस्तुस्वरूपावबोधनार्थो हि शब्दः । अत एव त्रय्यन्तविद्याभाणन 'वेदान्तेन व्युत्पत्तिः पूर्यते' इति । किञ्च चेतनाचेतनवाचिनां शब्दानां ब्रह्मपर्यन्तवाचि-त्वमनुमानादपि सिद्ध्यति । प्रपञ्चवाचीनि पदानि ब्रह्मपर्यन्तवाचीनि, निष्कर्षेकेतरत्वे सति तन्मूर्तिवाचित्वात्, यथा रामकृष्णादिपद-मिति विशेषतः । अनिष्कर्षकेतरत्वे सति यन्मूर्तिवाचकं तत्तत्पर्य-न्तवाचकं, यथा देवादिपदमिति सामान्यतो वा । उक्तं च तत्त्वमु-क्ताकलापे—'निष्कर्षाकूतहानौ विमतिपदपदान्यन्तरात्मानमेकं तन्मूर्तेर्वाचकत्वादभिदधति यथा रामकृष्णादिशब्दाः । सर्वेषामाप्तमुख्यैरपि च वचसां शाश्वतेऽस्मिन् प्रतिष्ठा बालै-स्तस्याप्रतीतेर्जगति तदितरैः स्याच्च भङ्क्त्वा प्रयोगः ॥' इति । निरूपिता नाम पदवृत्तिः ।

## वाक्यलक्षणम् ।

योग्यासन्नसाकाङ्क्षपदसमुदायश्च वाक्यम् । घटः पटः स्तम्भः कुम्भः इत्यादि न वाक्यम्, अनाकाङ्क्षत्वात् । गिरिः भुक्तं वह्निमान् देवदत्तेनेत्यादि न वाक्यम् । आसत्तिरहितत्वात् । वह्निना सिञ्चतीत्यादिकं न वाक्यम्, अयोग्यार्थत्वात् । किन्तु वाक्याभास

एव । आकाङ्क्षादिविशिष्टं तु वाक्यं प्रमाणं भवति लौकिकं वैदिकं च । तात्पर्यविषयीभूते चार्थे शब्दस्य प्रामाण्यम् । तात्पर्यं च लौकिकवाक्येषु वक्तुरिच्छाविशेषः । वेदे चापौरुषेयेऽपीश्वरतात्पर्यं सम्भवत्येव । नित्यस्यापि तस्य नित्यभगवच्छासनात्मकत्वात् । तथा च भगवतैवोक्तं 'श्रुतिस्मृती ममैवाऽऽज्ञा यस्तामुल्लङ्घ्य वर्तते । आज्ञाच्छेदी मम द्रोही मद्भक्तोऽपि न वैष्णवः' इति । तथा चोपश्लोक्यते स्म भट्टपराशरपादैः 'आज्ञा ते सनिमित्तनित्यविधयः स्वर्गादिकाम्यद्विधिः सोऽनुज्ञा शठचित्तशास्त्रवशतोपायोऽभिचारश्रुतिः । सर्वीयस्य समस्तशासितुरहो श्रीरङ्गसर्वस्व ते रक्षाकृतनिवेदिनी श्रुतिरसौ त्वन्नित्यशास्तिस्ततः ॥' इति । अत एव विध्यर्थोऽपीश्वराभिप्रायविशेष इष्यते । तथा च भाषितं 'स्वशासनाववोधि शास्त्रं प्रदिश्ये'ति श्रीभाष्ये । 'चोदनालक्षणोऽर्थो धर्मः' इति सूत्रयता जैमिनिना चाज्ञैवेश्वरस्य विध्यर्थ इति समसूचि । तथा च विधिवाक्यस्थले तत्तत्कर्मणस्तत्तत्फलार्थिकर्तव्यत्वप्रकारकेशाभिप्रायविषयत्वमवबुध्य तत इष्टसाधनत्वाद्यनुमानद्वारा तस्य तस्याधिकारिणस्तत्र तत्र कर्मणि प्रवृत्तिरिति प्राप्तम् । कृतिसाध्यताया विध्यर्थत्वं च 'अतो विधिवाक्येष्वपि धात्वर्थस्य कर्तृव्यापारसाध्यत्वं शब्दानुशासनसिद्धमेव लिङादेर्वाच्यमित्यध्यवसीयते' इति श्रीभाष्यसूक्त्यादेरवगम्यते । आज्ञाविषयतया कृतिसाध्यत्वस्य विध्यर्थत्वमिति स्वीकारे च वाक्यद्वयैकार्थ्यं सिध्यति । अपूर्वकार्यस्य लिङार्थतावादश्च निरस्तः श्रीभाष्यादौ । अत एव कार्यान्वित एवार्थे शब्दः प्रमाणमित्यपि न युक्तिमत् । सिद्धरूपे कार्यरूपे वा प्रमाणान्तराबाधिते विशिष्टार्थे शब्दस्य प्रामाण्यं

सुस्थिरम् । प्रमाणान्तराप्राप्ते चार्थे शास्त्रमर्थवत् । क्वचित्प्रमाणान्तरप्राप्तार्थप्रतिपादनं च श्रुतावनुवादरूपं ज्ञेयम् ।

## अतीन्द्रियार्थे शास्त्रस्यैव प्रमाणत्वम् ।

अत्यन्तालौकिके चार्थे शास्त्रमेव प्रमाणम् । न हि युक्त्या केवलाया एकान्ततस्तत्सिद्धिः सम्भवति । दृष्टानुसारिण्यः खलु कल्पना भवन्ति । दर्शनं चानैकान्तम् । यथा—अल्पपरिमाणानामवयवानामिष्टकादीनां समूहेन महत्कार्यं रचितं दृष्टं प्रासादादि, अतोऽत्यल्पपरिमाणाः परमाणव एवान्ततः कार्यद्रव्यसामान्ये भवन्त्युपादानमिति वैशेषिकाः कल्पयन्ति । महतो मृत्पिण्डस्यांशैरनेकैर्घटमणिकादिविविधं कार्यमुत्पन्नं दृष्टम्, अतोऽपरिच्छिन्नं प्रधानमेव विविधविचित्रासदं निखिलं जगत्प्रत्युपादानं भवितुमर्हतीति च साङ्ख्याः । तत्राप्यचेतनानां कारणानां पुरुषाधिष्ठानमन्तरा न कार्यकारित्वं दृष्टं मृद्दण्डचक्रादीनाम् । अतः ईश्वराधिष्ठिता एव परमाणवः कार्यनिष्पादने समर्था इति पूर्वे मन्यन्ते । परार्थैकवेषतयाऽचेतनस्तु स्वत एव प्रवृत्तिः, न चेतनाधिष्ठानमपेक्ष्येति तु परे । निदर्शयन्ति च क्षीरप्रवृत्तिं 'वत्सविवृद्धिनिमित्तं क्षीरस्य यथा प्रवृत्तिरज्ञस्य । पुरुषविमोक्षनिमित्तं तथा प्रवृत्तिः प्रधानस्य ॥' इति । एवं क्षणिकत्वादिसाधिका बौद्धानां युक्त्योऽप्यनुसन्धेयाः । सर्वेऽप्येते केवलया युक्त्या नानास्वभावं नानाजगत्कारणमातिष्ठमाना दरीदृश्यन्ते । एवं कारणविषये तर्काणामनवस्थितत्वं स्थितम् । तथा च सूत्रं 'तर्काप्रतिष्ठानादपि' इति । अतः प्रधानादिस्वरूपं शास्त्रत एव प्रतिपत्तव्यम् । ईश्वरोऽपि विश्वस्य स्रष्टा सर्वज्ञः सर्वशक्तिर्न युक्त्या केवलयैकान्ततः सिद्ध्यति । युगपत्सर्वनिरोधः सर्वोत्पत्तिश्च न हि प्रत्य-

मन्तरा निश्चेतुं शक्येते । कृत्स्नप्रलयानुमानानां 'विमतः कालो न लोकशून्यः कालत्वात् वर्तमानकालवत्' इत्यादिना सत्प्रतिपक्षितत्वात् । असिद्धे च कृत्स्नप्रलये जीवविशेषा एवोपचितपुण्यशालिनो विचित्रार्थसर्जनसामर्थ्यमासाद्य तं तं लोकविशेषं स्रक्ष्यन्तीति कृतमीश्वरेण । किञ्च कार्यत्वं शरीरिकर्मपरवशकर्तृकत्वनियतं दृष्टं घटादाविति क्षित्यादीनामपि तादृशकर्तृकत्वमनिष्टमापादयेत्, शरीरिकर्तृकत्वेन सोपाधिकं वा भवेदिति न तेन क्षित्यादेः कर्तुरीश्वरस्य सिद्धिः । सिद्ध्यन्नपि वाऽनुमानेन निमित्तमात्रं सिद्ध्येत्, नोपादानतयापि । अतोऽभिन्ननिमित्तोपादानभूते परमात्मनि शास्त्रमेव भवति प्रमाणम् । तथा च सूत्रं—'शास्त्रयोनित्वात्' इति ।

## विद्यास्थानानि ।

अपौरुषेयः स्वतःप्रमाणभूतो वेद एवैकं शास्त्रम् । तदर्थोपबृंहणरूपत्वात्स्मृतीतिहासपुराणानामपि शास्त्रत्वमनपेतम् । स च ऋग्यजुःसामाथर्वात्मना चतुर्धा, पुनरनन्तशाखः कर्मब्रह्मपरभागद्वयात्मको भवति । भागद्वयात्मके वेदराशौ विध्यर्थवादमन्त्रात्मना विभागो वाक्यानामवसेयः । तत्र हितानुशासकं वाक्यं विधिः । स च विधानप्रतिषेधरूपेण भवति द्वेधा । 'ज्योतिष्टोमेन स्वर्गकामो यजेते'त्यादिकं तावद्वाक्यं विधानरूपम् । 'न कलञ्जं भक्षये'दित्यादि च प्रतिषेधरूपम् । इष्टसाधनप्रवृत्तेरिवानिष्टसाधनतो निवृत्तेरपि हि हितरूपत्वम् । विधानघटकान्येव च नामधेयानि । स्तुतिनिन्दान्यतरपरं वाक्यमर्थवादः । स च द्वेधा-विधानशेषः प्रतिषेधशेषश्चेति । तत्राद्यो विधेयस्य प्राशस्त्यं प्रतिपादयन् विध्यधीनां प्रवृत्तिमुत्तम्भयति । अन्त्यश्च निषेध्यस्य निन्दितत्वं प्रतिपादयन्नहितान्निवृत्तिं निषेधाधीनां

दृढयति । प्राशस्त्यनिन्दापराणामप्यर्थवादानां प्राशस्त्याद्युपपत्तये स्वार्थेष्वप्यबाधितेषु प्रामाण्यमस्त्येव । यत्र च बाध इव दृश्यते 'आदित्यो यूप' इत्यादौ, तत्रापि औपचारिकार्थप्रतिपादनमुखेन स्तुतिपर्यवसानं मन्तव्यम् । न चात्यन्ताय स्वार्थहानम् । तथा सति बहु बहु वाक्यजातं ह्यनर्थकपदजालात्मकं कण्ठशोषमात्रफलकमापद्येत । अर्थवादानां च विधेयप्राशस्त्यसमर्पणद्वारा विधिवाक्यैकवाक्यतया प्रयोजनपर्यवसानं वर्णितं पूर्वमीमांसायां 'विधिना त्वेकवाक्यत्वात्स्तुत्यर्थेन विधीनां स्युः' इत्यत्र । अयं चोत्सर्गः । ब्रह्ममीमांसायां समन्वयसूत्रे तु 'अपवरके निधिरस्ती'त्यादिवाक्यवत् सिद्धार्थपराणामपि पुरुषार्थावेदकानां वाक्यानां 'आनन्दो ब्रह्म' 'रसो वै सः' इत्यादीनां आत्यन्तापरिच्छिन्नसुखरूपत्वप्रतिपादनपराणां स्वत एव पुरुषार्थपर्यवसानसम्भव उक्तः । अतो न विरोधः । वैदिकानां मन्त्रपदव्यवहारविषयो यो वेदभागः स मन्त्र इत्युच्यते । स चानुष्ठेयार्थप्रकाशनादिना क्रतूपयुज्यते । जपादिना स्वयमपि प्रयोजननिष्पादकत्वमस्त्येव मन्त्राणाम् । अर्थवादोक्तन्यायेन मन्त्राणामपि देवतारूपादौ तात्पर्यमस्त्येव । अन्यथा तत्स्मारकत्वादेश्चानुपपत्तेः ।

वेदश्च षडङ्गो वर्तते । अङ्गानि पुनः शिक्षादीनि । यथाहुः—'छन्दः पादौ शब्दशास्त्रं च वक्त्रं कल्पं पाणी ज्यौतिषं चक्षुषी च । शिक्षा घ्राणं श्रोत्रमुक्तं निरुक्तं वेदस्याङ्गान्याहुरेतानि षट् च ॥' इति । तत्र शिक्षा—वर्णानां स्थानकरणादिप्रतिपादिका । व्याकरणं—पदानां साधुत्वानुशासकम् । छन्दः—गायत्र्यादिलक्षणप्रतिपादकम् । निरुक्तं—वैदिकानामपूर्वशब्दानामर्थप्रतिपादकम् ।

ज्यौतिषं—वेदाध्ययनवैदिकयज्ञाद्यनुष्ठानौपयिककालप्रभृतिनिर्णायकम् । कल्पः—यज्ञादिप्रयोगप्रतिपादकः । वेदस्वरूपस्थितौ तदर्थप्रतिपत्तौ तदर्थानुष्ठाने चैषां यथायथमुपयोगोऽवसेयः ।

धर्मशास्त्रेतिहासपुराणानि तु कर्मब्रह्मभागोपबृंहणरूपाणि वेदार्थस्फुटप्रतिपत्तिसाधनानि । उपबृंहणं नाम अधीतशाखावगतार्थस्यानधीतशाखागतवाक्यार्थप्रतिपादकैर्महर्षिवचोभिर्दृढत्वापादनं वैशद्यसम्पादनं च । महर्षयो हि व्युच्छिन्ना अपि वेदशाखास्तपःप्रभावेन साक्षात्कृत्य सर्ववेदानुगतानर्थान् स्मृत्वा स्मृत्वा ग्रन्थान् प्रणिन्युः । तत्र प्रायशः कर्मभागोपबृंहणं धर्मशास्त्रम् । ब्रह्मभागोपबृंहणभूतानि चेतिहासपुराणानि । न्यायविस्तरस्तु वैदिक्यामर्थप्रतिपत्तौ सहकारिणं तर्कं सपरिकरं निरूपयन्नुपाङ्गतयाऽनुमतः । उक्तं च मनुना वेदार्थनिर्णयसहकारित्वं तर्कस्य—'आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना । यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः ॥' इति । मीमांसा पुनर्वैदिकेषु वाक्येषु प्रसक्तेऽर्थविशेषसन्देहे वाक्यतर्कैरुपक्रमोपसंहारादितात्पर्यलिङ्गसनाथैरर्थविशेषनिर्णयमुपजनयति । तदुक्तं—'धर्मे प्रमीयमाणे तु वेदेन करणात्मना । इतिकर्तव्यताभागं मीमांसा पूरयिष्यति ॥' इति ।

कर्मब्रह्मभागद्वयात्मकवेदाख्यैकशास्त्रविचाररूपतया च पूर्वोत्तरमीमांसयोरैकशास्त्र्यम् । कर्मब्रह्मरूपावान्तरविषयभेदेनावान्तरप्रकरणभेदेऽपि नैकशास्त्र्यस्य क्षतिः । विशिष्टार्थैक्यस्यैकशास्त्र्यप्रयोजकस्य सत्त्वात् । साङ्गसशिरस्कवेदाध्यायी कृत्स्नवेदार्थनिर्णयकामोऽधिकारी । स चाधीतक्रमेण प्रथमं कर्मभागं विचार्यानन्तरं ब्रह्मभागं विचारयतीति नाधिकारिभेदेनापि पूर्वोत्तरमीमांसयोर्भिन्नशा-

स्त्य शक्यम् । भगवता बोधायनमहर्षिणा प्रोक्तम्—'संहितमेत-च्छारीरकं जैमिनीयेन षोडशलक्षणेनेति शास्त्रैकत्वसिद्धिः' इति। यद्यपि द्वादशलक्षण्या जैमिनीयत्वप्रसिद्धिः । देवताकाण्डस्य तु चतुरध्याय्यात्मकस्य काशकृत्स्नीयत्वप्रथा । अथापि काशकृ-त्स्नद्वारा प्रवर्तितत्वात्प्रयोज्यप्रयोजककर्तृतया वा व्यपदेशद्वयमपि निर्वहणीयमित्यन्यत्र विस्तरः । धर्माध्यात्मविद्यास्वरूपप्रतिपत्ति-साधनतयैते विद्यास्थानत्वेनाप्याख्यायन्ते—'पुराणन्यायमीमांसा-धर्मशास्त्राङ्गमिश्रिताः । वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥' इति ।

## स्मृत्यादिप्रामाण्यविचारः ।

तत्र वेदानां स्वतःप्रामाण्यम् । स्मृतीनां तु मूलभूतश्रुत्यनुमा-नद्वारा । प्रत्यक्षश्रुतिविरुद्धार्थायास्त्वन्यथासिद्धत्वेनाप्रामाण्यमेव । यथा—'औदुम्बरी सर्वा वेष्टयितव्या' इति स्मृतिः 'औदुम्बरीं स्पृष्ट्वोद्गायेत्' इति प्रत्यक्षश्रुतिविरुद्धत्वादप्रमाणमेव । निर्णीतश्चा-यमर्थो धर्ममीमांसायां 'विरोधे त्वनपेक्षं स्यादसति ह्यनुमानम्' इति। स्मृतीनां वेदमूलतया प्रामाण्यं सत्सञ्जीवनेऽपि मत्स्यादि—'वेदप्रणिहितो धर्मो ह्यधर्मस्तद्विपर्ययः । वेदो नारायणः साक्षात्स्वयम्भूरिति गीयते ॥ धर्मा वेदेन ये प्रोक्ता ऋषि-भिस्तत्त्वदर्शिभिः । प्रोक्तास्त एव स्मृतिषु प्रमाणं तास्ततः स्मृताः ॥' इति । एवमविगीतशिष्टाचाराणामपि धर्मे प्रामाण्य-मनुष्ठापकत्वलक्षणमस्त्येवेति बोध्यम् ।

पुराणानि पुनः सात्त्विकराजसतामसभेदेन त्रिविधानि । तत्र सात्त्विकेषु पुराणेषु प्रोतानां तत्त्वहितपुरुषार्थानां तादृप्येण वर्णनात्त-

दुपजीविनां निःश्रेयससिद्धिर्निष्प्रत्यूहा । राजसतामसपुराणानामप्यविरुद्धांशेषु प्रामाण्यमनपेतम् । विरुद्धांशेषु तु भ्रान्त्यादिमूलत्वयाऽप्रामाण्यमेव विरोधाधिकरणन्यायेन । तदिदं मात्स्यपुराणे प्रतिपादितम्—'अग्नेः शिवस्य माहात्म्यं तामसेषु प्रकीर्त्यते । राजसेषु च माहात्म्यमधिकं ब्रह्मणो विदुः ॥ सात्त्विकेष्वथ कल्पेषु माहात्म्यमधिकं हरेः । तेष्वेव योगसंसिद्धा गमिष्यन्ति परां गतिम् ॥' इत्यादिना । साङ्ख्ययोगयोरपि प्रकृतिपुरुषविवेकाष्टाङ्गयोगयोः श्रुत्यविरुद्धांशयोः प्रामाण्यम् । स्वतन्त्रप्रधानकारणत्वनिमित्तमात्रेश्वरादिप्रतिपादनांशे तु अप्रमाणत्वमेवेति ब्रह्ममीमांसायां स्थापितम्—'स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात्' 'एतेन योगः प्रत्युक्तः' इत्यादिना ।

## पाञ्चरात्रप्रामाण्यम् ।

पाञ्चरात्रस्य तु भक्तानुकम्पया परमपुरुषप्रणीतत्वात्कार्त्स्न्येन श्रुत्यविरोधाच्च प्रामाण्यमनपेतम् । यथोक्तम्—'पाञ्चरात्रस्य कृत्स्नस्य वक्ता नारायणः स्वयम्' । 'वेदान्तेषु यथा सारं सङ्गृह्य भगवान् हरिः । भक्तानुकम्पया विद्वान् सञ्चिक्षेप यथासुखम् ॥' इति । पाञ्चरात्रस्य प्रामाण्यं च भगवता बादरायणेन मुक्तकण्ठमुक्तं मोक्षधर्मे—'इदं महोपनिषदं चतुर्वेदसमन्वितम् । साङ्ख्ययोगकृतान्तेन पाञ्चरात्रानुशब्दितम् ॥ इदं श्रेय इदं ब्रह्म इदं हितमनुत्तमम् । ऋग्यजुःसामभिर्जुष्टमथर्वाङ्गिरसैस्तथा ॥ भविष्यति प्रमाणं वै एतदेवानुशासनम् ॥' इति । एवं महाभारते मुक्तकण्ठं पाञ्चरात्रस्य प्रामाण्यमभिवदन् भगवान् बादरायणः शारीरके तस्यैवाप्रामाण्यं समर्थयति सेत्यसम्भावनीयमिदम् । अत उत्प-

त्वत्र शङ्क्यम् । भगवता बोधायनमहर्षिणा प्रोक्तम्—'संहितमेतच्छारीरकं जैमिनीयेन षोडशलक्षणेनेति शास्त्रैकत्वसिद्धिः' इति । यद्यपि द्वादशलक्षण्या जैमिनीयत्वप्रसिद्धिः । देवताकाण्डस्य तु चतुरध्याय्यात्मकस्य काशकृत्स्नीयत्वप्रथा । अथापि कारकृत्स्नद्वारा प्रवर्तितत्वात्प्रयोज्यप्रयोजककर्तृतया वा व्यपदेशद्वयमपि निर्वहणीयमित्यन्यत्र विस्तरः । धर्माध्यात्मविद्यास्वरूपप्रतिपत्तिसाधनतयैते विद्यास्थानत्वेनान्वाख्यायन्ते—'पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः । वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥' इति ।

## स्मृत्यादिप्रामाण्यविचारः ।

तत्र वेदानां स्वतःप्रामाण्यम् । स्मृतीनां तु मूलभूतश्रुत्यनुमानद्वारा । प्रत्यक्षश्रुतिविरुद्धार्थापारत्वन्यथासिद्धत्वेनाप्रामाण्यमेव । यथा—'औदुम्बरी सर्वा वेष्टयितव्या' इति स्मृतिः 'औदुम्बरीं स्पृष्ट्वोद्गायेत्' इति प्रत्यक्षश्रुतिविरुद्धत्वादप्रमाणमेव । निर्णीतश्चायमर्थो धर्ममीमांसायां 'विरोधे त्वनपेक्षं स्यादसति ह्यनुमानम्' इति । स्मृतीनां वेदमूलतया प्रामाण्यं सत्साम्प्रदायिकजीवनेऽपि प्रत्यपादि—'वेदप्रणिहितो धर्मो ह्यधर्मस्तद्विपर्ययः । वेदो नारायणः साक्षात्स्वयम्भूरिति शुश्रुम ॥ धर्मा वेदेन ये प्रोक्ता ऋषिभिस्तत्त्वदर्शिभिः । प्रोक्तास्त एव स्मृतिषु प्रमाणं तास्ततः स्मृताः ॥' इति । एवमविगीतशिष्टाचाराणामपि धर्मे प्रामाण्यमनुमापकत्वलक्षणमस्त्येवेति बोध्यम् ।

पुराणानि पुनः सात्त्विकराजसतामसभेदेन त्रिविधानि । तत्र सात्त्विकेषु पुराणेषु श्रौतानां तत्त्वहितपुरुषार्थानां तात्पर्येण वर्णनात्प-

दुपजीविनां निःश्रेयससिद्धिर्निष्प्रत्यूहा । राजसतामसपुराणानामप्यविरुद्धांशेषु प्रामाण्यमनपेतम् । विरुद्धांशेषु तु भ्रान्त्यादिमूलतयाऽप्रामाण्यमेव विरोधाधिकरणन्यायेन । तदिदं मात्स्यपुराणे प्रतिपादितम्—'अग्नेः शिवस्य माहात्म्यं तामसेषु प्रकीर्त्यते । राजसेषु च माहात्म्यमधिकं ब्रह्मणो विदुः ॥ सात्त्विकेष्वथ कल्पेषु माहात्म्यमधिकं हरेः । तेष्वेव योगसंसिद्धा गमिष्यन्ति परां गतिम् ॥' इत्यादिना । साङ्ख्ययोगयोरपि प्रकृतिपुरुषविवेकाष्टाङ्गयोगयोः श्रुत्यविरुद्धांशयोः प्रामाण्यम् । स्वतन्त्रप्रधानकारणत्वनिमित्तमात्रेश्वरादिप्रतिपादनांशे तु अप्रमाणत्वमेवेति ब्रह्ममीमांसायां स्थापितम्—'स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात्' 'एतेन योगः प्रत्युक्तः' इत्यादिना ।

## पाञ्चरात्रप्रामाण्यम् ।

पाञ्चरात्रस्य तु भक्तानुकम्पया परमपुरुषप्रणीतत्वात्कार्त्स्न्येन श्रुत्यविरोधाच्च प्रामाण्यमनपेतम् । यथोक्तम्—'पाञ्चरात्रस्य कृत्स्नस्य वक्ता नारायणः स्वयम्' । 'वेदान्तेषु यथा सारं सङ्गृह्य भगवान् हरिः । भक्तानुकम्पया विद्वान् सञ्चिक्षेप यथासुखम् ॥' इति । पाञ्चरात्रस्य प्रामाण्यं च भगवता बादरायणेन मुक्तकण्ठमुक्तं मोक्षधर्मे—'इदं महोपनिषदं चतुर्वेदसमन्वितम् । साङ्ख्ययोगकृतान्तेन पाञ्चरात्रानुशब्दितम् ॥ इदं श्रेय इदं ब्रह्म इदं हितमनुत्तमम् । ऋग्यजुःसामभिर्जुष्टमथर्वाङ्गिरसैस्तथा ॥ भविष्यति प्रमाणं वै एतदेवानुशासनम् ॥' इति । एवं महाभारते मुक्तकण्ठं पाञ्चरात्रस्य प्रामाण्यमभिवदन् भगवान् बादरायणः शारीरके तस्यैवाप्रामाण्यं समर्थयति सेत्यसम्भावनीयमिदम् । अत उत्प-

स्यसम्भयाधिकरणं पाञ्चरात्रप्रामाण्यसमर्थनपरमेव। वर्णितं चैवमेव श्रीयामुनमुनिभिरागमप्रामाण्ये श्रीभाष्ये च श्रीमद्रामानुजस्वामिभिः। 'साङ्गेषु वेदेषु निष्ठामलभमानः शाण्डिल्यः पाञ्चरात्रतन्त्रमधीतवानि'त्यादिना तत्र प्रतीयमाना वेदनिन्दा च भूमविद्यायामिव नहि-निन्दान्यायेन पाञ्चरात्रप्रशंसायामेव पर्यवस्यति। जीवोत्पत्तिवाक्यैरपि विशिष्टशरीरयोगविषयो नेयः, न तु स्वरूपोत्पत्तिपरः। जीवानां स्वरूपत उत्पत्तेस्तत्रैव निषिद्धत्वात्। यथोक्तं परमसंहितायाम्—'अचेतना परार्था च नित्या सततविक्रिया। त्रिगुणा कर्मिणां क्षेत्रं प्रकृते रूपमुच्यते॥ व्याप्तिरूपेण सम्बन्धस्तस्याश्च पुरुषस्य च। स ह्यनादिरनन्तश्च परमार्थेन निश्चितः॥' इति। 'वासुदेवात्सङ्कर्षणो नाम जीवो जायते, सङ्कर्षणात्प्रद्युम्नसंज्ञं मनो जायते, तस्मादनिरुद्धसंज्ञोऽहङ्कारो जायते' इत्यत्र तु न जीवादीनामुत्पत्तिर्विवक्षिता। किन्तु तत्तदभिमानिव्यूहत्रयप्रादुर्भाव एव। अत श्रुत्यविरोधेन प्रत्यक्षमूलकत्वेन एकायनश्रुतिमूलकत्वेन च प्रामाण्यं पाञ्चरात्रस्याक्षतम्। उक्तं च तत्त्वमुक्ताकलापे—'निर्दोषाम्नायमौलिश्रुतनिखिलजगन्मूलसर्वज्ञमूले हेतुव्यूढे चतुर्धा क्वचिदपि न भवेद्विभ्रमः पाञ्चरात्रे। युक्ता भक्तानुकम्पागरिमसमुदिते विप्रलिप्साऽपि नास्मिन् वेदाच्छैष्ट्योक्तिरर्थस्थितिविशदतया भूमविद्यादिवच्च॥ जीवोत्पत्त्यादिवादो निगमवदिह तन्नित्यतोक्तेश्च साम्यात् जीवाद्याख्यानिरूढिस्त्वभिमतिभिदया स्याच्च सङ्कर्षणादौ। मन्वादेश्चोपजीव्यं हिततममिदमित्यादिकं भारतोक्तं तत्स्याप्यैक्यविकल्पः क्वचिदभिमतवचःस्वशाखायभेदात्॥' इति। याम-

वल्क्यमहर्षिणाऽपि पाञ्चरात्रस्य प्रामाण्यं व्यञ्जितम्—'ओङ्काररथमारुह्य मनः कृत्वा तु सारथिम् । ब्रह्मलोकपदान्वेषी याति विष्णोः परं पदम् ॥ पाञ्चरात्रे तथा ह्येष भगवद्वाचकः स्मृतः ॥' इति ।

भगवतः श्रीहरेरपि पाञ्चरात्रं प्रमाणतयाऽभिमतम् । तथा च सत्सङ्गिजीवने श्रीहरेर्वचनस्य वेदशास्त्रपुराणपाञ्चरात्रागमसिद्धान्तार्थगर्भितत्वं वर्णितमस्ति—'वेदशास्त्रपुराणानां पाञ्चरात्रागमस्य च । सिद्धान्तं पुत्रवाक्यं सा श्रुत्वोवाच पुनः प्रसूः ॥' इति । भगवन्मन्दिरप्रतिष्ठापूजाविधानं पाञ्चरात्रसंहितानुसारि ग्राह्यमिति चोक्तं तत्रैव—'हरेरुपासातन्त्राणि पुरा प्रोक्तानि तेन वै । पञ्चरात्राभिधानानि' इत्यादिना 'एतेष्वन्यतमेनोक्तमाश्रित्य वैष्णवं विधिम् । मन्दिरं तत्प्रतिष्ठां च पूजनं च समाचरेत् ॥' इत्यन्तेन । हरिवाक्यसुधासिन्धौ च साङ्ख्ययोगादिना भगवद्रूपस्य स्फुटाप्रतिपत्तेः पाञ्चरात्रं भगवत्साकारत्वस्य स्फुटप्रतिपादकं भगवतैव रचितमिति वर्ण्यते—'सुबोधं तत्र कृष्णस्य नाभूद्रूपस्य वर्णनम् । पञ्चरात्रं ततश्चक्रे भगवान् नारदात्मना ॥ वासुदेवादिरूपेण चतुर्व्यूहो निरूपितः । तत्र कृष्णस्ततस्तस्याकृतिः स्पष्टं विभाव्यते ॥' इत्यादिना । अतो भगवद्दिव्यसाकारत्वादौ पाञ्चरात्रं प्रमाणमित्यनवद्यम् ।

## सच्छास्त्राष्टकम् ।

अष्टौ पुनः सच्छास्त्राणि विशेषतः समादृतानि श्रीहरिणा । तथा च शिक्षापत्र्यां स्वयमेवोक्तम्—'वेदाश्च व्याससूत्राणि श्रीमद्भागवताभिधम् । पुराणं भारते तु श्रीविष्णोर्नामसहस्रकम् ॥

तथा श्रीभगवद्गीता नीतिश्च विदुरोदिता । श्रीवासुदेवमाहात्म्य स्कान्दवैष्णवखण्डगम् ॥ धर्मशास्त्रान्तर्गता च याज्ञवल्क्यऋषेः स्मृति । एतान्यष्ट ममेष्टानि सच्छास्त्राणि भवन्ति हि ॥' इति। भगवत्स्वरूपरूपादिसत्यत्वप्रतिपादकानि भवन्ति सच्छास्त्राणि । उक्तं च सच्छास्त्रलक्षणं सत्सङ्गिजीवने—'स्थापिते येषु कृष्णस्य साकारत्वविशुद्धते । सच्छास्त्राणि तु तान्येव वेदार्थानुसृतानि हि ॥' 'मूर्तयश्चावताराणां श्रीविष्णोः प्रतिपादिताः । श्रीरामकृष्णमुख्यानां यत्र सच्छास्त्रमेव तत् ॥' इति ।

अतीन्द्रियेष्वर्थेषु वेदानामेव स्वतः प्रमाणतया स्मृत्यादिमूलतया च त एव सच्छास्त्राष्टके प्रमाणतमत्वेन प्रथमं परिगणिता । वेदान्ततात्पर्यसिद्धपरमपुरुषसगुणत्वसाकारत्वनिर्णायकतया शारीरकसूत्राण्यपि अभिमतानि विशेषतः । स्वाभिमतपारमहंसधर्मप्रतिपादकत्वाद्भगवद्भक्तिरसपरिपोषकत्वाच्च पुराणेषु श्रीमद्भागवतमत्यन्ताभिमतम् । विष्णोर्नामसहस्रकस्य 'यानि नामानि गौणानि' इत्युक्तरीत्या भगवत्कल्याणगुणगणप्रतिपादकत्वेन गुणानुभवपरिकरतया पाठमात्रेण सकलपुरुषार्थसाधकतया चात्यन्ताभिमतत्वम् । महाभारतसारत्वात् वेदान्ततात्पर्यविषयपरमतत्त्वस्फुटप्रतिपादकत्वाच्च भगवद्गीताया विशेषतः समादृतता । महानिष्ठविदुरप्रवक्तृकतया धर्मपरतया च विदुरनीतेरादरणीयता । अक्षरधामाधिपतेः श्रीपुरुषोत्तमस्य याथात्म्यस्य स्फुटप्रतिपादनाद्वासुदेवमाहात्म्येऽत्यन्ताभिमतिः । स्मृतिषु याज्ञवल्क्यस्मृतेर्ब्रह्मविदग्रेसरयाज्ञवल्क्यमहर्षिप्रवक्तृकत्वात् अध्यात्मतत्त्वविचारबाहुल्याच्चादृतत्वं विशेषत इति बोध्यम् ।

श्रीहरेर्बहुमानप्रयोजकस्तत्र तत्र विशेष उपपादितश्च शिक्षापत्रीभाष्ये। यथा—"तत्र वेदानां जानतामजानतां शुभावहत्वं मातृवत्प्रियहितपरता चेति विशेषः। निखिलवेदतात्पर्यविषयस्य परस्य ब्रह्मणो निर्णायकत्वं व्याससूत्रे विशेषः। ब्रह्मप्राप्त्युपायभूतभक्तिप्रकाशनपौष्कल्यं भागवते विशेषः, विशिष्यभागवतधर्मावबोधत्वं च। भारते विष्णुनामसहस्रस्यायं विशेषः सकलपुरुषार्थसम्पादकत्वाद्भुतमलघुतरोपायत्वम्। भगवन्मुखारविन्दविनिर्गलितत्वं सर्वोत्कृष्टप्रपत्त्युपायपरता च गीतायां विशेषः। वक्तृवैलक्षण्यं धर्मपरता चेति विदुरनीतौ विशेषः। परब्रह्मभूतदेवताविशेषप्रतिपत्तिर्वासुदेवमाहात्म्ये विशेषः। अध्यात्मविचाराधिक्यं स्मृत्यन्तरतो याज्ञवल्क्यस्मृतेर्विशेषः, स्मर्तो च याज्ञवल्क्यो ब्रह्मविदामग्रेसरः" इति।

महत्यस्मिन्नौद्धवे संप्रदाये प्रमाणग्रन्थत्वेन स्वेनात्यन्तं मानितानां सच्छास्त्राणां यथाशक्ति यथाधिकारं च श्रवणादिकमवश्यकर्तव्यत्वेन स्वशिष्यान् प्रत्यादिश्यते श्रीहरिणा तत्रैव—'स्वहितेच्छुभिरेतानि मच्छिष्यैः सकलैरपि। श्रोतव्यान्यथ पाठ्यानि कथनीयानि च द्विजैः॥' इति। सत्सङ्गिजीवने च सच्छास्त्राणामभ्यासस्याऽऽवश्यकतोक्ता—'धर्माधर्मौ साध्वसाधू न्यायान्यायौ च तत्त्वतः। कृष्णस्वरूपतद्भक्ती बुद्ध्यन्ते शास्त्रतः सतः॥ अवश्यमेव कर्तव्यः सच्छास्त्राभ्यास आदरात्। स्वस्वबुद्ध्यनुसारेण भवद्भिर्मदुपाश्रितैः॥ नैर्गुण्यस्थितिमाप्यापि न सच्छास्त्राणि सन्त्यजेत्। सद्ग्रन्थवर्जनात्सिद्धा अपि जाड्यं व्रजन्ति यत्॥ उत्साहशक्तिभङ्गश्च कृष्णभक्तौ ततो भवेत्। बुद्धिमोहश्च

शैथिल्यं श्रद्धाया अपि जायते ॥' इति । तत्रैव सत्सङ्गिशब्द-निर्वचनेऽपि सत्सु शास्त्रेषु श्रवणपठनादिरूपः सङ्गोऽवश्यं करणीय इति प्रतिपाद्यते । तथाहि सत्सङ्गिशब्दो निरुच्यते—'सच्छब्देन परब्रह्म साधवश्च तदाश्रिताः । प्रोक्तास्तदीयो धर्मश्च शास्त्रं चैतत् त्रिकाश्रयम् ॥ सच्छब्दवाच्यमेतच्च त्रितयं यत्र वर्णितम् । स्यात्तत्सच्छास्त्रमुदितं संक्षिप्तं याऽपि विस्तृतम् ॥ वेदाः श्रीमद्भागवतं नीतिश्च विदुरोदिता । विष्णोर्नामसहस्रं च गीता भागवती तथा ॥ शारीरकाख्यसूत्राणि याज्ञवल्क्यस्मृतिस्तथा । श्रीवासुदेवमाहात्म्यमिति तज्ज्ञेयमष्टकम् ॥ येऽनुसृता भवेयुश्च सद्ग्रन्था एतदष्टकम् । तेऽपि सच्छास्त्रमित्युक्ता मुमुक्षूणा हितावहाः ॥ सतः शास्त्रस्य सङ्गस्तु कृष्णभक्त्यादिपुष्टये । श्रवणं कीर्तनं प्रीत्या पाठनं श्रावणं तथा ॥ एतेषां हि सतां सङ्गो येषामीदृग्भवेद्भुवि । सत्सङ्गिनस्ते कथिताः सम्प्रदाये इहोद्धवे ॥' इति । वेदस्य नित्यं सहार्थेनाभ्यसनीयत्वं च प्रतिपाद्यते तत्रैव नैष्ठिकवर्णिधर्मनिरूपण-प्रसङ्गे भगवता—'वेदाभ्यासः प्रकर्तव्यः प्रत्यहं ब्रह्मचारिणा । नारायणात्मको वेदो यतः प्रोक्तः सनातनः ॥ माहात्म्याति-शयज्ञानं हरेर्वेदार्थबोधनम् । विना नैव भवेत्तस्माच्चिन्त्योऽर्थस्तस्य चादरात् ॥' इति ।

सच्छास्त्राष्टके शारीरकसूत्राणां बृहदारण्यकाद्युपनिषदर्थविचार-रूपत्वम्, गीतायाश्चोपनिषदर्थोपबृंहणरूपत्वम् । तस्यार्थनिरूपणपराश्चोपनिषदः । यद्यपि सर्वे वेदाः परमात्मनमेव परमतत्त्व-भूतं तत्तदिन्द्रादिदेवतान्तर्यामितया तत्तत्कर्मसमाराध्यतया तत्तत्क-

र्मफलप्रदातृतया च प्रतिपादयन्ति। तथा च श्रुतिः—'सर्वे वेदा यत्पदमामनन्ति' 'सर्वे वेदा यत्रैकं भवन्ति' इति। गीतायां च स्वयमेवोक्तम्—'वेदैश्च सर्वैरहमेव वेद्यः' इति। भागवते च 'नारायणपरा वेदाः' 'वासुदेवपरा वेदाः' इति। अथापि साक्षाद्भगवत्प्रतिपादकत्वमुपनिषदां विशेषः। उप निषीदन्तीति ह्युपनिषदः समीपे तिष्ठन्ति, साक्षाद्ब्रह्म प्रतिपादयन्तीति यावत्। उपनिषदां च शारीरकसूत्रभगवद्गीतान्वितानां श्रवणात् ज्ञाननिष्ठोदयः सम्भवतीत्युच्यते हरिवाक्यसुधासिन्धौ—'बृहदारण्यमुख्यानां तथोपनिषदां श्रुतेः। गीताशारीरकादेश्च ज्ञाननिष्ठोदयो भवेत्॥' इति।

तत्र श्रीशारीरकमीमांसायाः श्रीमद्भगवद्गीतायाश्च भगवद्रामानुजाचार्यकृतभाष्यसहितायाः स्वाभिमतत्वं भाष्यद्वयस्याप्यध्येतव्यत्वं उभयाध्ययनेऽशक्तस्यापि श्रीभगवद्गीताभाष्याध्ययनावश्यकत्वं च वर्णितं भगवता सत्सङ्गिजीवने—'तत्रापि भगवद्गीता तथा शारीरकाणि च। इति रामानुजाचार्यभाष्योपेतं मतं द्वयम्॥ एतदभ्यासतो बुद्धिः कृष्णभक्त्यैव वासिता। भवेत्ततोऽन्यशास्त्राद्यैर्न पतेदौद्भवाध्वतः॥ अशक्तो द्वाविमौ ग्रन्थावध्येतुं यः स सर्वथा। गीतां रामानुजाचार्यभाष्योपेतां पठेन्नरः॥' इति। शिक्षापत्र्यामप्युक्तं स्वयमेव—'शारीरकाणां भगवद्गीतायाश्चावगम्यताम्। रामानुजाचार्यकृतं भाष्यमाध्यात्मिकं मम॥' इति। अत्र टीका—'अत्र स्वाभिमतभगवत्साकारत्वस्य सप्रपञ्चं प्रतिपादितत्वादिदमेवास्मदध्यात्मज्ञानशास्त्रमिति भवद्भिरप्येतदध्येतव्यं श्रोतव्यं चेति भावः' इति। अत्र 'भगवतो रामानुजमुनेराचार्यान्तर्निर्देशात् आत्मीयान् प्रत्याचार्यकोटाववश्यस-

नुसरणीयता व्यज्यते' इति श्रीरघुवीराचार्यविरचितं भाष्यम्। तथा हि हरिवाक्यसुधासिन्धौ भगवता गुरुपरंपरायां सम्प्रदायप्रवर्तकस्य स्वगुरो रामानन्दस्वामिन उद्धवावतारस्य गुरुत्वेन श्रीरामानुजाचार्यो वर्णितः 'सम्प्रदायस्तथाऽभीष्टग्रन्था गृहिसतां नृपा। इष्टदेवश्चेति सम्यक् बोध्य सत्सङ्गिपूरुषैः॥ तत्राद्य सम्प्रदायस्तु स्वगुरूणां परम्परा। गुरुस्तत्रादिमो ज्ञेय उद्धवोऽध्वप्रवर्तनात्॥ बोध्य स रामानन्दो हि कृष्णार्पितगुरुत्वधूः। स्वामिनस्तस्य च ज्ञेयः साक्षाद्रामानुजो गुरुः॥ श्रीरङ्गाख्ये महाक्षेत्रे समाधौ स गुरोस्ततः। प्राप्तवान् वैष्णवीं दीक्षां तस्य शिष्यो भवाम्यहम्॥ मयाऽयोध्याप्रसादे च रघुवीरे सुते स्विका। धर्मवर्त्मेऽस्ति निहिता गुरुतेति गुरुक्रमः॥' इति। सत्सङ्गिजीवनादौ विस्तरोऽनुसन्धेयः। अत्रापि सम्प्रदायपरिचये स्फुटीभविष्यति।

## रामानुजग्रन्थानां सम्मान्यत्वम्।

सम्प्रदाये चास्मिन् तत्त्वज्ञानसम्पादनार्थतया श्रीरामानुजाचार्यकृता एव ग्रन्थाः समादृताः। तथाहि रामानन्दस्वामिना श्रीहरेर्जनकं धर्मदेवं दीक्षयित्वोक्तम्–'जीवमायापरेशानां स्वरूपं बोद्धुमञ्जसा। रामानुजाचार्यकृता ग्रन्थाः पाठ्यास्त्वयाऽऽदरात्॥ नैपुण्यं लक्ष्मणार्यस्य यतो ज्ञानाशनिर्णये। यथाऽस्ति न तथाऽन्येषां इत्येते सम्मता मम॥' इति। सोऽपि तथाऽकरोदित्युच्यते– 'ग्रन्थान् रामानुजाचार्यकृतान् गुर्वाज्ञया स च। पपाठ गीताभाष्यादीन् पाठयामास चादरात्॥' इति। श्रीहरिं प्रत्यप्यादिष्टं श्रीरामानन्दस्वामिना–'अध्यात्मज्ञानसिद्ध्यै तु

रामानुजकृता मया । ग्रन्थाः संस्थापिताः सन्ति कृष्णोपासनपोषकाः ॥ अतो रूपाणि निश्चेतुं जीवमायापरात्मनाम् । रामानुजाचार्यकृतभाष्यादि त्वं प्रवर्तयेः ॥' इति । श्रीहरिणा च भेदाभेदश्रुतीनामविरोधेनार्थोपन्यासपूर्वकमुक्तम्—'श्रीमद्रामानुजाचार्यैरयमर्थः सविस्तरम् । निर्णीतोऽस्ति महाभाष्ये सङ्क्षेपात्स मयोदितः ॥' इति । श्रीभाष्ये च स्वस्यात्यादरः श्रीहरिणा प्रदर्शितः । यथोच्यते—'श्रीभाष्येण सहैवासौ व्याससूत्राणि तत्र च । अपराह्णेऽन्वहं राजन् शुश्राव परया मुदा ॥ रामानुजाचार्यकृतिं प्रशंसंस्तत्कथां हरिः । तिथौ धनत्रयोदश्यां समाप्याऽऽर्चच्च वाचकम् ॥' इति । श्रीरामानुजस्वामिनोऽभिमताः—जीवमायापरेशानां वास्तविको भेदः, अक्षराधिपतेः श्रीपुरुषोत्तमस्य दिव्याकारवत्त्वं, दिव्यविभूतिमत्त्वं, दास्यभावेन तस्योपासना चेतीमेऽर्थाः भगवता स्वीकृताः । तथा च हरिवाक्यसुधासिन्धौ वचनानि—'विशिष्टाद्वैतसिद्धान्तो मतो रामानुजेन तु । जीवेशमायाभेदश्च तात्त्विको न तु कल्पितः ॥ आकारो वैभवैश्वर्यं दिव्यं भगवतस्तथा । दास्येनोपासना तस्य कार्या जीवैः सदेति च ॥ रामानुजाचार्यमतश्चोपास्यः पुरुषोत्तमः ॥' इति । किं बहुना शिक्षापत्र्यां मुक्तकण्ठं चोक्तम्—'मतं विशिष्टाद्वैतं मे' इति । अस्य च टीकायां शतानन्दमुनिविरचितायाम्—'द्वैताद्वैत-शुद्धाद्वैत-विशिष्टाद्वैतादीनि मतानि प्रसिद्धानि सन्ति तत्र विशिष्टाद्वैताख्यं श्रीरामानुजाचार्यप्रवर्तितं मतं मे मतमस्तीति ज्ञेयम् । एतेन स्वसम्प्रदायस्य श्रीरामानुजसम्प्रदायमूलकत्वमपि सूचितम्' इति वर्णितम् । किञ्च श्रीहरिणा शिवरामं विप्रं प्रति

स्वगुरो रामानन्दस्वामिनो वृत्तकथनावसरे प्रतिपादितम्—'बाह्यं श्रीवैष्णवाचार्यैलिङ्गं सोपद्रव तत । हित्वा शास्त्रानुसारेण नवीन तदकल्पयत् ॥ रामानुजकृतान् ग्रन्थास्त्वध्यात्मज्ञान-सिद्धये । तानेव रक्षन् भगवद्धर्मं प्रावर्तयत्पुन ॥' इति'। एतेन प्रद्वेषिश्रीवैष्णवलोककृतोपद्रवकारणात् बाह्यलिङ्गमात्रस्य श्रीरामानुजसम्प्रदायसिद्धस्य सच्छास्त्रानुसारि परिवर्तन कृतमिति सिद्ध्यति । अतो निरुक्तवचनानुसाराद्देशकालाद्यनुसारेण बाह्य-चिह्नेषु ऊर्ध्वपुण्ड्रादिषु मनाग्भेदेऽपि न सिद्धान्तितार्थतत्त्वेषु भाग वते च धर्मे भेद इत्यनुसन्धेयम् । अन्यथा त्वन्यैरप्यनेकैर्वचनैः सह विरोधः प्रसज्येतेति । अत एव 'विशिष्टाद्वैतमतधृत् 'रामा नुजकृतग्रन्थश्रुतिपाठप्रवर्तक' इत्यादीनि मङ्गलानि नामानि पठ्य ते श्रीहरे । एतेन श्रीरामानुजसिद्धान्तादन्य एवाय सिद्धान्तः श्रीहरिणा प्रवर्तित इति प्रवादस्य नावसर इति स्थितम् ।

## साम्प्रदायिकग्रन्थविवरणम् ।

' भगवदादेशरूपा शिक्षापत्री, भगवद्दिव्यलीलाचरितादिप्रति-पादक सत्सङ्गिजीवन, नानाशास्त्रार्थसारगर्भभगवद्दिव्यसूक्तयमृत-मयो हरिवाक्यसुधासिन्धुरितीमे ग्रन्था प्रमाणतयोपादेयाः सम्प्रदायेऽस्मिन् । यत इमे स्वयमेव सम्पादिता भगवता । एतेषां च वेदादिसच्छास्त्रसारार्थप्रतिपादकतया प्रामाण्यमनपायम् ।

शिक्षापत्र्यास्तावत् वेदादिसच्छास्त्रसाररूपत्वमुक्त तत्रैव—'सच्छास्त्राणा समुद्धृत्य सर्वेषा सारमात्मना । पत्रीय लिखिता नृणामभीष्टफलदायिनी ॥' इति । सत्सङ्गिजीवने चोक्तम्—'सच्छास्त्राणा स सर्वेषां सारमाकृष्य सद्धिया । लिलेख

'पत्रिकां स्वामी सद्धर्मं स्थापयन्भुवि ॥' इति । इयं च शिक्षापत्री महाभारतसारभूता गीतोपनिषदिव सत्सङ्गिजीवनाख्यमहाशास्त्रसाररूपा वेद्योपादेयपरिहरणीयविवेकस्फुटप्रतिपादिका सकलजनोपसेव्या नाम ।

सत्सङ्गिजीवनं च महाभारतादिवद्धर्मज्ञानवैराग्यभक्त्यादिप्रतिपादकं शतानन्दमहर्षिप्रणीतं सच्छास्त्रानुसारित्वात्प्रमाणमेव । तथा च वचनम्—'वेदशास्त्रपुराणानां साररूपं परम्' इति । सच्छास्त्रसिद्धान्ततत्त्वावबोधकत्वं च तत्रैव व्यक्तम्—'धर्मज्ञानविरक्तीनां भक्तेश्चावगमाय च । ग्रन्थं कर्ता शतानन्दो मच्चरित्रोपबृंहितम् ॥ सिद्धान्तं सर्वशास्त्राणां तेन ज्ञास्यन्ति मच्छ्रिताः ॥' इति ।

कर्ता च शतानन्दो 'वेदशास्त्रपुराणज्ञः पञ्चरात्रार्थकोविदः' इत्यादिना सर्वशास्त्रार्थज्ञानीति विशेष्यते । किञ्च चतुर्मुखेन महर्षेर्वाल्मीकेर्यथाऽनुग्रहो विहितः रहस्यं वा प्रकटरूपं वा यद्रामचन्द्रस्य चरितं तत्सर्वं धर्मवीर्येण त्वं द्रक्ष्यसि, येन तच्चरित्रवर्णने त्वदीये न काप्यन्यथाशङ्काया अवसरो भवेदिति, एवं श्रीहरिणैव स्वीयानि दिव्यलीलामानुषचेष्टितानि वर्णयितुमुत्सुकस्य शतानन्दमुनेरनुग्रहो विहितः—'यथाश्रुतं यथादृष्टं चरितं मम वर्णय । ज्ञानं त्रैकालिकं बुद्धौ भवत्येव तवानघ ॥ मनःस्थान्यभिप्रायान् सर्वेषां वेत्स्यसि ध्रुवम् । न ते त्वविदितं किञ्चिद्भविताऽतिप्रियोऽसि मे ॥' इति । अतो वक्तुराप्ततमत्वान्न तत्कृते शास्त्रेऽस्मिन् कुत्रचिदतिशङ्काया अवसरः ।

हरिवाक्यसुधासिन्धुग्रन्थोऽपि तेनैव मुनिना विरचितः सर्वसच्छास्त्राविरुद्धस्तदभिमतार्थप्रतिपादक एव। 'सच्छास्त्रैः सम्मितानि च' 'सच्छास्त्रैः सम्मानित' इत्यस्य विशेषितत्वात्। यत्रैष तत्र तत्र शास्त्रप्रमाणैरेव निर्धार्यायमर्थ उच्यते न स्वबुद्धिमात्रकल्पनयेति श्रीहरिणैव प्रतिपादितत्वाच्च। यथा 'मया मतानामष्टानां सच्छास्त्राणामपि स्फुटम्। अयमेवाशयोऽस्तीति बुद्धिमद्भिर्विभाव्यताम्॥' इति। अतो वेदादितात्पर्यानुसार्येव सिद्धान्तः श्रीहरिणा प्रवर्तित न स्वतन्त्र इति सुस्थिरमेतत्। 'सच्छास्त्रव्यसन' 'निगमाद्यष्टसच्छास्त्रातिरुचि' 'सच्छास्त्रानुगतप्रज्ञ' 'सर्वसच्छास्त्ररसदोहन' इत्यादीनि श्रीहरेर्मङ्गलानि नामानि चामुमर्थमुपोद्बलयन्ति। तदेवं वेदादीनां तदविरुद्धतत्तात्पर्यविषयार्थप्रतिपादकानां सत्सङ्गिजीवनादिसाम्प्रदायिकग्रन्थानामपि प्रामाण्यमक्षतम्। भगवता स्वयमेव सम्पादितेभ्यो मूलभूतेभ्यो ग्रन्थेभ्यो विरुद्धार्थप्रतिपादकास्तदनभिमतविविधविचित्रार्थकल्पनामया पाश्चात्या निबन्धास्त्वप्रमाणमेव विरोधाधिकरणन्यायेन। अविरुद्धार्थप्रतिपादकास्तु भगवदभिमतार्थविवरणपराः पाश्चात्या अपि प्रबन्धाः प्रमाणभूता एवेति ध्येयम्॥

वेदादिसच्छास्त्रगणं च मूलं प्रबन्धजातं परिपोषकं च।
रामानुजाचार्यकृतं स मेने स्वसम्प्रदायस्य हरिस्तु साक्षात्॥
अतो विशिष्टैक्यमतावलम्बि वेदादिसारार्थमय निबद्धम्।
प्रबन्धजातं हरिसम्मतं च प्रमाणमेवेति विभावनीयम्॥

इति शब्दपरिच्छेदः।

---

प्रत्यक्षमनुमानं च शब्दश्चेति समासतः।
प्रमाणं त्रिविधं मेयसिद्ध्यर्थमिह वर्णितम्॥

यन्न्यायपरिशुद्ध्यादौ विस्तरेण प्रपञ्चितम्।
प्रायस्तदत्र सङ्क्षेपाद्वर्णितं सुग्रहाय तु॥

प्रत्यक्षमेकं चार्वाकाः प्रमाणमभिमेनिरे।
नैतावता लोकयात्रा निर्व्यूढा सकला भवेत्॥

अज्ञातमर्थजातं हि बुद्ध्वाऽऽप्रोक्तवचस्ततः।
असंशयं प्रवृत्तश्च लभतेऽर्थं यथोदितम्॥

न हि वाक्यात्संशयात्मा बोधो भवति शृण्वतः।
अतः संशयमूलैव प्रवृत्तिरिति दुर्भणम्॥

अज्ञातार्थज्ञापकत्वाच्छब्दस्येत्थं प्रमाणता।
एवमेवानुमानस्य प्रामाण्यमपि सुस्थितम्॥

ततोऽपि भूयसी लोके साध्यस्य प्रमितेः खलु।
अविसंवादिनी चैव प्रवृत्तिः परिदृश्यते॥

गुरोर्ज्ञानानुमानाद्धि शिष्यस्तमुपसर्पति।
वदान्यत्वानुमानाच्च प्रभुं लोकोऽनुधावति॥

न साध्यसम्भावनया प्रवृत्तिरिति युज्यते।
अदृष्टेर्नास्तिता ह्येव निश्चीयेत भवन्मते॥

यावद्व्याप्यस्य लिङ्गस्य पक्षे न ग्रहणं भवेत्।
तावत्सामान्यधर्मस्य ज्ञानात्स्यात्संशयः पुनः॥

व्याप्यस्य पक्षे सद्भावो यदा स्यात्तु विनिश्चितः।
साध्यनिर्णयरूपा तु स्यादेवानुमितिस्तदा॥

न चानुमानं लिङ्गस्य दर्शनाल्लिङ्गिनः स्मृतिः ।
पक्षसम्बन्धवत्तया अपूर्वाया ग्रहो यतः ॥
एवं पदार्थसंसर्गरूपापूर्वार्थनिर्णयात् ।
शब्दस्यापि प्रमाणत्वं ज्ञायमानस्य सम्भवेत् ॥
न चैवमनुमानत्वं शब्दस्य स्यात्तु लिङ्गवत् ।
ज्ञायमानतयाऽपूर्ववाक्यार्थस्य प्रमापणात् ॥
लिङ्गे ज्ञापकतार्थं हि सम्बन्धान्तरमिष्यते ।
अविनाभावघटकं शब्दे नैवमपेक्ष्यते ॥
किन्तु बोधकतैवास्य स्वभावः परिकल्पितः ।
किञ्चानुमानसामग्री व्याप्त्यादिज्ञानगर्भिता ॥
अन्या तु शाब्दसामग्री योग्यताद्यादिगर्भिता ।
तस्मात्पृथक्प्रमाणत्वं शब्दस्येति तु साम्प्रतम् ॥
अतः प्रमाणत्रितयं माननीयं मनीषिभिः ।
लोकयात्रोपयोगित्वादिति विस्तरतस्त्वलम् ॥

इति मानमेयप्रकाशिकायां प्रमाणप्रकाशः ।



# प्रमेयप्रकरणम्



प्रत्यक्षमनुमानं च शास्त्रं च विविधागमम् ।
यस्यावबोधनार्थानि प्रमेयं तत् प्रचक्ष्महे ॥

## प्रमेयलक्षणं तद्विभागश्च ।

प्रकृष्टा मितिः प्रमा । प्रकर्षश्च मितौ याथार्थ्यलक्षणः । तथाविधमिति विषयः पदार्थः प्रमेयं सत् वस्तु इति चोच्यते । सविशेषमेव तु सर्वं वस्तु । इदमित्थमिति प्रतीतेः । ननु–स्यान्नाम धर्मेण धर्मी सविशेषः, धर्मस्तु कथम्? धर्मान्तरेण तस्यापि सविशेषत्वेऽभ्युपगम्यमाने ह्यनवस्था स्यात् । मैवम् । धर्मेण धर्मी सविशेषो धर्मिणा च धर्मः । विशेषो हि व्यावर्तकः । यथा शुक्लादिरूपं स्वाश्रयं पीताद्याश्रयतो व्यावर्तयति, एवं धर्म्यपि घटादिः स्ववृत्तिरूपादिकमन्यनिष्ठाद्रूपादेर्व्यावर्तयतीति । तदिदं द्विविधं प्रमेयं द्रव्यमद्रव्यं चेति ।

## प्रमेयविभागपरिशीलनम् ।

भावाभावभेदतोऽस्य द्वैविध्यमाहुर्वैशेषिकाः । तन्न सम्यक् । अभावस्य भावान्तररूपत्वात् । समर्थितं चैतत्सूत्रकृतैव–'असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषाद्युक्तेः शब्दान्तराच्च' इति । स्थूलत्वविरोधिसूक्ष्मत्वलक्षणधर्मान्तरेण जगतोऽसत्त्वव्यपदेशो वाक्यशेषादिबलादित्यर्थः ।

यदपि भावस्य षोढा विभजनं द्रव्यगुणकर्मसामान्यविशेषसमवायभेदात्, तदपि समवायदूषणेनैव दूषितप्रायम् । तथा च सूत्रं–'समवायाभ्युपगमाच्च साम्यादनवस्थितेः' इति । अयु-

वसिद्धानां धर्माणां विशिष्टबुद्धिनियामकतया हि समवाय-सम्बन्धः कल्प्यते, तस्यापि तथात्वात् तद्विशिष्टबुद्धिनियामकतया सम्बन्धान्तरं कल्प्यमित्यनवस्था स्यादित्यर्थः । अथ चेन्मनुषे पृथक्सिद्धानामेव विशिष्टबुद्धेर्निर्वाहाय सम्बन्धान्तरापेक्षा न तु अपृथक्सिद्धस्य समवायस्य, अस्य तु स्वरूपमेव सम्बन्धो भविष्यतीति । यद्येवं, तर्हि व्यर्था समवायकल्पना । रूपादीनामेवापृथक्सिद्धविशेषणानां तुल्यन्यायेन विशिष्टबुद्धिनियामकत्वोपपत्तेः । नहि निपुणं निरूपणेऽपि शुक्लो घट इत्यादौ विशेषणस्वरूपातिरिक्तसम्बन्धप्रतीतिः । किञ्च समवायाख्यं चेद्गुणगुण्यादीनां सम्बन्धान्तरं कल्प्यते तर्हि विषयविषयिणोरपि स्वरूपापेक्षयाऽतिरिक्तं विषयत्वविषयित्वादिकं कल्पनीयं प्रसज्यते न्यायसाम्यात् । उक्तं च तत्त्वमुक्ताकलापे—'बन्धं नाध्यक्षयामः समधिकमपृथक्सिद्धयोस्तत्स्वरूपात् कल्प्ये तस्यातिरेके तदुपरि च तथेत्यप्रकल्प्याऽनवस्था । ताभ्यामेष स्वभावात् घटित इति कृता भक्तिरस्त्वेतयोस्ते नो चेज्ज्ञानादिकानां विषयविषयिताद्यापतेदन्यदेयम् ॥' इति ।

अनवस्थापादकं समवायं दूषयता सूत्रकृतस्तादृशविशेषाद्यभ्युपगमेऽपि दूषणमभिप्रेतम् । तथाहि—नित्यद्रव्याणां मिथो व्यावर्तकतया हि विशेषाः कल्प्यन्ते, तेषां मिथो व्यावृत्तये च विशेषान्तराणि स्वीकरणीयानि, तेषां च तथेत्यनवस्था तदवस्था । यदि विशेषाणां स्वतो व्यावृत्तत्वस्वभावः कल्प्यते, तदाश्रयाणामेव तथा स्वभावः किं न कल्प्येत ? । 'धर्मिकल्पनातो वरं धर्मकल्पने'ति हि नीतिविदः । भवदभिमतैः पृथक्त्वैरेव वा व्यावृत्तबुद्धिः सेत्स्य-

तीति विशेषकल्पना निर्विशेषा। पृथक्त्वत्वलक्षणैकजातिक्रोडीकृतत्वेन तेषां न व्यावर्तकत्वमिति चेत् तुल्यमव्यावर्तकत्वं विशेषाणामपि प्रसज्यते, विशेषत्वलक्षणैकोपाधिक्रोडीकृतत्वात् । वस्तुतो जातिगुणावस्थादिभिरेव पदार्थानां मिथो व्यावृत्तिः सेत्स्यति यथायथमिति व्यर्थो विशेषः ।

किञ्च—येषां नित्यद्रव्याणां व्यावर्तनाय विशेषाः कल्प्यन्ते कानि तानि । न तावत्परमाणवः । सर्वेषां भूतादीनां प्रकृतिकार्यत्वेन जगदुपादानभूतानां तेषामसिद्धेः । पृथिव्यादिसूक्ष्मांशभूतानां च नित्यद्रव्यत्वाभावात् । नाप्याकाशकालदिगात्ममनांसि । तत्राकाशं तावन्न नित्यम् । कार्यस्य च स्वकारणभेदादेव व्यावृत्तिसिद्धिः । नित्यत्वेऽपि स्वासाधारणधर्मादेव तथा च । न तस्यावान्तरभेदः येन मिथो व्यावर्तनाय विशेष आवश्यको भवेत् । नापि दिगिति विभु तत्त्वान्तरम् । तत्तद्दिगुपाधीनां उदयाचलास्ताचलसुमेरुसन्निधिव्यवधानजुषां मूर्तानामेव प्राच्यादिव्यवहारनियामकत्वात् । अस्तु वा तत्तदुपाध्यवच्छिन्नमाकाशमेव प्राच्यादि, तस्य भेदो भवत्युपाधिभेदात् । उपाधीनां तु देशादिभेदादिति न विशेषापेक्षा । कालस्तु क्षणलवाद्यात्मनैव प्रतीयते नतु स्वात्मना । येनाकारेण प्रतीयते तेन च मिथो व्यावृत्तिः सिद्धैव । यश्चैकोऽनादिरनन्तः सर्वकार्यसहकारी महाकालः, सोऽपि स्वासाधारणरूपेणेवेतरेभ्यो व्यावृत्त इति किं विशेषेण । यश्चात्मा जीवपरभेदभिन्नस्तत्र जीवपरयोरीशत्वानीशत्वादिभिर्व्यावृत्तिः सिद्धा । ये जीवास्तेऽपि सुखदुःखादिवैचित्र्यादेव मिथो व्यावृत्ताः । ये पुनर्मुक्ता नित्याश्च तेऽपि अपहतपाप्मत्वादिना समा अपि भगवत्सेवासङ्कल्प-

भेदादिना मिथो व्यावृत्ता एवेति नात्मव्यावर्तनायापि विशेष आवश्यक । मनसा त्वनित्यत्वमेव । तेषा च पुरुषभेदात्कार्यभेदाच्च मिथो व्यावृत्ति सिद्धैवेति न विशेषकल्पनाया प्रयोजन किञ्चित्।

किञ्च—विशेषाणामतीन्द्रियत्वेन न तैरस्माक व्यावृत्तबुद्धि सम्भवति । योगिना तु योगजधर्मात्तत्तद्वस्त्वसाधारणाकारज्ञानादेव व्यावृत्तिबुद्धिः सम्भवतीति न विशेषत साध्या सा । ईश्वरीय ज्ञान तु नित्य व्यावृत्तविषय विश्वगोचर न विशेषा निर्वर्तयिष्यन्तीति कुत विशेषै । यथा चोक्त तत्त्वमुक्ताकलापे—‘नास्मदृश्या विशेषा प्रणिहितमनसा तद्धिया क्वोपयोग तत्तद्वस्तुप्रकाश-सुलभ इह पुनर्भिन्नधीरस्तु मा वा । विश्वद्रष्टुर्विशिष्टप्रमितिमिह न ते कुर्वते नित्यसिद्धा तस्मात्तत्सिद्ध्यसिद्ध्योर्न फलमनुमया नागमोऽप्यत्र तादृक् ॥ इति ।

अथ जातिरिति यत्पदार्थान्तरमभ्युपगम्यते तदपि न विचारसहम् । गोत्व नाम न किञ्चित्सस्थानतोऽतिरिक्तमनुगतव्यवहारस्य कारणमुपलभ्यते । नापि कल्प्य तदनुरोधात् । सस्थानसौसादृश्यादेव गौर्गौरित्यनुगतव्यवहारस्योपपत्ते । यद्यपि सास्नादिसस्थान प्रतिव्यक्ति भिन्नम्, अथाप्येकव्यक्तिनिष्ठस्य तस्य व्यक्त्यन्तरनिष्ठैस्तै सप्रतियोगिकत्वस्वभावतेष्यते, इदमेव सौसादृश्य नाम । एव सस्थानान्येव मिथः सप्रतियोगिकत्वस्वभावानि तज्जातीयत्वव्यवहारमनुगतव्यवहार च प्रयोजयन्ति इति नातिरिक्ताया जातेरवसर । सास्नादे सास्नादिभिरेव सप्रतियोगिकत्वस्वभावः सौसादृश्यरूपः, न केसरादिभिरिति नियमस्तूपलब्धिव्यवस्थाप्यः । स्वभावो नाम प्रामाणिकस्वरूपमेव । यदप्युक्तम्

प्रतीयते तत्तथैव स्वीक्रियतेऽसति बाधक इति हि नीतिविदः। यथा-ऽग्नेरौष्ण्यं जलस्य शैत्यमित्यादिधर्मनियमः, घटाभावस्यैव घट-प्रतियोगिकत्वं न पटाभावस्येति निषेध्यनिषेधकनियमः, सास्नादि-कमेव गोत्वव्यञ्जकं कम्बुग्रीवादिकमेव च घटत्वव्यञ्जकत्वमिति व्यङ्ग्यव्यञ्जकनियमश्चोपलब्धिव्यवस्थाप्यस्तद्वत् । किञ्च—अति-रिक्तजातिवादिभिरपि संस्थानसौसादृश्यादेव मृत्सुवर्णघटेषु घट इत्यनुगतप्रतीतिर्निर्वाह्या । न हि एका घटत्वजातिस्तेषु, मृत्त्वा-दिना साङ्कर्यप्रसङ्गात् । किञ्च—अनुगतप्रतीतेरनुगतजातिसाधकत्वे मूर्तं मूर्तमित्याद्यनुगतप्रतीत्या मूर्तत्वादिकमपि जातिर्भवेत् । सा चेत्सादृश्यमूला, अन्यत्रापि तथैव किन्न स्यात् ।

ननु—स्यादेवं ससंस्थानेषु, असंस्थानेषु कथम् ? उच्यते—तेषां तु स्वरूपमेव मिथः सप्रतियोगिकत्वस्वभावमनुगतप्रतीतेर्नियामकम् । यथा जातिर्जातिरित्यनुगतप्रतीतिः सौसादृश्यमूला, एवं रूपं रूप-मित्याद्यनुगतप्रतीतिरपि । तदिदं मिथः सप्रतियोगिकत्वस्वभावं स्वरूपमेव संस्थानं तेषाम् । तथा च श्रीभाष्यम्—'संस्थानं नाम स्वासाधारणं रूपमिति यथावस्तु संस्थानमनुसन्धेयम्' इति । संस्थानस्य स्वासाधारणरूपत्वात् तत्तद्वस्तुषु यथायथं स्वरूपातिरिक्त-मनतिरिक्तं वा संस्थानमभ्युपगन्तव्यमित्यर्थः । तत्र रूपस्य रूपा-न्तरं प्रत्येव सप्रतियोगिकत्वस्वभावः सौसादृश्यमिति नियमस्तूप-लब्धिव्यवस्थाप्य एव । रूपस्यैव रूपत्वजात्याधारता न रसादे-रित्यादिर्यथा । अतः संस्थानानतिरिक्तैव जातिः ।

किञ्च—अनुगतप्रतीत्याऽतिरिक्ता जातिश्चेत्कल्प्यते, तर्हि जाति-ष्वप्यनुगतप्रतीत्या जात्यन्तरं कल्पनीयं स्यात् । एवं तज्जातितदा-

श्रयजातिषु पुनर्जात्यन्तरं कल्पनीयं स्यादित्यनवस्था । जातिष्वनुवृत्तप्रतीतिश्चेत्सौसादृश्यरूपादुपाधेः, तर्हि व्यक्तिष्वेव तथा किं न स्यात् । यदिदमुक्तं तत्त्वमुक्ताकलापे—'युज्येतोपाधितश्चेदनुगतधिषणा तत्र नेष्टान्यक्लृप्तिस्तस्मात्सङ्घातवर्गेष्ववयवरचनाभेदतोऽन्यश्च सिद्ध्येत् । सौसादृश्यात्तु जातिव्यवहृतिनियमस्तेन नातिप्रसक्तिर्नो चेन्मूर्तत्वमुख्यैस्त्वदभिमतनयाद्व्यज्यतां जातिरन्या ॥ गन्धादौ सन्निवेशो नहि भवति न च द्रव्यभेदे निरंशे तस्माज्जात्यानुवृत्तव्यवहृतिरिति चेदुक्ततुल्योत्तरं तत् । तत्तद्वस्तुस्वभावाद्घटत इह मिथः सप्रतिद्वन्द्विकत्वं तज्जात्याधारतादेरपि तव नियतिस्तत्र न ह्यन्यतः स्यात् ॥' इति ।

किञ्च—पराभिमता जातिरनुपपन्नैकवेषा । तथाहि—जातिरेका प्रतिव्यक्ति परिपूर्णैव वर्तते । अपूर्वमिदमैश्वर्यं जातेः को वेद तत्त्ववित् ॥ नष्टाश्रया सा प्रलये गगने हन्त सीदति । प्राप्याश्रयमसङ्ख्येयं सर्गे सा हन्त हृष्यति ॥ नापयाति न चायाति निष्क्रियाऽथापि साऽन्वहम् । अपसर्पति नष्टेभ्य उत्पन्नानुपसर्पति ॥ अयं हि महिमा जातेरन्यैरनुपलक्षितः । आक्षपादादिभिर्दृष्टस्तद्गोष्ठ्यामेव शोभताम् ॥ अयं च जातिवादो भगवतो बादरायणस्यानभिमतः । आरम्भणाधिकरणे हि एकस्यैव द्रव्यस्यावस्थाद्वयान्वयेनोपादानोपादेयभावात्कार्यकारणयोरनन्यत्वं समर्थितम् । न च पूर्वमसतो घटजातीयस्य कार्यस्योत्पत्तावभ्युपगम्यमानायामनन्यता घटेतेति ।

यत्तु—कर्म चक्षुषैव गृह्यते चलतीति नापह्नवार्हम् । निपुणं निरूपणे तु तत् पूर्वदेशविभागपूर्वकोत्तरदेशप्राप्तेर्नातिरिच्यते । गमने

ह्युत्तरोत्तरदेशप्राप्तिमात्रमभ्युपगम्यते । अतः कर्महेतुत्वेनाभिमतया सामग्र्या तत्फलस्यैव जननमिति युक्तम् । न च विभागपूर्वकसंयोगस्यैव कर्मत्वे यावत्संयोगसत्त्वं चलतीति प्रत्ययापत्तिरिति वाच्यम्, तदुत्पत्तेरेव कर्मरूपत्वात्, आद्यक्षणावच्छिन्नस्यैव तस्य चलतीति प्रत्ययविषयत्वोपगमाच्च । निरन्तरोत्तरदेशसंयोगसन्तान एव च चलतीति प्रत्यक्षव्यवहारौ स्वारसिकौ । तारकादौ तादृशसन्तानस्यानुपलम्भाच्च न चलतीत्यध्यक्षम् । प्रवहति जले जलाकाशप्रदेशविशेषाणां विभागसंयोगसन्ताननैरन्तर्येऽपि जल एव चलतीति व्यवहारो न गगन इति व्यवहारनियमस्तु विभागपूर्वकसंयोगस्योपलम्भानुसारतः क्वचिदेव चलव्यवहारनियामकत्वमन्यत्र संयुक्तव्यवहारनियामकत्वमेवेति प्रतिनियतस्वभावत्वकल्पनातो निरूह्यते ।

यद्वा गगनजलयोरचलत्व--चलत्वप्रतीत्या विभागपूर्वकसंयोगसन्तानहेतुभूतं कर्मास्त्वतिरिक्तम् । तत्तु योग्यवृत्ति चेद्योग्यमेव । सूर्यादिगतिस्तु दूरत्वादेव न गृह्यते । यत्तु आदित्यगतिवत्कर्मसामान्यमतीन्द्रियमनुमेयमिति, तन्न । अतीन्द्रियत्वे व्याप्तिग्रहणस्यैव दौर्लभ्यत्वात् । किञ्च अनुमेयत्वे कर्मणो मेषयोर्मल्लयोर्वा सन्निपातस्योभयकर्मजत्वात्पर्वतश्येनसंयोगस्यापि उभयकर्मजत्वमनुमीयेत ।

कर्मत्वाशाक्षयोश्च विसलमिति यदि व्याप्तिशून्य तदेतत् योग्यत्वेऽपि ह्यदृष्टे सहकृदपगमादर्यमादिक्रियाणाम् । नो चेत्कर्मैव न स्यात्फलमपि हि भवेत्कमहेतोस्त्वदिष्टात् द्विष्ठत्वादौ फलस्य द्वितयमपि भवेत्कर्मवत्सर्वदा घ ॥' इति । अतिरिक्तमपि कर्माऽद्रव्यत्वेन क्रोडीकृत भवतीति न पृथग्विभजनावसर । द्रव्य गुण इति विभागस्तु न युक्त । अपृथक्सिद्धविशेषणमात्रस्य गुणशब्दार्थतया प्रमाणानादेद्रव्यस्यापि गुणत्वात् । पराभिमतगुणत्वजातेश्चाप्रामाणिकत्वात् । अतो निरुक्त एव द्रव्याद्रव्य विभाग साधीयान् ।

## धर्मधर्मिभेद ।

ननु द्रव्याद्रव्यभेदाद्विभागो नोपपद्यते । इद रूपमय रूपीत्यस्ति नैव विविक्तधी ॥ पञ्चाना चक्षुरादीनामर्था रूपादय क्रमात् । तेषूपक्षीणशक्तीना द्रव्यग्राहकता कथम् ॥ न चान्यदिन्द्रिय षष्ठ द्रव्यासाधारण भवेत् । न पृथिव्यादिरूपादिसङ्घातादतिरिच्यते ॥ गन्धरूपरसस्पर्शसङ्घात पृथिवी खलु । रूपादित्रयसङ्घातात्सलिल नातिरिच्यते ॥ रूपस्पर्शाद्विक तेज स्पर्शशब्दद्विक मरुत् ।

ननु रूप रूपिणोऽन्यत् यज्जपाकुसुमसन्निधौ ॥ नैवोपलभ्यते शुक्ल स्फटिक तूपलभ्यते । काषायरञ्जित वासो रक्तत्वे नोपलभ्यते ॥ तद्रूपानुपलम्भेऽपि तद्द्रव्यस्योपलम्भत । रूपरूपिविभेदोऽयमपह्नोतु न शक्यते ॥ -

ननु यत्स्फाटिक शुक्ल अनन्यत्स्फाटिकात्तु तत् । रूपान्तरात्मना भाति द्रव्य नान्यस्य रूपत ॥

अयं घटः शुक्ल इति सामानाधिकरण्यधीः । कथं घटेत वक्तव्यं ननु द्रव्यापलापिना ॥ अपेक्षते हि सामान्यविशेषौ सा विशिष्टधीः । किं सामान्यं विशेषः को न्वभेदे रूपरूपिणोः ॥ न च शक्यं त्वया वक्तुं कटकस्वर्णयोरिव । घटो न रूपसामान्यं शुक्ले स्याद्यद्विशेषता ॥ अन्यत्तु घटसामान्यमघटापोहलक्षणम् । अन्यच्च रूपसामान्यमरूपापोहलक्षणम् ॥

अज्ञातपरहार्दस्य हन्तेदमतिवल्गितम् । उद्वल्गयति हन्त त्वां द्रव्यप्राधान्यवासना ॥ न रूपाच्चक्षुषोऽन्योऽर्थः शुक्लादीनि तु तानि षट् । ते च शुक्लादयो नाना लोके घटपटादिकाः ॥ ननु संहतिवैचित्र्यात् दृश्यन्ते तु तथा तथा । प्रत्यक्षे कल्पनाहीने न विशेष्यविशेषणे ॥ यत्तु शुक्लो घट इति जायते सविकल्पकम् । घटात्मना तत्र तावत् शुक्ल एव तु भासते ॥ अघटापोहतो नान्या तस्य या तु घटात्मता । दृष्टापलापिनो हार्दं सयूथ्या ननु ते विदुः ॥

मैवं यदेव दृष्टं तत्स्पृशामीति धिया पुनः । रूपरूपिविभागोऽयं निराबाधस्तु सिद्ध्यति ॥ रूपस्पर्शादिसङ्घातो नन्वयं किं ततः फलम् । ग्राह्यसङ्घातभावेऽपि कथञ्चिद्ग्राहकं पुनः ॥ स्वस्वार्थनियतत्वेन न स्वार्थमतिवर्तते । उपाधिरपि यः कोऽपि संहतौ दुर्वचस्त्वया ॥ घटे नीलः पटे शुक्ल इत्यादिव्यतीरेकधीः । याऽबाधिता तया चापि धर्मधर्मिभिदा स्थिता ॥

## क्षणभङ्गनिरासः ।

द्रव्याद्रव्यभेदभिन्नं च प्रमेयं यथायथं स्थिरमेव । क्षणभङ्गे प्रमाणाभावात् । ननु—वर्तमानार्थग्राहि प्रत्यक्षमेव स्वविषयं पूर्वापरका-

लसम्बन्धिनो व्यावृत्तमवगमयत् क्षणिकत्वे मानम् । मैवम् । ततोऽवर्तमानव्यावृत्तिमात्रस्य सिद्धेः । वर्तमानस्यैव पूर्वोत्तरक्षणसम्बन्धेऽविरोधात् । न च स्वापेक्षया पूर्वोत्तरक्षणसम्बन्धः स्वस्य विरुद्ध इति वाच्यम् । न ब्रूमः स्वापेक्षयैव पूर्वोत्तरक्षणसम्बन्धं वस्तुनः । किं तर्हि, नानाक्षणसम्बन्धं सम्भवतीत्येव । ननु स्यादेव यदि नानाक्षणसम्बन्धे प्रमाणं स्यात् । अस्त्येवेति ब्रूमः । सोऽयं घट इत्यादिप्रत्यभिज्ञा हि पूर्वतनवर्तमानक्षणसम्बन्धिनमेकमर्थमवगमयति । ननियं भ्रान्तिः सेयं दीपज्वालेतिवत् । मैवम् । स्वाभाम भेदे प्रामाणिके सादृश्यदोषमूला भ्रान्तिरिति । यथा दीपशिखायाम् । तत्र हि वर्त्यवयवतैलाभिसंयोगलक्षणसामग्रीसन्तत्या भिन्नभिन्नदीपशिखासन्ततिरुपजायते । न चैवं प्रतिक्षणं घटादेरुत्पत्तिविनाशकारणमुपलभ्यते । येन क्षणिकत्वमध्यवस्येम । प्रत्यभिज्ञां वा सादृश्यमूलामुपपादयेम । दीपशिखाया अपि द्वित्रिक्षणावस्थायित्वसम्भव इति न क्षणिकत्वम् । न च जातस्य मृत्युर्ध्रौव्यादहेतुक एवं विनाशः स्यात्प्रतिक्षणमिति वाच्यम् । ध्रुवभाविनोऽपि घटादेर्विनाशस्य मुद्गराभिघातादिनिमित्तसापेक्षताया दर्शनादिति ।

ननु–माऽस्तु क्षणिकत्वे प्रत्यक्षम् । यत्सत्तत्क्षणिकं यथा घट इत्यनुमानादेवास्तु क्षणिकत्वसिद्धिरिति चेन्न । घटस्य क्षणिकत्वासिद्धेः । न च मास्त्वन्वयदृष्टान्तः, शशशृङ्गादिस्तु स्याद्व्यतिरेकदृष्टान्त इति वाच्यम् । तुल्यनयेनालीकेन व्यतिरेकदृष्टान्तेन स्थिरत्वस्यापि साधनसम्भवात् । किञ्च अर्थक्रियाकारित्वलक्षणं सत्त्वं स्थिरस्यैव सम्भवेदिति न तेन क्षणिकत्वसाधनसम्भवः । एतेन–स्थिरत्वे कार्यकरणाकरणलक्षणविरुद्धधर्माध्यासप्रसङ्गेनाङ्कुरजनक-

बीजस्य तत्पूर्वतनबीजाद्भेद आवश्यकः। एवं तत्तत्पूर्वतनबीजस्य तत्तत्पूर्वतनादिति क्षणिकत्वसिद्धिरित्यपास्तम्। स्थिरस्यैव समर्थस्यापि सहकारिसमवधानासमवधानाभ्यां कदाचित्कार्यारम्भकत्वसम्भवात्। समवधानासमवधानयोश्च तत्तत्सामग्र्येव नियामिकेति न यौगपद्यम्। एवमविरोधानभ्युपगमे तु देशभेदेन करणाकरणयोः क्षणस्यापि क्षोदः प्रसज्येत। एतेन क्षणोपाधिदृष्टान्तेन मेयत्वादिना सर्वस्य क्षणिकत्वानुमानमित्यप्यपास्तम्। स्थिरस्यैव स्थिरान्तरविशेषितस्य क्षणोपाधित्वसम्भवात्। यथा स्वजन्यविभागप्रागभावावच्छिन्नं कर्माद्यक्षणोपाधिरिति। एवं क्षणिकत्वे प्रमाणाभावाद्बाधितप्रत्यभिज्ञाबलाच्च वस्तुनः स्थिरत्वं सिद्धम्। किञ्च—भ्रान्तिरूपा वा प्रत्यभिज्ञा भवतु स्थैर्यमन्तरा नोपपद्यत इत्यनुपपन्नं सर्वस्य क्षणिकत्वम्। वर्णितं चैतत्सर्वं तत्त्वमुक्ताकलापे—"वस्तुस्थैर्यं विरुद्धानुपहितविषया साधयेत्प्रत्यभिज्ञा नैकस्मिन् शक्त्यशक्ती कृतितदितरयोः सा ह्यभेदेन सिद्धेः। एकस्मिन् कालभेदाद्भवति च सहकार्यन्वयानन्वयादिर्नोचेन्नो देशभेदादपि सुपरिहरस्तेन नैकं क्वचित्स्यात्॥ तत्त्वेदन्त्वे हि कालान्तरघटनमये नैककाले घटेतां कालद्वैतेऽनवस्थाद्यत इह न मितिः प्रत्यभिज्ञेति चेन्न। स्वस्य स्वाभाव्यकाले विहितनियमनात्त्वेन चात्रैककाल्यात् काले कालानपेक्षे कथमपि सुवचौ नानवस्थाविरोधौ॥ प्रत्यक्षं वर्तमानं प्रथयति यदिहावर्तमानाद्विभक्तं तस्मात्तेनैव सिद्धं क्षणिकमिति न सत्तावदित्यप्रतीतेः। तत्कालासत्त्वमेव ह्यपनयति सतो वर्तमानत्वबोधः कालेऽन्यत्रापि सत्त्वं प्रमितमिति कथं तद्विरोधप्रसङ्गः॥" इत्यादिनेत्यास्तां तावत्।

## द्रव्याद्रव्यलक्षणम् ।

तत्रावस्थाश्रयो द्रव्यम् । अवस्थारहितमद्रव्यम् । आगन्तुकापृथक्सिद्धधर्मोऽवस्था । महत्त्वक्षणत्वादीनामागन्तुकापृथक्सिद्धधर्माणां प्रकृतिकालादौ सत्त्वाल्लक्षणसमन्वयः । सुखदुःखेच्छादिकं जीवात्मनोऽवस्था । मुक्तानामपि तादात्त्विकसेवासङ्कल्पभेदादयोऽवस्थाः । ईश्वरस्य स्थूलसूक्ष्मचिदचिद्विशिष्टत्वमनाद्यवस्था । धर्मभूतज्ञानस्य इच्छात्वद्वेषत्वादिरवस्था । अक्षरब्रह्माख्यनित्यविभूतेरपि मुक्तेश्वरेच्छानुगुणतात्कालिकाप्राकृतभोग्यादिपरिणामलक्षणाऽवस्था अस्त्येव । प्रमेयत्वाश्रये शब्दादावतिप्रसङ्गो माभूदित्यागन्तुकेति । प्रमेयत्वं तु नागन्तुकम् । आगन्तुकता च न जन्यतामात्रम् । शब्दादावद्रव्येऽपि शक्तेरभ्युपगमपक्षे साहजिक्यास्तस्या धर्मिणा शब्दादिना सह जन्यत्वादपृथक्सिद्धत्वाच्च तत्रातिप्रसङ्गापातात् । किन्तु स्वाश्रये पूर्वमसत्त्वमेव । स्वाश्रयकालवृत्तिप्रागभावप्रतियोगित्वमिति यावत् । द्रव्यनिष्ठाया अपि अवस्थायाः सामानाधिकरण्येनाद्रव्ये सत्त्वादतिप्रसङ्गः स्यादिति अपृथक्सिद्धिसम्बन्धेन तद्वत्त्वं वाच्यम् । एतल्लाभार्थमपृथक्सिद्धेति । संयोगवत्त्वं संयोगरहितत्वमिति च लघुनी लक्षणे द्रव्याद्रव्ययोर्बोध्ये ।

## द्रव्यविभागः ।

द्रव्यं सामान्यतो द्विविधं—चिदचिच्चेति । तत्र चिन्नाम चेतनः—ज्ञानाश्रयः । स च द्विधा—जीवात्मा परमात्मा चेति । अचिन्नामाचेतनम्—प्रकृतिः कालो धर्मभूतज्ञानं नित्यविभूतिश्च । यदि चेतन एव सन् परमात्मा स्वेतरसमस्तेश्वरत्वलक्षणाद्वैभवातिशयात्पृथगुद्दिश्यते तर्हि त्रेधा विभागः—चिदचिदीश्वरा इति ।

तदा चिच्छब्दो जीवमात्रपरो वोध्यः । गोवलीवर्दन्यायात् । विशेषतस्तु पञ्चविधम्—मायाकालात्मपरमात्मधर्मभूतज्ञाननित्यविभूतिभेदात् । द्रव्ये किञ्चित्प्रकाशरूपत्वात्स्वयंप्रकाशं किञ्चिच्चास्वयंप्रकाशं भवति । स्वयंप्रकाशमजडं अस्वयंप्रकाशं च जडमित्युच्यते । तत्र मायाकालौ जडौ । स्वयंप्रकाशमपि स्वस्मै भासमानं परस्मा एव भासमानं चेति भवति द्विधा । आद्यं प्रत्यक् अन्त्यं परागित्युच्यते । आत्मेश्वरश्च प्रत्यञ्चौ । स्वप्रकाशफलं स्वव्यवहारः स्वस्यैव भवतीत्येतौ प्रत्यक्त्वेन व्यवह्रियेते । धर्मभूतज्ञाननित्यविभूत्योस्तु प्रकाशफलं व्यवहारो न तन्निष्ठः, किन्तु ज्ञात्रीश्वरादिगत इति ते पराची इति विवेकः ।

इमान्येव द्रव्याणि श्रीरामानुजसंप्रदायसिद्धानि भगवता श्रीहरिणा स्वीकृतानीति न प्रमेयभेदः । तथाहि—धर्मभूतज्ञानं तावज्जीवस्य ज्ञातृत्वकीर्तनाल्लब्धम् । जीवस्य तावज्ज्ञातृत्वनिर्देशः 'हृत्स्थोऽणुः सूक्ष्मश्चिद्रूपो ज्ञाता व्याप्याखिलां तनुम् । ज्ञानशक्त्या स्थितो जीवः' इति । 'विशेषसत्तया त्वास्ते हृदि क्षेत्रज्ञ एव च । रत्नदीपप्रतीकाशो ज्ञाता सूक्ष्मोऽणुवद्ध्रुवः ॥' इति च । सर्वेश्वरस्य च सार्वज्ञ्यप्रतिपादनात् । सर्वज्ञः सत्यसङ्कल्पः सर्वकर्मफलप्रदः' 'सत्यं ज्ञानमनन्तं च यः सर्वज्ञश्च सर्ववित्' इति ।

नित्यविभूतिरेव गोलोकवैकुण्ठचिदाकाशपरमव्योमपरमपदाक्षरब्रह्मधामपराप्रकृतिप्रभृतिनामभिर्व्यपदिष्टा तत्र तत्र । इयमप्राकृतलोकरूपेण मुक्तादीनामप्राकृतमूर्तिरूपेणाप्राकृतानन्तभोग्यभोगोपकरणादिरूपेण च वर्तमाना परब्रह्मसेवारूपात्यन्तिकमुक्तिस्थानतया

विराजत इति च साम्प्रदायिकशास्त्रेषूपवर्ण्यते । एतत्स्वरूपं गोलोक-शब्देनोक्तं शिक्षापत्र्यां 'गोलोको धाम चेप्सितम्' इति । 'एतदेव धाम वैकुण्ठशब्देनाप्युक्तम्' इति शिक्षापत्रीटीका । सत्सङ्गिजीवने चैतत्स्वरूपं वर्णितमस्ति—'भक्ता एते तु देहान्ते धाम गोलोकमुत्तमम् । लभन्ते राजते यत्र श्रीराधाकृष्ण ईश्वरः ॥' 'ततः परं चिदाकाशमस्ति तेजोमयं महत् । अनाद्यनन्तं तद्धाम परमव्योमसंज्ञितम् ॥' 'धामाक्षरं तु यत्तस्य तद्ब्रह्मपुरमुच्यते' इति । हरिवाक्यसुधासिन्धौ चोपवर्णि-तम्—'नित्यमप्राकृतं दिव्यं सच्चिदानन्दमक्षरम् । ब्रह्माख्यं धाम तत्प्रोक्तं कृष्णस्यानन्तमुज्ज्वलम् ॥' 'सच्चिदानन्दरूपं यद्ब्रह्म निर्गुणमक्षरम्' 'अनाद्यन्तं च यत्तस्य धामेति प्रोक्त-मस्ति हि ॥' 'कृष्णेच्छयाऽथ दिव्योऽस्य पराप्रकृतितो मुने । आविर्भवति देहो वै तेन संयुज्यते च सः ॥' 'यदुच्यते ब्रह्मपुरं ब्रह्म चामृतमक्षरम् । चिदाकाशं च परमव्योमाथ परमं पदम् ॥' इति । कालोऽपि पृथक् द्रव्यभूतो मायागुणक्षोभक ईश्वराधिष्ठितः सृष्ट्यादौ सहकारीति समनुवर्ण्यते सत्सङ्गिजीवने—"पुरुषाधिष्ठितेनाथ प्रधाने त्रिगुणात्मके । प्राप्नुवन्ति गुणाः क्षोभं कालेनैवादितस्त्रयः ॥" 'कालस्यापि हि यः कालः' 'कालो माया पुमान्' इति । हरिवाक्यसुधासिन्धौ च—"पुरुषं प्रकृतिं कालं तत्त्वानि च यदा पुमान् । वेत्ति स्वरूपतः सम्यक् तद्बन्धात्सर्हि मुच्यते ॥" इति । मायाविपञ्चकविभागे निर्दिष्टानां जीवेश्वरब्रह्मणां च षोढा विभागे यथासम्भवमासामन्तर्भाव एवेति ।

## अद्रव्यविभागः ।

अद्रव्यं च दशधा—सत्त्वं रजस्तमः शब्दः स्पर्शो रूपं रसो गन्धः संयोगः शक्तिरिति । यद्यपि प्रकृत्यादीनामवस्थाभेदा विविधविचित्राः सन्ति परःसहस्रमद्रव्यभेदाः । अथापि लोकशास्त्रयात्रात्यन्तोपयुक्ता मुख्या अद्रव्यभेदा दशैव विवेचिता आचार्यवर्यैः । दशसु चाद्रव्येषु संयोगशक्ती सामान्यगुणौ, यावद्द्रव्यवृत्तिकत्वात् । अन्ये तु विशेषगुणाः, द्रव्यत्वन्यूनवृत्तित्वादिति विवेकः ।

अद्रव्येषु न्यूनाधिकभावो वैशेषिकैरिष्यते नाम । यथा सत्त्वरजस्तमांसि न गण्यन्ते प्रधानगुणाः प्रकृतिप्राकृतवृत्तीनि । तथा सर्वद्रव्यवृत्तिः शक्तिश्च प्रधाना । पृथक्त्वादयस्तु पृथक् परिगण्यन्ते । प्रमाणगौरवपराहतोऽयं पक्षः । तथाहि—'अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः' 'प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः' 'सत्त्वं रजस्तम इति गुणाः प्रकृतिसम्भवाः' इत्यादिना तावत्त्रैगुण्यसिद्धिः ।

शक्तिश्च तत्तत्कार्यजननसामर्थ्यलक्षणा तत्र तत्र प्रतिनियतकार्योत्पाददर्शनादनुमेया । कारणत्वनिर्वाहकोऽतीन्द्रियो धर्मः शक्तिः । सत्यपि सहकारिसाकल्ये विपजन्त्वाघ्रातस्य बीजादेः शक्तिविघातादेव न सम्यक्कार्यारम्भकत्वमिति शक्तेरावश्यकता । सहकारिसमवधानेऽपि शक्तस्यैव कार्यजनकत्वं नाशक्तस्येति च सर्वेषामनुभवो दुरपह्नवः । किञ्च सत्यपि करतलानलसंयोगे मणिसमवधाने दाहाजननाद्वह्नौ दाहानुकूलाऽतिरिक्ता काचन शक्तिरेषितव्या । मण्यादिश्च तस्याः प्रतिरोधकः । अत एव मण्यादेः प्रतिबन्धकत्वमपि घटते । कार्यानुकूलधर्मविघटकत्वं च तत् । अपसरणे मण्यादेरुत्ते-

जलसम्पाते वा दाहजननाच्च मणि शक्तेर्न नाशकः किन्तु प्रतिरोधक इति कल्पनं वरम्। अन्यथा ह्यनियतहेतुकत्वं शक्तेरसकृदुत्पादविनाशशालित्वं च कल्पनीयं प्रसज्येत इति। 'पराऽस्य शक्तिर्विविधैव श्रूयते' 'शक्तयः सर्वभावानामचिन्त्यज्ञानगोचराः' इत्यादिप्रमाणसिद्धा चेयम्।

शब्दादिपञ्चकं तु सर्वाभ्युपेतमेव। संयोगश्च तथा। यत्तु केषाञ्चिन्मतं अन्तरालविरहलक्षणं नैरन्तर्यमेव संयोग इति। तन्न। इदं नैरन्तर्यं किं स्वरूपं उतागन्तुको धर्मः। स्वरूपं चेत्सर्वदा संयुक्तत्वव्यवहारापत्तिः। आगन्तुकं चेदतिरिक्तसिद्धिः। अस्त्वेवमभावरूपमेव। नैवम्। अभावस्य भावान्तररूपत्वात्। तथा च समासन्नदेशसंयोगलक्षणमेव तदित्यवश्याभ्युपगमनीयः संयोगः। किञ्चोतप्रोतभावेन विलक्षणसंश्लेषस्यैव तुरीवेमादिकारकव्यापारनिर्वर्त्यतयाऽवश्यमभ्युपगमनीयः संयोगः। संयोगस्य सकललोकयात्रानिर्वाहकत्वेन दुरपह्नवत्वं चोक्तं तत्त्वमुक्ताकलापे— 'संयोगाद्विश्वसृष्टिः प्रकृतिपुरुषयोस्तादृशैस्तद्विशेषैर्ब्रह्मादिस्तम्बनिष्ठा जगति विषमता यन्त्रभेदादयश्च। अक्षाणामर्थयोगाद्विविधमतिरनाद्यन्वयादङ्कुरादिः शुद्धाशुद्धादियोगान्नियतमपि फलं न्यायतत्त्वेऽस्य घोषः॥' इति। संयुक्तप्रत्ययासाधारणकारणत्वं संयोगस्य लक्षणम्। निरन्तरयोर्विभ्वोरपि मिथः संयोग एषितव्यः, नैरन्तर्यस्य मिथः संयोगव्याप्यत्वात्। स चाजः। वैशेषिकैः पुनर्नेष्यते विभुद्वयसंयोगः। तन्न शोभनम्। विभोरपि कालादेः स्वस्वकार्यप्रवृत्तेरीश्वरानुप्रवेशनिबन्धनत्वस्यागमसिद्धत्वात्। 'सर्वाधारं धाम विष्णुसंज्ञं' 'सर्वव्यापी च भगवान्' 'यच्च किञ्चिज्जगत्यस्मिन् दृश्यते श्रूयतेऽपि वा। अन्तर्बहिश्च तत्सर्वं

व्याप्य नारायणः स्थितः ॥' इत्यादिना च सर्वशब्दासङ्कोचाद्विभूनामपि परमात्मना संयोगः सिद्धः । अत्र 'अन्त'रिति अनणुविषयं 'बहि'रिति चाविभुविषयं यथासम्भवं योज्यम् । परमात्मनाऽव्याप्यः कोऽपि प्रदेशभेदो नास्तीत्यत्र तात्पर्यात् । तथा चोक्तो विभुद्वययोगस्तत्त्वमुक्ताकलापे—'नैरन्तर्यं विभूनामपि भवति ततोऽन्योन्ययोगोऽपि योग्यः केचित्तं हेत्वभावाज्जहति विहतिकृन्नित्यधीकल्पने तत् । स्याद्वा तत्सिद्ध्यसिद्ध्योरनुमितिरपदुर्बाधहानेर्विपक्षे शास्त्रैरन्यद्विभु स्यात् परधृतमपृथक्सिद्धिरेवं ततोऽस्य ॥' इति । मूर्तानां मिथोऽमूर्तैश्च संयोगो जन्योऽनित्यश्च । अन्यतरक्रिययोभयक्रियया वा जायतेऽयम् । यथा श्येनपर्वतयोर्मल्लयोर्मेषयोर्वा । संयोगजः संयोगस्तु वैशेषिकादृतः । यथा हस्तपुस्तकसंयोगात्कायपुस्तकसंयोग इति । तन्न । अतिरिक्तस्यावयविनोऽभावाद्भावे वा हस्तक्रिययैव कारणैकार्थ्यप्रत्यासत्त्या कायपुस्तकसंयोगस्य सम्भवादिति । सत्त्वरजस्तमसां शब्दादिपञ्चकस्य च विशोधनं तु प्रकृतिनिरूपणे महाभूतनिरूपणे च करिष्यते ।

यत्तु संख्यापरिमाणपृथक्त्वविभागपरत्वापरत्वगुरुत्वद्रवत्वस्नेहसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्काराणां अतिरिक्तत्वेन परिगणनं कृतं गुणेषु काणादैः, तदपि मन्दम् । सुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मभावनाख्यसंस्काराणां धर्मभूतज्ञानावस्थारूपतया बुद्ध्यन्तर्भूतत्वात् । बुद्धेश्च द्रव्यत्वमात्मनिरूपणे वर्णयिष्यते । धर्माधर्मयोश्च ईश्वराज्ञारूपशास्त्रोक्तविधिनिषेधानुवृत्त्यतिवृत्तिप्रयुक्ततत्तज्जीवगोचरेश्वरानुग्रहनिग्रहसङ्कल्पलक्षणयोरीश्वरीयधर्मभूतज्ञानावस्थारूपत्वमेवेति ॥

अन्ये त्विदानीं चिन्त्यन्ते । तत्र द्वित्र्यादिसङ्ख्यास्तावत्तत्का-रणतयाऽभिमतापेक्षाबुद्धिविशेषविषयत्वलक्षणा एव । एकत्वव्यव-हारगोचरस्तु तत्तद्वस्त्वसाधारणाकार एवेति युक्तम् । प्रकृतक्रियाया समप्रधानतया समुच्चीयमानवस्त्वन्तरप्रतिपत्त्यभावकालीनप्रतिप-त्तिविषयत्वं च द्रव्याद्रव्यसाधारणं निष्कृष्टमेकत्वं बोध्यम् । बुद्धिविशेषविषयत्वलक्षणायाश्चैकद्वित्र्यादिसङ्ख्याया अद्रव्यनिष्ठत्व-मपि सुसङ्गच्छते ।

अणुमहद्दीर्घह्रस्वभेदेन भिन्नं परिमाणमपि तत्तद्देशव्याप्तिवि शेषरूपमेव । न्यूनाधिकदेशसंयोगभेद एव तत्तत्प्रतिसम्बन्धिनिरू-पितवैषम्येण तत्तदपेक्षया महत्त्वादिव्यवहारगोचरः । तथा चोक्तं न्यायसिद्धाञ्जने—"यत्संयुक्तं देशं देशान्तरं च युगपदाक्रमितुं शक्तं तत्तोऽधिकपरिमाणम्, यत्संयुक्तं देशमखिलमेकदैव यदा-क्रमितुं न शक्तं तत्ततो न्यूनपरिमाणमिति । तथा एकदिगार्जवावच्छे-देन ( संयोगस्य ) आधिक्यं दैर्घ्यम्, तेनैव न्यूनभावो ह्रस्वत्वम् । बहुदिगवच्छेदेनाधिक्यं महत्त्वं, तेनैव न्यूनभावोऽणुत्व"मित्यादि ।

पृथक्त्वमपि तत्तदसाधारणधर्मरूपभेदस्वरूपानतिरिक्तमेव । शब्दस्वभावनिबन्धनस्तु 'इदमिदं न भवति' 'इदमस्मात्पृथ'गिति व्यवहारभेदः ।

विभागस्तु संयोगनाशहेतुत्वाभिमतः संयोगनाशरूप एव, अति-रिक्तस्यानुपलब्धेः । क्रियया समनन्तरमेव हि पूर्वदेशसंयोगनाशो लक्ष्यते । न मध्यतो विभागो नाम कश्चनोपलभ्यते । सोऽपि पूर्वदेशसंयोगनाशो नाशकालिकस्वरूपाभिन्नः, देशान्तरसंयोगलक्षण एव वा । क्रियया पूर्वदेशतो वियुज्य देशान्तरेण संयुज्यत इति

व्यवहारोऽपि 'मुखं व्यादाय स्वपिती'तिवत्समानकालविषय आकारभेदनिबन्धनश्च नेयः। आन्तरालिकपवनादिसंयोगपूर्वकाभिमतदेशसंयोगविषयो वा ।

परत्वापरत्वयोर्देशकालकृतयोर्बुद्धिव्यवहारावपि तत्तद्देशकालसम्बन्ध्युपाधिसम्बन्धभूयस्त्वाल्पत्वाभ्यामेव निर्वाह्यौ। यथा प्राक्त्वप्रत्यक्त्वादयः पूर्वत्वोत्तरत्वादयश्च दिक्कालसंयोगविशेषमात्ररूपास्तथैवेमे अपीति युक्तमभ्युपगन्तुम् ।

पतनहेतुभूतं गुरुत्वमपि जलक्षितिगतं तत्तच्छक्तिविशेषरूपमेव। अतिरिक्ते गुरुत्वे पतनहेतुत्वस्वभावस्य कल्पनापेक्षया स्वरूप एव तत्कल्पनौचित्यात् । यथा वायुतेजसोस्तिर्यगूर्ध्वपतनस्वभावत्वं, तथाऽत्रापि बोध्यम् । अन्यथा तयोरपि गुणान्तरकल्पनापत्तिः । रसवद्द्रव्यगतावयवाल्पत्वाधिक्याभ्यां पतनतारतम्यम् । तोलनं च तत्परिज्ञानफलकमेवेति ।

एवं स्यन्दननिदानं द्रवत्वं सलिलगतं जलत्वनियतावयवसंश्लेषविशेषलक्षणमेव। तथा चोक्तं न्यायसिद्धाञ्जने 'द्रवत्वं नाम निम्नोन्नतिलेशरहितसंयोगविशेष' इति । पाञ्चभौतिकत्वात् घृतादावपि तदन्तर्वर्तिजलभागस्यैव द्रवत्वम्, अग्निसंयोगेन तदंशोद्भवश्च यथोपलम्भं स्वीकार्यः। यद्वा पृथिवीतेजसोरपि द्रवत्वं पाकजमस्तु जले तु सांसिद्धिकमेव तत् । करकादौ तु पार्थिवभागोपष्टम्भात्तदप्रतीतिः ।

स्नेहोऽपि जलस्य चूर्णादिसङ्ग्रहणहेतुर्गुणो नातिरिक्तः । शक्तिविशेषादेव तदुपपत्तेः । अन्यथा तेजसि विशरणहेतुभूतं रूक्षत्वमपि गुणान्तरं स्वीकरणीयं भवेत् । स्निग्धव्यवहारश्च रूपविशेषाद्यालम्बन एवास्तु इति ।

संस्कारोऽपि त्रेधा प्रोक्तो वैशेषिके—वेगो भावना स्थितिस्थापकश्चेति। तत्र वेगः कर्मगत एव कश्चनातिशयः। शीघ्रं गच्छतीति प्रतीतेः। इषुप्रयोगलक्ष्यसंयोगमध्यकालाल्पत्वमिषुगतेर्वेगः। स च बलवत्प्रेरणाधीनः। पूर्वपूर्वकर्मणैवोत्तरोत्तरकर्मसन्तानसम्भवे मध्ये वेगो नाम गुणान्तरमुत्तरोत्तरकर्महेतुतया नैव कल्पनापदमर्हति। वेगेन गच्छतीति प्रयोगोऽपि प्रयत्नाधीनक्रियातिशयपर एव। अन्यथा मान्द्यस्यापि गुणान्तरत्वं कल्पनीयं स्यादिति। भावना नामानुभवजनितः स्मृतिहेतुः संस्कारः। स च धर्मभूतज्ञानावस्थाविशेष एव। स्थितस्थापको नाम आकृष्य मुक्तस्य शाखादेः पुनर्यथादेशप्राप्तिहेतुः। स च तत्तद्वस्तुगतसंस्थानभेदान्नातिरिक्त इति। न्यायसिद्धाञ्जनाद्युक्तः प्रकारोऽत्र समासतः। अद्रव्याणां वर्णितो वै विशेषो विस्तरस्ततः॥ यद्यपि परमार्थविविधभेदभाविलासस्याक्षं पृथग्विविधगुणकल्पनं न क्षतिकरम्। तथापि वैशेषिकोक्तगुणविभागो नातीव समीचीनः। कृतान्तर्भावस्यैवातिरिक्ततया परिगणितानां केषाञ्चिद्गुणानां सम्भवात्। पृथक्कल्पनायां वाऽन्येऽपि समानयोगक्षेमा गुणाः पृथक्परिगणनीया भवन्तीति प्रतिपादनं एव हार्दमित्यास्तां तावत्। सोऽयं समान्यतः प्रमेयविभागप्रकारोऽवसेयः।

## प्रमेयविभजनप्रकारान्तरम्।

यदा पुनः प्रकर्षो मितौ संसारनिवृत्तिप्रयोजकत्वलक्षणो विवक्ष्यते तदा तथाविधमितिविषयीभूतानि प्राधान्येन मुमुक्षुभिर्ज्ञेयानि त्रीणि तत्त्वानि—माया-जीव-ईश्वरश्चेति। अत्र मायाशब्देन मूलप्रकृतिः सकार्योच्यते। जीवशब्देनात्मसामान्यम्। ननु

'जीव प्राणधारण' इति धातोर्निष्पन्नो जीवशब्दः प्राणाधारं बद्धमेव वदेत् न मुक्तम्। नैवम्। अन्यद्धि व्युत्पत्तिनिमित्त-मन्यच्च व्यवहारनिमित्तम्। गोशब्दस्य गन्तृत्वं व्युत्पत्तिनिमित्तं, व्यवहारनिमित्तं तु गोत्वसामान्यमेव। अन्यथा तिष्ठन्त्यां गवि गोशब्दव्यवहारस्य विलोपप्रसङ्गात्, गच्छत्यश्वादौ तस्य प्रसङ्गाच्च। एवं जीवशब्दस्यापि व्यवहारनिमित्तं जीवत्वसामान्यमेव। तच्च परब्रह्मभिन्नचेतनस्वरूपं मुक्तेष्वपि समानम्। प्राणाधारत्वस्य व्यवहारनिमित्तत्वे तु महाप्रलये बद्धस्यापि जीवशब्दव्यवहार्यता न स्यात्, तदा प्राणाधारत्वाभावादिति। बद्धमुक्तनित्यसाधारणोऽपि जीवशब्दः क्षेत्रज्ञव्यष्टौ प्रचुरप्रयोगात्प्रसिद्धतरः। प्रसिद्धिप्राचुर्योप-जीवनेनैव साम्प्रदायिकग्रन्थेषु पञ्चधा विभागे जीवशब्दस्तन्मात्र-परतया प्रयुक्तोऽनुसन्धेयः। तथा च वासुदेवमाहात्म्ये वचनम् 'ब्रह्मणो ये समुत्पन्ना देवासुरनरादयः। ते जीवसंज्ञा ह्यल्पज्ञाः परतन्त्रा भवन्ति च ॥' इति। 'वालाग्रशतभागस्य शतधा कल्पितस्य च। भागो जीवः स विज्ञेयः' इत्यादौ चात्मसामा-न्यपरतयैव जीवशब्दः प्रयुक्तः। अतस्तत्त्वत्रयविभागे जीवशब्द आत्मसामान्यपर एवेति बोध्यम्। अस्तु चात्मशब्दो जीवशब्दस्थाने। ईश्वरशब्देन च सर्वेश्वरः परमात्मा पुरुषोत्तमः। ईश्वरशब्दो ह्यसङ्कुचितवृत्तिः सर्वेश्वरमेव वक्ति स्वरसतः। अन्येषां तु यदी-श्वरत्वं तत्कतिपयविषयं सापेक्षं च। तेषु चेश्वरशब्दप्रयोग उप-चाराद्बोध्यः। प्राधान्येन मुमुक्षुभिर्ज्ञेयत्वमभिप्रेत्यैव च मुमुक्षूणा-मुपादेयं ज्ञानं जीवादित्रयविषयमिति शिक्षापत्र्यां भगवतैवोक्तम्— 'ज्ञानं च जीवमायेशरूपाणां सुष्ठु वेदनम्' इति। हरिगीतायां च तत्वत्रयस्यैव लक्षणोक्तिपूर्वकं ज्ञातव्यतोक्ता।

तत्त्वत्रयविभागप्रकारोऽयं 'भोक्ता भोग्यं प्रेरितारं च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत्' इति श्वेताश्वतरप्रक्रियानुगुणः। तथा तत्र तत्त्वत्रयस्यैव विशेषतो ज्ञातव्यत्वेन निरूपणं कृतम्— 'संयुक्तमेतत् क्षरमक्षरं च व्यक्ताव्यक्तं भरते विश्वमीशः। अनीशश्चात्मा बध्यते भोक्तृभावाज्ज्ञात्वा देवं मुच्यते सर्वपाशैः॥' 'ज्ञाज्ञौ द्वावजावीशनीशौ अजा ह्येका भोक्तृभोगार्थयुक्ता। अनन्तश्चात्मा विश्वरूपो ह्यकर्ता त्रयं यदा विन्दते ब्रह्ममेतत्॥' 'अस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया संनिरुद्धः। मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्॥' 'स कारणं करणाधिपाधिपः' 'प्रधानक्षेत्रज्ञपतिः' इत्यादौ। भोक्तेत्यादेरयमर्थः—भोक्त्रादित्रितयं प्रोक्तमेतत्त्रयं मत्वा—परस्परविलक्षणत्वेनानुसन्धाय ब्रह्म—मुक्तो भवति। ब्रह्ममिति छान्दसः प्रयोगः। भवतीत्यध्याहारेण योजना। 'त्रयं यदा विन्दते' इत्यत्राप्येवमेव। तत्त्वत्रयं परस्परविलक्षणत्वेन यदा साक्षात्करोति, अथ मुक्तो भवति इति। एवं तत्त्वत्रयज्ञानस्य मुक्तिहेतुत्वं श्रुत्यैव प्रतिपादितम्। यद्यपि 'अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति' इत्यादिषु जीवेशविज्ञानयोरेवाङ्गाङ्गिभावेन मुक्तिसाधनत्वं प्रतीयते अथापि देहत्रयविलक्षणत्वेन क्षेत्रज्ञस्वरूपविज्ञानस्य मायातत्कार्यज्ञानसापेक्षत्वात् मायातत्कार्यविज्ञानमन्तरा तद्वैलक्षण्येनात्मस्वरूपसम्यङ्निर्णयस्यासम्भवाच्च तज्ज्ञानमप्यपेक्षितमेव। एतदभिप्रायेणैव त्रितयज्ञानस्य मुक्तिं प्रत्यपेक्षितत्वं श्वेताश्वतरेऽभिहितम्। श्रीमद्रामानुजाचार्यैरयमेव तत्त्वत्रयविभागः समासतः—'अशेषचिदचिद्वस्तुशेषिणे

शेषशायिने' 'धीनत्रिविधचेतनाचेतनस्वरूपस्थितिप्रवृत्तिभेदम्' इत्यादौ तत्त्वत्रयस्यैवोल्लेखात् ।

रामानुजाचार्यैः परिगृहीतस्तत्त्वत्रयविभाग एव शिक्षापत्र्यां श्रीहरिणा समाश्रित इति ध्येयम् । यद्यपि मायाऽचिदित्युक्ता जीवश्चिदिति । अथाऽपि संज्ञाभेदमात्रं नार्थे भेदः । न हि नामान्तरेण निर्देशमात्रेणार्थैक्यमपैति । सत्सङ्गिजीवनेऽपि 'अनेकमायापुरुषेश्वराय ते' इत्यादाविदमेव तत्त्वत्रयं निर्दिष्टम् । हरिवाक्यसुधासिन्धौ च 'भूमिरापोऽनलो वायुः' 'अपरेयमितस्त्वन्यां' 'यस्मात्क्षरमतीतोऽहं' इत्यादिगीताश्लोकोदाहरणपूर्वकं अचित् चित् तदन्तर्यामी परात्मा चेति तत्त्वत्रयं प्रतिपादितम् । लक्षणादिकं चैषां रामानुजाचार्योपपादितप्रकारेणैवावसेयमिति च व्यक्तं सत्सङ्गिजीवने 'जीवमायापरेशानां स्वरूपं बोद्धुमञ्जसा । रामानुजाचार्यकृता ग्रन्थाः पाठ्यास्त्वयादरात् ॥' 'स्वरूपनिर्णयो ज्ञेयो जीवमायापरात्मनाम् । रामानुजाचार्यकृतग्रन्थेभ्यस्तत्त्वतस्त्वया ॥' 'अतो रूपाणि निश्चेतुं जीवमायापरात्मनाम् । रामानुजाचार्यकृतभाष्यादि त्वं प्रवर्तयेः ॥' इति । अतो न तत्त्वभेदः शङ्कनीयः ।

यच्च पञ्चधा विभजनं सत्सङ्गिजीवनादौ (स. प्र. १ अ. ५१, सुधासिन्धौ प्र. ७ म. ३१ अं १०) वर्णितं–माया जीव ईश्वरो ब्रह्म परंब्रह्मेति । यथा–'जीवमायेशपुरुषकृष्णा इति च पञ्चकम् । अन्योन्याभिन्नं चानादि वर्तते मत औद्धवे ॥' इति । तत्रेश्वरो वैराजादिरक्षरपुरुषश्च ब्रह्मशब्दितः परब्रह्मभिन्नश्चेतनश्च जीवशब्देनैव गृहीतो वेदितव्यस्तत्त्वत्रयविभागे । शेषत्वे

सति चेतनत्वमित्यादि जीवलक्षणं हि तत्साधारणम्। जीवलक्षणे तत्तद्भिन्नत्वविशेषणप्रक्षेपेण चेत्तस्य पृथग्भाव इष्यते, तर्हि देवादिभिन्नत्वविशेषणप्रक्षेपेण देवादेरपि जीवतः पृथग्भावः किं न स्यात्। अतो ज्ञातव्यविशेषाकारविवक्षया ब्राह्मणवसिष्ठन्यायेन पृथग्व्यपदेशः पञ्चधाविभाग इत्येषोचितम्।

तथा च मायादीनामाकारविज्ञानस्योपयोगः प्रतिपाद्यते—मूलप्रकृतिरेव तावद्विचित्रविविधपरिणामिनी भोग्याभासान् प्रदर्श्य जीवान् मोहयतीति मायेत्युच्यते। यया स्वरूपमात्मनस्तिरोधीयते, या स्वगुणैराबध्यात्मानं संसारसागरे पातयति, यतो भयं विज्ञायैव मुमुक्षवो भवन्ति, या च दुर्मोचत्वेन प्रोक्ता 'दैवी ह्येषा गुणमयी मम माया दुरत्यया' इति, सा हि प्रबलविरोधिनी सम्यक् प्रथमं ज्ञातव्या नाम मुमुक्षुभिर्हेयत्वाध्यवसायपूर्वकं तत्सङ्गपरिहाराय।

यच्च सार्वभौमाद्विपदं जीवस्य, यदपि ज्ञानिनामपि ब्रह्मेशानकर्मश्वरपदभण्डाधिपत्यादिलक्षणम्, तापत्रयास्पदतया क्षरणस्वभावतया वा तच्च हेयतयैव ज्ञातव्यं भवति। यत्तु जीवस्य देहत्रयविलक्षणं निष्कृष्टं स्वरूपं ब्रह्मशब्दितं तज्ज्ञातव्यं नामोपादानाय। स्वस्वरूपानुसन्धानं हि भक्तियोगाङ्गतया करणीयं भवति। उच्यते च शास्त्रेषु ज्ञानयोगस्य भक्तियोगाङ्गत्वम्। उक्तं च शिक्षापत्र्यां 'निजात्मानं ब्रह्मरूपं देहत्रयविलक्षणम्। विभाव्य तेन कर्तव्या भक्तिः कृष्णस्य सर्वदा॥' इति। अत्र ब्रह्मशब्देन प्रकृतिविनिर्मुक्तं परिशुद्धात्मस्वरूपं गृह्यते। टीकाभाष्ययोः तथैव व्याख्यानात्। तत्र च ब्रह्मशब्दो भूरिशः प्रयुक्तो गीतादिषु 'ब्रह्मभूतः प्रसन्नात्मा'

इत्यादिषु । मुमुक्षुणाऽनुसन्धेयतया प्राप्यतया च निष्कृष्टं स्वस्वरूपमपि ज्ञातव्यमेव । उक्तश्चायमर्थः सत्सङ्गिजीवने—'चिद्रूप आत्मा विज्ञेयः' इत्यादिना 'ज्ञातव्यो ब्रह्मरूपोऽयं सच्चिदानन्दलक्षणः । आत्मना ब्रह्मरूपेण विशुद्धेनाक्षरेण च । कृष्णमेव परंब्रह्म हृत्पद्मे चिन्तयेः सदा ॥' इत्यन्तेन । हरिवाक्यसुधासिन्धौ च ब्रह्मशब्देन प्रकृतिनिर्मुक्तमात्मस्वरूपं गृहीतम्—'आत्मज्ञानेन चैतन्यादन्यत्किञ्चिन्न शिष्यते । देहत्रयं जायते च नष्टप्रायं ततः स्वकम् । सर्वोपाधिविनिर्मुक्तं सन्मात्रं ब्रह्म शिष्यते ॥' इति । 'कुर्यादात्मविचारं च चञ्चलस्तु पुमान् मुहुः । ब्रह्मास्म्यात्माऽस्म्यलिङ्गोऽस्मि स्थिरोऽस्म्याकाशवत्सदा ॥' इति च । वैराजपुरुषस्य तु प्रथमावताररूपतायाः धारणाश्रयतायाश्च भागवते 'जगृहे पौरुषं रूपं भगवान्' 'वैराजः पुरुषो योऽसौ भगवान् धारणाश्रयः' 'धृत्वादौ पुरुषाकृतिं' इत्यादिवचनैः प्रतिपादितत्वाज्ज्ञातव्यत्वं भवति । क्षराक्षरस्वामिपुरुषोत्तस्वरूपज्ञानार्थं वा क्षराक्षररूपाणां जीवेश्वरब्रह्मणां ज्ञातव्यत्वं सम्भवति । ब्रह्मशब्देन च क्वचिदक्षरं धाम निवासस्थानभूतं, परमात्मनः सेवकमुक्तवृन्दं, क्वचिदक्षरपुरुषश्च सृष्टिद्वारभूतः क्वचिन्निर्दिष्टः । तत्राक्षरधाममुक्तवृन्दयोः प्राप्यकोटावन्तर्भावात्प्राप्यतया ज्ञातव्यत्वम् । अक्षरपुरुषस्य तु मुक्तविशेषस्य भगवतः सृष्ट्यादिव्यापारे मुख्यद्वारभूतत्वाद्विज्ञेयत्वम् । अयं च विष्वक्सेनस्तदन्यो वा तादृगिति बोध्यम् । अथ यत्परंब्रह्म परमात्मा, स भगवान् पुरुषोत्तमः श्रीकृष्णः । तस्य स्वरूपं त्ववश्यमेव ज्ञेयमुपास्यत्वात्प्राप्यत्वाच्च । तत्सेवा हि परमा मुक्तिरिति । सर्वेषां चैतेषां ज्ञातव्यता हरिवाक्यसुधासिन्धवुक्ता—

'विराट्सूत्राव्याकृताना प्रकृतेः पुरुषस्य च । अक्षरब्रह्मण साक्षाद्धरेर्धाम्नश्च वेदनम् । तत्परस्य हरेश्चापि दिव्यमूर्तेर्यथार्थतः । ज्ञानमित्यादि सकल यत्स ज्ञानाख्य उच्यते ॥' इति । तदेव मुमुक्षुभिर्ज्ञातव्यविशेषाकारज्ञापनाय पञ्चधा वर्णन कृतमिति बोध्यम् । न पुनस्तत्त्वसङ्ख्यापरिसङ्ख्यानार्थम् । तदनन्तर्गतस्य कालादेरपि सिद्धान्तसम्भवत्वात् । भेदवादिभिः काणादादिभिर्दर्शनकारैरप्यात्मनि द्वैविध्यमेवोररीकृत जीवात्मा परमात्मा चेति । तदेव युक्तत्वादभ्युपगन्तुमुचितम् । अतश्च मायादिपञ्चकविभाग उक्तयोरीश्वरब्रह्मणोर्यथायोग्य तत्त्वत्रयविभागे जीवेश्वरान्यतरान्तर्भाव एव वस्तुत । तथा हि—तत्रेश्वरशब्देन वैराजपुरुषस्तदुत्पन्नाः ब्रह्मविष्णुरुद्राश्च विवक्षिता । तथा च वासुदेवमाहात्म्ये वचनम्—'वैराजः पुरुषो योऽत्र प्रोक्तोऽसावीश्वराभिध । ज्ञेय स्वतन्त्रः सर्वज्ञो वक्ष्यमायश्च नारद ॥ एतस्यैव स्वरूपाणि ब्रह्मविष्णुशिवाख्यय । रजआदिगुणोपेता स्वगुणानुगुणक्रियाः ॥' इति । तत्र ब्रह्मरुद्रयोर्जीवकोटिप्रविष्टत्वमविवादम् । विष्णोस्त्ववताररूपस्य 'रक्षार्थं सर्वलोकाना विष्णुत्वमुपजग्मिवान्' इत्यादिवचनैरवगम्यते । वैराजपुरुषस्य तु व्यूहभेदरूपत्व युक्तमित्यग्रे वक्ष्यते । व्यूहविभवयोर्बहुल चेतनान्तराव्यवहित एव परब्रह्मण प्रवेश इति च मुख्यगौणावतारविभागवचनैरवगम्यते । अतो वैराजरूपविष्णुरूपयो चेतनव्यवहितप्रवेशाभ्युपगमे जीवकोटिप्रविष्टत्व, साक्षात्प्रवेशे च परब्रह्मसत्त्वा समाप एव । एव ब्रह्मशब्देनोक्तस्य मुक्तमुन्दस, अक्षरपुरुषस्य च कस्यचिन्नित्यमुक्तस्य जीवकोटिघटितत्वमेव । ब्रह्मशब्दितस्याक्षरधाम्नस्तु परब्रह्मभूतस्-

क्षरधामाधिपतिरूपेश्वरशब्दार्थेऽन्तर्भावो बोध्यो विशेषणविधया तत्त्वत्रयविभागे । एवं च न पञ्चधा विभागस्य त्रेधा विभागेन विरोधः । वैवक्षिकं हि विभजनं समासतो व्यासतो वा । तथाच मिथस्तत्त्वानामन्तर्भावबहिर्भावविवक्षया न्यूनाधिकसङ्ख्याया विभजनं युक्तमेवेति श्रीभागवते वर्णितम्—'परस्परानुप्रवेशात्तत्त्वानां पुरुषर्षभ । पौर्वापर्यप्रसङ्ख्यानं यथावक्तुर्विवक्षितम् ॥' इति । 'इति नानाप्रसङ्ख्यानं तत्त्वानामृषिभिः कृतम् । सर्वं न्याय्यं युक्तिमत्त्वाद्विदुषां किमशोभनम् ॥' इति च ।

## एकतत्त्ववादः ।

अत्रेदं तत्त्वम् । तत्त्वं नाम प्रमाणप्रतिपन्नोऽर्थः । प्रमाणेन तु द्रव्यं प्रधानतया, अद्रव्यं च तत्प्रकारतयाऽप्राधान्येन प्रतीयते । तथा च द्रव्यमेव प्रधानतया तत्त्वमभिमतम् । तच्च त्रिविधमभिमतं चिदचिदीश्वरश्चेति । द्रव्येष्वपि मायायां कालस्य; चेतने धर्मभूतज्ञानस्य; ईश्वरे च नित्यविभूतेरसाधारणविशेषणत्वमाश्रित्य तदन्तर्भावविवक्षायां तु माया जीव ईश्वर इति । अत्र ब्रूमः—यथाऽप्रधानतया गुणानविवक्षित्वा तत्त्वविभागस्त्रेधोक्तः, एवं चिदचितोरपि ब्रह्मप्रकारैकस्वभावतायाः शरीरशरीरिभावादिपरश्रुत्यादिसिद्धत्वाद्गौणतामाश्रित्य प्रधानतत्त्वस्य गणनाप्रसङ्गे एकमेव तत्त्वं स्यात् । तच्चाशेषचिदचित्प्रकारं ब्रह्मैव । सहगणनायोग्यस्य सदृशस्यान्यस्य विरहात्तदद्वितीयं चेष्यते । तुल्यानामेव हि सह परिगणनम् । न खलु द्रव्येष्वद्रव्यं गण्यते अद्रव्येषु वा द्रव्यम् । न वा सङ्ख्येयपरिगणने सङ्ख्यापि तद्गुणभूता सह परिगण्यते । नैतावता तत्प्रकारभूतानां चिदचिद्विभूतीनामपलापः सम्भवति । यथा सार्वभौमस्य

गणनायां प्रसक्तायां परिगणिते त्वेकस्मिन्नन्यस्य तत्तुल्यस्य सहगणनायोग्यस्यालाभादद्वितीयत्वं तस्य स्थितम् । नैतावता तत्प्रजाराज्यादिविभूतेर्विलोपः । तद्विलोपे त्विष्यमाणे किं भूपस्य सार्वभौमत्वं भवेत् । एवं सर्वेश्वरस्य सर्वेश्वरत्वसिद्ध्यर्थमेव ईशितव्यसद्भाव एषितव्यः । न च सर्वेश्वरत्वमस्य काल्पनिकमेवेति वाच्यम् । तस्य नित्यत्वाद्धेतुजन्यत्वश्रवणात् 'य ईष्टेऽस्य जगतो नित्यमेव नान्यो हेतुर्विद्यते ईशनाय' इति । एवं च नियन्तव्यस्य चिदचित्प्रपञ्चस्य विभूतिभूतस्य सत्त्वेऽपि तस्याप्रधानतैकवेषतया प्रधानं तत्त्वमशेषचिदचिद्विशिष्टं ब्रह्मैवेति विशिष्टैकतत्त्वाभ्युपगमस्य न विरोधः । तथा चोक्तं शिक्षापत्रीभाष्ये—'वियद्वायुस्तेजः सलिलमवनिश्चेति यदिदं विकाराणां या च प्रकृतिरपि यश्चेतनगणः । न चैषामेकं वा यदगुणतया स्यात्तनुतया प्रकारीभूयास्ते निखिलमपि यद्ब्रह्मण इदम् ॥ तथा च स्वैकान्तैरखिलचिदचिद्धर्मनिचयैर्विशिष्टं ब्रह्मैकं भवति न च तत्त्वं तदधिकम् । अतो नाना नेति श्रुतिशिरसि जोघुष्यत इदं विशिष्टाद्वैतं तत्र हि गुणविभागं न सहते ॥' इति । अयमर्थः सत्सङ्गिजीवने 'कालो माया पुमान् यस्य महत्तत्त्वादयस्तथा । शक्तयः सन्त्येकमेवाद्वितीयं ब्रह्म यः प्रभुः ॥' इत्यस्य व्याख्याने व्यक्तमुक्तः । एवं प्रधानतत्त्वस्य परिगणनायां प्रसक्तायामशेषचिदचिद्विशिष्टं ब्रह्मैकमेव प्रसिद्ध्यति तत्त्वमिति । इदमेव तत्त्वप्राधान्यमभिप्रेत्य महर्षिभिरुद्घोषितं 'तत्त्वं जिज्ञासमानानां हेतुभिः सर्वतोमुखैः । तत्त्वमेको महायोगी हरिर्नारायणः परः ॥' इति । युज्यत इति योगः—प्रकारः, सर्वमेवास्य प्रकारो भवतीति

महायोगी हरिरेवैकं परं तत्त्वमिति यावत् । विशिष्टैकतत्त्वाभ्युपगमादेवायं सिद्धान्तो विशिष्टाद्वैतसिद्धान्त इति प्रथतेतराम् ।

एवं समस्तचिदचिद्विशिष्टं परमं मतम् । तत्त्वमेकं परंब्रह्म वासुदेवसमाह्वयम् ॥ तज्ज्ञानमेव मुक्तेर्हि साक्षात्साधनमिष्यते । विशिष्टप्रतिपत्तिश्च विशेषणधियो भवेत् ॥ नागृहीतविशेषा हि विशिष्टमुपधावति । धीरित्यतश्चिदचितोर्वर्णनेऽपि यतामहे ॥ मायास्वरूपे विदिते सकार्ये क्षेत्रसंज्ञिते । स्वरूपं तद्विदो ज्ञातुमञ्जसा शक्यमित्यतः ॥ प्रथमं वर्णयामोऽत्र मायारूपं सविस्तरम् । दृश्यप्रपञ्चमूलत्वादपि तत् प्राग्घ्युपस्थितम् ॥

त्रिगुणं यद्धरेः शक्तिरूपं द्रव्यं सविक्रियम् ।
ध्रुवमेकमनेकाकारानन्तपरिणामभाक् ॥
ज्ञानानन्दमयस्यात्मस्वरूपस्य च बन्धकम् ।
मोहकं सर्वभूतानां तन्मायेति तु कीर्तितम् ॥

## प्रकृतिनिरूपणम् ।

प्रकृतिरेव तावद्विविधविचित्रपरिणामशालिनी त्रिगुणा मायेति वर्ण्यते श्रुतौ 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्' इति । प्रकरोत्यस्या विकारजातमीश्वर इति प्रकृतिः । तथा च श्रुतिः 'अस्मान्मायी सृजते विश्वमेतत्' इति । नित्येयं सततपरिणामशीला च । तथा च श्रुतिः—'विकारजननीमज्ञामष्टरूपामजां ध्रुवाम्'... 'गौरनाद्यन्तवती सा जनित्री भूतभाविनी' 'अजामेकां लोहितशुक्लकृष्णाम्' इति । स्मृतिश्च—'अचेतना परार्था च नित्या सततविक्रिया' इति । सततविकारशालिन्या अपि नास्याः स्वरूपस्यात्यन्तिकोच्छित्तिः कदापीति ध्रुवत्वम् । सूक्ष्मरूपेणास्याः सर्वदा

सत्त्वादृजत्व स्थूलपरिणामैः परमात्मकार्यत्व च वर्णित चमसाधिकरणे 'ज्योतिरुपक्रमा तु तथाह्यधीयत एके' 'कल्पनोपदेशाच्च मध्वादिवदविरोध' इति। गीतायां च प्रकृतेरप्यनादित्वमुच्यते— 'प्रकृतिं पुरुष चैव विद्ध्यनादी उभावपि' इति। 'अज्ञाम्' 'अचेतना' इत्यादिवचनादचेतनेय जडरूपा च। 'तम आसीत्' इति तम शब्देन कीर्तितत्वात्। तमो ह्यप्रकाशरूपम्। स्वतःप्रकाशरूपत्वाभावश्च जडत्वम्। किञ्च—प्रकृताना पदार्थाना तावत् घटादीना विद्यमानतादशायां सर्वदाऽभानाच्चक्षुरालोकादिसहकारिसम्पत्तावेव भानाच्च जडत्व सिद्धम्। अतो मूलप्रकृतेरपि तत्तद्रूपपरिणामिन्या जडत्वमेष्टव्यम्।

'ध्यायतेऽध्यासिता तेन तन्यते प्रेर्यते पुन। सूयते पुरुषार्थं च तेनैवाधिष्ठिता जगत्॥ गौरनाद्यन्तवती सा जनित्री भूतभाविनी। सिताऽसिता च रक्ता च सर्वकामदुघा विभो॥ पिबन्त्येनामविषमामविज्ञाता कुमारका। एकस्तु पिबते देव स्वच्छन्दोऽत्र वशानुगाम्॥ ध्यानक्रियाभ्या भगवान् भुङ्क्तेऽसौ प्रसभ विभुः। सर्वसाधारणीं दोग्ध्रीं पीड्यमाना तु यज्वभि॥' इत्यत्र परमात्माधिष्ठानेन विचित्रकार्यकरत्व परमात्मनो लीलारसनिष्पादकत्व जीवाना तत्तत्कर्मानुगुणपुरुषार्थप्रसवितृत्व च प्रकृतेर्वर्ण्यते। अयमर्थ — ध्यायते—परमात्मना सङ्कल्परूपज्ञानेन ज्ञायते। अध्यासिता—अधिष्ठिता। तन्यते—विस्तार्यते, समष्टिभूतरूपेण क्रियते। पुनः प्रेर्यते व्यष्टिसृष्ट्यर्थम्। पुरुषेणार्थ्यमान मोक्षमोगोपकरणभोगस्थानरूप जगत् सूयते। गच्छति—जनयति अनवरतमवस्थान्तरं प्राप्नोतीति गौः—

सततपरिणामशालिनी प्रकृतिः । जनित्री समष्टिभूतानाम् । भूतभाविनी—व्यष्टिकारणीभूता । सत्त्वादिगुणत्रयाश्रयीभूता विभोः सर्वेश्वरस्य सृष्टिस्थितिसंहाररूपलीलारसदोग्ध्री । तत्तत्कर्मानुगुणपरिणामित्वादविषमा । यज्वभिः—कर्मानुगुणफललाभाय कर्मद्वाराऽर्ध्यमानामेनां प्रकृतिं मायेश्वरः स्वसङ्कल्पानुसारिसृष्ट्यादिव्यापारेण तत्तत्कर्मविपाकानुसारं विपरिणमय्य स्वयं स्वच्छन्दतो लीलारसं भुङ्क्ते इति ।

गीतायां च 'सर्वभूतानि कौन्तेय प्रकृतिं यान्ति मामिकाम् । कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम् ॥ प्रकृतिं स्वामवष्टभ्य विसृजामि पुनः पुनः । भूतग्राममिमं कृत्स्नमवशं प्रकृतेर्वशात् ॥ मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरम् हेतुनाऽनेन कौन्तेय जगद्विपरिवर्तते ॥' इति प्रकृतेः स्वशेषत्वं स्वाधिष्ठानेनैव विविधभूतजातप्रसवितृत्वं चोच्यते । एवं भगवच्छेषभूता भगवतो लीलारसानुभवे मुख्योपकरणभूता मायेति स्थितम् । अत एव मायापरिणाममयीयं विभूतिर्लीलाविभूतिरुच्यते ।

श्रीभाष्यकारैः प्रकृतेर्दुर्विवेचत्वं त्रिगुणत्वं विकारित्वं अचेतनत्वं दुर्मोचत्वं भगवन्मायात्वं चेतनस्यानवच्छिन्नज्ञानानन्दलक्षणस्वरूपतिरोधायकत्वं च वर्णितं गद्यत्रये—'तिलतैलवत् दारुवह्निवत् दुर्विवेचत्रिगुणक्षणक्षरणस्वभावाचेतनप्रकृतिव्याप्तिरूपदुरत्ययभगवन्मायातिरोहितस्वप्रकाशः' इति ।

यद्यपि 'भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च । अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥' इत्यादौ देवादिभूतारम्भकद्रव्याणि देवादिकं प्रति प्रकृतित्वेनोच्यन्ते, एवं महदादिश्चाहङ्कारादेः प्रकृतिर्भवति । अथापि विकृतित्वासमानाधिकरणप्रकृ-

तित्वाश्रयभूता मूलप्रकृतिर्बोध्या । गुणवैषम्यप्रयुक्ताऽवस्था विकृतिशब्दविवक्षिताऽत्र । यद्यपि प्रकृतावेव सूक्ष्मसूक्ष्मतरसूक्ष्मतमावस्थाभेदा सन्ति । अथापि सर्वास्ववस्थासु गुणसाम्यस्यानपायेन गुणवैषम्यप्रयुक्तं न विकृतित्वमिति बोध्यम् । अस्याश्च गुणत्रयसाम्यावस्थापन्नत्वं लक्षणम् । गुणवैषम्यप्रयुक्तं यन्महत्त्वादि तद्रहितत्वे सति त्रिगुणत्वमिति यावत् । अतो गुणत्रयाश्रयत्वस्य महदादिसाधारण्येऽपि न क्षतिः ।

## प्रकृतेर्मायाशब्दवाच्यत्वम् ।

इयमपरिच्छिन्नज्ञानानन्दैकतानतामात्मना तिरोधाप्यात्मपरिणामेषु वस्तुषु भोग्यताभ्रममुत्पाद्य मोहकत्वाद्विविधविचित्रकार्यकरत्वाच्च माया भवति । एतत्कार्येषु चोदन्वदादिषु केषुचिदाश्चर्यभूतेषु पदार्थेषु मायाशब्दः प्रयुक्तो महर्षिभिः आसुरराक्षसास्त्रेषु च विचित्रार्थकारिषु 'मेघोदयः सागरसन्निवृत्तिरिन्दोर्विभागः स्फुरितानि वायोः । विद्युद्विभङ्गो गतमुष्णरश्मेर्विष्णोर्विचित्राः प्रभवन्ति मायाः ॥' 'तेन मायासहस्रं तच्छम्बरस्याशुगामिना । बालस्य रक्षता देहमेकैकस्येन सूदितम् ॥' इत्यादौ । प्रकृतिप्राकृतसाधारणं तु मायालक्षणं रजोवत्त्वं तमोवत्त्वं वा । सत्त्ववत्त्वं तु न लक्षणं, नित्यविभूतावतिप्रसङ्गात् । रजस्तमोभिन्नसत्त्ववत्त्वस्य लक्षणत्वे च गौरवमिति । कालभिन्नत्वे सति जडत्वमपि तथा । इदं च नित्यविभूतेरजडत्वाभिप्रायेण । अद्रव्येऽतिव्याप्तिवारणाय द्रव्यत्वे सतीति विशेषणीयम् ।

वर्णितं तावन्मायायाः स्वरूपस्वभावादि शिक्षापत्र्या—'त्रिगुणात्मा तमः कृष्णशक्तिर्देहतदीययोः । जीवस्य चाहंममता-

हेतुर्मायाऽवगम्यताम् ॥' इति । त्रयो गुणा यस्याः सा त्रिगुणा, सा चासावात्मा च त्रिगुणात्मा । आत्मशब्दः स्वरूपवचनः । गुणत्रयवन्मायास्वरूपमिति यावत् । सत्त्वं रजस्तम इति गुणास्त्रयः । गुणत्रयमेव मायेति कापिलाः । तन्न । मायागुणत्वेनैषां स्मरणात् 'प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः' 'सत्त्वं रजस्तम इति गुणाः प्रकृतिसम्भवाः' 'ममाङ्ग माया गुणमय्यनेकधा विकल्पबुद्धीः स्वगुणैर्विधत्ते' 'सत्त्वं रजस्तम इति प्रकृतेर्गुणास्तैः' 'एते प्रधानस्य गुणास्त्रयः पुरुषसत्तम' इति । 'अजामेकां लोहितशुक्लकृष्णाम्' इति श्रुतिश्च मायायाः सत्त्वाद्याश्रयत्वमाह ।

## त्रैगुण्यवर्णनम् ।

प्रसङ्गतोऽत्र सत्त्वादीनां प्रकारो निरूप्यते । सत्त्वं नाम प्रकाशसुखादिनिदानमतीन्द्रियं शक्त्यतिरिक्तं अद्रव्यम् । तच्च द्विविधं— शुद्धमशुद्धं चेति । रजस्तमःशून्यद्रव्यवृत्ति सत्त्वं आद्यं नित्यविभूतौ । रजस्तमःसहचरितं चान्त्यं प्रकृतिप्राकृतेषु । सत्त्वस्य प्रकाशादिजनकत्वं गीतायामुक्तम्—'तत्र सत्त्वं निर्मलत्वात्प्रकाशकमनामयम्' इति । प्राकृतमेव तु सत्त्वं बन्धकम् । अस्य च बन्धकत्वं प्राकृतशब्दादिविषयभोग्यताज्ञानजननमुखेन तदनुभवसुखसङ्गहेतुत्वात् । एतच्चोक्तं 'सुखसङ्गेन बध्नाति ज्ञानसङ्गेन चानघ' इति । लोभप्रवृत्त्यादिनिदानमतीन्द्रियं शक्त्यतिरिक्तमद्रव्यं रजः । इदं कर्मसङ्गजननेन बन्धकम् । तथा चोक्तं तत्रैव—'रजो रागात्मकं विद्धि तृष्णासङ्गसमुद्भवम् । तन्निबध्नाति कौन्तेय कर्मसङ्गेन देहिनम् ॥' इति । प्रमादमोहादिनिदानमतीन्द्रियं

शब्दव्यतिरिक्तमद्रव्यं तमः । अस्य कर्तव्यानवधानाद्यापादनेन बन्धकत्वं च तत्रैवावर्णि—'तमस्त्वज्ञानजं विद्धि मोहनं सर्वदेहिनाम् । प्रमादालस्यनिद्राभिस्तन्निबध्नाति भारत ॥' इति । सत्त्वस्य यथार्थज्ञानहेतुत्वं रजसोऽयथाज्ञानहेतुत्वं तमसो विपरीतज्ञानहेतुत्वमपि तत्रैवाभ्यधायि—'प्रवृत्तिं च निवृत्तिं च कार्याकार्ये भयाभये । बन्धं मोक्षं च या वेत्ति बुद्धिः सा पार्थ सात्त्विकी ॥ यया धर्ममधर्मं च कार्यं चाकार्यमेव च । अयथावत्प्रजानाति बुद्धिः सा पार्थ राजसी ॥ अधर्मं धर्ममिति या मन्यते तमसावृता । सर्वार्थान् विपरीतांश्च बुद्धिः सा पार्थ तामसी ॥' इति । तथा लाघवोपष्टम्भनगौरवाणि च त्रैगुण्यस्य कार्याणि क्रमशः । तत्र लाघवं कार्यपटुता । उपष्टम्भनमुत्तेजकता । गौरवं स्तब्धता । एतेषां च प्राचीनकर्मवशाच्छरीराप्यायकाहारवैषम्याच्चोद्भवाभिभवरूपेणावस्थानं सृष्टौ । प्रलये तु समतैव । गुणानामुद्भवभेदश्च कार्यैकसमधिगम्यः । यथोच्यते—'सर्वद्वारेषु देहेऽस्मिन् प्रकाश उपजायते । ज्ञानं यदा तदा विद्याद्विवृद्धं सत्त्वमित्युत ॥ लोभः प्रवृत्तिरारम्भः कर्मणामशमः स्पृहा । रजस्येतानि जायन्ते विवृद्धे भरतर्षभ ॥ अप्रकाशोऽप्रवृत्तिश्च प्रमादो मोह एव च । तमस्येतानि जायन्ते विवृद्धे कुरुनन्दन ॥' इति । एते च गुणाः सृष्ट्याद्युपयुक्ता भगवता सङ्कर्षणादिमूर्तिभिरधिष्ठीयन्ते । तदधिष्ठानप्रयुक्तोद्भवाभिभवभेदेन च विषमसृष्टिः । वर्णितं चैतत्सर्वं तत्त्वमुक्ताकलापे—"स्थित्युत्पत्त्यन्तलीलाविधिषु भगवताऽधिष्ठिताः शास्त्रवेद्याः सत्त्वाद्याः स्थूलसूक्ष्मप्रकृतिगतगुणा हेतुभूता

सुखादेः । साम्ये तेषां त्रयाणां सदृशपरिणतिः स्यादिहान्या-न्यथात्वे क्लृप्ताऽन्यैर्द्रव्यतैषां श्रुतिपथविहिता कुत्रचित्तूपचारः ॥' इति ।

त्रिगुणात्मके देहे वर्तमानोऽपि पुमान् सात्त्विकाहारसेवादिना रजस्तमसी अभिभाव्योद्भूतसत्त्वगुणतया देहेन्द्रियादेरवस्थापनेन निःश्रेयसार्थं योगं योक्तुं प्रयतेतेति चाध्यात्मशास्त्रोपदेशप्रणालिकेत्यास्तां तावत् ।

## मायायास्तमःशब्दवाच्यत्वम् ।

त्रिगुणायां च प्रकृतावत्यन्तसूक्ष्मावस्थापन्नायामन्तर्निमग्ना बद्धजीवराशयो गाढान्धकार इव निपतिताः पदार्था न विवेक्तुं शक्यन्त इति सेयमत्यन्तसूक्ष्मावस्थापन्ना तमःशब्देनाभिधीयते । 'नासदासीन्नो सदासीत्तदानीं तम आसीत् तमसा गूढमग्रे प्रकेतम्' इति च श्रुतिः । आह च मनुः—'आसीदिदं तमोभूतमप्रज्ञातमलक्षणम्' इति । भागवते च 'तमस्तदानीं गहनं गभीरम्' इति । 'प्रकृतिर्गुणसाम्यं वै' इत्युक्तप्रकारेण गुणत्रयसाम्यलक्षणाया अप्यस्याः सूक्ष्मसूक्ष्मतरावस्थाभेदेनाव्यक्तमक्षरमिति च व्यपदेशः सुबालोपनिषदि दृश्यते लयप्रकरणे—'महानव्यक्ते लीयते अव्यक्तमक्षरे लीयते अक्षरं तमसि लीयते तमः परे देवे एकीभवति' इति । महत्त्वलक्षणकार्योन्मुखावस्थायामव्यक्तं अव्याकृतं प्रधानमित्यप्युच्यते—'यत्तत्त्रिगुणमव्यक्तं नित्यं सदसदात्मकम् । प्रधानं प्रकृतिं प्राहुरविशेषं विशेषवत् ॥' 'शुद्धं गुणत्रयं ह्येतत् प्रोच्यतेऽव्याकृताभिधम् ।' इति । महत्त्वलक्षणकार्योन्मुख्यरहिताऽक्षरावस्था । अस्यां दशायां तन्निष्टं चित्समष्टि-

ग्रभेत्व विवेक्तुं शक्यते। यदा तद्विवेक्तुं न शक्यतेऽस्या अतिसूक्ष्म-शामान्या, तदा तम शब्दवाच्यैव भवति। अस्या अपि स्वरूपं यदा न विवेक्तुं शक्यते विलक्षणसंयोगवशात्परमात्मनि, तदा त्व-विभक्तं तम इत्युच्यते। अवस्थाचतुष्टयं चैतत्सनिदर्शनमुपपादितं (तत्त्वाख्ये व्यासार्यैः) 'भूतलनिहितबीजस्थानीयमविभक्तं तमः, स्तुभि स्तुतबीजस्थानीयं विभक्तं तमः, सलिलसंस्पृष्टाद्रभूभ्यवयवबीज-तुल्यमक्षरं, उच्छूनबीजसमानमव्यक्तं, अङ्कुरस्थानीयो महान्' इति। अवस्थाचतुष्टयेऽपि गुणत्रयसाम्येन तद्वैषम्यप्रयुक्तकार्यविरहात्पृथग-विगणय्य मूलप्रकृतितो महत्तत्त्वप्रभृतिरेव कार्यवर्गः परिगण्यते।

## मायाया भगवदात्मकत्वम्।

न स्वतन्त्रैव किंतु शक्तिरूपा वासुदेवस्य तत्परतन्त्रा तदीक्षणे-नैवाहितवीर्या विचित्रकार्यजनने प्रभवति। अस्या भगवत शक्ति-रूपत्वमुक्तं श्रीभागवते—'सा वा एतस्य संद्रष्टुः शक्तिः सदस-दात्मिका। माया नाम महाभाग ययेदं निर्ममे प्रभुः॥' 'स्वशक्त्या मायया युक्तः सृजत्यत्ति च पाति च॥' इति। तदुच्यते—'कृष्णशक्ति'रिति। 'ते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिं स्वगुणैर्निगूढाम्' इति च श्रुतिः। गीतायां भगव-तैवोक्तं स्वशेषत्वं मायाया लीलारसमनुबुभूषुणा स्वेनैव प्रवर्तितत्वं च—'दैवी ह्येषा गुणमयी मम माया दुरत्यया' इति। 'दिवु क्रीडायां' इति हि धातुः। जगत्सृष्ट्यादिक्रीडाप्रवृत्तो देवः, तस्ये-यमुपकरणभूता माया 'दैवी'ति व्यपदिश्यते। अस्याश्च मायाया देवप्रवर्तितायाः देवप्रसादेनैव शरणागतिजनितेन सुतरत्वं चोक्तं तत्रैव—'मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते' इति।

सत्सङ्गिजीवने च मायायाः स्वरूपस्वभावावुक्तम्—'जन्मक्षेत्रं च जीवानामनादिश्चिज्जडात्मिका । तमोमयी हरेः शक्तिः कार्यकारणरूपिणी ॥ गुणत्रयात्मिका चाजा या चोक्ताऽज्ञानसंज्ञिका । सा मायेति त्वया ज्ञेया यां तरन्त्याश्रिता हरेः ॥' इति । स्वयं त्रिगुणत्वाज्जडत्वं, परप्रकृतिभूतचित्समष्टिगर्भत्वाच्चिदात्मकत्वम् । अत उक्तं 'चिज्जडात्मिका' इति । हरिवाक्यसुधासिन्धौ च—'नित्या च भगवच्छक्तिस्त्रिगुणा चिज्जडात्मिका । निर्विशेषा जीवमहत्तत्त्वादिक्षेत्रमव्यया ॥ इत्युक्ता प्रकृतिस्तस्याः साम्यस्थगुणचालनः । कालो ज्ञेयः' इति ।

कालानुगुणगुणवृत्तिमय्यां प्रकृतौ स्वात्मकपुरुषद्वाराऽनुप्रविश्य वीर्यं सृष्टिसामर्थ्यलक्षणमुत्पादितवान् वासुदेव इति वर्ण्यते भागवते—'कालवृत्त्यां तु मायायां गुणमय्यामधोक्षजः । पुरुषेणात्मभूतेन वीर्यमाधत्त वीर्यवान् ॥' इति । एवं भगवता स्वात्मकपुरुषद्वाराऽऽपादितसामर्थ्याया मायाया महत्तत्त्वमभवदित्युच्यते—'ततोऽभवन्महत्तत्त्वमव्यक्तात्कालचोदितात् । विज्ञानात्मात्मदेहस्थं विश्वं व्यञ्जंस्तमोनुदः ॥' इति । अत्र विज्ञानशब्दितजीवशरीरकः परमात्मा स्वशरीरभूतप्रकृतिलीनं कार्यजातं व्यञ्जयितुं सूक्ष्मावस्थप्रकृतिप्रेरकः सन् स्वात्मकादव्यक्तात्स्वेनापादितसामर्थ्यात्कालक्षोभितगुणत्रयान्महत्तत्त्वरूपेणाभूदिति विवक्षितोऽर्थः । 'विज्ञानात्मा महदभू'दिति सामानाधिकरण्यं च शरीरात्मभावनिबन्धनम् । एवं च प्रकृतिपुरुषशरीरक एव परमात्मा महत्तत्त्वशरीरकोऽभूदिति फलति । एतेन पातञ्जलानामिव न केवलं प्रकृतेरधिष्ठानेनेश्वरस्य निमित्तत्वमात्रं विवक्षितं किन्तु परमात्मन-

स्वसच्छरीरकत्वेनोपादानत्वमपि श्रुत्यन्तसिद्धमिति ध्येयम् । एव कालकर्मस्वभावान् सहकारिण स्वस्वकार्योन्मुख्यमापाद्य प्रकृतिं च स्वात्मकपुरुषद्वाराऽधिष्ठाय ता महदादिरूपेण परिणामयति वै स्वसक्तिमूर्तैरिति चोक्त तत्रैव–'काल कर्म स्वभाव च मायेशो मायया स्वया । आत्मन् यदृच्छया प्राप्त विबुभूषुरुपाददे ॥ कालाद्गुणव्यतिकरात्परिणामस्वभावत । कर्मणो जन्म महत पुरुषाधिष्ठितादभूत् ॥' इति । अत्राव्यक्तादिति शेष । सत्स-ज्ञिजीवते चायमर्थो वर्णित –'सगुणब्रह्मसज्ञोऽसौ सिसृक्षु पुरुषो जगत् । काल कर्म स्वभाव च प्राप्तोत्यादौ हरी-च्छया ॥ ईक्षण वीर्यमाधत्ते महापुरुषवीक्षित । पुरुष स प्रधानाख्यप्रकृतौ तै समन्वित ॥ पुरुषाधिष्ठितेनाथ प्रधाने त्रिगुणात्मके । प्राप्नुवन्ति गुणा क्षोभ कालेनैवादितस्त्रय ॥

प्रविश्यात्मेच्छया हरिः। क्षोभयामास सम्प्राप्ते सर्गकाले व्ययाव्ययौ॥' 'मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम्' 'यावत्सञ्जायते किञ्चित्सत्त्वं स्थावरजङ्गमम् । क्षेत्रक्षेत्रज्ञसंयोगात्तद्विद्धि भरतर्षभ॥' 'एतद्योनीनि भूतानि सर्वाणीत्युपधारय। अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा॥' इत्यादिशास्त्रेषु समष्टिप्रकृतिपुरुषयोर्व्यष्टिभूतक्षेत्रक्षेत्रज्ञयोश्च विलक्षणसंयोगादेव परमपुरुषसङ्कल्पकृताज्जगत्सृष्टिर्वर्णिता । न तत्र सृज्यजीवकोट्यघटितानां अक्षरपुरुषप्रधानपुरुषाणां पृथक्त्वेन प्रस्तावोऽस्ति । अथापि कतिपयपुराणवचनानुसारेण पृथग्भूताक्षरप्रधानपुरुषद्वारकसृष्टिवादः कृतोऽस्ति क्वचित्साम्प्रदायिकग्रन्थेषु । अक्षरपुरुषप्रधानपुरुषाणां महामायाप्रधानाभिमानितया निर्वाहोऽस्य करणीयः । तत्र मूलप्रकृतेरभिमानी अक्षरपुरुषः, प्रधानस्याण्डभेदेन भिन्नस्याभिमानिनस्तु पुरुषा इत्युच्यन्ते । विस्तरस्तु सम्प्रदायग्रन्थेषु द्रष्टव्यः ।

## परमाणुस्वतन्त्रप्रधानकारणत्वनिरासः ।

एवं ईश्वराधिष्ठितमायाकारणत्वस्य श्रुतिस्मृतिसिद्धत्वादेवेश्वराधिष्ठितपरमाणुकारणवादो वैशेषिकानां स्वतन्त्रप्रधानकारणवादश्च कापिलानां निरस्तो वेदितव्यः । तथाहि । काणादास्तावदेवमभिमन्यन्ते—ईश्वरस्य चिकीर्षावशात्परमाणौ क्रिया, द्वयोः परमाण्वोः संयोगात् द्व्यणुकं, त्रिभिस्तैः संयुक्तैस्त्र्यणुकमित्यादिक्रमेण जगत आरम्भः । ते च परमाणवः क्षित्यप्तेजोवाय्वारम्भकाश्चतुर्विधाः सन्ति गन्धादिलक्षणा इति । निरस्तश्चायं वादः सूत्रकारेण—'महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम्' इति । न पराभिमते परमाणौ प्रमाणं किमपि पश्यामः । अदृश्ये तस्मिन् अनुमानं यदुत्प्रेक्ष्यते—

जालसूर्यमरीचिस्थ यत्सूक्ष्मतम दृश्यते तत् कार्यद्रव्यारब्ध चाक्षुषद्रव्यत्वात् तस्य च कार्यद्रव्यस्य सावयवत्वेन तदवयवः कश्चन स्वीकरणीय । तेन चावयवधाराविश्रान्तिस्थानभूतेन भाव्यम् । अन्यथाऽनवस्थापात , मेरुसर्षपयो साम्यप्रसङ्गश्चेति । तन्न । विपक्षे बाधकाभावात् । न हि द्रव्यस्य चाक्षुषत्वे कार्यद्रव्यारब्धत्व प्रयोजकम् । उद्भूतरूपस्यैव तु तत्र प्रयोजकता । ननु कानिचिद्दृश्यान्यपि न विशदावभासानि, कानिचित्तु विशदावभासानि । तत्र निमित्त महत्त्वतारतम्यम् । यत्र महत्त्वप्रकर्षस्तत्र चाक्षुषप्रकर्ष, यत्र तु न तत्प्रकर्षस्तत्र न चाक्षुषप्रकर्ष । असति महत्त्वस्य चाक्षुषे कारणत्वे तत्प्रकर्षयो कार्यकारणभावोऽय न घटेत । तस्मात्सिद्ध महत्त्वस्य द्रव्यचाक्षुषे हेतुत्वम् । तथैवावयवसङ्ख्याप्रकर्षे चाक्षुषप्रकर्षस्तदप्रकर्षे तदपकर्ष इति चाक्षुषविशेषेऽवयवसङ्ख्याविशेषस्य हेतुत्वात् कार्यद्रव्यारब्धत्व चाक्षुषत्वे भवति निमित्तम् । इति चेन्न । अवश्यक्लृप्तनियतपूर्ववृत्तिना उद्भूतरूपेणैव द्रव्यचाक्षुषे सम्भवति तत्सहभूतमन्यथासिद्धम् । सत्यपि महत्त्वेऽसत्युद्भूतरूपे न भवति चाक्षुषम् । तत् द्रव्यनिष्ठविषयतासम्बन्धेन चाक्षुष प्रत्युद्भूतरूपस्य कारणत्व क्लृप्तमिति तत्सहभूतत्वमात्रेण महत्त्वस्य क्व कारणता । न च महत्त्वप्रकर्षस्य चाक्षुषप्रकर्षे हेतुत्व महत्त्वस्य चाक्षुषे हेतुत्व विना न घटेत । यथोपलम्भ च योग्यता स्वीकार्या । किञ्च विप्रतिपन्ने कार्यद्रव्यारब्धत्व साधयतस्तव नाभिलषितसिद्धि । सर्वस्य परम्परया प्रकृतिकार्यत्व वदतामस्माक परम्परयाऽऽकाशादिकार्यद्रव्यारब्धत्व तस्यापीष्टमेव हि । यदप्यणुपरिमाणतारतम्येन क्वचिद्विश्रान्तेन भाव्यमिति, भवतु नाम विश्रा-

न्तिस्थानम् । अदृश्येनैव भाव्यमिति कोऽयं निर्बन्धः । दृश्येष्वेव सर्वतः सूक्ष्मतमं यत् तदेव तद्भवतु। का चेयं मर्यादा—परमाणुर्द्व्यणुकं चेति द्वावेवाणू, त्र्यणुकप्रभृति तु महदिति । सर्षपे तत्तुल्यपरिमाणेष्वपि हि लोकेऽणुव्यवहारो दृष्टः, ततोऽप्यपकृष्टपरिमाणेषु अणुतरोऽयमणुतम इति च । तथा सर्षपादप्यत्यन्तमपकृष्टपरिमाणं धान्यविशेषमपेक्ष्य भवति सर्षपेऽयं महानिति व्यवहारः । तस्मादनुमानतः कारणकाष्ठाकल्पनातः श्रुतितः कल्पनैव तु न्याय्या । तथा च प्रकृतिर्गुणमयी मायाशब्दाभिलप्या विकृतीनां सर्वासामासामाकाशादीनां मूलमिति सिद्धम् ।

यच्च कापिला मन्यन्ते—गुणत्रयात्मिकैव प्रकृतिर्जडाऽप्यधिष्ठातृचेतननिरपेक्षं स्वयमेव महदाद्यात्मना विकरोतीति । तदिदं सूत्रकारेण 'रचनानुपपत्तेश्च नानुमानं प्रवृत्तेश्च' इत्यादिना निरस्तम् । यच्च तैः श्रुतिर्बलात्स्वाभिमते प्रधानकारणवादे नीयते तदपि 'ईक्षतेर्नाशब्दम्' इत्यादिना निरस्तं सूत्रकृता । तेषामेषा प्रक्रिया—सततपरिणामशीला विकरोति गुणत्रयी स्वयं जातु । जनयति विविधान् भावान् एकैकगुणोद्भवाभिभवभेदात् ॥ अपगतविविधविकारा सन्त्यक्तान्योन्यवैषम्या । श्रान्तेवासक्त्यातात्प्रसवाद्विश्राम्यति स्वयं जातु ॥ पुंसः सन्निधिमात्रात्पुनरपि विकरोति विविधभावेन । अर्थाय पुंस एव प्रवृत्तिरस्या निवृत्तिश्च ॥ इति । अत्र सिद्धान्तिनः प्रतिवदन्ति—पुंसः सन्निधिमात्रं सततं तुल्यं विभुः स नित्यश्च । स ह्यविकारः पुरुषः सत्तामात्रात्तु सन्निधिर्नान्या ॥ तत्सर्गप्रतिसर्गव्यवस्थितिर्नैव वो घटते। पुरुषानधिष्ठितायां न जडायां तु कचित्

क्रिया दृष्टा ॥ सर्गोपपादनार्थं पङ्ग्वन्धनिदर्शनं यदपि। ननु विषमं तद्धि तयोर्व्यापारः कश्चिदस्ति नात्रैवम् ॥ गन्तुं प्रभवत्यन्धः शक्नोति हि पङ्गुरादेष्टुम्। निर्व्यापारः पुरुषः सत्तामात्रं च सर्वदास्त्येव ॥ प्राग्विकृतेर्गुणसाम्यात् व्यापारः कोऽपि न प्रकृतौ। अत एव नात्र घटते लोहादिनिदर्शनं चापि ॥ इति।

## मायाया अनन्तत्वम्।

इयं तिर्यगधश्चानन्ता, ऊर्ध्वं तु परिच्छिन्ना। नित्यविभूतेस्तमसः परत्वश्रुतेः। 'तदनन्तमसङ्ख्यातमप्रमाणं च' इत्यव्यक्तस्यापरिच्छिन्नत्ववचनं च तिर्यगधःप्रदेशविषयं बोध्यम्। नानया परितो व्याप्तयाऽपि मध्ये सञ्चरतां मूर्तानां गत्यागत्योरुपरोधो गगनेनेव। अस्पर्शत्वेनाप्रतिघातकत्वात्। सततपरिणामशीलत्वादियं समान् विषमांश्च परिणामान् कालभेदेन देशभेदेन चारभते। गुणवैषम्यानापन्नाः परिणामा महाप्रलये। सर्गे तु गुणवैषम्यास्पदानास्पदप्रदेशभेदेन समासमपरिणामाः।

## मायाया निरवयवत्वम्।

न चास्याः परिणतिभेदा महदादिरूपेण घटादिपरिणतय इव मृत्पिण्डस्य खण्डितत्वमापादयन्ति। निरवयवत्वात्। काणादानां पक्षे निरवयवतया अंशरहितस्याप्याकाशस्य क्वचित्तीव्रशब्दजनकत्वं क्वचिच्च मन्दशब्दजनकत्वमिव निरंशाया अपि प्रकृतेर्महदादितत्त्वभेदजनकत्वमुपपद्यते। न चाकाशस्य भेरीमृदङ्गाद्युपाधिभेदादंशभेदकल्पनोपपद्यते, प्रकृतेस्तु न तथाविध

क्रिया दृष्टा ॥ सर्गोपपादनार्थं पङ्ग्वन्धनिदर्शनं यदपि । ननु विषमं तद्धि तयोर्व्यापारः कश्चिदस्ति नात्रैवम् ॥ गन्तु प्रभवत्यन्धः शक्नोति हि पङ्गुरादेष्टुम् । निर्व्यापारं पुरुष सत्तामात्रं च सर्वदास्त्येव ॥ प्राग्विकृतेर्गुणसाम्यात् व्यापार कोऽपि न प्रकृतौ । अत एव नात्र घटते लोहादिनिदर्शनं चापि ॥ इति ।

## मायाया अनन्तत्वम् ।

इयं तिर्यगधश्चानन्ता, ऊर्ध्वं तु परिच्छिन्ना । नित्यविभूतेस्तमस परत्वश्रुतेः । 'तदनन्तमसङ्ख्यातप्रमाणं च' इत्यव्यक्तस्यापरिच्छिन्नत्ववचनं च तिर्यगधःप्रदेशविषयं बोध्यम् । नानया परितो व्याप्तयाऽपि मध्ये सञ्चरतां मूर्तानां गत्यागत्योरुपरोधो गगनेनेव । अस्पर्शत्वेनाप्रतिघातकत्वात् । सततपरिणामशीलत्वादियं समान् विषमांश्च परिणामान् कालभेदेन देशभेदेन चारभते । गुणवैषम्यानापन्नाः परिणामा महाप्रलये । सर्गे तु गुणवैषम्यास्पदानास्पदप्रदेशभेदेन समासमपरिणामाः ।

## मायाया निरवयवत्वम् ।

न चास्याः परिणतिभेदा महदादिरूपेण घटादिपरिणतय इव मृत्पिण्डस्य खण्डितत्वमापादयन्ति । निरवयवत्वात् । काणादानां पक्षे निरवयवतया अंशरहितस्याप्याकाशस्य क्वचित्तीव्रशब्दजनकत्वं क्वचिच्च मन्दशब्दजनकत्वमिव निरंशाया अपि प्रकृतेर्महदादितत्त्वभेदजनकत्वमुपपद्यते । न चाकाशस्य भेर्यादिसंबन्धादुपाधिभेदादंशभेदकल्पनोपपद्यते, प्रकृतेस्तु न तथाविध उपाधिः कश्चिदस्ति ।

नैवम्। 'अत्र महान् जायतामत्राहङ्कारो जायता'मित्यादेरीश्वर-सङ्कल्परूपोपाधेरेव प्रदेशभेदकल्पकत्वात्। सङ्कल्पश्च द्रव्यमेव, सिद्धान्ते धर्मभूतज्ञानस्य द्रव्यत्वात्तद्विशेषत्वाच्चास्य। अतस्तत्तत्सं-युक्तप्रदेशे तत्तद्विकारविशेष उपपद्यते नाम। ननु सङ्कल्पविशेष-लक्षणद्रव्यसंयोगो वा प्रादेशिको निरंशायां कथं घटेत। भेर्या-दिसंयोगो वा प्रादेशिको निरंशे गगने कथम्?। स्वाभावसामाना-धिकरण्येन प्रतीयमानोऽयमेव स्वानुबन्धेन प्रदेशभेदबुद्धिहेतुर्भ-वतीत्यस्य स्वभाव इति चेत्तुल्यं प्रकृतेऽपि। तदुक्तं न्यायसिद्धाञ्जने— "प्रदेशवर्तिसंयोगाद्याधाराणुविभुक्रमात्। निरंशस्यापि घटते प्रादेशिकविकारिता॥" इति। अस्याश्च गन्धादिलक्षणपरिणा-मभेदे छेदनादियोगोऽपि यथोपलम्भं स्वीकार्यः। विस्तरस्तु न्याय-सिद्धाञ्जनादौ बोध्यः।

यद्वा प्रकृतेरपि सांशत्वमस्तु। यथा 'व्योम्नोऽर्धभागाश्चत्वारो वायुतेजःपयोभुवाम्' इत्यादिना आकाशादेः सावयवत्वं प्रतीयते तद्वत्। यथा केचन मृदंशा घटत्वलक्षणविशिष्टैकावस्थां कारक-व्यापारात्प्राप्नुवन्ति। एवं प्रकृतेरप्यंशाः कतिचन महत्त्वावस्थां प्राप्नुवन्ति। महदादेश्च कतिचनांशा अहङ्कारत्वाद्यवस्थाम्। नन्वेवं प्रकृतेः सांशत्वे परमाणुपुञ्जरूपतैव प्राप्ता। नैवम्। परमाणूनां हि पृथिव्याद्यंशानां गन्धादिमत्त्वं सत्त्वादिगुणराहित्यं परस्पर-प्रतिघातकत्वं असुश्लिष्टत्वं च परैरभ्युपगम्यते। प्रकृत्यंशानां तु तद्विलक्षणत्वमेव। तथा च 'शब्दस्पर्शविहीनं तद्रूपादिभिरसं-संयुतम्। त्रिगुणं तज्जगद्योनिरनादिप्रभवाप्ययम्॥' इत्या-द्यागमप्रतिपन्नमिति न दोषः।

प्रकृत्यादीनां चांशत एव महदादिरूपेण परिणामित्वमेष्टव्यम्। अन्यथा त्वेकतत्त्वपरिशेषप्रसङ्गेन तेषां श्रूयमाणमण्डावरणत्वमनुपपन्नं स्यात्। तथा च वचनम्—'वारिवह्न्यनिलाकाशैस्ततो भूतादिना बहिः। वृतं दशगुणैरण्डं भूतादिर्महता तथा॥ अव्यक्तेनावृतो ब्रह्मन् तैः सर्वैः सहितो महान्। एभिरावरणैरण्डं सप्तभिः प्राकृतैर्वृतम्॥' इति। हरिवाक्यसुधासिन्धौ चांशत उत्पत्तिः स्पष्टमुक्ता ज्ञातव्या।

## सत्कार्यवादः।

अस्याश्च प्रकृतेर्महदहङ्कारैकादशेन्द्रियतन्मात्रपञ्चकभूतपञ्चकात्मना परिणतिभेदैर्भवति चतुर्विंशतिविधत्वम्। अत एव कार्यकारणयोरनन्यता। परिणामो हि सत एव द्रव्यस्यावस्थान्तरापत्तिमात्रम्। यथा मृदः पिण्डावस्थाप्रहाणेन कम्बुग्रीवाद्यवस्थाप्राप्तिः। एतेनावयवावयविभेदमाश्रित्य योऽयमसत्कार्यवादो नैयायिकाद्युक्तः स परास्तः। तन्तव एव हि सन्निवेशविशेषविशिष्टाः पटात्मना दृश्यन्ते। अबाधिते च प्रत्यक्षे न तद्विरुद्धोऽर्थः प्रमाणपथमधिरोहति। ननु सत एव चेत्कार्यता कारकव्यापारनैरपेक्ष्यमापद्येत। अपूर्वार्थनिष्पादनं हि कारकव्यापारस्य प्रयोजनम्। नामभेदश्चार्थान्तरमपेक्षते। प्रयोजनभेदश्च—अन्यदेव पटस्य प्रयोजनमाच्छादनादि अन्यदेव तु तन्तूनाम्। तथा सङ्ख्याभेदः—तन्तवः सहस्रं पटस्त्वेकः। तथा च कालभेदः—कारणं प्राक् कार्यं तु पश्चादेव। तस्मात् उपादेयेनोपादानादन्येनैव भाव्यम्। नैवम्। अवस्थाभेदेनैव सर्वनिर्वाहात्। द्रव्यैक्येऽप्यवस्था हि भिद्यते। यथा—एकस्यैव मृद्द्रव्यस्य प्राक् पिण्डावस्था पश्चात्तु कम्बुग्रीवादिलक्षण-

घटावस्था । तन्तूनामेव पूर्वं विश्लिष्टानां पश्चाद्व्यतिषङ्गविशेषलक्षण-पटावस्था । अवस्थावैचित्र्यस्यैवापूर्वस्य कारकव्यापारसापेक्षता । अवस्थाभेदादेव नामभेदादिश्चोपपद्यते । किञ्च द्रव्यान्तरवादिनां 'यः पूर्वमिह मृत्पिण्ड आसीत् स एवाद्येह घटशरावाद्यात्मनाऽस्ति' इत्यबाधिता प्रत्यभिज्ञा विरुध्येत । तथा तन्तुगुरुत्वतो द्विगुणं गुरुत्वं पटे प्रसज्येत । भिन्नयोरुपादानोपादेययोरेकत्र सम्भूय स्थितेः । इष्यमाणे च गुरुत्वाधिक्ये पतनातिरेकः प्रसज्येत्, तोलने चाधिक्यमुपलभ्येत । निरस्तश्चायमसत्कार्यवादस्तत्त्वमुक्ता-कलापे—'कार्योपादानभेदे न कथमधिकता गौरवादेः स्वकार्ये नान्यत्वं नामसङ्ख्याव्यवहृतिधिषणाकारकालादिभेदैः । द्रव्या-भेदेऽप्यवस्थान्तरत इह तु ते पत्रताटङ्कवत् स्युः नोचे-द्देशांशिनोः स्यात् प्रतिहतिरुभयोः स्पर्शवत्त्वाविशेषात् ॥' इत्यादिना । न्यायसिद्धाञ्जने च विस्तरेणैतदुपपादितम् । निरस्त-श्चायमसत्कार्यवादः शास्त्रदीपिकायाम्—'ननु तन्तुपटादिषु द्रव्या-न्तरोत्पत्तिरेवाभिमता, अन्यथा ह्यवयव्यपलापः स्यात् । न वयम-वयविनमपह्नुमहे, द्रव्यान्तरोत्पत्तिं तु नेच्छामः, प्रतिपत्त्यभा-वात् । तन्तव एव हि संयोगविशेषादेकद्रव्यतामापद्यन्ते अवयवी च भवन्ति । तादृशाश्च पटजातिं स्थौल्यं च बिभ्रत एकपट-स्थौल्यबुद्ध्या गृह्यन्ते इति लौकिकी प्रतिपत्तिः । अतो न द्रव्यस्य कदाचिदागमोऽपायो वा, घटपटगवाश्वशुक्लरक्तावस्थानामेवागमा-पायौ' इति । सतोऽपि द्रव्यस्योत्पादविनाशव्यवहारालम्बनं यत्सै-वावस्था । यथा—घटस्य भग्नस्य या कपालावस्था सा घटावस्थ-याऽवस्थितद्रव्यापेक्षया नाश उच्यते, सैव स्वावस्थयाऽवस्थितद्र-

स्त्वपेक्ष्योत्पत्तिरुच्यते । भग्नो घटः कपालो जात इति हि भवति व्यवहारः । नन्ववस्थाविशेषस्य पूर्वमसतः पश्चादुत्पत्त्यभ्युपगमे-नासत्कार्यवादो भवताऽप्याश्रयणीय एव । सत्यम्, अपूर्वः कोऽप्यवयवी अवयवेषु तेभ्योऽन्यः उत्पद्यते इति योऽयमसत्कार्यवादः परैराश्रितः स तु प्रत्यस्यते । प्रथितश्चायमेवासत्कार्यवाद इति ।

यत्तु न कापिला मन्यन्ते—कूर्मकर्परे तदङ्गानीवोपसंह्रियमाणानि घटाद्यवयविद्रव्याणि तदवयवे मृत्पिण्डे निलीनानि कुलालादिकारकव्यापारेणाविर्भवन्ति । तदेव सर्वमेवोपादेयद्रव्यमुपादाने प्राक् निलीनं पश्चादाविर्भवति । तस्मान्नासज्जायते । नह्यसतो जनिर्घटेत । ननु न गगनकुसुमवदसत्, प्राक् असदुच्यते । जातु असत् जातु सदिति कथम्? । असत् असदेव । अतोऽसतः करणायोगः । किञ्च घटकरणाय मृदेवादीयते न तन्तवः । असतो घटस्य चेदुत्पादः, असद्धर्मो मृत्पिण्ड इव अतद्धर्मस्तन्तु किं नोपादीयते घटाधानाय । सर्वतः सर्वस्य सम्भवः प्रसज्यते च । ननु शक्तादेव शक्यसम्भवो नाशक्तादिति चेत् कार्यगर्भतां विना कारणे शक्तिम् परां न पश्यामः । उपादेयगर्भतैव तूपादानस्योपादेयजनने शक्तिः । यथा तिलानां तैलजनने । स्थूलमपि कार्यं सूक्ष्मेण रूपेण सन्निधत्ते कारणे । तस्मात्तिरोभूतस्य प्रादुर्भाव एव जनिरिति । हन्त सत्कार्यवादस्य प्रतिष्ठापनकौशलम् । इमां कारकसामग्रीं प्रथितां लोकवेदयोः ॥ व्यञ्जिकैवेति वदता तद्विरोधस्तृणीकृतः । घटकारकसामग्र्या घटवत्करकादिकम् ॥ व्यज्यतां स हि मृत्पिण्डः प्रभवः करकस्य च । न व्यज्यते किमेकेन दीपे-

नाप्यदिदृक्षितम् ॥ [1]सत्यं नानाविकाराणामेकः स्यात्प्रभवास्पदम्। किन्तु व्यञ्जकवैचित्र्याद्व्यज्यते नेतरत्तदा ॥ [2]तस्मिन्नसिद्धे तत्सिद्ध्यै तद्वैचित्र्यं प्रकल्पयन्। सत्कार्यवादश्रद्धां स्वां प्रदर्शयति भूयसीम् ॥ किञ्च—अन्यैव त्वर्थसामग्री दण्डचक्रादिलक्षणा। तदर्थव्यञ्जिका त्वन्या चक्षुरालोकलक्षणा ॥ अभिव्यक्तिः पदार्थानां जन्मनस्त्वतिरिच्यते। जातोऽप्यर्थोऽनभिव्यक्तोऽप्यास्ते कश्चित्कचिन्ननु ॥ न[3]नु ग्राहकसामग्री चक्षुरालोकलक्षणा। न सा व्यञ्जकसामग्री व्यक्तेर्नार्थान्तरं जनिः ॥ अन्यैवेयमभिव्यक्तिः प्रकाशाज्ज्ञाततात्मकात्। अथ केयमभिव्यक्तिरगतस्य धियः पदम् ॥ उपादाने निलीनस्य ननु निःसरणं ततः। विभागो नन्वयं तस्मादवस्थाभेद एव सः ॥ तथा चाश्रयणीयश्चेदवस्थाभेद ईदृशः। कल्प्यते दुर्घटा कस्मात्स्वाकारेण निलीनता ॥ आकारभेदरूपोऽयमवस्थाभेद इष्यताम्। तिलेभ्यो ननु तैलस्य व्रीहिभ्यस्तण्डुलस्य च ॥ स्वाकारेण निलीनस्य दृष्टं निःसरणं खलु। ननु भोः[4] किं ततः प्राप्तं तैले हि न तिलान्वयः ॥ न तण्डुलेषु व्रीहीणां तेषूपादानता कुतः। व्रीहितण्डुलयोर्नापि न चापि तिलतैलयोः ॥ अभेदप्रत्ययो दृष्टो लोके मृद्घटयोरिव। स्वाकारेण निलीनस्य प्रादुर्भावावधिस्तु यः ॥ नोपादानं भवेत्तस्य ननूधःपयसो यथा। अनलस्यारणेर्यस्य नोपादानं यथाऽरणिः ॥ नन्वन्तर्लीनतामात्रे तिलतैलनिदर्शनम्।

---

१ शङ्कते—सत्यमिति। २ परिहरति—तस्मिन्निति। ३ नन्विति शङ्कायाम्। ४ परिहरति—ननु भोः इति।

स्वेनैव सूक्ष्मरूपेण भावे कार्यस्य कारणे ॥ ननु न्यग्रोधतद्धाना सद्विद्यायां निदर्शिता । किं तेन ननु तत्रापि दशाभेदो हि दर्शित ॥ अणिमा सोऽयमस्यैव न्यग्रोधोऽयं महानिति । कार्यकारणयो स्थौल्यसौक्ष्म्ययोगो हि दर्शित ॥ तस्मादस्माभि कृतमवस्थाभेदेन सत्कार्यवादसमर्थनमेव युक्तम् । 'मही घटत्वं घटत कपालिका कपालिका चूर्णरजस्ततोऽणु' ( वि पु ) इत्यत्र चानन्तपरिणामलक्षणावस्थायोग एवोक्तोऽन्वित, न पुन कार्यावस्थयाऽपि पूर्वं सत एवाऽऽविर्भावमात्रम् । इति । अवस्थान्तरप्राप्तिरेवोत्पत्तिरत कार्यकारणयोरभेद इत्ययमर्थः सन्निदर्शनमुपपादितो वचनामृतेऽपि—( मध्य–३४ ) "यथा पृथिव्या एकस्या एव त्वङ्मांसमज्जास्थिस्नायुरूपेण परिणामभेदा आध्यात्मिकाः, तस्या एव समर्थशिल्पिविशेषाधिष्ठानेन काष्ठादिरूपेणाश्चर्यरूपा विचित्रा विविधाश्च परिणामा भवन्ति, नच तावता तेषां पृथिवीद्रव्यत्वमपैति । एवं प्रकृतेरेव जवायां सृष्ट्युपक्रमे सर्वज्ञस्यानन्तशक्तेः परमात्मनोऽधिष्ठानेन महदादिद्वारा देहेन्द्रियादिविविधविचित्रपरिणामशालित्वं भवति । जडप्रकृतिपरिणामतया च महदादीनां देहेन्द्रियादीनां च जडत्वमेव" इति । एवं चतुर्विंशतितत्त्वात्मिका प्रकृतिरिति स्थितम् ।

श्रीभागवते—पञ्चभि पञ्चभिर्भातश्चतुर्भिर्दशभिस्तथा । एतश्चतुर्विंशतिक गण प्राधानिक विदु ॥ महाभूतानि पञ्चैव भूरापोऽग्निर्मरुन्नभ । तन्मात्राणि च तावन्ति गन्धादीनि मतानि मे ॥ इन्द्रियाणि दश श्रोत्रत्वग्दृग्रसननासिकाः । वाक्करौ चरणौ मेढ्रं पायुर्दशम उच्यते ॥ मनोबुद्धिरहं-

ङ्कारश्चित्तमित्यन्तरात्मकम्। चतुर्धा लक्ष्यते भेदो वृत्त्या लक्षणरूपया ॥ एतावानेव सङ्ख्यातो ब्रह्मणः सगुणस्य हि । सन्निवेशः' इति चतुर्विंशतिकत्वं प्राकृतिकगणस्योक्तम्। अत्र यद्यप्यन्तरात्मनोऽन्तःकरणस्यैकस्यैव सङ्कल्पाभिमानाध्यवसायचिन्तालक्षणवृत्तिभेदान्मनोऽहङ्कारो बुद्धिश्चित्तमिति व्यपदेशभेदमात्रम्। अत एकविंशतिकत्वमेव स्यात्। मैवम्। अन्तःकरणस्यैकत्वेऽपि चित्ताख्ये वृत्तिविशेषे तदीयेऽनुग्राहकमव्यक्तं बुद्ध्याख्येऽनुग्राहकं महत् अभिमानाख्येऽनुग्राहकोऽहङ्कार इति तैर्भवति चतुर्विंशतिकत्वम्। श्लोके च अहङ्कारबुद्धिचित्तशब्दा अनुग्राहकतत्त्वपरा बोध्याः । अनुग्राह्यानुग्राहकयोश्चैक्यविवक्षा । यद्यपि चिन्तनाध्यवसायादिकं धर्मभूतज्ञानावस्थाविशेषः, अथापि तत्तदवस्थानुकूलान्तःकरणव्यापारविशेषश्चिन्तादिशब्देनोच्यते । तत्तद्व्यापारानुग्राहकं चाव्यक्तादि बोध्यम्। 'भूतेन्द्रियाणि मात्राश्च मनोबुद्धिरहङ्कृतिः। चित्तं चेति प्राकृतोऽयं चतुर्विंशतिको गणः' ॥ इति सत्सङ्गिजीवनश्लोकोऽप्येतेन व्याख्यातः। 'चतुर्विंशतिसङ्ख्यातमव्यक्तं व्यक्तमेव च' इत्यादिवचनात्प्रकृत्या सहैव चतुर्विंशतिकत्वं प्राकृतिकगणस्य बोध्यम्। अत एव प्रकृतिप्राकृतविलक्षणस्यात्मनः पञ्चविंशत्वं कीर्त्यमानमुपपद्यते 'पञ्चविंश आत्मा भवति' (श्रुतिः) 'आत्मा तु समकारेण पञ्चविंशः प्रकीर्तितः' (पाद्मोत्तर) 'यः परः प्रकृतेः प्रोक्तः पुरुषः पञ्चविंशकः' 'अबुध्यमानां प्रकृतिं बुध्यते पञ्चविंशकः। न तु बुध्यति गन्धर्व प्रकृतिः पञ्चविंशकम् ॥' इत्यादिषु । महदादीनि चतुर्विंशतितत्त्वानीति क्वचित्कीर्तनं तु विवक्षानुसारेण बुद्धेर्मनसः पृथग्गणनया निर्वहणीयम्। अस्मिंश्च पक्षेऽहङ्कारचित्तयोर्मनोबुद्ध्योरन्तर्भावो ज्ञेयः।

## महत्तत्त्वनिरूपणम् ।

अथ महत्तत्त्वम् । प्रकृतेर्महान् । 'महानव्यक्ते लीयते' इति महतोऽव्यक्ते लयस्य प्रतिपादनादव्यक्तोपादानत्वं लभ्यते । उपादाने हि कार्यस्य लयः । 'दैवात् क्षुभितधर्मिण्यां स्वस्यां योनौ परः पुमान् । आधत्त वीर्यं सासूत महत्तत्त्वं हिरण्मयम् ॥' इति च जगद्योनिभूतायाः प्रकृतेः साक्षान्महत उत्पत्तिरुच्यते । कालकृताद्गुणक्षोभान्महदादिसृष्टिः । गुणक्षोभश्च परस्परोद्भवाभिभवरूपेण गुणानामवस्थानम् । 'रजस्तमश्चाभिभूय सत्त्वं भवति भारत । रजः सत्त्वं तमश्चैव तमः सत्त्वं रजस्तथा ॥' इति हि गीयते । उद्भूतमिति शेषः । तत्र त्रिगुणाया प्रकृते रजः-सहकृतसत्त्वोद्रेकान्महत्तत्त्वस्योद्भवः । तदुक्तं 'यत्तत्सत्त्वगुणं स्वच्छं शान्तं भगवतः पदम् । यदाहुर्वासुदेवाख्यं चित्तं तन्महदात्मकम् ॥' इति । अत्र चित्तानुग्राहकत्वादव्यक्तस्य चित्तमिति व्यपदेशः । अधिष्ठात्रधिष्ठेययोरैक्यविवक्षया च वासुदेवाख्यमिति । वासुदेवाख्यव्यूहाधिष्ठितमव्यक्तं चित्तानुग्राहकमुद्रिक्तसत्त्वगुणं महत्तत्त्वमभूदित्यर्थः । यथाऽन्तःकरणस्य शान्तत्व-अभिभूतरजस्तमस्कत्वं, अत एवाविकारित्व-विक्षेपादिरहितत्वं, स्वच्छत्व-प्रकाशकत्वं, भगवतः पदत्व-भगवदुपलब्धिस्थानत्वं च भवति, तदैतैर्लक्षणैरव्यक्तानुगृहीतत्वं ज्ञातव्यं नाम तस्य । तथा-प्योक्तं-'स्वच्छत्वमविकारित्वं शान्तत्वमिति चेतसः । वृत्तिभि-र्लक्षणं प्रोक्तम्' इति । एवमध्यवसायादिवृत्तिभिरन्तःकरणस्य महदाद्यनुगृहीतत्वं ज्ञातव्यमिति भागवतव्याख्याने वीरराघवीये प्रतिपादितम् । स्वच्छत्वादिकं चित्तस्योक्तं सत्सङ्गिजीवने-'पद

साक्षाद्भगवतः शान्तं सत्त्वगुणं शुचि । अविकारीति च प्रोक्तं वृत्तिभिश्चित्तलक्षणम् ॥' इति । उद्रिक्तसत्त्वादव्यक्तान्महदुत्पन्नमित्युच्यते सत्सङ्गिजीवनेऽपि—'उद्बुद्धशुद्धसत्त्वादित्रिगुणा प्रकृतिस्तु सा । तदा सत्त्वगुणद्वारा महत्तत्त्वं प्रसूयते ॥' इति । 'महान् वै बुद्धिलक्षणः' इति वचनाच्च बुद्धिशब्दिताध्यवसायलक्षणान्तःकरणवृत्त्यनुग्राहकत्त्वं महतो बोध्यम् ।

## महतो लक्षणम् ।

अव्यक्तावस्थाऽव्यवहितोत्तरा अहङ्कारावस्थाऽव्यवहितपूर्वा च याऽवस्था तदाश्रयत्वमेव महतो लक्षणम् । अवस्थायामव्यवहितोत्तरत्वं च स्वोत्तरत्वे सति स्वोत्तरावस्थानुत्तरत्वम् । स्वोत्तरत्वस्वोत्तरावस्थानुत्तरत्वस्वसामाधिकरण्यैतत्त्रितयसम्बन्धेन अव्यक्तत्वावस्थाविशिष्टा याऽवस्था तदाश्रयत्वं महतो लक्षणं फलितम् । अव्यक्तेऽतिप्रसङ्गवारणाय प्रथमसम्बन्धनिवेशः । अहङ्कारेऽतिप्रसङ्गवारणाय द्वितीयसम्बन्धनिवेशः । तात्कालिकक्षणत्वावस्थामादाय कालेऽतिव्याप्तिवारणाय तृतीयसम्बन्धनिवेशः । सामानाधिकरण्यं चापृथक्सिद्धत्वसम्बन्धेन । यद्वा—अव्यक्तत्वावस्थानाशात्मिका अव्यक्तत्वावस्थानाशलक्षणावस्थानाशानात्मिका च याऽवस्था सैव अव्यक्तत्वावस्थाव्यवहितोत्तरावस्था, तदाश्रयत्वं महतो लक्षणम् । अव्यक्ताव्यवहितोत्तरत्वस्य क्षणविशेषसाधारण्येऽपि नाव्यक्तावस्थानाशात्मता कालपरिणतिविशेषलक्षणक्षणावस्थायाम् । तत्तद्द्रव्यपरिणतिविशेषलक्षणावस्थानाशरूपता हि तत्तद्द्रव्यपरिणतिविशेषलक्षणोत्तरावस्थाया एव । तदस्मिन् परिष्कारे न तृतीयसम्बन्धनिवेशापेक्षा । न चैतत्कल्पीयाव्यक्तत्वावस्थायाः पूर्वकल्पीयाव्यक्तत्वा-

वस्थोत्तरत्वेऽपि तदव्यवहितोत्तरता तन्नाशरूपता वा । नहि भवति पुरा ( पूर्वकल्पे ) यदव्यक्तमासीत्तदिदानीं अव्यक्तात्मना परिणत-मिति विदुषां व्यवहारः । एतत्कल्पीयाव्यक्तमहदादिषु पुनर्या प्रकृ-तिर्गुणसाम्यावस्थालक्षणा प्रागासीत् सैवेयमधुना अंशतो महदह-ङ्कारादिरूपेण परिणतेति भवति व्यवहारः । अपि च प्रथमं मृत्पिण्डेन द्वौ कपालौ विधाय ताभ्यां घटं निर्माय भग्ने तस्मिन् पुनस्तमेव चूर्णीभूतं पिण्डतामापाद्य तेन मृत्पिण्डेन द्वौ कपालौ विधाय ताभ्यां च घटो यदा निर्मितस्तदा प्राथमिकी या मृद: पिण्डावस्था न तन्नाशरूपता व्यवह्रियते द्वितीयपिण्डकपालाद्यवस्थासु । तां प्राथ-मिकीं पिण्डावस्थामुपमृद्य प्राथमिकी कपालाद्यवस्थैव हि निष्पादिता, तत्रैव तु युक्तः तद्व्यवहारः । तथा च न्याय्य एतत्कल्पीयाव्यक्तमह-दहङ्कारादिषु प्रयोजकप्रयोज्यभावमापन्नेषु पूर्वपूर्वावस्थानाशरूपत्व-मुत्तरोत्तरावस्थासु यथाव्यवहारम् । इत्थं च पूर्वकल्पीयाव्यक्ताव-स्थामादाय एतत्कल्पीयाव्यक्तावस्थायास्तन्नाशरूपत्वापादनस्य नैवाव-सरः । एतेन अव्यक्तावस्थानाशरूपत्वे सत्यहङ्कारप्रागभावरूपत्वं महत्त्वमिति लक्षणमपि निर्व्यूढम् ।

सात्त्विको राजसस्तामसश्चेति महान् त्रिविधो भवति । तथा प्रोक्तं 'सात्त्विको राजसश्चैव तामसश्च त्रिधा महान् ॥' इति । त्रिगुणत्वं हि प्रकृतिप्राकृतानां समम् । तत्तद्गुणकार्यभूयस्तया तु तत्तद्गुणप्राधान्येन व्यवहारो भवति । यथा सत्त्वात्मकं महत् तामसोऽहङ्कार इति । 'महतस्तु विकुर्वाणाद्रज:सत्त्वोपबृंहि-तात् । तमःप्रधानस्त्वभवद्द्रव्यज्ञानक्रियात्मकः ॥ सोऽह-ङ्कार इति प्रोक्तः' इत्यत्र महतो रजःसहकृतसत्त्वोद्रेकोऽहङ्कारस्य

च तमोगुणोद्रेक उक्तः। हरिवाक्यसुधासिन्धौ च—'महत्तत्त्वं चित्तैक्येन प्रकीर्तितम्। शुद्धसत्त्वमयं शान्तं कूटस्थं चातिनिर्मलम्। जगदङ्कुररूपं च ज्ञेयं तदपि लक्षणैः' इति सत्त्वप्रधानत्वं महत उक्तम्। बुद्धिचित्तयोरनुग्राह्यानुग्राहकयोश्चैक्यविवक्षया चित्ताभेदेन महदुच्यते सत्सङ्गिजीवनादौ 'प्रकाशरूपं शान्तं च कूटस्थं जगदङ्कुरम्। ज्ञानक्रियाभ्यां शक्तिभ्यां चित्तं सूत्रं च यद्विदुः॥' इति। ज्ञानवृत्त्यनुग्रहणलक्षणसामर्थ्येन चित्तमिति भूतेन्द्रियगणोपादानत्रिविधाहङ्कारजननसामर्थ्येन च सूत्रमित्युच्यते। त्रिगुणारब्धत्वात्कार्यवर्गाधारत्वाच्च सूत्रसाधर्म्यात्सूत्रमित्युक्तिः। सर्वधारकत्वविवक्षयैव महाप्राणशब्देनाप्युच्यते महान्।

चिन्तावृत्तिविशिष्टस्यान्तःकरणस्याधिष्ठाता चतुर्मुखः क्षेत्रज्ञसंज्ञितः। 'चित्तं चैत्यस्ततोऽभवत्' इत्युक्तेः। चैत्यश्चित्ताभिमानी क्षेत्रज्ञः। बुद्ध्याख्यवृत्तिविशिष्टस्य तस्याधिष्ठाता च वाचस्पतिः। 'बुद्धेर्गिरांपतिः' इत्युक्तेः। अव्यक्तमहतोस्त्वधिष्ठाता व्यूहवासुदेव इति च कपिलदेवहूतीसंवादे वीरराघवीये भागवतव्याख्याने उक्तम्। बुद्धेर्ब्रह्मा चित्तस्य क्षेत्रज्ञोऽधिष्ठाता इति च पक्षान्तरम्। सत्सङ्गिजीवनादौ समाहृतसिद्धमेव।

## अहङ्कारनिरूपणम्।

महतः क्रियाशक्तिमानहङ्कारः सात्त्विकराजसतामसभेदेन त्रिविधः सञ्जात इत्युच्यते—'महत्तत्त्वाद्विकुर्वाणाद्भगवद्वीर्यचोदितात्। क्रियाशक्तिरहङ्कारस्त्रिविधः समपद्यत॥ वैकारिकस्तैजसश्च तामसश्च यतो भवः। मनसश्चेन्द्रियाणां च भूतानां

महतामपि ॥' इति । अशगुणकालात्मा जीवगर्भो गुणमय कालस्वरूपश्च महान् परमात्मात्मको वीर्यशब्दिवाङ्गगवत्सङ्कल्पविशेषादहन्त्वेन परिणत इति च 'सोऽप्यशगुणकालात्मा भगवद्दृष्टिगोचर' । आत्मानं व्यकरोदात्मा विश्वस्यास्य सिसृक्षया ॥ महत्तत्त्वाद्विकुर्वाणादहन्तत्त्वमजायत । कार्यकारणकर्त्रात्मा भूतेन्द्रियमनोमय ॥' इति । अत्राशशब्दिवजीवात्मयुक्तत्य महत्तत्त्वम् । सर्वत्र च प्रकृतिभाक्तेषु जीवा ससृष्टा वेदितव्याः । 'अव्यक्तादिविशेषान्त चेतनाचेतनात्मकम्' इति भगवत्पराशरवचनात् । आत्मशब्द परमात्मवाची, तच्छब्दो महद्वाची । तयोः सामानाधिकरण्यबलात महच्छरीरक स्वसङ्कल्पेनाहङ्कारशरीरकोऽभूदिति ज्ञायते । तत्त्वाब्जिजीवने चोक्तम्—'अथ मायाकालकर्मस्वभावैश्च विकुर्वत । महत्तत्त्वादहङ्कार सह रुद्रेण जायते ॥ ज्ञानशक्ति क्रियाशक्तिर्द्रव्यशक्तिश्च स त्रिधा । वैकारिकस्तैजसश्च तामसश्चेति कथ्यते ॥' इति । अभिमानान्तःकरणवृत्तेरनुग्राहकोऽहङ्कारः । अनुग्राह्यानुग्राहकयोरभेदविवक्षया च अभिमानाभिमानिरुद्राभिमानिकत्वमहङ्कारस्योक्त वेदितव्यम् । 'रुद्रोऽभिमत्या हृदयम्' इत्यादौ रुद्रस्याभिमानदेवतात्वप्रतिपादनात् । अहङ्कारस्य लक्षण ( ज्ञापक ) उक्त—'कर्तृत्व करणत्वं च कार्यत्वं चेति लक्षणम् । शान्तघोरविमूढत्वमिति वा स्यादहङ्कृतेः ॥' इति । कार्यकरणे देहेन्द्रिये स्वहेतोरहङ्कारस्य लिङ्ग ज्ञापकम् । कर्तृत्वाभिमानश्च । यदा कर्तृत्वाभिमानो भवत्यन्तःकरणेन तदाऽहङ्कारानुगृहीतत्व तस्य ज्ञातव्यमिति भाव । 'सहस्रशिरसं साक्षाद्यमनन्त प्रचक्षते । सङ्कर्षणाख्यं पुरुषं

भूतेन्द्रियमनोमयम् ॥' इति चाहङ्कारस्य सङ्कर्षणोऽधिष्टाता प्रतिपाद्यते। अयं च सामान्येनोक्तः तामसाहङ्कारस्य बोध्यः, यतस्तैजसस्यानिरुद्धो वैकारिकस्य तु प्रद्युम्नोऽधिष्ठाता तत्रैव प्रत्यपादि। वैकारिकस्य 'कामसम्भवः' इति विशेषणात्, (कामस्य प्रद्युम्नस्य सम्भवो विभूतिरित्यर्थः) 'यं विदुर्ह्यनिरुद्धाख्यम्' इति तैजसस्यानिरुद्धसामानाधिकरण्येन निर्देशाच्च।

## अहङ्कारलक्षणम्।

महत्त्वावस्थाऽव्यवहितोत्तरावस्थाश्रयत्वं इन्द्रियाव्यवहितपूर्वावस्थाश्रयत्वमेव वाऽहङ्कारस्य लक्षणम्। यथा अव्यक्तावस्थानाशरूपा अहङ्कारावस्थाप्रागभावरूपा च याऽवस्था तदाश्रयत्वं महतो लक्षणं, एवं महत्त्वावस्थानाशरूपा इन्द्रियावस्थाप्राक्कालिकी च याऽवस्था तदाश्रयत्वमहङ्कारस्य लक्षणमिति केचिद्व्याचक्षते। सिद्धान्ते एकैवावस्था पूर्वापेक्षया नाशरूपा भाव्यपेक्षया प्रागभावरूपा चेति यथायथं लक्षणसमन्वयः। अव्यक्ताहङ्कारयोर्मध्यमावस्था महत्त्वावस्था महदिन्द्रिययोर्मध्यमावस्था अहङ्कारावस्थेत्युक्तं भवति।

यत्तु अध्यवसायरूपवृत्तिर्महानिति अभिमानोऽहङ्कार इति च महदहङ्कारयोर्लक्षणमाहुः साङ्ख्याः, तदनुपपन्नम्। अध्यवसायो ह्यात्मनो धर्मः, स हि ज्ञाता, न च ज्ञातुरन्यस्याध्यवसायः। अभिमानोऽप्यनात्मन्यात्माभिमानो ज्ञातुरेव स्वरूपाज्ञानकृतः। यद्यभिमानहेतुरहङ्कारः, कालादृष्टादेरपि तथात्वादतिप्रसङ्गः। अन्तःकरणगततत्तज्जनकवृत्त्यनुग्राहकत्वं पुनर्महदहङ्कारयोः स्यात्। अनहमहङ्क्रियतेऽनेनेत्यहङ्कारः, देहे आत्माभिमानकारणीभूत इत्यर्थः। देहे आत्माभिमाने जाते तत्सम्बन्धिषु मदीयत्वाभिमानोऽपि

भवत्येव। अतोऽहङ्कारममकारहेतुरिति फलति। तदुक्तं विशेषणं मायायाः 'देहतदीययोः। जीवस्य चाहंममताहेतुः' इति। इह च स्वत्वात्माभिमानादेरुपलक्षणम्। देहाद्यात्मभ्रमादिलक्षणाभिमानहेत्वन्तःकरणवृत्त्यनुग्राहकमहङ्कारतत्त्वमिति यावत्।

सात्त्विकराजसतामसभेदादहङ्कारस्य त्रैविध्यम्। हरिवाक्यसुधासिन्धौ चोक्तम्—'शान्तघोरविमूढात्माऽहङ्कारस्त्रिविधो मतः।' इति। शान्तत्व—प्रकाशकत्वं सात्त्विकत्वमिति यावत्। घोरत्व—विक्षिप्तत्वं राजसत्वमिति यावत्। विमूढत्व—स्तब्धत्वं तामसत्वमिति यावत्। तत्र मनः सात्त्विकाहङ्काराज्जायते, श्रोत्रादीनीन्द्रियाणि राजसात्, तामसाच्छब्दतन्मात्रं च। एकादशापीन्द्रियाणि सात्त्विकाहङ्कारात्, शब्दतन्मात्रं तामसाहङ्कारात्, राजसाहङ्कारस्तूभयोः कार्योत्पादने उपकारक इति परे। अयमेव पक्षः श्रीभाष्यकारैरादृतः।

## इन्द्रियाणामाहङ्कारिकत्वम्।

ननु—श्रुतिविरुद्धमिन्द्रियाणामाहङ्कारिकत्वम्। सुबालोपनिषदि हि इन्द्रियाणां तन्मात्रेषु लयः श्रूयते—'आकाशमिन्द्रियेषु इन्द्रियाणि तन्मात्रेषु तन्मात्राणि भूतादौ लीयन्ते भूतादिर्महति लीयते महानव्यक्ते लीयते अव्यक्तमक्षरे लीयते अक्षरं तमसि लीयते तमः परे देवे एकीभवति' इति। यत्र यस्य लयस्तत एव तु तस्योत्पत्तिः। उच्यते। सत्यमिन्द्रियाणि तन्मात्रेष्विति श्रूयते न तु तन्मात्रेषु लीयन्ते इति। ननु भूतादौ लीयन्ते इत्यतो लीयन्ते इति ह्यनुषज्यते। यद्येवमाकाशमिन्द्रियेष्वित्यत्रापि किं नानुषज्यते। आकाशस्य नेन्द्रियं प्रकृतिरिति चेत्, इन्द्रियाणां

तन्मात्राणि न प्रकृतय इति तुल्यमत्रापि । यदि लीयन्ते इत्यस्य नानुपङ्गस्तर्हि किञ्चित्क्रियावाचिपदमध्याहर्तव्यम् । सत्यम् । आकाशमिन्द्रियेष्वित्यत्राप्यध्याहर्तव्यम्। ननु किमनया प्रतिबन्द्या, अर्थस्तु वक्तव्यः । उच्यते । आकाशमिन्द्रियेषु संयुज्यते इन्द्रियाणि तन्मात्रेषु संयुज्यन्ते इति । ननु कोऽयमपूर्वः संयोगः । अयमेव—पृथिव्यादीनां भूतानां वायुपर्यन्तानां स्वस्वकारणे लये जाते घ्राणादीन्द्रियाप्यायकानां पृथिव्याद्यंशानामप्याकाशरूपतयाऽवस्थितेराप्यायकतयाऽऽकाशमात्रमवशिष्टं इन्द्रियेषु संयुज्यते—संसृष्टं भवति, तस्मिन्नप्याकाशे शब्दतन्मात्रे विलीने सति, तान्येवेन्द्रियाणि शब्दतन्मात्रापन्नैः स्वाप्यायकांशैः संसृष्टानि भवन्ति, तद्युक्तानि तन्मात्राणि च स्वप्रकृतावहङ्कारे लीयन्ते इति । 'तन्मात्राणी' ति बहुवचनमपि शब्दतन्मात्रतापन्नाप्यायकभूतांशभेदतात्पर्यकमेव । 'आपो ग्रसन्ति वै पूर्वं भूमेर्गन्धात्मकं गुणम् । आत्तगन्धा ततो भूमिः प्रलयत्वाय कल्पते ॥ ग्रसतेऽम्बुगुणं तेजो रसं तल्लीयते ततः । रूपं तेजोगुणं वायुर्ग्रसते लीयतेऽथ तत् ॥ वायोरपि गुणं स्पर्शमाकाशो ग्रसते ततः । प्रशाम्यति तदा वायुः खं तु तिष्ठत्यनावृतम् ॥ भूतादिस्तद्गुणं शब्दं ग्रसते लीयते च खम्। इन्द्रियाणि मनश्चापि लीयन्तेऽहङ्कृतौ ततः ॥ अहङ्कारो महत्तत्त्वे त्रिविधोऽपि प्रलीयते ॥' इति अहङ्कारे लयप्रतिपादनाच्चेन्द्रियाणामाहङ्कारिकत्वमेव ।

आहङ्कारिकाणामप्येषां भूतान्याप्यायकानि तु भवन्ति । अत इदमुच्यते मोक्षधर्मे—'शब्दः श्रोत्रं तथा खादि त्रयमाकाशसम्भवम् । वायोः स्पर्शस्तथा चेष्टा त्वक् चैव त्रितयं

स्मृतम् ॥ रूपं चक्षुस्तथा व्यक्तिरत्र्य तैजसमुच्यते । रसः क्लेदश्च जिह्वा च त्रयो जलगुणाः स्मृताः ॥ घ्राणं घ्रेयं शरीरं च ते तु भूमिगुणाः स्मृताः' । इति । आप्यायकत्वं नाम पोषकत्वं, मन्दशक्तिकाना शक्तयुत्तेजकत्वमिति यावत् । श्रूयते चाप्यायकत्वं 'अन्नमयं हि सोम्य मनः आपोमयः प्राणः तेजोमयी वाक्' इति । प्राणस्य हि वाय्ववस्थारूपस्य न जलकार्यत्वं किन्तु जलाप्यायितत्वमेव । तत्तुल्यमन्यत्रापीति ।

'वैकारिकाद्विकुर्वाणान्मनस्तत्त्वमजायत । यत्सङ्कल्पविकल्पाभ्यां वर्तते कामसम्भवः ॥ तैजसात्तु विकुर्वाणाद्बुद्धितत्त्वमभूत्सति । द्रव्यस्फुरणविज्ञानमिन्द्रियाणामनुग्रहः ॥ संशयोऽथ विपर्यासो निश्चयः स्मृतिरेव च । स्वाप इत्युच्यते बुद्धेर्लक्षणं वृत्तितः पृथक् ॥ तैजसानीन्द्रियाण्येव क्रियाज्ञानविभागशः । प्राणस्य हि क्रियाशक्तिर्बुद्धेर्विज्ञानशक्तिता ॥' इत्यत्र सात्त्विकाहङ्कारान्मनसः तैजसाद्बुद्धितत्त्वस्येन्द्रियाणां चोत्पत्तिरुक्ता । 'ज्ञानशक्तिः क्रियाशक्तिर्बुद्धिः प्राणश्च तैजसात्' । इत्यत्र च प्राणस्यापि राजसाहङ्कारकार्यत्वमुक्तं प्रतीयते । एतत्प्रक्रियानुसारेणैव सत्सङ्गिजीवनादौ वर्णितमस्ति—'वैकारिकादहङ्कारात्सचन्द्रं जायते मनः । देवता इन्द्रियाणां च जाता वैकारिकाद्दश ॥ दशेन्द्रियाणि बुद्धिश्च ब्रह्मा प्राणश्च तैजसात् ।' 'तस्मादभूदहङ्कारस्त्रिगुणस्तत्र सात्त्विकात् । मन इन्द्रियदेवाश्च राजसादिन्द्रियासवः ॥' इति । 'तैजसानीन्द्रियाण्याहुर्देवा वैकारिका दश । एकादशं मनश्चात्र देवा वैकारिकाः स्मृताः ॥' इति विष्णुपुराणवचनमप्युक्तार्थपरमेव । 'इन्द्रियाणि

तैजसानि राजसाहङ्कारकार्याणि । इन्द्रियदेवता दश एकादशं मनोऽत्र मनसि अन्तःकरणे ये देवाश्चत्वारस्तेऽपि सात्त्विकाहङ्कारकार्यभूताः' इति व्याख्यानात् । तत्र बुद्धेः राजसाहङ्कारादुत्पत्तिवर्णनमन्तःकरणस्य ज्ञानजनने राजसाहङ्कारानुग्राह्यत्वनिबन्धनम् । प्राणानामपि वाय्ववस्थाविशेषाणां स्वस्वव्यापारकरणे राजसाहङ्कारानुग्राह्यत्वनिबन्धनमेव राजसाहङ्कारकार्यत्वप्रतिपादनम् । इन्द्रियदेवतानां दिगादीनां वैराजसृज्यत्वेन वर्णितानां सात्त्विकाहङ्कारकार्यत्वप्रतिपादनं च तेषामिन्द्रियाधिष्ठानशक्तेः सात्त्विकाहङ्कारानुग्राह्यत्वनिबन्धनं, तेषां सात्त्विाहङ्कारमयसूक्ष्मशरीरसम्बन्धाभिप्रायं वेति यथासम्भवमूहनीयम् ।

परे त्वेवं मन्यन्ते—'तैजसानीन्द्रियाण्याहुः' इति विष्णुपुराणवचनस्यायमर्थः—आहुरित्युक्त्या इन्द्रियाणां राजसाहङ्कारकार्यत्वं परमतानुसारेणेति ज्ञायते 'देवा वैकारिका दश । एकादशं मनश्च' इति पक्षान्तरम् । अयमर्थः—'देवाः—इन्द्रियाणि दश मनश्च सात्त्विकाहङ्कारकार्याणीति । श्रूयते हि इन्द्रियेषु देवशब्दः—'न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैः' 'सहैव सन्तं न विजानन्ति देवाः' इति । एवं पक्षभेदे स्वमतमुच्यते 'अत्र देवा वैकारिकाः स्मृताः' इति । अत इन्द्रियाणां सात्त्विकाहङ्कारकार्यत्वमेव इति । 'वैकारिकान्मनो जज्ञे देवा वैकारिका दश । दिग्वातार्कप्रचेतोऽश्विवह्नीन्द्रोपेन्द्रमित्रकाः ॥ तैजसात्तु विकुर्वाणादिन्द्रियाणि दशाभवन् । ज्ञानशक्तिः क्रियाशक्तिर्बुद्धिः प्राणश्च तैजसात्' ॥ इत्यत्रापि देवशब्देन देवाधिष्ठितानीन्द्रियाण्येवोच्यन्ते । 'अग्निर्वाग्भूत्वा' इत्यादाविवाधिष्ठात्रधिष्ठेययोरैक्य-

विवक्षया देवशब्दप्रयोग इन्द्रियेषु । वैकारिकशब्दोऽत्र राजसा-हङ्कारसहकृतसात्त्विकाहङ्कारपर । 'तैजसात्तु' इति पक्षान्तरोक्ति । यद्वा—पूर्वस्मिन्नपि पक्षे राजसाहङ्कारस्य सात्त्विकाहङ्कारादिन्द्रिय-मनोजननेऽनुग्राहकत्वमङ्गीकरणीयमेव । स्वस्वकार्ये प्रवृत्तिक्षमाणा-मिन्द्रियाणा जनकस्यापि सात्त्विकाहङ्कारस्य प्रवर्तकरजोसन्नि-धानावश्यम्भावात् । अतस्तैजसजन्यत्ववाद इन्द्रियेषूपपन्न एव । प्राणशब्द इन्द्रियवाची, 'सर्वे प्राणा अनूत्क्रामन्ति' इति श्रुते । क्रियाशक्ति प्राण—कर्मेन्द्रियगणः, ज्ञानशक्ति प्राण—ज्ञानेन्द्रि-यगण, बुद्धिः—अन्त करणचतुष्टय च, तैजसात्—राजसाहङ्कारा-त्सहकारिकारणात् जायते इत्यर्थ । न चेन्द्रियदेवताना दिगादीना वैराजपुरुषसृष्ट्यत्वेन श्रुताना पूर्वमेवोत्पत्तिर्वर्णयितु शक्यते । अतो देवादिशब्दस्तदधिष्ठेयेन्द्रियवाच्येव युक्त । ननु अविद्यमानैर्वा तैः कथमधिष्ठितत्व सम्भवति ? । नैयम् । अधिष्ठानार्हत्वस्यैव विव-क्षितत्वात् । यद्वा परमाकाशवर्तिभिरेवेन्द्रियाभिमानिभिरधिष्ठितत्व समष्टीन्द्रियाणाम् । तथाहि परमाकाशशब्दितेऽप्राकृते धाम्नि चतु-र्विंशतितत्त्वाभिमानिनां शक्तिविशेषाणा सद्भावो वर्ण्यते—'वृत तु षोडशपञ्चशक्तिभि' इति । श्रोत्राद्यभिमानिनां तेषा श्रोत्रा-देस्तु स्वयमेवाधिष्ठातारः स्वपरनिर्वाहकत्वन्यायात् । यद्वा—परमात्मैव तत्राधिष्ठाताऽस्तु । परमाकाशस्थिताना तु देवानां नेदानीं सृष्टि सम्भ वति । दिगादिसृष्टिस्तु वैराजकर्तृका व्यष्टीन्द्रियाधिष्ठानार्था । 'तैज-सात्तु विकुर्वाणाद्बुद्धितत्त्वमभूत्' इत्यादेरयमर्थः—बुध्यतेऽने-नेति बुद्धि—ज्ञानजनक तस्य तत्व—ज्ञानजननसामर्थ्यं, तदिन्द्रियाणां राजसाहङ्कारादभूत् । अयमेवेन्द्रियाणां तत्कृतोऽनुग्रहः । ज्ञानस्य

च भेदा उक्ता 'द्रव्यस्फुरणविज्ञानम्' इत्यादिना। एतैश्च ज्ञानभेदैः कार्यरूपैरिन्द्रियाणां राजसाहङ्कारकृतः ज्ञानजननसामर्थ्यलक्षणोऽनुग्रहो लक्ष्यते—ज्ञायते। प्राणस्य कर्मेन्द्रियस्य क्रियाशक्तिस्तत्तत्क्रियाजननशक्तिः बुद्धेर्ज्ञानेन्द्रियस्य विज्ञानजननशक्तिश्च राजसाहाङ्कारात्। इन्द्रियाणां स्वस्वकार्यप्रवृत्तिशक्तिर्हि राजसाहङ्कारानुग्रहत एव सम्भवति, अतस्तानि तैजसानीति उच्यन्ते इति। किञ्च सात्त्विकाहङ्कारस्य ज्ञानशक्तिरिति विशेषणेन ज्ञानेन्द्रियजनकत्वमपि तस्यैव युक्तम्। अतस्तत्सन्नियोगशिष्टानां कर्मेन्द्रियाणामपि वैकारिकत्वमेव। तैजसस्य क्रियाशक्तिरिति विशेषणं तु सात्त्विकतामसयोः स्वस्वकार्येषु प्रवर्तनलक्षणक्रियाशक्तिपरमेव, न राजसाहङ्कारस्य पृथक् कार्यं किमपीति वदन्ति। अयं च पक्षभेदो वर्णितः 'तैजसस्य पृथक्कार्यं केचिन्नेच्छन्ति कापिलाः। सात्त्विकात्तामसाज्जातं यत्कार्यं तस्य तद्विदुः॥' इति। भवन्तु राजसाहङ्कारसहकृतसात्त्विकाहङ्कारकार्याणि मनोभिन्नानीन्द्रियाणि, भवन्तु वा राजसाहङ्कारकार्याण्येव। पुराणेष्वेवाभिप्रायभेदो ह्यत्र दृश्यते इति।

सात्त्विकाहङ्कारादेकादशेन्द्रियाणां जननमिति पक्षे उत्पत्तिक्रमोऽपि वर्णितो विष्णुपुराणव्याख्याने विष्णुचित्तीये—'अयमेवेन्द्रियसृष्टिक्रमः। वैकारिकात् क्रमेण शब्दादिपञ्चकसहायात् श्रोत्रादेर्ज्ञानेन्द्रियपञ्चकस्य सृष्टिः, तस्मादेव श्रोत्रादिसहायात् क्रमेण वागादिकर्मेन्द्रियपञ्चकसृष्टिः, असहायात्तु तस्मान्मनसः सृष्टिः' इति। अत्र शब्दादिपञ्चकं तन्मात्रपञ्चकं वेदितव्यम्। विशेषस्तु तत्रैव द्रष्टव्यः।

## इन्द्रियलक्षणम् ।

इमानि चेन्द्रियाणि कर्त्रा जीवेन व्यापार्यमाणानि तत्तदुपलम्भादिकार्ये साधनानि भवन्तीति करणान्युच्यन्ते । व्यापारवत्कारणं हि करणम् । लक्षणं चेदमुक्तं न्यायसिद्धाञ्जने—'प्राणाद्यतिरिक्तत्वे सति हृत्कण्ठचक्षुरादिशरीरप्रदेशविशेषावच्छिन्नव्यापारवत्तया तत्तत्कार्यविशेषशक्तमिन्द्रियम्' इति । शरीरप्राणान्यत्वे सति आत्मप्रयत्नजन्यव्यापाराश्रयत्वमिन्द्रियसामान्यस्य लक्षणमिति यावत् । तत्र रजोरहितत्वे सति तमोरहितत्वे सति वा इन्द्रियत्वमप्राकृतेन्द्रियाणां लक्षणम् । रजोसत्त्वाविशेषितमिन्द्रियत्वं तु प्राकृतानाम् । ज्ञानप्रसरणहेतुत्वे सतीन्द्रियत्वं ज्ञानेन्द्रियलक्षणम् । (इन्द्रियसन्निकर्षेऽतिव्याप्तिवारणायात्र विशेष्यदलम्) यद्यप्यप्राकृतेन्द्रियाणां न सुखादिज्ञानप्रसरणहेतुत्वम्, इन्द्रियानपेक्षप्रसरत्वात्तज्ज्ञानानाम् । अथापि ज्ञानप्रसरणहेतुतावच्छेदकधर्मवत्त्वं लक्षणं बोध्यम् । ते च धर्माश्चक्षुष्ट्वादयोऽप्राकृतेन्द्रियेष्वपीति । उच्चारणाद्यन्यतमजनकेन्द्रियत्वं कर्मेन्द्रियाणां लक्षणं बोध्यम् । अहङ्कारेण स्वोपादानेनोपादेयत्वमिन्द्रियस्य लक्षणं तु अप्राकृतेष्विन्द्रियेष्वव्याप्तत्वादुपेक्षितम् ।

## इन्द्रियाणामेकादशत्वम् ।

वागादिकर्मेन्द्रियं नाभ्युपगच्छन्ति केचित् । श्रुतिस्तु श्रावयति एकादशेन्द्रियाणीति । 'एका कन्या दशेन्द्रियाणि' 'दशेमे पुरुषे प्राणा आत्मैकादश' इति । कन्येति मन उच्यते । प्राणाः—इन्द्रियाणि । स्मृतिश्च 'इन्द्रियाणि दशैकं च' 'देवा वैकारिका दश । एकादश मनश्चात्र' इति । तथा—'चक्षुरध्यात्मं द्रष्टव्यमधिभूतं

आदित्यस्तत्राधिदैवतम्' 'नासाऽध्यात्मं घ्रातव्यमधिभूतं पृथिवी तत्राधिदैवतम्' 'जिह्वाऽध्यात्मं रसयितव्यमधिभूतं वरुणस्तत्राधिदैवतम्' 'त्वगध्यात्मं स्पर्शयितव्यमधिभूतं वायुस्तत्राधिदैवतम्' 'मनोऽध्यात्मं मन्तव्यमधिभूतं चन्द्रस्तत्राधिदैवतम्' '[1]बुद्धिरध्यात्मं बोद्धव्यमधिभूतं ब्रह्मा तत्राधिदैवतम्' 'अहङ्कारोऽध्यात्मं अहङ्कर्तव्यमधिभूतं रुद्रस्तत्राधिदैवतम्' 'चित्तमध्यात्मं चेतव्यमधिभूतं क्षेत्रज्ञस्तत्राधिदैवतम्' 'वागध्यात्मं वक्तव्यमधिभूतं अग्निस्तत्राधिदैवतम्' 'हस्तावध्यात्मं आदातव्यमधिभूतं इन्द्रस्तत्राधिदैवतम्' 'पादावध्यात्मं गन्तव्यमधिभूतं विष्णुस्तत्राधिदैवतम्' 'पायुरध्यात्मं विसर्जयितव्यमधिभूतं मृत्युस्तत्राधिदैवतम्' 'उपस्थोऽध्यात्मं आनन्दयितव्यमधिभूतं प्रजापतिस्तत्राधिदैवतम्' इति ( सुबालोपनिषदि ) इन्द्रियतदर्थभेदप्रस्तावे कर्मेन्द्रियतदर्थभेदा अपि श्रूयन्ते । तथा बृहदारण्यके—'अष्टौ ग्रहा अष्टावतिग्रहाः' 'प्राणो वै ग्रहः सोऽपानेनातिग्रहेण गृहीतोऽपानेन हि गन्धान् जिघ्रति' 'वाग्वै ग्रहः स नाम्नाऽतिग्रहेण गृहीतो वाचा हि नामान्यभिवदति' 'जिह्वा वै ग्रहः स रसेनातिग्रहेण गृहीतः' 'चक्षुर्वै ग्रहः स रूपेणातिग्रहेण गृहीतः' 'श्रोत्रं वै ग्रहः स शब्देनातिग्रहेण गृहीतः' 'मनो वै ग्रहः स कामेनातिग्रहेण' 'हस्तौ वै ग्रहः स कर्मणाऽतिग्रहेण' 'त्वग्वै ग्रहः स स्पर्शेनातिग्रहेण' इत्यत्र च कर्मेन्द्रियभेदोऽपि श्रूयते ।

यत्पुनरनादृत्य श्रुतिस्मृती अधिष्ठानातिरिक्तकर्मेन्द्रियनिरसनं,

१ मन एव वृत्तिभेदात् बुद्ध्यहङ्कारचित्तशब्दैर्व्यपदिश्यते ।

## इन्द्रियलक्षणम् ।

इमानि चेन्द्रियाणि कर्त्रा जीवेन व्यापार्यमाणानि तत्तदुपलम्भादिकार्ये साधनानि भवन्तीति करणा युच्यन्ते । व्यापारवत्कारण हि करणम् । लक्षण चेदमुक्त न्यायसिद्धाञ्जने—'प्राणाद्यतिरिक्तत्वे सति हृत्कण्ठचक्षुरादिशरीरप्रदेशविशेषावच्छिन्नव्यापारवत्तया तत्तत्कार्यविशेषप्रकमिन्द्रियम्' इति । शरीरप्राणान्यत्वे सति आत्म प्रयत्नजन्यव्यापाराश्रयत्वमिन्द्रियसामान्यस्य लक्षणमिति यावत् । तत्र रजोरहितत्वे सति तमोरहितत्वे सति वा इन्द्रियत्वमप्राकृतेन्द्रियाणा लक्षणम् । रजोयत्त्वविशेषितमिन्द्रियत्व तु प्राकृतानाम् । ज्ञानप्रसरणहेतुत्वे सतीन्द्रियत्व ज्ञानेन्द्रियलक्षणम् । (इन्द्रियसन्निकर्षेऽतिव्याप्तिवारणायात्र विशेष्यदलम् ) यद्यप्यप्राकृतेन्द्रियाणा न मुक्तादिज्ञानप्रसरणहेतुत्वम्, इन्द्रियानपेक्षप्रसरत्वात्तज्ज्ञानानाम् । अथापि ज्ञानप्रसरणहेतुतावच्छेदकधर्मवत्त्व लक्षण बोध्यम् । ते च धर्माश्चक्षुष्ट्वादयोऽप्राकृतेन्द्रियेष्वपीति । उच्चारणाद्यन्यतमजनकेन्द्रियत्व कर्मेन्द्रियाणा लक्षण बोध्यम् । अहङ्कारेण स्वोपादानेनोपादेयत्वेन्द्रियस्य लक्षण तु अप्राकृतेष्विन्द्रियेष्वव्याप्तत्वादुपेक्षितम् ।

## इन्द्रियाणामेकादशत्वम् ।

वागादिकर्मेन्द्रिय नाभ्युपगच्छन्ति केचित् । श्रुतिस्तु भाषयति एकादशेन्द्रियाणीति । 'एका कन्या दशेन्द्रियाणि' 'दशेमे पुरुषे प्राणा आत्मैकादश' इति । कन्येति मन उच्यते । प्राणा —इन्द्रियाणि । स्मृतिश्च 'इन्द्रियाणि दशैक च' 'देवा वैकारिका दश । एकादश मनश्चात्र' इति । तथा—'चक्षुरध्यात्म द्रष्टव्यमधिभूत

आदित्यस्तत्राधिदैवतम्' 'नासाऽध्यात्मं घ्रातव्यमधिभूतं पृथिवी तत्राधिदैवतम्' 'जिह्वाऽध्यात्मं रसयितव्यमधिभूतं वरुणस्तत्राधिदैवतम्' 'त्वगध्यात्मं स्पर्शयितव्यमधिभूतं वायुस्तत्राधिदैवतम्' 'मनोऽध्यात्मं मन्तव्यमधिभूतं चन्द्रस्तत्राधिदैवतम्' 'बुद्धिरध्यात्मं[1] बोद्धव्यमधिभूतं ब्रह्मा तत्राधिदैवतम्' 'अहङ्कारोऽध्यात्मं अहङ्कर्तव्यमधिभूतं रुद्रस्तत्राधिदैवतम्' 'चित्तमध्यात्मं चेतव्यमधिभूतं क्षेत्रज्ञस्तत्राधिदैवतम्' 'वागध्यात्मं वक्तव्यमधिभूतं अग्निस्तत्राधिदैवतम्' 'हस्तावध्यात्मं आदातव्यमधिभूतं इन्द्रस्तत्राधिदैवतम्' 'पादावध्यात्मं गन्तव्यमधिभूतं विष्णुस्तत्राधिदैवतम्' 'पायुरध्यात्मं विसर्जयितव्यमधिभूतं मृत्युस्तत्राधिदैवतम्' 'उपस्थोऽध्यात्मं आनन्दयितव्यमधिभूतं प्रजापतिस्तत्राधिदैवतम्' इति ( सुबालोपनिषदि ) इन्द्रियतदर्थभेदप्रस्तावे कर्मेन्द्रियतदर्थभेदा अपि श्रूयन्ते । तथा बृहदारण्यके—'अष्टौ ग्रहा अष्टावतिग्रहाः' 'प्राणो वै ग्रहः सोऽपानेनातिग्रहेण गृहीतोऽपानेन हि गन्धान् जिघ्रति' 'वाग्वै ग्रहः स नाम्नाऽतिग्रहेण गृहीतो वाचा हि नामान्यभिवदति' 'जिह्वा वै ग्रहः स रसेनातिग्रहेण गृहीतः' 'चक्षुर्वै ग्रहः स रूपेणातिग्रहेण गृहीतः' 'श्रोत्रं वै ग्रहः स शब्देनातिग्रहेण गृहीतः' 'मनो वै ग्रहः स कामेनातिग्रहेण' 'हस्तौ वै ग्रहः स कर्मणाऽतिग्रहेण' 'त्वग्वै ग्रहः स स्पर्शेनातिग्रहेण' इत्यत्र च कर्मेन्द्रियभेदोऽपि श्रूयते ।

यत्पुनरनादृत्य श्रुतिस्मृती अधिष्ठानातिरिक्तकर्मेन्द्रियनिरसनं,

---

१ मन एव वृत्तिभेदात् बुद्ध्यहङ्कारचित्तशब्दैर्व्यपदिश्यते ।

## इन्द्रियलक्षणम् ।

इमानि चेन्द्रियाणि कर्त्रा जीवेन व्यापार्यमाणानि तत्तदुपलम्भादिकार्ये साधनानि भवन्तीति करणान्युच्यन्ते । व्यापारवत्कारणं हि करणम् । लक्षणं चेदमुक्तं न्यायसिद्धाञ्जने—'प्राणाद्यतिरिक्तत्वे सति हृत्कण्ठचक्षुरादिशरीरप्रदेशविशेषावच्छिन्नव्यापारवत्तया तत्तत्कार्यविशेषप्रवर्तकमिन्द्रियम्' इति । शरीरप्राणान्यत्वे सति आत्मप्रयत्नजन्यव्यापाराश्रयत्वमिन्द्रियसामान्यस्य लक्षणमिति यावत् । तत्र रजोरहितत्वे सति तमोरहितत्वे सति वा इन्द्रियत्वमप्राकृतेन्द्रियाणां लक्षणम् । रजोयत्त्वविशेषितमिन्द्रियत्वं तु प्राकृतानाम् । ज्ञानप्रसरणहेतुत्वे सतीन्द्रियत्वं ज्ञानेन्द्रियलक्षणम् । (इन्द्रियसन्निकर्षेऽतिव्याप्तिवारणायात्र विशेष्यदलम्) यद्यप्यप्राकृतेन्द्रियाणां न सुखादिज्ञानप्रसरणहेतुत्वम्, इन्द्रियानपेक्षप्रसरत्वात्तज्ज्ञानानाम् । अथापि ज्ञानप्रसरणहेतुतावच्छेदकधर्मवत्त्वं लक्षणं बोध्यम् । ते च धर्माश्चक्षुष्ट्वादयोऽप्राकृतेन्द्रियेष्वपीति । उच्चारणाद्यन्यतमजनकेन्द्रियत्वं कर्मेन्द्रियाणां लक्षणं बोध्यम् । अहङ्कारेण स्वोपादानेनोपादेयस्येन्द्रियस्य लक्षणं तु अप्राकृतेष्विन्द्रियेष्वव्याप्तत्वादुपेक्षितम् ।

## इन्द्रियाणामेकादशत्वम् ।

वागादिकर्मेन्द्रियं नाभ्युपगच्छन्ति केचित् । श्रुतिस्तु श्रावयति एकादशेन्द्रियाणीति । 'एका कन्या दशेन्द्रियाणि' 'दशेमे पुरुषे प्राणा आत्मैकादशः' इति । कन्येति मन उच्यते । प्राणाः—इन्द्रियाणि । स्मृतिश्च 'इन्द्रियाणि दशैकं च' 'देवा वैकारिका दश । एकादश मनश्चात्र' इति । तथा—'चक्षुरध्यात्मं द्रष्टव्यमधिभूतं

आदित्यस्तत्राधिदैवतम्' 'नासाऽध्यात्मं घ्रातव्यमधिभूतं पृथिवी तत्राधिदैवतम्' 'जिह्वाऽध्यात्मं रसयितव्यमधिभूतं वरुणस्तत्राधिदैवतम्' 'त्वगध्यात्मं स्पर्शयितव्यमधिभूतं वायुस्तत्राधिदैवतम्' 'मनोऽध्यात्मं मन्तव्यमधिभूतं चन्द्रस्तत्राधिदैवतम्' 'बुद्धिरध्यात्मं बोद्धव्यमधिभूतं ब्रह्मा तत्राधिदैवतम्' 'अहङ्कारोऽध्यात्मं अहङ्कर्तव्यमधिभूतं रुद्रस्तत्राधिदैवतम्' 'चित्तमध्यात्मं चेतव्यमधिभूतं क्षेत्रज्ञस्तत्राधिदैवतम्' 'वागध्यात्मं वक्तव्यमधिभूतं अग्निस्तत्राधिदैवतम्' 'हस्तावध्यात्मं आदातव्यमधिभूतं इन्द्रस्तत्राधिदैवतम्' 'पादावध्यात्मं गन्तव्यमधिभूतं विष्णुस्तत्राधिदैवतम्' 'पायुरध्यात्मं विसर्जयितव्यमधिभूतं मृत्युस्तत्राधिदैवतम्' 'उपस्थोऽध्यात्मं आनन्दयितव्यमधिभूतं प्रजापतिस्तत्राधिदैवतम्' इति ( सुबालोपनिषदि ) इन्द्रियतदर्थभेदप्रस्तावे कर्मेन्द्रियतदर्थभेदा अपि श्रूयन्ते । तथा बृहदारण्यके—'अष्टौ ग्रहा अष्टावतिग्रहाः' 'प्राणो वै ग्रहः सोऽपानेनातिग्रहेण गृहीतोऽपानेन हि गन्धान् जिघ्रति' 'वाग्वै ग्रहः स नाम्नाऽतिग्रहेण गृहीतो वाचा हि नामान्यभिवदति' 'जिह्वा वै ग्रहः स रसेनातिग्रहेण गृहीतः' 'चक्षुर्वै ग्रहः स रूपेणातिग्रहेण गृहीतः' 'श्रोत्रं वै ग्रहः स शब्देनातिग्रहेण गृहीतः' 'मनो वै ग्रहः स कामेनातिग्रहेण' 'हस्तौ वै ग्रहः स कर्मणाऽतिग्रहेण' 'त्वग्वै ग्रहः स स्पर्शेनातिग्रहेण' इत्यत्र च कर्मेन्द्रियभेदोऽपि श्रूयते ।

यत्पुनरनादृत्य श्रुतिस्मृती अधिष्ठानातिरिक्तकर्मेन्द्रियनिरसनं,

---

१ मन एव वृत्तिभेदात् बुद्ध्यहङ्कारचित्तशब्दैर्व्यपदिश्यते ।

सत् प्रतिबन्द्या पराहतम् । अधिष्ठानातिरिक्तज्ञानेन्द्रिये यस्तर्कः स तुल्यो हि कर्मेन्द्रियेऽपि । तथाहि—रूपाद्युपलब्धेः क्रियात्वेन क्रियायाश्च करणपूर्वकत्वनियमेन करणेन भाव्यम्, तेन च गोलकाद्यतिरिक्तेन भाव्यमिति यदि मन्यते तर्हि वचनादेरपि क्रियात्वेन तेनापि तथाविधकरणपूर्वकेणैव भाव्यम् । उक्तं च तत्त्वमुक्ताकलापे—'रूपादिज्ञानसिद्धौ यदि करणतया कल्पनं धीन्द्रियाणां तद्वद्वत्यादिकर्मस्वपि करणतया सन्तु कर्मेन्द्रियाणि । कर्मज्ञानाक्षहेत्वोः समपरिहरणा ह्यन्यथासिद्धिशङ्का तस्मादेकादशाक्षाण्यपि निगमविदो मन्वते न्यायपूर्वम् ॥' इति । अतएव च काणादैः कर्मेन्द्रियव्यावृत्तं ज्ञानसाधनत्वघटितमिन्द्रियलक्षणं निरुच्यमानमपि निरस्तम् । तथा चोक्तम्—'सिद्धानुगममात्रं हि कर्तुं युक्तं परीक्षकैः । न सर्वलोकसिद्धस्य लक्षणेन निवर्तनम् ॥' इति । कर्मेन्द्रियाणामपीन्द्रियत्वं सप्तगत्यधिकरणे विचार्य निर्णीतं भगवता बादरायणेन । तथाहि—सप्तैवेन्द्रियाणि, तेषामेव जीवेन सह गतिश्रवणात्—'सप्त इमे लोका येषु चरन्ति प्राणा गुहाशया निहिताः सप्तसप्त' इति, योगदशायां च तेषामेव विशेषितत्वात् 'यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह । बुद्धिश्च न विचेष्टेत तामाहुः परमां गतिम् ॥' इति । एवं 'सप्तगतेर्विशेषितत्वाच्च' इति सूत्रेण पूर्वपक्षयित्वा सिद्धान्तितम्—'हस्तादयस्तु स्थितेऽतो नैवम्' इति । हस्तादयोऽपि हि शरीरे स्थिते जीवे उपकारकाः । अत उपकारकत्वाविशेषात्तेषामपीन्द्रियत्वम् । चक्षुरादि शरीरदेशाद्बहिरपि वृत्तिद्वारा व्याप्य विषयान् गृह्णाति, कर्मेन्द्रियं तु शरीरप्रदेशमात्रावच्छिन्नकार्यजनकमिति विशेषो द्योत्यते 'स्थिते' इति

पदेन । 'अतो नैवम्' इति च कर्मेन्द्रियाणामपीन्द्रियत्वग्राहि प्रमाणदार्ढ्याभिप्रायम् । सन्ति हि प्रमाणानि इन्द्रियाणामेकादशत्वे । तानि चोदाहृतानि प्रागेव । योगदशायां ज्ञानेन्द्रियाणामेव विशेषणं प्राधान्याभिप्रायेण । सप्तानां गत्यादिश्रवणमपि आपेक्षिकप्राधान्याभिप्रायमुपलक्षणं वा । अतएव 'प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति' इति सर्वेषामिन्द्रियाणां सह गमनं श्रूयत इति ।

एकादशत्वकथनं चेन्द्रियाणां समष्टिविषयम् । व्यष्टिदशायां तु एकादशैकादशेन्द्रियाणि पुरुषभेदेन व्यवस्थितानि द्रष्टव्यानि । समष्टीन्द्रियाणां सांशानां सूक्ष्मांशरूपाणीमानीति बोध्यम् । तथा च वचनम्—'तेषां त्ववयवान् सूक्ष्मान् षण्णामप्यमितौजसाम् । सन्निवेश्यात्ममात्रासु सर्वभूतानि निर्ममे ॥' इति । अत्र षण्णामित्युपलक्षणम् ।

अणुत्वं चेन्द्रियाणां सूत्रितं 'अणवश्च' इति । उत्क्रान्तिश्रवणान्न विभुत्वं किन्तु परिच्छिन्नत्वमेव । पार्श्वस्थैरनुपलभ्यमानत्वाच्चातिसूक्ष्मत्वम् । इदमेवाणुत्वं परिच्छिन्नत्वे सत्यतिसूक्ष्मत्वरूपमत्र विवक्षितम् । अत एव परिमाणावान्तरभेदे सत्यपि त्वच ईदृशमणुत्वं सम्भवति । 'त एते सर्व एव समाः सर्वेऽनन्ता' इत्यानन्त्यकीर्तनं चेन्द्रियाणां वृत्त्यानन्त्याभिप्रायं तथोपासनाविधिशेषभूतम् । श्रूयते चोपास्तिस्तत्रैतेषां 'अथ यो हैताननन्तानुपास्ते' इति । तत्त्वमुक्ताकलापे चेन्द्रियाणामणुत्वमुक्तम्—'सूक्ष्माण्येकादशाक्षाण्यपि न यदि कथं देहतो निष्क्रमादिश्चित्ताणुत्वे तु सर्वेन्द्रियसमुदयने धीक्रमोऽप्यस्तु मानम् ।' नन्वणुत्वे कथं चक्षुरादेर्दूरस्थार्थग्राहकता तत्राह 'वृत्त्याक्ष्यादेर्दवीयःप्रमितिजनकता

तत् प्रतिषद्धा पराहतम् । अधिष्ठानातिरिक्तज्ञानेन्द्रिये यस्तर्कः स तुल्यो हि कर्मेन्द्रियेऽपि । तथाहि—रूपाद्युपलब्धेः क्रियात्वेन क्रियायाश्च करणपूर्वकत्वनियमेन करणेन भाव्यम्, तेन च गोलकाद्यतिरिक्तेन भाव्यमिति यदि मन्यते तर्हि वचनादेरपि क्रियात्वेन तेनापि तथाविधकरणपूर्वकेणैव भाव्यम् । उक्तं च तत्त्वमुक्ताकलापे—'रूपादिज्ञानसिद्धौ यदि करणतया कल्पनं धीन्द्रियाणां तद्वद्वत्यादिकर्मस्वपि करणतया सन्तु कर्मेन्द्रियाणि । कर्मज्ञानाक्षहेत्वोः समपरिहरणा ह्यन्यथासिद्धिशङ्का तस्मादेकादशाक्षाण्यपि निगमविदो मन्वते न्यायपूर्वम् ॥' इति । अतएव च काणादैः कर्मेन्द्रियव्यावृत्तं ज्ञानसाधनत्वघटितमिन्द्रियलक्षणं निरुच्यमानमपि निरस्तम् । तथा चोक्तम्—'सिद्धानुगममात्रं हि कर्तुं युक्तं परीक्षकैः । न सर्वलोकसिद्धस्य लक्षणेन निवर्तनम् ॥' इति । कर्मेन्द्रियाणामपीन्द्रियत्वं सप्तगत्यधिकरणे विचार्य निर्णीतं भगवता बादरायणेन । तथाहि—सप्तैवेन्द्रियाणि, तेषामेव जीवेन सह गतिश्रवणात्—'सप्त इमे लोका येषु चरन्ति प्राणा गुहाशया निहिताः सप्तसप्त' इति, योगदशायां च तेषामेव विशेषितत्वात् 'यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह । बुद्धिश्च न विचेष्टेत तामाहुः परमां गतिम् ॥' इति । एवं 'सप्तगतेर्विशेषितत्वाच्च' इति सूत्रेण पूर्वपक्षयित्वा सिद्धान्तितम्—'हस्तादयस्तु स्थितेऽतो नैवम्' इति । हस्तादयोऽपि हि शरीरे स्थिते जीवं उपकारकाः । अत उपकारकत्वाविशेषात्तेषामपीन्द्रियत्वम् । चक्षुरादि शरीरदेशाद्बहिरपि वृत्तिद्वारा व्याप्य विषयान् गृह्णाति, कर्मेन्द्रियं तु शरीरप्रदेशमात्रावच्छिन्नकार्यजनकमिति विशेषो द्योत्यते 'स्थिते' इति

पदेन । 'अतो नैवम्' इति च कर्मेन्द्रियाणामपीन्द्रियत्वग्राहि प्रमाणदार्ढ्याभिप्रायम् । सन्ति हि प्रमाणानि इन्द्रियाणामेकादशत्वे । तानि चोदाहृतानि प्रागेव । योगदशायां ज्ञानेन्द्रियाणामेव विशेषणं प्राधान्याभिप्रायेण । सप्तानां गत्यादिश्रवणमपि आपेक्षिकप्राधान्याभिप्रायमुपलक्षणं वा । अतएव 'प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति' इति सर्वेषामिन्द्रियाणां सह गमनं श्रूयत इति ।

एकादशत्वकथनं चेन्द्रियाणां समष्टिविषयम् । व्यष्टिदशायां तु एकादशैकादशेन्द्रियाणि पुरुषभेदेन व्यवस्थितानि द्रष्टव्यानि । समष्टीन्द्रियाणां सांशानां सूक्ष्मांशरूपाणीमानीति बोध्यम् । तथा च वचनम्—'तेषां त्ववयवान् सूक्ष्मान् षण्णामप्यमितौजसाम् । सन्निवेश्यात्ममात्रासु सर्वभूतानि निर्ममे ॥' इति । अत्र षण्णामित्युपलक्षणम् ।

अणुत्वं चेन्द्रियाणां सूत्रितं 'अणवश्च' इति । उत्क्रान्तिश्रवणान्न विभुत्वं किन्तु परिच्छिन्नत्वमेव । पार्श्वस्थैरनुपलभ्यमानत्वाच्चातिसूक्ष्मत्वम् । इदमेवाणुत्वं परिच्छिन्नत्वे सत्यतिसूक्ष्मत्वरूपमत्र विवक्षितम् । अत एव परिमाणावान्तरभेदे सत्यपि त्वच ईदृशमणुत्वं सम्भवति । 'त एते सर्व एव समाः सर्वेऽनन्ता' इत्यानन्त्यकीर्तनं चेन्द्रियाणां वृत्त्यानन्त्याभिप्रायं तथोपासनाविधिशेषभूतम् । श्रूयते चोपास्तिस्तत्रैतेषां 'अथ यो हैताननन्तानुपास्ते' इति । तत्त्वमुक्ताकलापे चेन्द्रियाणामणुत्वमुक्तम्—'सूक्ष्माण्येकादशाक्षाण्यपि न यदि कथं देहतो निष्क्रमादिश्चित्ताणुत्वे तु सर्वेन्द्रियसमुदयने धीक्रमोऽप्यस्तु मानम् ।' नन्वणुत्वे कथं चक्षुरादेर्दूरस्थार्थग्राहकता तत्राह 'वृत्त्याक्ष्यादेर्दवीयःप्रमितिजनकता

वृत्तिराप्यायनार्थैर्भूतैर्जातं प्रसर्पं' आनन्त्यश्रुतिः कथं ? तत्राह—'श्रुतिमितमपि चानन्त्यमेषा स्वकार्ये ॥' इति ।

कापिलास्तु श्रोत्रादिपञ्चकं ज्ञानेन्द्रियं, वागादिपञ्चकं कर्मेन्द्रियं मनस्तूभयात्मकमिति मन्यन्ते । न तद्युक्तम् । प्रवृत्तिमात्रस्य मनःपूर्वकत्वेऽपि नहि मनसः कर्मसु करणत्वम्, अवबोधनमात्र एव विश्रान्तेः । अन्यथा चक्षुःश्रोत्रादेरप्यवबोधनद्वारा तत्तत्कर्मसु करणत्वं किं न स्यात् । अतः षोढा ज्ञानेन्द्रियाणीत्येव युक्तम् । 'मनःषष्ठानीन्द्रियाणि' 'यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह' इति ज्ञानेन्द्रियसहपठितत्वात् । तेषु मनः स्मृत्यादिकारणमाभ्यन्तरमिति विशेषः । बाह्येषु च ज्ञानेन्द्रियेषु त्वक्चक्षुषोरेव द्रव्यग्राहकतेति च ।

प्राकृताप्राकृतभेदेन भवतीन्द्रियाणां द्वैविध्यम् । अप्राकृतविभागं तु नित्यविभूतिनिरूपणे निरूपयिष्यामः । प्राकृतान्येव तु अद्य निरूप्यन्ते । मिश्रसत्त्वाश्रयत्वादप्राकृतेभ्यो व्यावृत्तिः । तत्र स्मृतिकरणमिन्द्रियं मनः । श्रोत्रादीनां तत्तदसाधारणशब्दाद्यर्थोपलम्भसाधनत्वं लक्षणं बोध्यम् । यद्यपि मनसो ज्ञानसामान्ये कारणत्वेन शब्दसाक्षात्कारेऽप्यस्ति कारणत्वम्, अथापि शब्दसाक्षात्कारत्वावच्छिन्नकार्यतानिरूपितकारणताश्रयत्वं न मनसः, ज्ञानत्वेन मनस्त्वेनैव कार्यकारणभावात् । वागादिकर्मेन्द्रियाणां तत्तदसाधारणवर्णोच्चारणादिक्रियाकरणत्वं लक्षणं बोध्यम् । तत्सञ्जीवने चेन्द्रियाणां लक्षणान्युक्तानि—'श्रवणादिक्रियासिद्धौ करणत्वं तु लक्षणम् । श्रोत्रादीनामिन्द्रियाणां विज्ञातव्यं पृथक् पृथक् ॥' 'श्रूयते येन तच्छ्रोत्रं सा त्वक् त्वच्यते यया ।

वक्ष्यते येन तच्चक्षुर्जिह्वा लेढि यया रसम् ॥ घ्रायते येन तद् घ्राणमुच्यते वागयया वचः। पण्यते येन पाणिः स पादो येन च पद्यते ॥ तद्गुदं गूयते येन मेढ्रं मेहति येन च। करणानि दशैतानि बाह्यानि कथितानि वै ॥' इति।

इन्द्रियाणां स्थानभेदो यथा—हृदयप्रदेशवृत्ति मनः। मनुष्याणां कर्णशष्कुल्यवच्छिन्नाकाशप्रदेशवृत्ति श्रोत्रम्। द्विजिह्वानां तु नयनवृत्ति। सर्वशरीरवृत्ति त्वगिन्द्रियं विकासशक्त्या वृत्त्या वा। चक्षुः कृष्णताराग्रवृत्ति। रसनं जिह्वाग्रवृत्ति। नासाग्रवृत्ति घ्राणम्। वाक् तु वर्णोत्पत्तिस्थानाष्टके वर्तते। वर्णोत्पत्तिस्थानानि तावत् हृदयं, कण्ठो, जिह्वामूलं, तालु, दन्ताः, ओष्ठौ, नासिका, मूर्धेति। पाणिरङ्गुल्यग्रवृत्तिः गजादीनां तु शुण्डादिवृत्तिः। चरणवृत्ति पादेन्द्रियं भुजगपतगादीनां तूरःपक्षवृत्ति। पायूपस्थौ च तत्तदवयवविशेषवृत्ती। इति।

## इन्द्रियाणां गतिमत्त्वम्।

एतानि चेन्द्रियाणि उत्क्रामन्तं जीवमनूत्क्रामन्ति। श्रूयते हि—'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति' इति। स्मर्यते च—'शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः। गृहीत्वैतानि संयाति वायुर्गन्धानिवाशयात् ॥' इति। यत्तु कस्यचिन्मतम्—ज्ञानेन्द्रियाणामेवानूत्क्रामणं न कर्मेन्द्रियाणां हस्तादीनाम्, तेषां शरीरनाशमनु नाशादिति। तत् श्रुतिविरुद्धम्, 'प्राणमनूत्क्रामन्तं सर्वे प्राणा अनुत्क्रामन्ति' इति हि श्रूयते। अनुचितश्च सर्वशब्दस्य सङ्कोचः। भगवता नारायणेन च वागादीनामग्न्यादावप्ययशङ्कां निरस्य जीवेन सहोत्क्रामणं समर्थितम् 'अग्न्यादिश्रुतेरिति चेन्न भाक्तत्वात्' इति।

एतानीन्द्रियाणि आसर्गादाप्रलयं ससरं व जीवमनुगच्छन्त्येवानुयोनि तस्योपकरणानि भवन्ति । प्रतिनियतानि च प्रतिजीवं यत्तद्‌दृष्टनियतानि । अत एवैकस्योपकरणीभूतान्यन्यस्योपकरणतां न प्रपद्यन्ते । परकायप्रवेशेऽपि स्वस्यैवेन्द्रियाणि उपकरणतां प्रपद्यन्ते न परस्य, परकाये प्रविशता च योगिना स्वोपकरणभूतानीन्द्रियाणि सहैव नीयन्त इति दिक् ।

## इन्द्रियाणां प्राप्यकारित्वम् ।

इदमिह बोध्यम्—रसना त्वक् च स्वाधिष्ठानप्रदेशसम्बद्धद्रव्यगतं रसं स्पर्शं च ग्राहयतीत्येतद् व्यक्तम् । घ्राणेन्द्रियं तु वायुना स्वसन्निधिं प्रापितानां पार्थिवसूक्ष्मांशानां गन्धं ग्राहयति । चक्षुरिन्द्रियं तु विषयदेशं वृत्तिद्वारा प्राप्य रूपि द्रव्यं ग्राहयति तद्रूपादि च । आहङ्कारिकस्य चक्षुरिन्द्रियस्य वृत्तिप्रसरणमिष्यते 'दिवीव चक्षुराततम्' इति श्रौतव्यवहारात् । तेजसः प्रभाप्रसरणवत् । काचादिस्वच्छद्रव्यं वृत्तिप्रसरणे भित्त्यादिवन्न प्रतिरोधकम् । तस्मात् तेन व्यवहितमपि चक्षुर्ग्राहयति । अञ्जनादिना संस्कृतस्य तु चक्षुषो वृत्तिप्रसरणे भित्त्यादेरपि न प्रतिरोधकता । चक्षुष एव विषयदेशप्राप्त्या विषयग्राहकता । अन्येषां तु स्वदेशसन्निहितविषयग्राहकता ।

ननु वृत्तिप्रसरणवादोऽयमसङ्गतः । सन्निहितात्यन्तविप्रकृष्टग्रहणेष्वविलम्बविलम्बप्रसङ्गात् । प्रसरणं हि क्रमभावि । प्रसरतः सन्निहितदेशप्राप्तौ यावत्क्षणातिपातः अत्यन्तविप्रकृष्टदेशप्राप्तौ ततोऽधिकक्षणातिपातोऽवश्यम्भावीति । वस्तुतः उन्मीलितमात्रे नयने यथा सन्निहितं गृह्यते तथा वियत्तलगतः सुदूरविप्रकृष्टोऽपि चन्द्रादिर्गृह्यते इत्यप्राप्यकारित्वमेव तु न्याय्यम् । नैवम् । प्राप्य-

कारित्वेऽपि उन्मीलितमात्रे चक्षुषि चन्द्रादिग्रहणमुपपद्यत एव । इन्द्रियवृत्तेर्वेगातिशयात् । तत् सन्निकृष्टविप्रकृष्टग्रहणयोः सन्नपि क्षणभेदो न लक्ष्यते पद्मपत्रशतवेधनीत्येति । साधितं च प्राप्यग्राहित्वं तत्त्वमुक्ताकलापे—'प्राप्यग्राहीन्द्रियत्वात् विमतमितरवत् प्राप्तिरुक्तप्रकारा' इति ।

एवं श्रोत्रेन्द्रियस्यापि कर्णशष्कुलीस्थस्याणोर्वृत्त्यभ्युपगमेन सुदूरोत्पन्नस्यापि शब्दस्य ग्रहणं केचिन्मन्यन्ते । तस्याश्च वृत्तेश्चाक्षुष्या इवाप्यायकभूततारतम्यानुरोधेन प्रसरणतारतम्यमुपपद्यते । उपपद्यते च प्राच्यां दिशि शब्दः श्रूयते प्रतीच्यां दिशीति शब्दोत्पत्त्यवच्छेदकप्राच्यादिदिग्भेदग्रहणमपि तत्तद्देशगतवृत्तिकृतम् । परेत्वाचार्याः प्राहुः—शब्दाश्रयद्रव्यमेव श्रोत्रप्रदेशमभ्येति । ततश्च भवति शब्दग्रहः । तच्च द्रव्यं वायुः । नन्वाकाशो ह्याश्रयः शब्दस्य, तस्य कथं गमनमागमनं वा । सत्यमाकाश आश्रयः । आकाशविकृतिभूतो वायुरपि भवत्येव तस्याश्रयः । स चाभ्येति श्रोत्रदेशम् । अत एव चोत्पत्तिश्रवणक्षणयोरन्तरमुपपद्यते । उपपद्यते च पवनेऽनुकूले सुदूरोत्पन्नस्यापि शब्दस्य ग्रहणं प्रतिकूले तु निकटोत्पन्नस्याप्यग्रहणम् । न च काणादैरिवास्माभिराकाशमात्रगुणत्वं शब्दस्येष्यते । 'आकाशाद्वायुर्वायोरग्निरग्नेराप अद्भ्यः पृथिवी' इति श्रूयमाणोऽयमुपादानोपादेयक्रमो हि पूर्वपूर्वभूतगुणानामुत्तरोत्तरभूतगुणत्वमपि गमयति । प्रतिध्वनिः शब्दवेगेन गृहाभ्यन्तरप्रदेशे कम्पश्च शब्दाश्रयद्रव्याभिघातं विना न सम्भवतः । अतश्च शब्दाश्रयेणान्तःप्रविष्टेन भाव्यम् । अयमेव श्रोत्रवृत्तेर्विषयदेशे गमनमिति पक्षाच्छब्दाश्रयद्रव्यागमनपक्षस्य विशेषः । तदुक्तं सर्वार्थ-

सिद्धौ—'गुहासौधादिसङ्क्षोभः प्रतिशब्दश्च जृम्भते । निःसाणादिप्रणादेन तदेतत् पक्षसङ्गतम् ॥' इति । प्राच्यादिदिगागतवायुगतशब्दोपलम्भाच्च शब्दस्य प्राच्यत्वादिप्रतीतिरानुमानिकी । यथा मयूरवीणादिस्वरत्वम् । एतदप्युक्तं तत्रैव—'यथा मयूरवीणादेः शब्दोऽयमिति गृह्यते । तथा प्राच्यादिशब्दोऽयमिति लिङ्गात्तथाविधात् ॥' इति । पक्षद्वयं च सङ्गृह्य निरूपितं तत्त्वमुक्ताकलापे—'शब्दं गृह्णाति दूराभ्युदितमपि बहिः सन्तता श्रोत्रवृत्तिर्दिग्भेदासन्नतादिग्रहणमपि तदा तत्र तत्सन्निधानात् । इत्येकेऽन्ये तु दूरान्तिकगतजनताशब्दधीकालभेदात् श्रोत्रायातस्य तस्य ग्रहमनुमितिमप्याहुरस्मिन् दिगादेः ॥' इति ।

## तन्मात्रभूतोत्पत्तिप्रकारः ।

अथ तन्मात्रादिकं निरूप्यते । तामसाहङ्कारात् शब्दतन्मात्रं जायते तत आकाशः, तस्मात्स्पर्शतन्मात्रं ततो वायुः, तस्माद्रूपतन्मात्रं ततस्तेजः, तस्माद्रसतन्मात्रं ततो जलम्, तस्माद्गन्धतन्मात्रं ततः पृथिवीति क्रमः । अयं च क्रमः श्रीभागवत उक्तः—'तामसाच्च विकुर्वाणाद्भगवद्वीर्यचोदितात् । शब्दमात्रमभूत्तस्मान्नभः श्रोत्रं तु शब्दगम् ॥ नभसः शब्दतन्मात्रात्कालगत्या विकुर्वतः । स्पर्शोऽभवत्ततो वायुस्त्वक् स्पर्शस्य च सङ्ग्रहः ॥ वायोश्च स्पर्शतन्मात्राद्रूपं दैवेरितादभूत् । समुत्थितं ततस्तेजश्चक्षू रूपोपलम्भनम् ॥ रूपमात्राद्विकुर्वाणात्तेजसो दैवचोदितात् । रसमात्रमभूत्तस्मादम्भो जिह्वा रसग्रहः ॥ रसमात्राद्विकुर्वाणादम्भसो दैवचोदितात् । गन्धमात्रमभूत्तस्मात्पृथ्वी घ्राणस्तु गन्धगः ॥' इति । अत्राकाशादेः शब्दतन्मात्रत्वादिना विशेषण

शब्दाद्यसाधारणधर्मत्वनिबन्धनम् । श्रोत्रादि तत्तद्भूतगुणग्राहीति चोच्यते 'श्रोत्रं शब्दग'मित्यादिना । 'परस्य दृश्यते धर्मो ह्यपरस्मिन् समन्वयात्' इत्यनेन च पूर्वपूर्वभूतगुणस्योत्तरोत्तरभूते उपलम्भः पूर्वपूर्वभूतान्वयादुत्तरत्रेत्युच्यते । अयमेव प्रकारः सत्सङ्गिजीवने वर्णितः—'तामसाच्च विकुर्वाणात्पूर्वोक्तैरेव हेतुभिः । शब्दो भवति तस्माच्च नभः शब्दगुणं किल ॥ विकुर्वतश्च खात्स्पर्शो जायते पूर्वहेतुभिः । ततो वायुः स्पर्शगुणः शब्दवांश्च परान्वयात् ॥ वायोर्विकुर्वतो रूपं तेजस्तस्माच्च जायते । स्वतो रूपगुणं शब्दस्पर्शवच्च परान्वयात् ॥ तेजसोऽथ रसस्तस्माज्जायतेऽम्भो विकुर्वतः । परान्वयाच्छब्दस्पर्शरूपवद्रसवत्स्वतः ॥ अम्भसो जायते गन्धस्ततो गन्धगुणा धरा । शब्दस्पर्शरूपरसगुणैर्युक्ता परान्वयात् ॥' इति । हरिवाक्यसुधासिन्धौ चायमेव क्रमो निर्दिष्टः—'तामसाच्छब्दतन्मात्रद्वाराऽऽकाशमजायत । ततः स्पर्शस्ततो वायुस्ततो रूपं ततोऽनलः ॥ ततो रसस्ततश्चापस्ततो गन्धस्ततश्च भूः । भिन्नभिन्नस्वभावानि तत्त्वान्येतानि देवताः ॥' इति । देवस्य परमात्मनः शरीरत्वाद्देवाधिष्ठितत्वाद्वा देवतेति तत्त्वानां निर्देशः । 'हन्ताहमिमास्तिस्रो देवताः' इत्यादाविव । अत्र शब्दादयो न गुणमात्रं किन्तु तत्तद्गुणकभूतसूक्ष्मरूपा एव विवक्षिताः । गुणानां द्रव्यानारम्भकत्वात् । तत्रत्यस्य 'शब्दादयो गुणाः पञ्च तन्मात्राख्या इहोदिताः' इति वचनस्याप्ययमेवाशयः । तत्तत्तन्मात्रा तत्तद्भूतस्य सूक्ष्मावस्था । शब्दादिस्तत्तद्भूतगुणस्तन्मात्रावस्थायामनुद्भूत आकाशादौ तूद्भूतः । उद्भूते हि शब्दादौ शान्तत्वादिविशेषयोगो नानु-

भूते। अत एषाविशेष तन्मात्रमिति चोच्यते। तथा च वचनम्— 'तस्मिंस्तस्मिंस्तु तन्मात्रं तेन तन्मात्रता स्मृता। तन्मात्राण्यविशेषाणि अविशेषास्ततो हि ते॥ न शान्ता नापि घोरास्ते न मूढाश्चाविशेषिण॥' इति।

उक्तं च न्यायसिद्धाञ्जने—'भूतानामव्यवहितसूक्ष्मावस्थाविशिष्टद्रव्यं तन्मात्रम्। दधिरूपेण परिणममानस्य पयसो मध्यमावस्थावत् भूतस्वरूपेण परिणममानस्य द्रव्यस्य तत पूर्वा काचिदवस्था तन्मात्रा, तद्विशिष्टमपि द्रव्यं तन्मात्रमुच्यते' इत्यादि। सौक्ष्म्यं चात्र शब्दादीनामनुद्भूततया बोध्यम्। उक्तं च सर्वार्थसिद्धौ 'आगमेन विना सिद्धिस्तन्मात्राणां सुदुर्वचा। उद्भवानुद्भवाद्यैस्तु लोके सूक्ष्मार्थकल्पना॥' इति।

कापिलास्तु-तामसाहङ्कारात्पञ्चापि तन्मात्राणि जायन्ते, शब्दतन्मात्रात् आकाशम्, शब्दतन्मात्रसहकृतात्स्पर्शतन्मात्राद्वायुः, एवं क्रमेण पूर्वपूर्वभूतारम्भकतन्मात्रसहकृतैस्तैस्तन्मात्रैस्तत्तद्भूतारम्भ इति वदन्ति। 'आकाशाद्वायुर्वायोरग्निरग्नेराप अद्भ्यः पृथिवी' इति भूताद्भूतान्तरोत्पत्तिं वदन्ती श्रुतिस्तु पक्षं नानुमन्यते। न च भूताद्भूतान्तरोत्पादस्य तन्मात्रव्यवहिततायामुक्तश्रुतिविरोधः। तन्मात्राणां तत्तद्भूतसूक्ष्मावस्थारूपत्वेन ततोऽनतिरेकात्। स्थूलावस्थां प्रति सूक्ष्मावस्थायाः कारणत्वेन पूर्वभावश्चाविरुद्धः। स्मर्यते च भूताद्भूतान्तरोत्पादस्य तन्मात्रव्यवहितता—'भूतादिस्तु विकुर्वाणः शब्दमात्रं ससर्ज हि। तत ससर्ज तन्मात्रमाकाशं शब्दलक्षणम्॥ आकाशस्तु विकुर्वाणः स्पर्शमात्रं ससर्ज ह। बलवानभवद्वायुस्तस्य स्पर्शो गुणो मतः॥ ततो वायुर्विकुर्वाणो रूपमात्रं ससर्ज ह' इति।

## तन्मात्रभूतलक्षणम्।

शब्दवत्त्वं तन्मात्रतत्कार्यभूतोभयसाधारणं लक्षणम्। शब्दो हि तन्मात्राणां पञ्चानां भूतानां च पञ्चानां साधारणः। न ह्युपादानगुणरहितान्युपादेयानि भवन्ति। भूतावस्थाऽव्यवहितपूर्वावस्थाविशिष्टत्वं तन्मात्रसामान्यलक्षणम्। ननु गन्धतन्मात्रावस्थाया भूतावस्थाऽव्यवहितपूर्वत्वेऽपि रसतन्मात्राद्यवस्थायाः पृथिव्यात्मकभूतावस्थाव्यवहितत्वेन तदभावरूपाऽव्यवहितत्वाभावेन रसतन्मात्रादिष्वव्याप्तिः। मैवम्। अव्यवहितपूर्वत्वसम्बन्धेन भूतावस्थाविशिष्टावस्थावत्त्वमिति तदर्थात्। तथा च उक्तसम्बन्धेन पृथिव्यात्मकभूतावस्थावैशिष्ट्यस्य रसतन्मात्रेऽसम्भवेऽपि जलात्मकभूतावस्थावैशिष्ट्य तस्मिन्, एवं रूपतन्मात्रादिषु तत्तत्कार्यतेजःप्रभृतिभूतावस्थावैशिष्ट्यं स्वक्षतमिति न क्षतिः। स्वपूर्वावस्थापूर्वत्वाभाववत्त्वस्वपूर्वत्वोभयसम्बन्धेन भूतावस्थाविशिष्टावस्थावत्त्वमिति तु निर्गलितार्थः। स्पर्शशून्यत्वे सति शब्दवत्तन्मात्रत्वं शब्दतन्मात्रस्य, रूपशून्यत्वे सति स्पर्शवत्तन्मात्रत्वं स्पर्शतन्मात्रस्य, रसशून्यत्वे सति रूपवत्तन्मात्रत्वं रूपतन्मात्रस्य, गन्धशून्यत्वे सति रसवत्तन्मात्रत्वं रसतन्मात्रस्य, गन्धवत्तन्मात्रत्वं गन्धतन्मात्रस्य च लक्षणं बोध्यम्। आकाशादिभूतेष्वतिव्याप्तिवारणाय तत्तल्लक्षणे तन्मात्रत्वनिवेशः। उत्तरोत्तरतन्मात्रेष्वतिव्याप्तिवारणाय सत्यन्तनिवेशः।

स्पर्शरहित उद्भूतशब्दवान् आकाशः। वाय्वादिरुद्भूतशब्दवानपि न स्पर्शरहितः, भूतादिर्निःस्पर्शोऽपि न शब्दवान्। शब्दतन्मात्रं शब्दवदपि नोद्भूतशब्दवत्। रूपरहित उद्भूतस्पर्शवान् वायुः। आकाशो रूपरहितोऽपि न स्पर्शवान्, स्पर्शतन्मात्रं स्पर्शवदपि नोद्भू-

तस्पर्शवत्, तेज प्रभृतिरुद्भूतस्पर्शवानपि न रूपरहितः । रस-रहितमुद्भूतरूपवत्तेज । वायु रसरहितोऽपि न रूपवान्, रूपत-न्मात्र रूपवदपि नोद्भूतरूपवत्, जल तूद्भूतरूपवदपि न नीरसम् । गन्धरहिता उद्भूतरसवत्य आप । गन्धरहितमपि तेजो न रसवत्, रसवदपि रसतन्मात्र नोद्भूतरसवत्, उद्भूतरसा च पृथ्वी न निर्गन्धा । उद्भूतगन्धवती च पृथिवी । क्वचिद्गन्धस्यानुद्भूतत्वेऽपि उद्भूतगन्ध-सजातीयत्वविवक्षया नाव्याप्ति । आकाशादिपञ्चकान्यतमत्व तन्मात्रभिन्नत्वे सति शब्दवत्त्व वा भूतसामान्यलक्षण बोध्यम् ।

## आकाशविचार ।

तत्राकाशे प्रथममहाभूते भवति बहुधा विप्रतिपत्ति —अस्ति नास्तीति, नित्यमनित्यमिति, अचाक्षुष चाक्षुषमिति, अरूपि रूपीति । नास्त्येवेति सौगतादय । आहुश्च—नहि घटादिवत्किमप्युपलभ्यते गगनमिति वस्तु, आवरणाभावमात्र तु तदवस्त्वेव । यत्र पुनरावरण न तत्राकाशः, आवरण चेन्निषेत शून्यमेव हि तदा तत्र। तस्मात् शब्द ज्ञानानुपाती वस्तुशून्यो विकल्प एव नभो नभ इति । ननु भवति नील नभ इति ग्रह । सत्यम्, स तु भ्रम , नील तम इतिवत् । आलोकाभाव एव तम , तत्र नैल्याद्यध्यासो वैशेषिकैरपि दृश्यते । भवति च शून्येऽपि शब्दप्रयोगो मिथ्याजले मृगतृष्णिकादिशब्दप्र-योग इवेति । तदिद प्रतीतिपराहतम् । प्रतीतिर्हि सदात्मनैव । सद्रूपेण भासमानस्य कथमभावात्मता । न च तदुल्लिखितप्रतीतिविपर्यस्ता । ननु नेहावरण किमपीति प्रत्ययोऽस्तीति चेन्न अभावस्य भावान्तर-रूपतया तस्याप्याकाशविषयत्वात् । अभावस्य भावान्तररूपत्वान-भ्युपगमेऽपि इहेत्यधिकरणतयोल्लिख्यमानस्तु आकाश एव । इह

पतगः पततीत्यपि भवति प्रतीतिः । अत्राप्यधिकरणतया प्रमीयमाणः स एव । न च सूर्यालोकादेराधारतयोल्लेखः, अहो महानातगोऽयमधुना विहायसीति तस्याप्याधारतया ह्याकाशः प्रतीयते ।

काणादास्तु यद्यप्याकाशोऽप्रत्यक्षः । न हि चक्षुस्तद्ग्रहणे प्रभवति, अरूपित्वात् । अत एव नापि त्वगिन्द्रियम् । स्पर्शशून्यत्वाच्च न तत्प्रसङ्गोऽपि । घ्राणादि तु न द्रव्यग्रहणाय प्रभवति । मनस्त्वाभ्यन्तरमेव । अथाप्यनुमानेन तत्सिद्धिः—श्रूयमाणेन शब्देन द्रव्याश्रितेन भाव्यम्, गुणत्वात् । न च दिक्कालमनसामेष गुणः, विशेषगुणो ह्ययम् । नाप्यात्मनः, बहिरिन्द्रियग्राह्यो ह्ययम् । नापि पृथिव्यादिभूतचतुष्टयस्यायं विशेषगुणः । नह्ययं कारणगुणपूर्वकः, नवा अग्निसंयोगासमवायिकारणकः, न चाप्रत्यक्षः । रूपादिर्हि पार्थिवो विशेषगुणः कारणगुणपूर्वकः पाकजो वा दृष्टः, जलीयस्तु स कारणगुणपूर्वकः, जलपरमाणुगतस्तु न प्रत्यक्षः, तथा वायवीयोऽपि । तस्मात् शब्दस्याश्रयीभूतं अष्टद्रव्यातिरिक्तं नभः सिद्ध्यतीति । इदं हि परिशेषानुमानं न प्रभवति स्वार्थसाधनाय, परिशेषस्यैवासिद्धेः । भवति चाबाधितो व्यवहारः प्रामाणिकानामपि— भेर्याः शब्दोऽयम्, मृदङ्गस्यायं ध्वनिः, वीणाया नादोऽयम्, प्रवहतो जलस्यायमुद्घोषः, महार्णवस्य महानयमुद्घोषः, प्रचण्डवातस्यायं दारुणः शब्दः, इति । अयं चात्र प्रतिप्रयोगः—शब्दो न विभुगुणः, बाह्येन्द्रियग्राह्यगुणत्वात् रूपादिवत् । यद्यपि ज्ञानसुखादिर्विभुगुणः, अथापि स न बाह्येन्द्रियग्राह्यः । स्पर्शो न पृथिव्यादिधर्मः, नीरूपेन्द्रियग्राह्यत्वात् शब्दवत् इत्यनुमानेन स्पर्शाश्रयस्य पृथिव्याद्यतिरिक्तताकल्पनाप्रसङ्गश्च । विपक्षे बाधकं न पश्याम इति चेत्तुल्यमेतदत्रापि ।

यत्तु असति नभसि निष्क्रमण प्रवेशन च प्राणिना न घटेतेति निष्क्रमणप्रवेशनाभ्या तत् सिद्ध्यतीति। तदप्यसत्। आकाशव्याप्ते कुड्यादौ तदसम्भवात्। न च कुड्यादावाकाश नास्ति। तथासति तत्र छिद्रासम्भव । जातु भवति तत् सच्छिद्रमपि। ननु सत्यमाकाशेन व्याप्तमेव कुड्यादि तथापि सहकारिकारणवैकल्यात् न निष्क्रमणादि कार्यमिति। ननु किं तत् सहकारिकारणम्। ननु प्रतिरोधककुड्याद्यभाव एव चेत् तर्हि किं नभ-कल्पनया, निष्क्रमण प्रवेशन च देहादिगत क्रियाविशेष। स च प्रतिरुध्यता नाम प्रतिरोधकेन। असति रोधके देहे स क्रियाविशेष प्रयत्नादिना स्वकारणेन भवेदेव। तस्मिन् क्रियाविशेषे नभो न समवायिकारण, नाप्यसमवायिकारणम्। न च निमित्तम्[1]। प्रयत्नप्राणव्यापारादेरेव देहसन्निहितस्य तथात्वात्। तस्मादनुमानेन नभस साधनमनुपपन्नम्। तदेतत् सव तत्त्वमुक्ताकलापे प्रतिपादितम्—'प्रत्यक्ष व्योम नील नभ इति हि मतिश्चक्षुषैवास्मदादे कूपोऽसौ रन्ध्रमेतत्पतति खग इहेत्यादिधीश्चात्र-मानम्। आधारोऽत्रातपादिर्यदि भवति कथ तस्य चेहेति बोध-स्तस्याशैश्चेत्त्र्यणौ तच्छिथिलगति न च व्योमवागातपादौ॥ रूपस्पर्शोज्झितत्वान्न भवति गगन दर्शनस्पर्शनार्हं घ्राणश्रोत्रे रसज्ञाऽप्यवगमयति न द्रव्यमन्यत्त्वचाह्यम्। तस्मात्साध्यक्षवेद्य वियदिति यदि न प्रत्ययस्यापरोक्ष्यात् पञ्चीकारेण नैल्य पटमलिनिमवन्नापितं चोपकुर्यात्॥ शब्दस्याधारभूत कथमपि गगनं शक्यते नानुमातु स्वेच्छात' पारिशेष्यक्रम इह कथितोऽतिप्रसङ्गादिदु'स्थ । निष्क्रान्त्यादेर्न तद्धी सति नभसि

यतो नास्ति कुड्यादिकेऽसौ रोधस्त्वावारकैश्चेत्तदभवनवशा-न्निष्क्रमादिश्च सिद्ध्येत् ॥' इति ।

यद्यपि तेजःप्रभृतिष्वेव रूपं न व्योम्नि, अथापि तद्भवत्येव चाक्षुषम् । न च चाक्षुषेण रूपवतैव भाव्यम् । रूपं हि नीरूपमपि भवत्येव चाक्षुषम् । तथा नीरूपमपि घटत्वादिकं भवत्येव चाक्षुषम् । ननु चाक्षुषेण द्रव्येण रूपवतैव भाव्यम् । तद्रहितानि वाय्वादीनि द्रव्याण्यचाक्षुषाणि हि । भवतु । यदि द्रव्यादन्यस्य चाक्षुषत्वे न रूपापेक्षा, तर्हि रसादेः कुतो न चाक्षुषता ? । ननु रूपरूपिणोस्तज्जात्योः रूपिद्रव्यसंयोगस्यैव च चाक्षुषता नान्यस्येति चेत्, कस्मादेष नियमः । ननु योग्यता नियमयति । श्रोत्रादीनां पञ्चानामिन्द्रियाणां हि शब्दादयः पञ्चार्थाः प्रतिनियताः । तेषु तत्तदिन्द्रियार्थेषु तत्तदिन्द्रियगोचरत्वयोग्यता च प्रतिनियता । सा च तस्य तस्य स्वभावविशेषः । तत्र रूपं चाक्षुषप्रत्यक्षयोग्यं भवति । तस्य चायं विशेषः—स्वाश्रयद्रव्यस्य तत्समवेतजातेः स्वसमवेतजातेः स्वाश्रयद्रव्यद्वयसंयोगस्य च चाक्षुषयोग्यतामापादयति स्वसम्बन्धविशेषादिति । यद्येवं पञ्चीकरणवशात् स्वाश्रयद्रव्यसंवलितेऽप्याकाशे स्वाश्रयसंवलनलक्षणसम्बन्धविशेषात् चाक्षुषत्वयोग्यतां किमिति नापादयेत् । ननु वायुरपि पञ्चीकरणवशात् रूपवद्द्रव्यसंवलित एवेति स्यात्तस्यापि चाक्षुषप्रत्ययगोचरता । नैवम् । सत्यपि रूपिद्रव्यसंवलने नोद्भूतरूपवद्द्रव्यसंवलनमिति व्यवस्थापनात् । वस्तुतस्तु-रूपि वा स्यादरूपि वा, यथोपलम्भमर्थानां तत्र तत्रोपलम्भे योग्यता, तत्तदिन्द्रियस्य च तत्तदर्थग्रहणे शक्तिः स्वीकार्या । अत एव हि कालस्य षडिन्द्रियवेद्यता । इदानीमिहायं शब्दः, इदानीमिदमुष्णम्, इदानीमिदं रक्तं, इदानीमिदं मधुरम्, इदानीमिदं

सुरभि, इदानीमहमस्मि सुखी, इत्येवमुपलम्भो क्षमाधितो लोके प्रवर्तते। तथैवायं पतत्र इह पततीति पतत्रपतनाधारतयाऽऽकाश-स्योपलम्भात् आकाशस्यापि चाक्षुषयोग्यता निराबाधैवेति।

य पुनराकाशस्य नित्यत्ववाद काणादाना, स च श्रुतिविरुद्ध इति दूरत परिहार्य । श्रूयते हि 'आत्मन आकाश सम्भूत' इति। श्रोत्राप्यायकश्चायमिति।

## वायुविवेचनम्।

आकाशात्स्पर्शतन्मात्र ततो वायु । त्वगिन्द्रियाप्यायकश्चायम्। तदाप्यायकता च तेन सह वाय्वशाना सहावविशेषभावापत्त्या भवति।

## प्राणनिरूपणम्।

शरीरधारणहेतु शरीरान्तःसचारी प्राणोऽपि वायुविशेष एव। स च प्राणः तरुगुल्मादिस्थावरशरीरेष्वपि वर्तते, भग्नक्षतसरोहणा-दिना तदुन्नयनात्। पञ्चवृत्तिता तु न तत्र। ननु 'एतस्माज्जायते प्राणो मन' सर्वेन्द्रियाणि च। ख वायुर्ज्योतिराप पृथिवी विश्वस्य धारिणी' इति प्राणस्य वायोश्च पृथगुत्पत्ति श्रूयते, तत् कथ वायोरनन्यः प्राण ? । उच्यते। अनन्य एवायम्, वायुत्वावस्थाया अप्रच्युतेः। अत एव न तत्त्वान्तरम्। पर वायुरेव घनीभावेन करकात्मता जलमिव कमपि विशेष प्राप्य शरीरधारणलक्षणकार्या-धायको भवति। श्रूयते च–'यावदस्मिन् शरीरे प्राणो वसति तावदायु' इति। सृष्टौ वायुना सह परिगणन विशेषमभिप्रे-त्यैव। मनस इन्द्रियत्वेऽपि चक्षुरादिभ्यो विशेषमभिप्रेत्यैव यथा 'मन' सर्वेन्द्रियाणि च' इति निर्देश । तथा चोक्तम्–'न प्राणो वायुमात्रं सहपरिपठनाच्च क्रिया द्रव्यतोकेस्तेजोवद्वा

न तत्त्वान्तरमगणनतो वायुतानुज्झनाच्च । तस्माद्वातो 'विशेषं घनजलकरकन्यायतः प्राप्य कश्चिद्देहान्तर्दाशविध्यं भजति बहुविधोपक्रियो वृत्तिभेदैः ॥' इति ।

ननु प्राण इन्द्रियेष्वन्यतमः, तेष्वेष श्रेष्ठः । तथा हि छान्दोग्ये 'अथ ह प्राणा अहं श्रेयसि व्यूदिरे अहं श्रेयानहं श्रेयानिति' इत्यादिना विवादः प्राणानां समभूदित्याख्यायिका श्रूयते । विवदमानेष्वन्यतमोऽयं प्राणः । प्राणशब्देनाविशेषेणेन्द्रियाणि च निर्दिश्यन्ते । 'तान् होवाच यस्मिन् उत्क्रान्ते शरीरं पापिष्ठतरमिव भवति स वः श्रेष्ठः' तत्र 'वः' इति निर्धारणे षष्ठी च चक्षुरादीनां प्राणस्य चैकजातीयतां गमयति । मैवम् । न हि सहपठनमात्रात्साजात्यम् । न च शब्दैक्यादेकजात्यम् । एक एव शब्दो मुख्यः क्वचित्क्वचिद्भाक्तश्च प्रवर्तेत । अत्र चेन्द्रियेषु प्राणशब्दो भाक्तः प्रवर्तते । प्राणाधीनसत्ताकत्वाच्च प्राणशब्देन इन्द्रियाणां निर्देशः । तथा च श्रूयते तत्रैव—'न ह वै वाचो न चक्षूंषि न श्रोत्राणि न मनांसीत्याचक्षते प्राणो ह्येवैतानि सर्वाणि भवति' इति । आगमज्ञा वागादीनीन्द्रियाणि वागादिशब्दैर्न व्यवहरन्ति प्रायः, अपि तु प्राणशब्देनैव व्यवहरन्ति, प्राणाधीनसत्ताकानि हि तानि, यदधीना यस्य सत्ता तत्तदित्येव भण्यते इति न्यायात् इति तदर्थः । 'वः' इति निर्धारणे षष्ठी तु विवदमानत्वेन साधर्म्यं गमयति । यदपि क्षेत्रज्ञोपकरणत्वाच्चक्षुरादेरिवेन्द्रियत्वं प्राणस्येति, तदप्यसङ्गतम् । नह्युपकरणं भवत् सर्वमिन्द्रियं भवितुमर्हति । भवति हि शरीरं क्षेत्रज्ञस्य इन्द्रियेभ्योऽप्यत्यन्तमुपकारकम् । प्राणस्येन्द्रियत्वाभावः सूत्रकृतो-

१ योगाद्युपयुक्तशास्त्रवेद्यविशेषवान् कश्चिद्वायुरयमिति व्याख्यातं सर्वार्थसिद्धौ ।

ऽप्यभिमतः 'त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात्' इति सूत्रेण श्रेष्ठप्राणभिन्नानामेवेन्द्रियत्वस्य शसनात् । मुख्यप्राणस्याप्यणुत्वमिन्द्रियाणामिव पुन सूत्रित च 'अणुश्च' इति ।

प्राण एकोऽपि प्राणापानादिवृत्तिभेदात्पञ्चधेति च सूत्रित 'पञ्चवृत्तिर्मनोवद्व्यपदिश्यते' इति । तथा च श्रुति —'प्राणोऽपानो व्यान उदान समान इत्येतत्सर्वं प्राण एव' इति । स एव नाग कूर्मकृकरदेवदत्तधनञ्जयवृत्तिभेदैः सह दशधा चोच्यते—'प्राणोऽपान॰ समानश्च उदानो व्यान एव च । नाग कूर्मश्च कृकरो देवदत्तो धनञ्जय ॥ चरन्ति दश नाडीषु दश प्राणादिवायव' । इति । निरूपित चैतत्सर्वं सत्सङ्गिजीवने—'एक प्राणो वृत्तिभेदात्प्रोक्त॰ पञ्चविध किल । प्राणोऽपानो व्यानोदानौ समान इति नामभि ॥ नाग कूर्मश्च कृकलो देवदत्तो धनञ्जय॰ । इत्यन्ये तस्य भेदास्तु सन्त्येतेष्वेव सङ्गता । हृदि प्राणो गुदेऽपानः समानो नाभिमण्डले । उदान कण्ठदेशस्थो व्यान सर्वशरीरग ॥ प्राण प्रागतिमान् ज्ञेयोऽपानोऽधोगतिरुच्यते । भुक्तपीतान्नतोयादे॰ समानः साम्यकृन्मत॰ ॥ उदान उत्क्रमणकृद्व्यान॰ सर्वाङ्गचेष्टन । नाग उद्गारकृत्कूर्म उन्मीलनकर॰ स्मृत॰ ॥ कृकलः क्षुत्करो देव दत्तो जृम्भणकृत्तथा । धनञ्जय पोषणकृत्प्रोक्त॰ साङ्ख्यविशारदै ॥ देवदत्तो मत॰ प्राणेऽपाने तु कृकल॰ स्मृत । धनञ्जय समाने च कूर्मो व्याने स्थितः खलु ॥ उदानेऽन्तर्हितो नाग इति पञ्चविधो ह्ययु॰ ।' इति । अल प्राणमीमांसया ।

## वायोः प्रत्यक्षत्वम्।

वायुश्च प्रत्यक्षः। त्वगिन्द्रियपवनसंयोगे सति वातो वातीति सपदि भवति हि धीरवहितस्य पुरुषस्य। सा च त्वाचं प्रत्यक्षमेव। न चेदमनुमानम्, उन्मीलितमात्रे नयने गौरयं गच्छतीति धीरिव स्पृष्टमात्रे वाते वातोऽयं वातीति धीर्जायमाना हि तत्समानयोगक्षेमा। न च घ्राणेन गन्धमात्रमिव त्वचा स्पर्शमात्रं वायोर्गृह्यते न वायुरिति सुवचम्। रूपरहितत्वाद्वायुरप्रत्यक्ष इति चेत् रूपरहितस्यात्मनः कथं प्रत्यक्षता!। ननु मानसं तदिति चेत् इदं तु त्वाचमितीन्द्रियभेदः किं न गण्यते?। ननु बाह्यमिदमिति चेत्। सत्यम्। चाक्षुषे चेद्रूपापेक्षा त्वाचे सा का?। अन्येन्द्रियग्राह्यविशेषगुणशून्यता वा इन्द्रियान्तरेण जायमाने प्रत्यक्षे कथं प्रतिरोधिका। अन्यथा रसशून्यतया तेजसोऽप्यचाक्षुषता प्रसज्येत। किञ्च—गाढान्धकारमध्यमध्यासीनस्य भवति त्वचा द्रव्यग्रहणम्। ननु तद्रूपीति चेत् अगृह्यमाणेन रूपेण कस्तत्रोपकारः। ननु वायुश्चेत्त्वचा गृह्येत तर्हि अयमेको घटः अयमेको घटः, इमौ द्वौ, अयं दीर्घः, अयं ह्रस्वः इति घटादिगतसङ्ख्यापरिमाणवत् अयमेको वायुः अयमेकः, इमौ द्वौ इति तद्गतसङ्ख्यापरिमाणादिकमपि त्वचा गृह्येत। हन्त भोः! आत्मन्यहमिति मनसा गृह्यमाणे तद्गतं परिमाणादिकमपि तेन कुतो न गृह्यते?। नन्वात्मतद्विशेषगुणभूतसुखदुःखादिग्रहण एव मनसः शक्तिः, न तु शास्त्रैकगम्ये गुणे इति चेत् तथैव त्वचो वायुगतसङ्ख्यादिग्रहणे न शक्तिरित्यास्थीयताम्। यथोपलम्भं हि शक्तिरिन्द्रियाणां व्यवस्थाप्येत्युक्तं प्रागेव। वस्तुतस्तु त्वचा वायुरिव तद्गतसङ्ख्यापरिमाणादिकमपि गृह्यत एव। तदुक्तं तत्त्वमुक्ताकलापे—'**सङ्ख्याद्याः**

स्पर्शना स्युस्तदविकरणका स्पर्शने गन्धवाहे तेषा द्रव्योपलम्भप्रतिनियतनिजाध्यक्षयोग्यत्वतश्चेत् । इष्ट त्वशे न चात्मप्रभृतिषु सह ते तै प्रसिद्ध्यन्ति सर्वे तद्ग्राह्ये व्याप्तिरिष्टा यदि सततगतेरप्यसावस्तु बाह्ये ॥ इति ।

## तेजोनिरूपणम् ।

वायो रूपत मात्र तवस्तेज । 'वायोरग्नि:' इति श्रुतावग्निशब्दस्तेजोमात्रपर । अग्निस्तु व्यष्टिरूपो समुपलभ्यमानस्तृणकाष्ठादीन्धन । उष्णस्पर्शवत्त्व तेजसो लक्षणम् । तच्च वागिन्द्रियस्य चक्षुरिन्द्रियस्य चोपकारकम् । तथा च श्रुति –'तेजोमयी वाक्, आदित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशत्' इति । भवति च पाके निमित्तम् । पच्यते ह्यममग्न्यात्मना तेन, वैश्वानरात्मना च शरीरान्त । तच्च भौमादिव्योदर्याकरजभेदाच्चतुर्धा । तत्र भौम–तृणादिपार्थिवमात्रेन्धनम् । दिव्य–अबिन्धन विद्युदादि । औदर्य–पार्थिवजलोभयेन्धन जाठर वैश्वानराख्य प्राणवायो सयोगादशितपीतादिपाकहेतु 'अह वैश्वानरो भूत्वा प्राणिना देहमाश्रित । प्राणापानसमायुक्त पचाम्यन्न चतुर्विधम् ॥' इति स्मर्यमाणम् । तथा चोक्त–'प्राणापानाख्यभस्त्रारभसविसृमर' प्राप्य वैश्वानराख्या मध्ये देह हुताशो वसति जलनिधावौर्ववत्सर्वभक्ष ।' इति । आकरज–सुवर्णादि ।

## प्रभाप्रकारवर्णनम् ।

प्रभाप्रभावद्रूपेण सामान्यतो द्विविधमपि भवति । दीपादेः प्रभा हि परितः प्रसरणस्वभावा प्रभावतो दीपादेरपृथक्सिद्धधर्मभूता । धर्मता चास्यास्तत्सत्ताधीनसत्ताकत्वात् । यवनिकाद्यावरणमस्या-

प्रसरणप्रतिरोधकम् । प्रसरणतारतम्यं च प्रभासु प्रभावतः प्रकर्षापकर्षनिबन्धनतत्तद्वेगशक्तिभेदकृतम् । जनिनाशौ चास्याः प्रभावता सहैव । प्रभाप्रभावतोस्तेजस्त्वाविशेषेऽपि अभिभवानभिभवतारतम्यानुसारेण प्रभायां अग्रे( विदूरे ) उष्णस्पर्शानुपलम्भः मूले तु (प्रभावतो निकटे) उष्णस्पर्शोपलम्भः । दीपशिखायाः समीपे प्रभाया औष्ण्यप्रकाशाधिक्यं दूरे च तन्मान्द्यं यथोपलभ्यं व्यवस्थाप्यम् ।

दीपज्वाला च सायं प्रज्वालिता आप्रातरनुवर्तमाना एकैवेति पामरैर्गृह्यते । वस्तुतः स्नेहवर्तिसंयोगादिलक्षणकारणक्रमोपनिपातादाशुतरविनाशोत्पादशालिनी भिन्नभिन्नाऽपि विनाशोत्पादयोरविलम्बेन प्रवहन्ती सलिलधारेवाऽगृहीतभेदा एकेति प्रत्यभिज्ञायते । सा तु प्रत्यभिज्ञा भ्रान्तिरेव । उक्तं च न्यायसिद्धाञ्जने— "तत्र हुतवहस्य ज्वालात्मकस्य दाह्यनाशे नाशदर्शनात् पुष्कलकारणक्रमोपनिपातादेकदाऽनेकदीपादर्शनाच्चाशुतरविनाशित्वरूपं क्षणिकत्वं सिद्धम् । प्रत्यभिज्ञा तु निष्क्रान्तप्रविष्टवदसम्भवात् निर्वापितारोपितदीपादिष्विवान्यथासिद्धा । प्रत्यक्षत्वं च ज्वालाभेदस्योक्तं तत्त्वरत्नाकरे—'निपुणनिरीक्षणे च जलवेणिकावत् ज्वालासञ्चरणं दृश्यते' इति" ।

अत्र केचिदाहुः—सत्यं नाम आशुतरविनाशशालिनी दीपज्वाला, परं तदवयवा एव विशीर्णा निपतिताः प्रभेति व्यपदिश्यन्ते नातिरिक्तो धर्म इति । तान् पृच्छामः—ननु भोः! दीपः किं पिण्डीभावस्वभावः उत विशरणस्वभावः ?। आद्ये विशरणं नोपपद्येत । द्वितीये पिण्डीभावो नोपपद्येत । अथ नैसर्गिकः पिण्डीभावः, औपाधिकं तु

विशरणमिति चेत् ऊर्ध्वगतिशीलस्य तेजसो विष्वग्विशरण कथ घटेत ? । ननूपाधित एव । उपाधिस्तादृश कोऽपि नोपलभ्यते । वाय्वादिमूर्तद्रव्याभिघातेन तूपाधिना भाव्यम् । अनुपलभ्यमानस्यापि कल्पन स्वोत्प्रेक्षितस्य सरक्षणाय पुनरन्यस्योत्प्रेक्षणमात्रम् । नियमेन विशरणकल्पन, तन्निर्वाहाय नियमेनोपाधिकल्पन च हि साहसम् । ननु निसर्गोऽय ज्वालाया किञ्चिदूर्ध्वं गत्वा परितो विशरणमिति । अस्त्वेवम् । अथापि यन्त्रविशेषतो वेगेन नि सृता अम्बुधारा वेगानुगुणमूर्ध्वं प्रसृता वेगापगमे विशीर्णा निपतिता परित प्रदेश बहुलजलापूर्णं यथा करोति, तथाऽनुक्षण तैलवर्तिसयोगलक्षणकारणक्रमोपनिपातसमुत्था दीपज्वाला विशीर्णा परितो निपतिता परित प्रदेश तेज पुञ्जेन सम्भृत किमिति न कुर्वन्ति ? । ननु विशीर्णा सपदि विनश्यन्ति, पुनरपराया समुत्पन्नाया ज्वालाया विशीर्णै रवयवैः पूर्ववत् स प्रदेश आपूर्यते, अतो न तेज पुञ्जाधिक्यम् । अस्त्वेव कल्पना, रत्नस्य स्थिरस्य प्रभाया परित प्रसरन्त्या कामसुपपत्तिं पश्यसि ? । तदवयवा विशीर्णास्तत्प्रभा चेत् कालेन रत्नमपचीयेत, नश्येत चान्तत । ननु रत्नमेव न तेज , तत्रान्तस्तदवलम्बन तेजोऽस्ति, तस्य तेजसोऽवयवा विशीर्णा प्रसृता प्रभेत्युच्यते । हन्त तर्हि आश्रयीभूतस्य तेजोद्रव्यस्यापि रत्नपार्थिवभागस्येव स्थिरत्वेन तदवयवानामनुक्षण ततो नि सृत्य परितः पतनात्तेजसोऽवयविनोऽपचय कालेन क्षयश्च स्यादेव । तस्यापि दीपज्वालाया इव आशुतरविनाशोत्पादकल्पना तु केवल साहसम् । नहि दीपज्वालाया तैलवर्तिसयोगादिलक्षणामिवानुक्षणमुद्भवन्तीं कश्चित् कारणधारा कामपि तत्र पश्यामः । तथा चोक्त तत्त्व-

मुक्ताकलापे—'धर्मों भाति प्रभैका बहलविरलताद्यत्र दृष्टानुसारात् सा दीपांशा विशीर्णा इति यदि बहुधा कल्पनागौरवं स्यात् ।' इति ।

ननु प्रभायाः प्रभावदपृथक्सिद्धत्वमनुपपन्नम्, । ग्रीष्मे हि अस्तंगतेऽपि भास्वति रात्रावौष्ण्यमुपलभ्यते, तदवश्यं भास्वतः पृथग्भूता प्रभाऽभ्युपगन्तव्या। मैवम् । सत्यमुपलभ्यते नामौष्ण्यम्, तदाश्रयद्रव्यं तु न प्रभा, किन्तु विशीर्णा अन्ये तेजसोऽणवः । ननु के ते ? ग्रीष्मे रविकिरणैरुपात्तमुक्ताः । तथा चोक्तं श्रुतप्रकाशिकायाम्—'आतपतमेष्वपि न किरणविशरणादवयवसङ्क्रमः । तुहिनकणानामिव रविकिरणोपात्तमुक्तानामभ्यवयवानां सङ्क्रमणादौष्ण्योपलम्भोपपत्तेः । न चात्र कल्पकमन्वेष्टव्यम, नापि कल्पनागौरवं प्रसजति, आगमसिद्धत्वादस्यार्थस्य । तथाहि मात्स्ये पुराणे कथ्यते—'वसन्ते ग्रीष्मके रश्मिशतैः सन्तपति त्रिभिः । शरद्यपि च वर्षासु चतुर्भिः सम्प्रवर्षति ॥ हेमन्ते शिशिरे चैव हिममुत्सृजति त्रिभिः ।' इति । यथा वर्षासु हेमन्ते च रविकिरणमुक्ताः सलिलकणास्तुहिनकणाश्च न विशीर्णकिरणावयवाः किन्तु किरणोपात्तमुक्ता आप्यावयवा एव, एवं ग्रीष्मे रविकिरणजन्यं सन्तापनं न तद्विशीर्णावयवकार्यम्, किन्तु तदुपात्तमुक्ताभ्यवयवकार्यमिति प्रतीयते इति' इति ।

## जलनिरूपणम् ।

तेजसो रसतन्मात्रम्, तस्मादापः । अपां शीतस्पर्शवत्त्वं, गन्धशून्यत्वे सति रसवत्त्वं, अपाकजशुक्लरूपवत्त्वं इत्यादि लक्षणं बोध्यम् । अस्ति वाय्वादौ स्पर्शः स न शीतः, अस्ति रसः पृथिव्यां

न सा निर्गन्धा, अस्ति शुक्लं रूपं पृथिव्या वस्तु पाकजम्। कृष्णरूपमेव तु नैसर्गिकं पृथिव्याः। 'यत्कृष्णं तदन्नस्य' इति श्रुतेः। शुक्लादिरूपं तु पाकज एव। अपां प्राणाप्यायकत्वम्, 'आपोमयः प्राणः' इति श्रुतेः। रसनाप्यायकत्वं च तालव्यन्तर्गतजलत इति लोकतो दृष्टम्।

## पृथिवीवर्णनम्।

अद्भ्यो गन्धतन्मात्रं, तस्मात्पृथिवी। गन्धवत्त्वं तल्लक्षणम्। ननु गन्धतन्मात्रेऽतिव्याप्तिः। उद्भूतगन्धवत्त्वे तात्पर्यान्नातिव्याप्तिः। ननु पाषाणे गन्धो नोद्भूत इत्यव्याप्तिः। उद्भूतगन्धवज्जातीयत्वविवक्षया समन्वयान्न क्षतिः। रूपवत्त्वे सत्यनुष्णाशीतस्पर्शवत्त्वं इत्याद्यपि तल्लक्षणम्। यद्यपि रूपं जलतेजसोरपि, तथापि न तयोरनुष्णाशीतः स्पर्शः। वायावस्त्यनुष्णाशीतस्पर्शः, न तत्र रूपम्। इति।

## शब्दादिविषयपञ्चकम्।

अथ महाभूतगुणाः शब्दादयो विविच्यन्ते—पूर्वपूर्वतत्त्वतस्तत्तत्त्वस्य विशेषकत्वादेते विशेषा इति कथ्यन्ते। तत्र अस्मदादिश्रोत्रमात्रग्राह्यविजातीयव्यावृत्तोऽद्रव्यविशेषः शब्दः। अप्राकृतशब्दस्यास्मदादिश्रोत्रग्राह्यत्वाभावादव्याप्तिवारणाय 'विजातीयव्यावृत्ते'ति। अप्राकृतश्रोत्रादे'र्नयनश्रवणो दृशा शृणोती'त्युक्तप्रकारेण विषयनियमाभावादस्मदादीति। कालस्य षडिन्द्रियवेद्यत्वपक्षे तद्व्युदासाय अद्रव्येति। स च द्विविधो ध्वन्यात्मको वर्णात्मकश्चेति। द्विविधोऽपि स वानक्रमेण श्रोत्रप्रत्यासन्नः श्रोत्रग्राह्य इत्येकः पक्षः। श्रोत्रस्यैव विषयदेशे वृत्तिद्वारा सम्बन्धाच्छब्दग्रहण-

मिति चापरः। शब्दश्चाकाशादिभूतपञ्चकधर्मः, शङ्खो नदति समुद्रो गर्जतीत्यादिव्यवहारादित्येके। तत्तदवच्छिन्नाकाशगत एवाभिघातादिना जन्यो व्यङ्ग्य एव वा इति चापरे। तत्र वर्णात्मकस्य शब्दस्य कोष्ठस्य वायोः प्रयत्नप्रेरितस्य मनुष्यादितात्वाद्यभिघातोऽभिव्यञ्जकः। वर्णधर्माश्च अत्वकत्वखत्वादयः पञ्चाशत्। अचः षोडश अको ह्रस्वदीर्घयोरेचां चतुर्णां अनुस्वारविसर्गयोश्च मेलनेन। यद्यपि ऌ न संस्कृते किन्तु प्राकृते द्रष्टव्यम्। स्पर्शाः पञ्चविंशतिः। अन्तःस्थाश्चत्वारः। ऊष्माणश्चत्वारः। क्ष एकः। एवमेव मातृकाध्याने वर्णितम्। इति। आकाशगताश्च वर्णा इमे सहैवाकाशेनोत्पत्तिविनाशवन्त आकल्पस्थायिनः। तारत्वमन्दत्वादयस्तु व्यञ्जकवायुधर्मा एव तत्र तत्रारोप्यन्त इति चैकः पक्षः। अस्मिन् पक्षे 'सोऽयं ककार' इत्यादि प्रत्यभिज्ञायाः सारस्यं बोध्यम्। तत्तत्स्थानाभिघातेन जातास्तत्तद्वर्णास्तारत्वादिधर्मवन्तः कोष्ठस्य वायोर्धर्मभूता इति चापरः। यथा स्पर्शादौ मार्दवकाठिन्यादि, तथा शब्दस्यैव मन्दत्वतीव्रत्वादि सम्भवेदित्याशयः। यथायोग्यमस्तु नाम।

ध्वनीनां वायुधर्मत्वं वर्णात्मकानां तु शब्दानां नित्यत्वं द्रव्यत्वं च वदन्ति कौमारिलाः। तदयुक्तम्। प्रलये लयश्रवणात्। द्रव्यधर्मतयैव श्रुतिस्मृतिषु प्रतिपादनाच्च। यच्च साक्षात्सम्बन्धेनेन्द्रियग्राह्यत्वाद्द्रव्यत्वं घटादेरिवानुमीयते। तदनुपपन्नम्। श्रोत्रसमवायो हि साक्षात्सम्बन्धः। ततस्तद्धर्मत्वमेव सिद्ध्येदिति स्वनिष्टद्रव्यत्वसाधनाय विपरीतपर्यवसायित्वात्। द्रव्यत्वे सिद्धे

साक्षात्सम्बन्धेन ग्रहणसिद्धि , साक्षात्सम्बन्धेन ग्रहणसिद्धौ च द्रव्यत्वसिद्धिरित्यन्योन्याश्रयश्च । किञ्च सिद्धान्ते श्रोत्रस्य वैकारिकतया तेन साक्षात्सम्बन्ध समवायोऽपि दुर्घट एव नभोधर्मस्य शब्दस्य । ध्वनेरिव समानेन्द्रियग्राह्यत्वसमानकण्ठवाल्वादिव्यापार जन्यत्वाभ्यां वर्णानामपि जन्यत्वमद्रव्यत्व तारत्वादिधर्मवत्त्व चैव तु युक्तमिति । तथा चोक्त तत्त्वमुक्ताकलापे—"शब्दोऽवस्थाविशेष श्रुतिभिरभिहितस्तेन नैष स्वनिष्ठ व्योमादेश्चाविभुत्वात्क्वचिदपि न तु तत्सन्निधिस्तद्विदूरे । साक्षादक्षाप्तिसाक्षात्कृत इति घटवद्द्रव्यमित्यप्यसार साध्यात्प्रागर्थत्वसिद्धेर्नहि परमतवन्नाभस श्रोत्रमत्र ॥ ध्वन्यात्मा वायुभेद श्रुतिविषयतयाऽपाठि तौतातितार्थैस्तद्वद् पञ्चाशदेते समकरणतया वर्णिता किन्न वर्णा । तैव्रयादिर्वर्णधर्मो नियत इति यथादर्शन स्थापनीय स्पर्शादौ चैवमिष्ट तदिह न सुलभा द्रव्यता नित्यता च ॥" इति । आकाशादिधर्म शब्दस्तत्पूर्वंवनेषु तत्त्वेषु नैवास्ति । नित्यविभूतौ तु अप्राकृतानि पञ्चभूतानि पञ्चशक्तिशब्दवाच्यानि तद्धर्मोश्च विलक्षणा कल्याणतमा शब्दादय शास्त्रैकसमधिगम्या । यथा गन्धसाम्येऽपि सौरभविशेष कस्तूरीचम्पकादौ दुरपह्नवः । एवं प्राकृतेभ्योऽत्यन्तविलक्षणा एवाप्राकृता अमी प्रतिपत्तव्या यथाप्रमाणम् । उक्त चैतत् तत्त्वमुक्ताकलापे—'कस्तूरीचम्पकादौ समविषयतया सम्मतः सौरभादिस्तद्वच्छब्दादयोऽमी त्रिगुणतदधिकद्रव्यनिष्ठा गुणाः स्यु । निष्कृष्टे शास्त्रदृष्ट्या च कथमपि मिथ सङ्कर शङ्कनीय स्वाच्छन्द्याच्छङ्कमान स्वमिव सुरगुरु किन्न शङ्केत मुग्धम् ॥' इति ।

अथ स्पर्शो वाय्वादिचतुष्टयगुणश्चिन्त्यते । अस्मदादित्वगिन्द्रियग्राह्यविजातीयव्यावृत्तमद्रव्यं स्पर्शः । स त्रिविधः—शीतोष्णानुष्णाशीतभेदात् । शीतो जले उष्णस्तेजसि अनुष्णाशीतः पृथिवीवाय्वोः । भूतान्तरसंसर्गात्तु अन्यत्रान्यस्पर्शावभासः स्वस्पर्शानवभासश्च । यथा पृथिवीवाय्वोरग्निसम्पर्कादौष्ण्योपलम्भे तद्गतस्यानुष्णाशीतस्यानुपलम्भः । अनुष्णाशीतोऽपि स्पर्शविशेष एव न तु शीतोष्णाभावमात्रम् । आकाशादावनुष्णाशीतप्रतीतेरभावात् पृथिवीवाय्वोः स्पर्शवत्त्वस्य शास्त्रसिद्धत्वाच्च । तत्र पाकजः पृथिव्यां, अपाकजस्तु मातरिश्वनि । जलाग्न्योः शीतोष्णावप्यपाकजावेव । मार्दवकाठिन्यादयश्च त्वचा ग्राह्यत्वात्पाकजस्पर्शभेदा एव । करकादौ काठिन्यं तूपष्टम्भकपार्थिवांशगतम् । मृदुः पवन इति च वेगाभावनिमित्तको व्यवहारः । जलाग्निसम्पर्कनिमित्ते च शैत्यौष्ण्ये पृथिव्यामौपाधिके एव न पाकजे, उपाधिनिवृत्तौ निवृत्तेः ।

अथ रूपं तेजोबवनिवृत्ति । अस्मदादिचक्षुरिन्द्रियैकग्राह्यविजातीयव्यावृत्तमद्रव्यं रूपम् । संयोगेऽतिव्याप्तिवारणायैकपदम् । अन्यत्सर्वं पूर्ववत् । तच्च त्रिविधं लोहितशुक्लकृष्णभेदात् । तथा च श्रुतिः—'यदग्ने रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्य' इति । पीतमपि रक्तावान्तरभेद एव निरुक्तश्रुत्यनुरोधात् । कालिन्दीजलादौ नीलाद्युपलब्धिस्तु आश्रयौपाधिक्येव । तत्र तेजसि भास्वरशुक्लम् । अभास्वरं शुक्लं जले । पृथिव्यां तु पाकतो बहुविधं रूपं भवत्यभास्वरम् । अवयवगतानि नानारूपाण्येव च संहतानि चित्रप्रतीतिव्यवहारनिर्वाहकाणि । अतो न चित्रं रूपमतिरिक्तं कल्पनीयम् । अन्यथा चित्ररसादेरपि कल्पनाप्रसङ्गः, चित्रप्रतीतेरविशेषात् ।

अथ रसो जलक्षितिवृत्तिः । अस्मदादिजिह्वाग्राह्यविजातीयव्यावृत्तो रस । स च षड्विध, मधुराम्ललवणतिक्तकटुकषायभेदात् । तत्र जले मधुर एव । रसान्तरप्रतीतिस्त्वाश्रयौपाधिकी । पृथिव्यां तु पाकवशान्नानारससम्भव ।

अथ गन्धः पृथिवीमात्रवृत्ति । अस्मदादिघ्राणग्राह्यविजातीयव्यावृत्तो गन्धः । स द्विविध सुरभिरसुरभिश्चेति । तत्र क्षित्या स्वाभाविको गन्धः सुरभिरेव । असुरभिस्तु पाकज । पाकजा अपि विलक्षणा बहव सुरभिगन्धभेदा उपलब्धिसिद्धाः । पृथिव्यामेव च पाक, न तु जलपवनयो । तत्रौष्ण्यप्रतीते ससर्गत एवोपपत्तेः । अग्निसम्पर्कस्यात्यन्तनिवृत्तावपि ये गुणा अनुवर्तन्ते त एव तु पाकजा । यथा सहकारफलादौ रक्तादय । परमाण्ववयविकल्पनाया विरहेण पीलौ पाको घटे पिठरे इत्यादिवादस्य नावसर । एतावत्तु मन्तव्य—पाके अंशानामशीर्णत्वमेव बहुलम् । क्वचिदवयवविशरणमपि यथोपलम्भमिति । आकाशे नैल्यप्रतीतिस्तु पञ्चीकरणवशादिति । विस्तरस्त्वन्यत्र द्रष्टव्य ।

शब्दादीनां भूतगुणानां भूतानां च कार्यरूपाणि स्वभावरूपाणि च लक्षणान्युक्तानि श्रीभागवते । यथा—शब्दस्य तावत् 'अर्थाश्रयत्व शब्दस्य द्रष्टृलिङ्गत्वमेव च । तन्मात्रत्वं च नभसो लक्षण कवयो विदुः ॥' अर्थाश्रयत्व—अर्थप्रत्यायकत्व श्रोतु । द्रष्टु पुरुषस्य लिङ्गत्व—अनुमापकत्वम्, अन्धकारे कुड्याद्व्यवधाने वा शब्देन हि पुरुषोऽनुमीयते इति । नभसस्तन्मात्रत्व—नभसः सूक्ष्मावस्थाभूतत्व च शब्दस्य स्वभाव इति यावत् । स्पर्शस्य यथा—'मृदुत्व कठिनत्व च शैत्यमुष्णत्वमेव च ।

एतत्स्पर्शस्य स्पर्शत्वं तन्मात्रत्वं नभस्वतः ॥' मृदुत्वादयः वायोः सूक्ष्मावस्थाभूतत्वं च स्पर्शस्य स्वभाव इति यावत्। रूपस्य यथा—'द्रव्याकृतित्वं गुणता व्यक्तिसंस्थानमेव च। तेजस्त्वं तेजसः साध्वि रूपमात्रस्य वृत्तयः ॥' द्रव्याकृतित्वं—द्रव्योपलम्भकारणत्वम्, गुणता—नियं द्रव्याश्रितत्वम, व्यक्तिसंस्थानं—व्यक्तेः व्यक्त्यन्तरापेक्षया व्यावर्तकत्वम्, तेजसः सूक्ष्मावस्थात्वं च रूपस्य स्वभाव इति यावत्। रसस्य यथा—'कषायो मधुरस्तिक्तः कट्वम्ल इति नैकधा। भौतिकानां विकारेण रस एको विभिद्यते ॥' भौतिकानां सांसर्गिकद्रव्याणां विकारेण मधुरत्वादिनानाधर्मभाक्त्वं रसस्य स्वभाव इति यावत। गन्धस्य यथा—'करम्भपूतिसौरभ्यशान्तोग्राम्लादिभिः पृथक्। द्रव्यावयववैषम्याद्गन्ध एको विभिद्यते ॥' संसर्गिद्रव्यविकारात्करम्भत्वादिनानाधर्मभाक्त्वं गन्धस्य स्वभाव इति यावत्। तत्र करम्भो मिश्रगन्धः, पूतिर्दुर्गन्धः, सौरभ्यं कर्पूरादेः, शान्तगन्धः शतपत्रादेः, उग्रगन्धो लशुनादेः, आम्लगन्धः पर्युषितान्नादेः, इति विवेकः। शब्दादीनां सम्भवत्कार्यस्वभाववर्णनरूपत्वमेषां वचनानां बोध्यम्। अतोऽव्याप्त्यतिव्याप्तिभ्यां केषाञ्चिद्धर्माणां लक्षणत्वासम्भवेऽपि न क्षतिः। भूतेषु आकाशस्य यथा—'भूतानां छिद्रदातृत्वं बहिरन्तरमेव च। प्राणेन्द्रियात्मधिष्ण्यत्वं नभसो वृत्तिलक्षणम् ॥' अवकाशप्रदत्वं भूतानाम्, बाह्याभ्यन्तरव्यवहारविषयत्वम्, नाडीहृदयादिछिद्रद्वारा प्राणेन्द्रियात्मनामाश्रयत्वं चाकाशस्य स्वभाव इति यावत्। अत्रावकाशप्रदानमाकाशस्य कर्म्म। वायोर्यथा—'चालनं व्यूहनं प्राप्तिर्नेतृत्वं

द्रव्यशब्दयो । सर्वेन्द्रियाणामात्मत्व वायो कर्माभिलक्षणम् ॥' वृक्षशाखापर्णतृणादेश्चालनम्, व्यूहन—विभजन सयुक्तानाम्, अाप्ति —वियुक्ताना सयोजनम्, गन्धाश्रयद्रव्यस्य शब्दस्य च तत्तदिन्द्रियसमीपनेतृत्वम्, सर्वेन्द्रियाधारत्व च मुख्यप्राणात्मना, वायो कार्यरूपाणि लक्षणानि लिङ्गानि । एते कार्ये लिङ्गभूते कारणतया वायुर्लिङ्ग्यते—अनुमीयते इति यावत् । तेजसो यथा—'द्योतन पचन पानमदन हिममर्दनम् । तेजसो वृत्तयस्त्वेता शोषण क्षुत्तृडेव च ॥' प्रकाशन घटादेरर्थस्यालोकात्मना, पचन तण्डुलादे, क्षुत्तृडुपजननद्वारा पानमदन च, हिमस्य नाशनम्, शोषण च पर्णजलादीनाम्, तेजसो वृत्तय —कार्याणीति यावत् । जलस्य यथा—'क्लेदन पिण्डन तृप्ति प्राणनाप्यायनौन्दनम् । तापापनोदो भूयस्त्वमम्भसो वृत्तयस्त्विमा ॥' क्लेदन—आर्द्रीकरणम्, पिण्डन चूर्णादे, तृप्तिप्रदत्व—पायसि पीते हि तृष्णा शाम्यतीति, प्राणन—जीवनापादनम्, 'आपोमय प्राण' इति हि श्रुति, आप्यायन—पोषणम्, औन्दन—मृदूकरणम्, घर्मापनयनम्, भूयस्त्व—कूपादावुद्धृतेऽपि जलेऽन्यूनता च जलस्य कार्याणि स्वभावाश्चेति यावत् । पृथिव्या यथा—'भावन ग्रहण स्थान धारण सद्विशेषणम् । सर्वसत्त्वगुणोद्भेद पृथिवीवृत्तिलक्षणम् ॥' भावन—उत्पादन घटादे, धारण—ग्रहणोपलक्षितचतुर्विधभूताधारत्वम्, सता कार्याणा व्रीह्यादीना विशेषणत्व, देशभेदेन तेषा सारासारत्ववर्धनात् । सर्वसत्त्वगुणोद्भेद —तत्तद्देशस्थप्राणिनामाकारविशेषहेतुत्व, यद्वा शब्दादिपञ्चकाश्रयत्व च पृथिव्या लक्षणानि यथायथ कार्यस्वभावरूपाणीति यावत् ।

सत्सङ्गिजीवने चैतेऽन्येऽपि कतिचन विशेषा उपदर्शिताः । (प्र० ४ अ० ६९ श्लो० १९–३५ ) हरिवाक्यसुधासिन्धौ च (तरंग १२ ) इति अलं विषयप्रसङ्गतः ।

निरूपिता नाम महदादिक्रमेण महान्तानां तत्त्वानामुत्पत्तिः । अत्रेदं बोध्यम्—पूर्वपूर्वतत्त्वशरीरकात्परमात्मन एव उत्तरोत्तरतत्त्वोत्पत्तिः । अत एव च अहङ्काराद्युत्पन्नानामपि इन्द्रियमनःप्राणमहाभूतानां साक्षात्परमात्मन उत्पत्तिः श्रूयमाणा घटते—'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च । खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी' इति । अहङ्कारादिशरीरकब्रह्मण इन्द्रियादिनिष्पत्तौ श्रुतेस्तात्पर्यम् । सूत्रितश्चायमर्थो 'विपर्ययेण तु क्रमोऽत उपपद्यते च' इति । 'तत्तेज ऐक्षत' 'ता आप ऐक्षन्त' इतीक्षणश्रवणात्तेजःप्रभृतिशब्दास्तेजःप्रभृतिशरीरकपरमात्मपरा इति च निर्णीतं 'तदभिध्यानादेव तु तल्लिङ्गात्सः' इति सूत्रे । एतेन आकाशादिशब्दानामपि तत्तच्छरीरकब्रह्मपरत्वं सिद्धम्, तेजःप्रभृतिशब्दसमानयोगक्षेमत्वात् । किञ्च नभःप्रभृतीनामपि कालमायागुणांशयुक्तानां भगवद्वीक्षितानामेवानिलादिरूपेण भवनमुक्तं श्रीभागवते—'तामसो भूतसूक्ष्मादिर्यतस्तल्लिङ्गमात्मनः । कालमायांशयोगेन भगवद्वीक्षितं नभः ॥ नभसोऽनुसृतं स्पर्शं विकुर्वन्निर्ममेऽनिलम् । अनिलोऽपि विकुर्वाणो नभसोरुबलान्वितः ॥ ससर्ज रूपतन्मात्रं ज्योतिर्लोकस्य लोचनम् । अनिलेनान्वितं ज्योतिर्विकुर्वत्परवीक्षितम् ॥ आधत्ताम्भो रसमयं कालमायांशयोगतः । ज्योतिषाम्भोऽनुसंसृष्टं विकुर्वद्ब्रह्मवीक्षितम् ॥ महीं गन्धगुणामाधात्कालमायांशयोगतः ।'

इति । अत कालो जीवीय कर्म परमात्मसङ्कल्पश्च तत्त्वात्तत्त्वान्तरनिष्पत्तौ कारणमित्युक्त भवति । तत्र भगवत स्वस्यैव 'बहु स्या प्रजायेय' इति सङ्कल्पस्य श्रुतत्वाच्च पूर्वपूर्वतत्त्वविशिष्टस्योत्तरोत्तरतत्त्वविशिष्टतया बहुभवनमेषितव्यम्। नह्यविकारस्य स्वरूपतो बहुभवन घटेत चिदचिद्विशेषणद्वारमन्तरा । अत कार्यकारणभूतव्यष्टिसमष्टिचिदचिच्छरीरक परमात्मैव कार्यकारणरूपेण वर्तते इति नैगमिक पन्थाः । अ तर्यामिरूपेण पूर्वपूर्वतत्त्वात्मनो भगवतो वीक्षणादुत्तरोत्तरतत्त्वस्य भवनमित्ययमर्थो हरिवाक्यसुधासिन्धौ च (तरंग ४१) वर्णित ।

## तमोनिरूपणम् ।

ननु अन्तर्यामिब्राह्मणे 'यस्तमसि तिष्ठस्तमसोऽन्तरो य तमो न वेद यस्य तम शरीर यस्तमोऽन्तरो यमयत्येष ते आत्माऽन्तर्याम्यमृत ' इति तमो नाम किमपि द्रव्य परमात्मन शरीरतया श्रूयते । न चेद तम आलोकाभावमात्रम्, शरीरत्वानुपपत्ते । अस्य च जडद्रव्येषु परिगणनाऽभ्युपेया । प्रकृत्यादिषु पृथिव्यन्तेषु तत्त्वेषु न पर्यगण्यत । अथ क समावेशोऽस्य ? । उच्यते । इदमेव तु तावत्प्रथम विचारयाम । बहव खलु द्रव्यत्व एव तमसो विप्रतिपद्यन्ते । तत्र काणादा आहुः—तेजोऽभाव एव तमो नातिरिक्त द्रव्यम् । नील तमश्चलतीति प्रतीतिस्तु भ्रान्ति । यदि तत् रूपि स्यात् तर्हि तच्चाक्षुषे आलोकसापेक्षता स्यात् । रूपिद्रव्यचाक्षुषे ह्यालोक सहकारिकारणमिति । अपरे—रूपादर्शनमेव तम । अन्धोऽपि किमप्यपश्यन् तमसावृतमिवात्मानं वेत्ति । अस्तालोके-मलिने भूतलादावारोपित नैल्यमेव तम इति तु परे ।

वैदिकतया विख्याताः प्राभाकराः पुनः आलोकाभावान्नापरं तमः। अभावस्य भावान्तररूपत्वेन व्यपेतालोको देशभाग एव तत्। नीलं तम इति तु भ्रम एव। केचित्त्वाहुः—छायैव तमः, सा चलत्वाचलत्वमहत्त्वाल्पत्वदूरत्वासन्नत्वादिगुणयोगिनी तेजःप्रतिरोधिका। यथा यथा इयं सञ्चरति तथा तथा आलोक एकतः प्रतिरुध्यते अपरतः प्रतिमुच्यते च। (यतो निःसरति तत्र विमोक्षः, यं देशं व्याप्नोति तत्र प्रतिरोधः) महत्त्वं चास्याः सौरतेजसः सौरमण्डलस्यापि प्रतिरोधात्। अल्पता चान्यत्र। निरस्तश्चायं पक्षः परैः—तमश्चेच्चाक्षुषं रूपि द्रव्यं तर्हि तेन महता भाव्यम्। अन्यथाऽचाक्षुषत्वप्रसङ्गात्। द्रव्यचाक्षुषे महत्त्वस्यापि कारणत्वात्। महत्त्वं चानेकद्रव्यारब्धत्वप्रयोज्यम्। अनेकद्रव्यारब्धता चावयवसङ्ख्याप्रचयायत्ता। छायायां तु न तामुपलभामहे। यदप्यालोकस्य सञ्चरता तमसा प्रतिरोधविमोक्षाविति, तदप्येतेन निरस्तम्। विपरीता चेयं कल्पना—तमसाऽऽलोकः प्रतिरुध्यते इति। गिरिगुहामध्यवर्तिना पुरुषेण प्रदीपे प्रज्वालिते सपदि विलीयते हि तमः। तमसश्चेत्प्रतिरोधकत्वं स्वभावः, कुतस्तमालोकं न प्रतिरुणद्धि?। यद्यालोकेनाभिभूतं तमस्तदाऽपसृत्य ततो दूरे वर्तते, तदाऽऽलोकमध्ये निवसतः शिरःपाण्यादिपिण्डविशेपलक्षणस्य पुरुषस्य छायात्मना तदवयवसंस्थानसमानसंस्थानेन भूत्वा कुतः कथमागत्य स्थीयते? तद्युक्तम्—अपवारितालोकादेशविशेषान्नातिरिक्तं तमो नाम इति।

भाट्टाः पुनराहुः—नीलं तमश्चलतीत्यबाधितप्रतीतेः, भाववाचिना तमःशब्देनोल्लेखात् विना प्रतियोगिस्मरणं इदमिह तम इति प्रतीतेश्च तमो द्रव्यमेव। न च वाच्यं रूपवत्तया स्पर्शवत्त्वप्रसङ्गः,

रूपवता क्षितिसलिलतेजसा स्पर्शवत्त्वं हि दृष्टमिति । स्पर्शवता तेषां रूपवत्त्वं दृष्टमिति किं वायू रूपवानपि ? । तत् यथोपलम्भं वस्तु व्यवस्थाप्यम् । पटलपिहितलोचनानां निमीलितनयनानां च नीलं तम इति बुद्धिस्तत्तदावरणच्छायाग्रहणरूपा । जात्यन्धस्य तु नैव नीलधीः । तच्च द्रव्यं कणादैः सम्प्रतिपन्नेभ्यो नवभ्यो भिन्नमिति ।

अत्राहुस्तत्त्वविदः—पार्थिवो विकारविशेष एव तमः । ननु विनाऽऽलोकं कथं चक्षुषा गृह्येत ? । चाक्षुषे ह्यालोकः कारणम् । ननु भोस्तेजः कथमालोकनिरपेक्षं चक्षुषा गृह्यते ? । ननु स्वयमेवालोकलक्षणं इति नालोकान्तरापेक्षा । आलोकातिरिक्तस्य चाक्षुषे ह्यालोकसंयोगापेक्षा । हन्त भो 'तमस्त्वेन भवता व्यपदिश्यमानस्य वा कथमालोकनिरपेक्षं चाक्षुषम् ? । न ह्यालोकाभावो हि सः । स चानुपलब्ध्या गृह्यते । न ह्यनुपलब्धिस्तव न प्रमाणान्तरम् । इन्द्रियाणां प्रत्यक्षकरणानां सहकारिण्येव सा । तस्मात् तत्सहकृतं चक्षुरेव तु तत्र मतं ग्राहकम् । सत्यम् । आलोकचाक्षुषे आलोकनैरपेक्ष्यमिव तदभावचाक्षुषेऽपि तदनपेक्षेति चेत् तद्विरोधैकस्वभावस्य द्रव्यस्यापि तमसश्चाक्षुषे न तदपेक्षेति समः समाधिः । नीलं तम इत्यबाधितप्रतीतेर्भ्रान्तित्वकल्पनं पुनस्तव साहसम् । किञ्च तमसोऽन्यस्य पार्थिवविकारस्य चाक्षुषे आलोकसापेक्षत्वदर्शनेन चाक्षुषमात्रे तदपेक्षाकल्पनं न विचारसहम् । यथा स्वेदादिगतशैत्यग्रहे त्वगिन्द्रियस्य वायुसापेक्षत्वेऽपि स्पर्शमात्रग्रहे न तत्सापेक्षता । अतो वस्तुस्वभावो यथोपलम्भं व्यवस्थाप्यतेति ॥ यच्चात्र परेषां प्रयोगः—तमो न द्रव्यं, आलोकाभावे गृह्यमाणत्वात् आलोकाभाववदिति । स च विपक्षे बाधकाभावादप्रयोजकः । किञ्च—आलो-

काभाव एव तम इति वदतो न दृष्टान्तसिद्धिः पक्षानतिरेकात् । अभावस्य भावान्तररूपतां वदत आलोकाभावस्य निरालोकभूतलात्मकतया तस्य द्रव्यत्वेन दृष्टान्ते साध्यवैकल्यं चेति । नीलरूपाश्रयतया च तमसः पार्थिवत्वमेव । सलिले तु शौक्ल्यम्, तेजसि तु भास्वरशुक्ल परीत्या, औतप्रक्रियया तु लोहितं रूपम्, वायुस्तु नीरूप इति । '**यत्कृष्णं तदन्नस्य**' इति च श्रुतिः । न चोद्भूतरूपवद्द्रव्यस्योद्भूतस्पर्शवत्त्वनियमः । इन्द्रनीलालोकादौ व्यभिचारात् । आलोकापसरणाद्यनुविधायिप्रसरणादियोगश्च तमसि यथोपलम्भं व्यवस्थाप्यः । उक्तं च तत्त्वमुक्ताकलापे—'नैल्याद्भौमं तमिस्रं चटुलबहलताद्यन्वयात्तन्न नैल्यं छायावत्पारतन्त्र्यं त्वयस इव मणौ दृष्टिसिद्धात्स्वभावात् । स्पर्शाख्यातिर्न रूपं हरति हरिशिलालोकवत्तत्र चाक्ष्णोर्नालोकोऽर्थ्यः ससिद्धाञ्जननयनदिवाभीतदृष्ट्यादिनीतेः ॥ नालोकाभावमात्रं तिमिरमविरतं नीलमित्येव दृष्टेर्नैल्यं त्वारोपितं चेत्कथमिव न भवेत्क्वापि कस्यापि बाधः । आरोपे चात्र नैल्यं न भवति नियतं भास्वरान्यत्वसाम्यान्नात्रादृष्टं नियन्तृ प्रतिनियतगुणारोपक्लृप्तेर्गुरुत्वात् ॥ ध्वान्तं तेजश्च नासीदिति मुनिभिरुपाख्यायि संवर्तवार्ता भावाभावौ निषेद्धुं तदुभयविधिवद्व्याहतत्वादशक्यम् । अन्तर्यन्तुश्च तेजःसहपठिततमो देह इत्यामनन्ति स्याच्चाभावोऽपि भावान्तरमतिमथने वक्ष्यमाणक्रमेण ॥' इति । यद्यपि मूलप्रकृतेरत्यन्तसूक्ष्मावस्थायां तमःशब्दवाच्यत्वं भवति । अत एव श्रूयते—'यस्याव्यक्तं शरीरम्' 'यस्याक्षरं शरीरम्' 'यस्य तमः शरीरम्' इति । अथापि विकार्यान्तर्गतं

तमो नीलरूपवदपि मन्तव्यं पार्थिवविकाररूपं तेजोविरोधि किञ्चिद्द्रव्यम्। यस्य तेजसा सहाविशिष्टं परमात्मनः शरीरत्वमुच्यते विकारकोटिश्चदितस्य 'यस्य तेजः शरीरम्' 'यस्य तमः शरीरम्' इति। उद्भूतस्पर्शरहितत्वादेव गतिप्रतिरोधकत्वाभावोऽप्युपपद्यतेऽस्य। अस्तु वाऽऽकाशावस्थाविशेषरूपं तमो गत्यप्रतिरोधकत्वात्। पञ्चीकरणप्रक्रियया चास्य नीलरूपवत्त्वं घटेत। विस्तरस्तु श्रुतप्रकाशिकादिषु द्रष्टव्यः। अवसितस्तमोवादः।

## पञ्चीकरणप्रक्रिया।

पृथक्स्थितानां च भूतानां नाण्डोत्पादनसामर्थ्यम्, किन्तु यथा जलसिकताचूर्णकमृत्तिकानां न पृथक्स्थितानां भित्त्याद्यारम्भकत्वं, किन्तु परस्परं मर्दनादिना संयोगविशेषं प्राप्तानामेव, एवं परमात्मनः सङ्कल्पविशेषेण परस्परसंमिश्रणलक्षणमैक्यपर्यायं संयोगविशेषं प्राप्तानामेव। इदमेव भूतानां परस्परं संमेलनं पञ्चीकरणमित्युच्यते। छान्दोग्ये 'तासां त्रिवृतं त्रिवृतमेकैकं करवाणि' इति त्रिवृत्करणसङ्कल्पः श्रूयते। तत्र भूतत्रयसृष्टेरेवोक्तत्वात् त्रिवृत्करणमुक्तम्। यथा तेजःप्रभृतिसृष्टिराकाशादिसृष्टेरुपलक्षणार्था, एवं त्रिवृत्करणमपि पञ्चीकरणादेरुपलक्षणं वेदितव्यम्। एकैकभूतस्य भूतान्तरभागैः समागत्यापादनं पञ्चीकरणम्। पञ्चीकरणं यथा—एकैकभूतं द्विधाकृत्य तत्रैकमर्धं तथैवावस्थाप्य अर्धमन्यच्चतुर्धाकृत्य चतुर्षु भूतान्तरार्धेषु संयोजनम्। तथा च पञ्चीकृतायां पृथिव्यामर्धभागः पृथिव्याः, जलादीनां चाष्टमा भागाश्चत्वारः। एवं जलादिष्वपि। एवं च पृथिव्यादिषु जलादिभागस्य सत्त्वेऽपि तत्तद्भूतभागस्य भूयस्त्वात्पृथिव्यादिव्यवहारः। तथा च सूत्रम्—

'भूयस्त्वात्तु तद्वादस्तद्वादः' इति । 'त्र्यात्मकत्वात्तु भूयस्त्वात्' इति तु त्रिवृत्करणाभिप्रायम् । अण्डान्तर्गताश्च पृथिव्यादयः पञ्चीकृता एव । अण्डावरणभूतास्तु शुद्धा वेदितव्याः । तत्र पञ्चीकरणं 'एवं जातेषु भूतानि प्रत्येकं स्युर्द्विधा ततः । चतुर्धा भिन्नमेकैकमर्धमर्धं तथा स्थितम् ॥ व्योम्नोऽर्धभागाश्चत्वारो वायुतेजःपयोभुवाम् । अर्धानि यानि वायोस्तु व्योमतेजःपयोभुवाम् ॥' इत्यादिपुराणवचनसिद्धम् । सप्तीकरणं तु 'नानावीर्याः पृथग्भूतास्ततस्ते संहतिं विना । नाशक्नुवन् प्रजाः स्रष्टुमसमागम्य कृत्स्नशः ॥ समेत्यान्योन्यसंयोगं परस्परसमाश्रयाः । एकसङ्घातलक्ष्यास्तु सम्प्राप्यैक्यमशेषतः ॥ महदादयो विशेषान्ता ह्यण्डमुत्पादयन्ति ते ॥' इत्यादिपुराणवचनसिद्धम् । सप्तीकरणपक्षे च एकस्मिन् तत्त्वे तत्त्वान्तराणां द्वादश भागाः सङ्गता वेदितव्याः ।

श्रीभागवते च पञ्चानां भूतानां सप्तानां च महदादीनां परस्परसम्मेलनं परमात्मसङ्कल्पकृतमण्डोत्पत्तिप्रयोजकमुक्तम्—'तानि चैकैकशः स्रष्टुमसमर्थानि भौतिकम् । संहत्य दैवयोगेन हैममण्डमथासृजन् ॥ सोऽशयिष्टाब्धिसलिले अण्डकोशो निरात्मकः । साग्रं वै वर्षसाहस्रमन्ववात्सीत्तमीश्वरः ॥ यस्य नाभेरभूत्पद्मं सहस्रार्कोरुदीधिति । सर्वजीवनिकायौको यत्र स्वयमभूत्स्वराट् ॥ सोऽनुप्रविष्टो भगवता यः शेते सलिलाशये । लोकसंस्थां यथापूर्वं निर्ममे संस्थया स्वया ॥' इत्यादौ । अत्र पञ्चीकृतैर्भूतैरारब्धस्याण्डस्य प्रकाशवद्बुलस्याधिष्ठातृचेतनरहितस्योदकेशयत्वप्रतिपादनादण्डोत्पत्तेः प्राग् गर्भोदकसृष्टिरर्थसिद्धा ।

बहिर् तत्रोदकेन व्याप्तेऽण्डे दिव्यानि वर्षाणि सहस्रं यावत् भगवान्नागपर्यङ्के शेते स्म। तस्य च नाभिपद्माच्चतुर्मुखो जीवसमष्टिरूपो जातः। स च सलिलेशयेन भगवताऽनुप्रविष्ट आहितशक्तिको लोकसंस्थानानि यथापूर्वं निरमिमीतेति समुदितोऽर्थः। 'सृष्टिं ततः करिष्यामि त्वामाविश्य प्रजापते' इति पुराणवचनान्तरैकार्थ्याच्च चतुर्मुखस्य व्यष्टिसृष्टौ परमात्मनो द्वारत्वं बोध्यम्। उदकेशयस्येश्वरस्य नारायणत्वं च 'आत्मनोऽयनमन्विच्छन् आपोऽस्राक्षीच्छुचिः शुचीः। तास्ववात्सीत्स्वसृष्टासु सहस्रपरिवत्सरान्॥ तेन नारायणो नाम यदापः पुरुषोद्भवाः॥' इति वचनसिद्धम्। अयं च पुरुषो भगवान् वासुदेव एव। 'द्रव्यं कर्म च कालश्च स्वभावो जीव एव च। यदनुग्रहतः सन्ति न सन्ति यदुपेक्षया॥ एको नानात्वमन्विच्छन् योगतल्पात्समुत्थितः। वीर्यं हिरण्मयं देहं मायया व्यसृजत्त्रिधा॥' इत्यनन्तरश्लोकाभ्यां कालादिसत्ताहेतुत्वस्य योगशयनादुत्थानस्य आत्मनो बहुभवनसङ्कल्पस्य स्वदेहभूतस्य वीर्यभूतस्य कारणद्रव्यस्य चिदचिदात्मकस्य करणभोक्तृविषयरूपेण त्रिधा विभजनस्य समष्टिपुरुषद्वारकस्य च प्रतिपादनात्।

'एतदण्डं विशेषाख्यं क्रमवृद्धैर्दशोत्तरैः। तोयादिभिः परिवृतं प्रधानेनावृतैर्बहिः॥ यत्र लोकवितानोऽयं रूपं भगवतो हरेः॥' इति वचनानुसाराज्जलतेजोवाय्वाकाशाहङ्कारमहत्प्रधानरूपोत्तरोत्तरदशगुणितावरणसप्तकावृतमिदं ब्रह्माण्डं चतुर्दशलोकात्मकं भगवतः स्थूलं रूपं चेतसो धारणाश्रयः। स्थूले हि रूपे विधृतेऽनन्तरं मनसः सूक्ष्मे रूपे स्थितिः स्थिरा भवेत्।

तदुच्यते—'जितासनो जितश्वासो जितसङ्गो जितेन्द्रियः । स्थूले भगवतो रूपे मनः सन्धारयेद्धिया ॥ विशेषस्तस्य देहोऽयं स्थविष्ठश्च स्थवीयसाम् । यत्रेदं दृश्यते विश्वं भूतं भव्यं भवच्च यत् ॥ अण्डकोशे शरीरेऽस्मिन् सप्तावरण-संयुते । वैराजः पुरुषो योऽसौ भगवान् धारणाश्रयः ॥' इति । अयं च वैराजः पुरुषो विराजोऽनिरुद्धस्यांशभूतो ब्रह्माण्ड-स्याभिमानी तच्छरीरको वैश्वानरसंज्ञितो वैश्वानरविद्योपास्यः । चतुर्मुखोऽप्येतस्यैव धारणयावाप्तसृष्ट्युपयुक्तज्ञानसामर्थ्यो ससर्ज यथापूर्वमित्युच्यते—'एवं पुरा धारणयाऽऽत्मयोनिर्नष्टां स्मृतिं प्रत्यवरुध्य तुष्टात् । तथा ससर्जेदममोघदृष्टिर्यथाऽप्ययात्प्राग् व्यवसायबुद्धिः ॥' इति । अस्य च वैराजपुरुषस्य ब्रह्माण्ड-शरीरत्वमनिरुद्धात्मकत्वं नारायणत्वमीश्वरत्वं च वर्ण्यन्ते, अस्यैव नाभिकमलाच्चतुर्मुखस्योत्पत्तिश्च स्कान्दे वासुदेवमाहात्म्ये—'प्रेरिता वासुदेवेन स्वस्वांशैरैश्वरं वपुः । अजीजनन्विराट्संज्ञं ते चराचरसंश्रयम् ॥ स च वैराजपुरुषः स्वसृष्टास्वप्स्वशेत यत् । तेन नारायण इति प्रोच्यते निगमादिभिः ॥ तन्नाभिपद्मा-द्ब्रह्मासीद्राजसोऽथ हृदम्बुजात् । जज्ञे विष्णुः सत्त्वगुणो ललाटात्तामसो हरः ॥' 'एकार्णवे जले तस्मिन् वैराजपुरुषः स तु । अनिरुद्धात्मकः शेते नागेन्द्रशयने प्रभुः' इति । विराट्-शब्दश्च क्वचिद्ब्रह्माण्डे क्वचिदनिरुद्धे क्वचिच्चतुर्मुखे च प्रयुज्यते । अत एव दक्षादयोऽपि वैराजा उच्यन्ते चतुर्मुखोत्पन्नाः । ब्रह्माण्डा-भिमानी तु वैराजपुरुषो व्यूहांश इति युक्तमभ्युपगन्तुमुपात्तवचन-

---

१ विराट् ब्रह्माण्डम् ।

स्वारस्यानुसारात् । अयमर्थः सत्सङ्गिजीवनेऽपि (प्र ३ अ २९) प्रोक्त । जीवत्वप्रतिपादनं च अस्य कचिज्जीवसमष्टिरूपचतुर्मुखैक्यविवक्षया । ऐक्यं चेदं चतुर्मुखाभिमानित्वनिबन्धनम् । तथा च वैराजैक्यभावनया चतुर्मुखस्य सृष्टिसामर्थ्यमाविरभूदिति प्रत्यपादि वासुदेवमाहात्म्ये—'इत्युक्त्वान्तर्दधे विष्णुर्ब्रह्माप्यैक्यसमाधिना । वैराजेनाथ लोकान् प्राग् लीनान् सर्वान् स्व ऐक्षत ॥' इति ।

ब्रह्माण्डान्तर्गताश्च लोका अस्यैव पादादिप्रदेशभेदतयोपास्यन्ते योगिभिः । तथा चोक्तं भागवते—'पातालमेतस्य हि पादमूलं पठन्ति पार्ष्णिप्रपदे रसातलम् । महातलं विश्वसृजोऽथ गुल्फौ तलातलं वै पुरुषस्य जङ्घे ॥ द्वे जानुनी सुतलं विश्वमूर्तेरूरुद्वयं वितलं चातलं च । महीतलं तज्जघनं महीपते नभस्तलं नाभिसरो गृणन्ति ॥ उरःस्थलं ज्योतिरनीकमस्य ग्रीवामहर्वदनं वै जनोऽस्य । तपो रराटीं विदुरादिपुंसः सत्यं तु शीर्षाणि सहस्रशीर्ष्णः ॥' इति ।

## चतुर्दशलोकवर्णनम् ।

तत्र सप्तोपरितना लोकाः—भूर्भुवः स्वर्महर्जनस्तपः सत्यमिति । भुवोऽधस्ताच्च सप्तातलादयः । एकैकोऽपि दशसाहस्रयोजनोच्छ्रायोऽतलादिर्दैत्यदानवयक्षमहानागादिनिवासस्थानम् । तथा चोक्तं विष्णुपुराणे—'दशसाहस्रमेकैकं पातालं मुनिसत्तम । अतलं वितलं चैव नितलं च गभस्तिमत् ॥ महाख्यं सुतलं चाग्र्यं पातालं चापि सप्तमम् । शुक्लकृष्णारुणाः पीताः शर्कराः शैलकाञ्चनाः ॥ भूमयो यत्र मैत्रेय वरप्रासादमण्डिताः । तेषु दानवदैतेया यक्षाश्च शतशस्तथा ॥ निवसन्ति महानाग-

जातयश्च महामुने ॥' इति । विचित्रभोग्यभोगोपकरणादिसम्पत्तिश्च पातालेषु विस्तरशोऽत्र वर्णिताऽस्ति ।

श्रीभागवते च अतलादयः सप्त लोका भूमेरधस्ताद्भूविवररूपा वर्णिता सविस्तरम्—'अवनेरप्यधस्तात्सप्त भूविवरा एकैकशो योजनायुतान्तरोच्छ्रितायामविस्तारेण तारतम्येन चोपक्लृप्ताः। अतलं वितलं सुतलं रसातलं तलातलं महातलं पाताल'मिति। अतलादिषु प्राधान्येन वर्तमाना अपि निर्दिष्टास्तत्रैव—'अतले मयपुत्रो बलो नामासुरो निवसति। येन ह वा इह सृष्टाः षण्णवतिमायाः काश्चनाद्यापि मायाविनो धारयन्ति। ततोऽधस्ताद्वितले हरो भगवान् हाटकेश्वरः स्वपार्षदभूतगणावृतः प्रजासर्गोपबृंहणाय भवान्यापि स मिथुनीभूयास्ते। ततोऽधस्तात्सुतले पुरुश्रवाः पुण्यश्लोको महाभागवतो विरोचनात्मजो बलिर्भगवता महेन्द्रस्य प्रियं चिकीर्षमाणेन वामनरूपेण पराक्षिप्तलोकत्रयो भगवदनुकम्पयैव पुनः प्रवेशितः इन्द्रादिष्वविद्यमानया सुसमृद्धया श्रियाऽभिजुष्टः स्वधर्मेणाराधयंस्तमेव भगवन्तमपगतसाध्वस आस्तेऽधुनाऽपि। यस्य भगवान् स्वयमखिलजगद्गुरुर्नारायणो द्वारि गदापाणिरवतिष्ठते निजजनानुकम्पितहृदयो येनाङ्गुष्ठेन पदा दशकन्धरो योजनायुतायुतं दिग्विजय उच्चाटितः। ततोऽधस्तात्तलातले मयो नाम दानवेन्द्रस्त्रिपुराधिपतिर्भगवता त्रिपुरारिणा त्रिलोक्याः शं चिकीर्षुणा निर्दग्धपुरस्तत्प्रसादाल्लब्धपदो मायाविनामाचार्यो महादेवेन परिरक्षितो विगतसुदर्शनभयो महीयते। (सुदर्शनभक्तिमता

महादेवेन रक्षितत्वाद्विगतसुदर्शनभयत्व बोध्यम् ) ततोऽधस्ता-न्महातले काद्रवेयाणा नैकशिरसा क्रोधवशाना ( सर्पाणा ) गण । ततोऽधस्ताद्रसातले दैतेया दानवा पणयो नाम निवातकवचा कालकेया हिरण्यपुरवासिन इति विबुधप्रत्य-नीका । ततोऽधस्तात्पाताले नागलोकपतयो वासुकिप्रमुखा महाभोगिनो महासर्पा निवसन्ति । येषामुह वै पञ्चपञ्चसप्त-दशशतसहस्रशीर्ष्णा फणाना विरचिता महामणयो रोचि-ष्णव पातालविवरे तिमिरनिकर स्वतेजसा विधमन्ति ॥' इति । पातालोकसप्तकस्य चाधस्ताच्छेपः सहस्रफणामण्डलमण्डित एकैनैव मूर्ध्ना सर्वांमुर्वीं बिभ्रदास्तेऽनन्तवीर्ये सुरर्ष्यर्चित इति वर्ण्यते विष्णुपुराणे—'पातालानामधश्चास्ते विष्णोर्या तामसी तनु' । शेषाख्या यद्गुणान् वक्तु न शक्ता दैत्यदानवा ॥ योऽनन्त पठ्यते सिद्धैर्देवो देवर्षिपूजित । स सहस्रशिरा व्यक्तस्वस्तिकामलभूषण ॥ स बिभ्रच्छेखरीभूतमशेष क्षिति-मण्डलम् । आस्ते पातालमूलस्थ शेषोऽशेषसुरार्चित ॥ यस्यैषा सकला पृथ्वी फणामणिशिखारुणा । आस्ते कुसुम-मालेव कस्तद्वीर्यं वदिष्यति ॥ यदा विजृम्भतेऽनन्तो मदा-घूर्णितलोचन । तदा चलति भूरेषा साब्धितोया सकानना ॥ तेनेय नागवर्येण शिरसा विधृता मही । बिभर्ति माला लोकाना सदेवासुरमानुषाम् ॥' इति । श्रीभागवते च पाताल लोकानामध रसाया मूलेऽनन्तस्य स्थिति सहस्रशिरसस्तस्यैक-स्मिन्नेव शिरसि क्षितितलस्य कृत्स्नस्यावस्थान च वर्ण्यते—'तस्य मूलदेशे त्रिंशद्योजनसहस्रान्तर आस्ते या वै कला भगव-

तस्तामसी समाख्याता अनन्त इति । यस्येदं क्षितिमण्डलं भगवतोऽनन्तमूर्तेः सहस्रशिरस एकस्मिन्नेव शीर्षणि ध्रियमाणं सिद्धार्थ इव लक्ष्यते ।' इति । ( सिद्धार्थः श्वेतसर्षपः ) शेषस्याधश्च महाकूर्मो गर्तोदकस्य महाजलस्योपर्यास्ते ।

पातालस्याधस्तान्नरका ज्ञेयाः । 'ततश्च नरका विप्र भुवोऽधः सलिलस्य च' इति वचनात् । 'पातालभूमेरधस्तात्तमोगर्तोदकस्य सलिलस्याधो नरका अण्डकटाहस्यान्तराले' इति व्याख्यातम् । ते च पापिनां पापफलानुभवस्थानानि प्राधान्येनाष्टाविंशतिधा भवन्ति । तदुक्तं भागवते—'तामिस्रोऽन्धतामिस्रो रौरवो महारौरवः कुम्भीपाकः कालसूत्रमसिपत्रवनं सूकरमुखमन्धकूपः कृमिभोजनः संदंशस्तप्तोर्मिः वज्रकण्टकशाल्मली वैतरणी पूयोदः प्राणरोधो विशसनं लालाभक्षः सारमेयादनमवीचिरयःपान'मिति । किञ्च 'क्षारकर्दमो रक्षोगणभोजनः शूलप्रोतो दन्दशूको वटनिरोधनः पर्यावर्तनः सूचीमुखमित्यष्टाविंशतिर्नरका विविधयातनाभूमयः' इति । पापवैचित्र्येण च नरकानुभववैचित्र्यं भागवतादिषूक्तं तत एवानुसन्धेयम् ।

अथ भूमण्डलं वर्णयामः समासतः । सप्तद्वीपात्मिका भूस्तावत्सप्तसागरवेष्टिता । तथा चोक्तं विष्णुपुराणे—'जम्बूप्लक्षाह्वयौ द्वीपौ शाल्मलिश्चापरो द्विज । कुशः क्रौञ्चस्तथा शाकः पुष्करश्चैव सप्तमः ॥ एते द्वीपाः समुद्रैस्तु सप्त सप्तभिरावृताः । लवणेक्षुसुरासर्पिर्दधिदुग्धजलैः समम् ॥' इति । तत्र जम्बूद्वीपः सर्वेषामेषां मध्यवर्ती । तस्य च मध्यवर्ती मेरुः कनकपर्वतः । लक्षयोजनप्रमाणश्चायम् । तत्र षोडशसाहस्रं योजनानि यावद्भूमौ

प्रविष्टश्चतुरशीतिसाहस्रोच्छ्रायश्च । मेरोरुपरि ब्रह्मणो दिक्पालकानां च पुर्यो वर्णिता —'चतुर्दश सहस्राणि योजनानां महापुरी । मेरोरुपरि मैत्रेय ब्रह्मणः प्रथिता दिवि ॥ तस्याः समन्ततश्चाष्टौ दिशासु विदिशासु च । इन्द्रादिलोकपालानां प्रख्याता प्रवराः पुरः ॥' इति । मेरोर्दक्षिणतो हिमवान् हेमकूटो निषधश्च वर्षपर्वताः । नील श्वेत शृङ्गीति त्रयस्तूत्तरतः । तमभितो नव च वर्षाणि । यथा—'प्रथमं भारतं वर्षं ततः किंपुरुषं स्मृतम् । हरिवर्षं तथैवान्यन्मेरोर्दक्षिणतो द्विज ॥ रम्यकं चोत्तरं वर्षं तस्यैवानु हिरण्मयम् । उत्तराः कुरवश्चैव यथा वै भारतं तथा ॥ नवसाहस्रमेकैकमेतेषां द्विजसत्तम । इलावृतं च तन्मध्ये सौवर्णो मेरुरुच्छ्रितः ॥ मेरोश्चतुर्दिशं तत्तु नवसाहस्रविस्तृतम् । भद्राश्वं पूर्वतो मेरोः केतुमालं च पश्चिमे ॥ वर्षे द्वे तु मुनिश्रेष्ठ तयोर्मध्यमिलावृतम् ॥' इति ।

स्वायम्भुवमनोरपत्यं प्रियव्रतः सप्तद्वीपसागरां महीमखण्डामपालयत् । तस्य पुत्रेषु दशसु त्रयो वीतरागा महावीरसवनकपयः । अन्ये सप्ताग्नीध्रेध्मजिह्वयज्ञबाहुहिरण्यरेतोघृतपृष्ठमेधातिथिवीतिहोत्राख्येन सप्तद्वीपाधिपतयः कृताः । तत्र जम्बूद्वीपस्याधिपतिरग्नीध्रो नवभ्य आत्मजेभ्यो वर्षनामभ्यो जम्बूद्वीपस्य नव वर्षाणि विभज्यादात् । तत्र नाभेर्वंशोत्पन्नस्य भरतस्य नाम्ना भारतं वर्षं प्रसिद्धम् । पूर्वमस्याजनाभमित्यासीन्नाम । तत्र भारतं वर्षं नवयोजनसाहस्रविस्तारशालि । अत्र च महेन्द्रादयः सप्त कुलपर्वताः । यथा—'उत्तरं यत्समुद्रस्य हिमाद्रेश्चैव दक्षिणम् । वर्षं तद्भारतं नाम भारती यत्र सन्ततिः ॥ नवयोजनसाहस्रो विस्तारोऽस्य

महामुने । महेन्द्रो मलयः सह्यः शुक्तिमान् ऋक्षपर्वतः ॥ विन्ध्यश्च पारियात्रश्च सप्तात्र कुलपर्वताः ।' इति । नद्यश्च कुलपर्वतेभ्य उक्तेभ्यः प्रसरन्त्यो वर्णितास्तत्रैव—'शतद्रूचन्द्रभागाद्या हिमवत्पादनिर्गताः । वेदस्मृतिमुखाद्याश्च पारियात्रोद्भवा मुने ॥ नर्मदासुरसाद्याश्च नद्यो विन्ध्याद्रिनिर्गताः । तापीपयोष्णीनिर्विन्ध्याप्रमुखा ऋक्षसम्भवाः ॥ गोदावरीभीमरथीकृष्णवेण्यादिकास्तथा । सह्यपादोद्भवा नद्यः स्मृताः पापभयापहाः ॥ कृतमालाताम्रपर्णीप्रमुखा मलयोद्भवाः । त्रिसामाचार्षिकुल्याद्या महेन्द्रप्रभवाः स्मृताः ॥ ऋषिकुल्याकुमार्याद्याः शुक्तिमत्पादसम्भवाः । आसां नद्य उपनद्यः सन्त्यन्याश्च सहस्रशः ॥' इति ।

भारतं वर्षं चेदं बहुधा प्रशस्यते । यथा—'चत्वारि भारते वर्षे युगान्यत्र महामुने । कृतं त्रेता द्वापरं च कलिश्चान्यत्र न क्वचित् ॥ तपस्तप्यन्ति मुनयो जुह्वते चात्र यज्वनः । दानानि चात्र दीयन्ते परलोकार्थमादरात् ॥ पुरुषैर्यज्ञपुरुषो जम्बूद्वीपे सदेज्यते । यज्ञैर्यज्ञमयो विष्णुरन्यद्वीपेषु चान्यथा ॥ अत्रापि भारतं श्रेष्ठं जम्बूद्वीपे महामुने । यतो हि कर्मभूरेषा ह्यतोऽन्या भोगभूमयः ॥ अत्र जन्मसहस्राणां सहस्रैरपि सत्तम । कदाचिल्लभते जन्तुर्मानुष्यं पुण्यसञ्चयात् ॥ गायन्ति देवाः किल गीतकानि धन्यास्तु ते भारतभूमिभागे । स्वर्गापवर्गास्पदमार्गभूते भवन्ति भूयः पुरुषाः सुरत्वात् ॥' इत्यादिना । श्रीभागवतेऽपि भारतवर्षस्य श्रैष्ठ्यमुरुधा वर्ण्यते—'अहो अमीषां किमकारि शोभनं प्रसन्न एषां स्विदुत स्वयं हरिः । यैर्जन्म लब्धं

भारताजिरे मुकुन्दसेवौपयिकं स्पृहा हि नः ॥ कल्पायुषां स्थानजयात्पुनर्भवात् क्षणायुषां भारतभूजयो वरः । क्षणेन मर्त्येन कृतं मनस्विनः संन्यस्य संयान्त्यभयं पदं हरेः ॥' इत्यादिना ।

अस्मिंश्च भारते वर्षे उपास्यो नरनारायण उक्तः, परमभक्तिभावेनास्योपासकश्च नारदः सावर्णये पाञ्चरात्रोपदेष्टा वर्णितः, भारतवर्षगताश्च प्रजा वर्णाश्रमाचारवत्य उपासकत्वेन वर्णितास्तत्रैव । किंपुरुषे च भगवान् रामचन्द्र उपास्य उक्तः, उपासकश्च हनुमान् सह किंपुरुषवर्षस्थैः । हरिवर्षे च नृहरिरुपास्यः, उपासकश्च प्रह्लादः सह तद्वर्षीयैः । रम्यके च मात्स्यरूपमुपास्यम्, तद्वर्षाधिपतिश्च मनुरुपासकः सह तद्वर्षीयैः । हिरण्मये च कूर्मतनुर्भगवानुपास्यः, उपासकश्चार्यमा सह तद्वर्षपुरुषैः पितृगणाधिपतिः । उत्तरकुरुवर्षे च यज्ञवराह उपास्यः, भूदेवी च सह तद्वर्षीयैरुपासकत्वेनोक्ता । भद्राश्वे च हयशिरा देव उपास्यः, सह तद्वर्षीयैः पुरुषैर्भद्राश्वश्चोपासकः । केतुमाले च प्रद्युम्नः कामदेव उपास्यः, उपासिका च रमा सह रात्रिन्दिवाभिमानीभिर्देवताभिः । इलावृते तु भवानीपतिरुपासकः सङ्कर्षणमूर्तेः । एवं नववर्षयुक्तो जम्बुद्वीपो लक्षयोजनं मेरुमभितो वर्तमानः स्वयं च लक्षयोजनात्मकः । अस्य चोपद्वीपा अष्टौ वर्णिता भागवते—'जम्बूद्वीपस्य राजन्नुपद्वीपानष्टौ हैक उपदिशन्ति सगरात्मजैरश्वान्वेषणे इमां महीं परितो निखनद्भिरुपकल्पितान् ।' तद्यथा—स्वर्णप्रस्थः, चन्द्रशुक्लः, आवर्तनः, रमणकः, मन्देहारुणः, पाञ्चजन्यः, सिंहलः, लङ्का इति ।

अयं च जम्बूद्वीपः लक्षयोजनविस्तीर्णेन लवणसमुद्रेण वेष्टितः । सोऽपि च द्विलक्षयोजनविस्तीर्णेन प्लक्षद्वीपेन । अस्याधिपतिः प्रियव्रत-

तात्मज इध्मजिह्वः। अत्र च सप्त वर्षाणि—शिवं यशस्यं सुभद्रं शान्तं क्षेममभयममृतमिति तत्पुत्रेभ्यो वर्षसमाननामभ्यः सप्तभ्यो विभक्तानि। अत्र च वर्तमानाश्चत्वारो वर्णा हंसपतङ्गोर्ध्वायनसत्याङ्गसंज्ञा देवसमानसंदर्शनाः सहस्रायुषः सूर्यमात्मानं यजन्ते। अयं च द्विलक्षयोजनविस्तीर्णेनेक्षुरसोदेनावृतः। स च द्विगुणपरिमाणेन चतुर्लक्षयोजनविस्तारलक्षणेन शाल्मलीद्वीपेन। अत्र च महत्तरः शाल्मलीवृक्षः। यत्र गरुत्मतः पक्षिराजस्य नीडं वर्तते। एतदनुबन्ध्येव नाम द्वीपस्य। एवं जम्बूप्लक्षद्वीपयोरपि तत्तद्वृक्षविशेषानुबन्ध्येव नाम बोध्यम्। एतस्याधिपतिः प्रियव्रतात्मजो यज्ञबाहुः। अत्रापि सप्तवर्षाणि—सुरोचनं सौमनस्यं रमणकं देववर्हं पारिवर्हं आप्यायनं अभिज्ञातमिति तत्पुत्रेभ्यो वर्षसमाननामभ्यः सप्तभ्यो विभक्तानि। एतद्वर्षपुरुषाः श्रुतधरविद्याधरवसुन्धरेषन्धरसंज्ञा भगवन्तं वेदमयं सोममात्मानं यजन्ते। अयं च द्वीपः स्वसमानप्रमाणेन सुरोदेनाभिवेष्टितः। स च तद्द्विगुणेनाष्टलक्षयोजनपरिमाणेन कुशद्वीपेनावृतः। यस्मिन् कुशस्तम्बो देवकृतस्तद्द्वीपाख्याकरो ज्वलन इवापरः स्वशष्परोचिषा दिशो दश विराजयति। अस्य चाधिपतिः प्रैयव्रतो राजा हिरण्यरेता नाम स्वं द्वीपं सप्तभ्यः स्वसुतेभ्यो विभज्य स्वयं तु तप आतिष्ठत। तत्पुत्रतुल्यनामानि वर्षाणि सप्त वसुदानदृढरुचिनाभिगुप्तसत्यव्रतविप्रवामदेवसंज्ञानि। कुशद्वीपौकसः कुशलकोविदाभियुक्तकुलकसंज्ञाः भगवन्तं जातवेदसरूपिणं कर्मकौशलेन यजन्ते। अयं च द्वीपः स्वसमानपरिमाणेनाऽऽवेष्टितो घृतोदेन। स च द्विगुणेन षोडशलक्षयोजनपरिमाणेन क्रौञ्चद्वीपेन। अत्र क्रौञ्चनामा पर्वतराजो

द्वीपनामनिर्वर्तकश्चास्ते । तस्य चाधिपतिः प्रैयव्रतो घृतपृष्ठो नाम स्व द्वीप सप्तधा विभज्य स्वपुत्रेभ्य सप्तभ्यो दत्तवान् । आमोदो मधुवहो मेघपृष्ठ सुदामा ऋषिज्यो लोहिताणों वनस्पतिरिति तत्पुत्रनामसमाननामानि च सप्त वर्षाणि । एतद्वर्षपुरुषाश्च पुरुषश्रुयभद्रविणदेवकसञ्ज्ञा आपोमय देवमद्भिः पूर्णेनाञ्जलिना यजन्ते । अय च द्वीपः स्वसमानमानेन क्षीरोदेन परिवृतः । स च क्षीरोदो द्विगुणमानेन द्वात्रिंशल्लक्षयोजनायामेन शाकद्वीपेन । यस्मिन् शाको नाम महान् महीरुद् महासुरभिग न्धस्त द्वीपमनुवासयति । एतस्य चाधिपति प्रैयव्रतो मेधातिथि । अत्र च सप्त वर्षाणि सप्तभ्यः पुत्रेभ्य पुरोजवमनोजवपवमानधूम्रानीकचित्ररेफबहुरूपविश्वधारनामभ्यो विभक्तानि । एतद्वर्षपुरुषाश्च ऋतव्रतसत्यव्रतदानव्रतानुव्रतनामानो भगवन्त वाय्वात्मक यजन्ते । अय च द्वीप स्वसमानगुणेन दधिमण्डोदेन वेष्टित । स च द्विगुणमानेन पुष्करद्वीपेन चतु षष्टिलक्षयोजनविस्तारेणावृत । यस्मिन् बृहत्पुष्कर ज्वलनशिखामलकनकपत्रायुतायुत भगवत कमलासनस्याध्यासन परिकल्पितम् । अस्मिंश्च द्वीपे द्वे वर्षे तदधिपतिना प्रैयव्रतेन वीतिहोत्रेण स्वपुत्राभ्यां रमणकधातकिनामभ्या विभक्ते । अस्य च मध्ये एक एवाचलो वर्षद्वयमर्यादाकरो मानसोत्तरनामाऽयुतयोजनोच्छ्रायायामोऽस्ति । तत्र च चतसृषु दिक्षु चत्वारि पुराणि लोकपालानामिन्द्रादीनाम् । उपरिष्टाच्च मेरु परिभ्रमतः सूर्यरथस्य चक्र सवत्सरात्मक देवानामहोरात्राभ्या परिभ्रमति । एतद्वर्षपुरुषाश्च भगवन्त ब्रह्मरूपिण सकर्मकेन कर्मणाऽऽराधयन्ति । अय च स्वसमानमानेन शुद्धोदेनावेष्टितः । सप्तद्वीपात्मकोऽय द्विगुणी-

कृतया काञ्चनभूम्याऽऽवृतः । ततो लोकालोकाचलः । लोकालोकयोरन्तर्वर्तित्वाल्लोकालोक इति नामास्य । तदुपरिष्टाच्चतसृष्वाशासु जगद्धात्राधिनिवेशिताश्चत्वारो दिग्गजाः—ऋषभः पुष्करचूडो वामनोऽपराजित इति सकललोकस्थितिहेतवः । अत्र च लोकालोकाचले स्वविभूतीनां लोकपालानां च विविधवीर्योपबृंहणाय महाविभूतिर्महापुरुषोऽनन्तैः विष्वक्सेनादिभिः स्वपार्षदप्रवरैः परिवृत आस्ते सन्निधाय सकललोकस्वस्तये इति च भागवते ( स्कं. ५ अ. २० ) वर्णितमस्ति । ततोऽन्धं तमः, ततो गर्तोदकं, ततोऽण्डकटाहश्च । श्रीविष्णुपुराणे चोक्तम्—'एवं द्वीपाः समुद्राश्च सप्त सप्तभिरावृताः । द्वीपश्चैव समुद्रश्च समानौ द्विगुणौ परौ ॥...स्वादूदकस्य परितो दृश्यते लोकसंस्थितिः । द्विगुणा काञ्चनी भूमिः सर्वजन्तुविवर्जिता ॥ लोकालोकस्ततः शैलो योजनायुतविस्तृतः । उच्छ्रायेणापि तावन्ति सहस्राण्यचलो हि सः ॥ ततस्तमः समावृत्य तं शैलं सर्वतः स्थितम् । तमश्चाण्डकटाहेन समन्तात्परिवेष्टितम् ॥ पञ्चाशत्कोटिविस्तारा सेयमूर्वी महामुने । सहैवाण्डकटाहेन सद्वीपाब्धिमहीधरा ॥' इति । भूमण्डलं व्याख्यातम् ।

अथोपरितनान् लोकान् वर्णयामः । ते च समासतो निरूपिता विष्णुपुराणे—"रविचन्द्रमसोर्यावन्मयूखैरवभास्यते । ससमुद्रसरिच्छैला तावती पृथिवी स्मृता ॥ यावत्प्रमाणा पृथिवी विस्तारपरिमण्डलात् । नभस्तावत्प्रमाणं वै व्यासमण्डलतो द्विज ॥ भूमेर्योजनलक्षे तु सौरं मैत्रेय मण्डलम् । लक्षाद्दिवाकरस्यापि मण्डलं शशिनः स्मृतम् ॥ पूर्णे शतसहस्रे तु

योजनानां निशाकरात् । नक्षत्रमण्डलं कृत्स्नमुपरिष्टात्प्रका-शते ॥ द्वे लक्षे चोत्तरे ब्रह्मन् बुधो नक्षत्रमण्डलात् । ताव-त्प्रमाणभागे तु बुधस्याप्युशना स्थितः ॥ अङ्गारकोऽपि शुक्रस्य तत्प्रमाणे व्यवस्थितः । लक्षद्वये तु भौमस्य स्थितो देवपुरोहितः ॥ सौरिर्बृहस्पतेश्चोर्ध्वं द्विलक्षे समवस्थितः । सप्त-र्षिमण्डलं तस्माल्लक्षमेकं द्विजोत्तम । ऋषिभ्यस्तु सहस्राणां शतादूर्ध्वं व्यवस्थितः ॥ मेढीभूतः समस्तस्य ज्योतिश्चक्रस्य वै ध्रुवः । त्रैलोक्यमेतत्कथितमुत्सेधेन महामुने ॥ इज्याफ-लस्य भूरेषा इज्या चात्र प्रतिष्ठिता । ध्रुवादूर्ध्वं महर्लोको यत्र ते कल्पवासिनः ॥ एकयोजनकोटिस्तु यत्र ते कल्पवासिनः । द्वे कोटी तु जनो लोको यत्र ते ब्रह्मणः सुताः ॥ सनन्दनाद्याः प्रथिता मैत्रेयामलचेतसः । चतुर्गुणोत्तरे चोर्ध्वं जनलोका-त्तपः स्थितः । वैराजा यत्र ते देवाः स्थिता दाहविवर्जिताः ॥ (वैराजाः—प्रजापतयः) षड्गुणेन तपोलोकात्सत्यलोको विरा-जते । अपुनर्मारका यत्र ब्रह्मलोको हि संस्मृतः ॥' इति ।

भूमेरूर्ध्वावधिरुक्तस्तत्रैव—'पादगम्यं तु यत्किञ्चिद्वस्त्वस्ति पृथिवीमयम् । स भूर्लोकः समाख्यातो विस्तरोऽस्य मयो-दितः ॥' इति । चरणसञ्चारयोग्यं गिरिशिखरादि यावत्तावदुत्सेधो भूर्लोक इति यावत् । श्रीभागवते च ऊर्ध्वावधिरुक्तो वर्णितः— 'यावद्धंसभासश्येनसुपर्णादयः पतत्रिप्रवरा उत्पतन्ति' इति ।

'भूमिसूर्यान्तरं यच्च सिद्धादिमुनिसेवितम् । भुवर्लोकस्तु सोऽप्युक्तो द्वितीयो मुनिसत्तम ॥' (वि. पु.) भूमेरुपरि लक्ष-योजनदूरे सूर्यमण्डलम्, तावदन्तरिक्षं भुवर्लोक इति यावत् ।

सूर्यमण्डलस्याधस्ताद्योजनायुते राहुमण्डलम् । तच्च त्रयोदशसहस्र-योजनविस्तारम् । सूर्यमण्डलं योजनानामयुत (दशसहस्र)परिमाणं, चन्द्रमण्डलं च द्वादशसहस्रपरिमाणम् । अत्रोपरागविषय उक्तम्— 'राहुः कदाचित्पर्वणि तद्वैरानुबन्धः सूर्याचन्द्रमसौ अभिधावति कलहाय । तन्निशाम्योभयत्रापि भगवता रक्षणाय प्रयुक्तं सुदर्शनं नाम भागवतम् । तत्तेजसा दुर्विषहं चक्रं मुहुः परिवर्तमानमभ्य-वस्थितो मुहूर्तमुद्विजमानश्चकितहृदय आरादेव निवर्तते । तदुप-राग इति वदति लोकः' इति । (अभिधावनदशायां यत्स्वमण्डलेन सूर्यचन्द्रमण्डलाच्छादनं तदेव ग्रहणमिति उपरागस्वरूपज्ञा वदन्ति जनाः। तत्र ऋजुवक्रस्थितिभ्यामर्धग्राससर्वग्रासौ न तु वस्तुतो ग्रासोऽस्ति, दूरान्तरत्वादिति भावः) अधस्तात् राहुम-ण्डलाद्योजनायुतान्तरे सिद्धचारणविद्याधराणां सदनानि सन्ति । ततोऽधस्ताच्च यक्षपिशाचप्रेतभूतगणानां विहाराजिरम् । अन्तरिक्ष-स्याधस्तादवधिस्तावान् यावद्वायुः प्रवाति यावन्मेघा उपलभ्यन्ते । इति । (भा. स्कं. ५ अ. २४)

'ध्रुवसूर्यान्तरं यच्च नियुतानि चतुर्दश । स्वर्लोकः सोऽपि कथितो लोकसंस्थानचिन्तकैः ॥ त्रैलोक्यमेतत्कृतकं मैत्रेय परिपठ्यते । (प्रतिकल्पमुत्पत्तिविनाशयोगतः) जनस्तपस्तथा सत्यमिति चाकृतकं त्रयम् ॥ (प्रतिकल्पमविनाशात्) कृतका-कृतयोर्मध्ये महर्लोक इति स्मृतः । शून्यो भवति कल्पान्ते योऽत्यन्तं न विनश्यति ॥' (वि. पु.) इति सप्तलोक्यास्त्रैवि-ध्यमुक्तं कृतकाकृतककृतकाकृतकभेदात् । श्रीभागवते तु पातालानां भूविवरत्वमाश्रित्य महरादीनां च स्वर्लोकान्तर्भावं विवक्षित्वा

त्रैलोक्यव्यवहारः कृतोऽस्तीत्यादि च तत एवानुसन्धेयम् । ब्रह्माण्डान्तर्गताश्चेमे लोकाः पुण्यपापमिश्रकर्मवतां कर्मफलानुभवभूमयो विविधविचित्रानन्तभोग्यभोगोपकरणभोगस्थानसमृद्धा बोध्याः ।

सत्यलोकादुपरि च तमो गर्तोदकमण्डकटाहश्च । गर्तोदकाण्डकटाहमानं च शैवे उक्तम्—'सप्तसागरमानस्तु गर्तोदस्तदनन्तरम् । कोटियोजनमानस्तु कटाहः स व्यवस्थितः ॥' इति । अण्डकटाह एव पृथिव्यावरणं बोध्यम् । तिर्यगूर्ध्वमधश्च ब्रह्माण्डमण्डकटाहेनावृतम् । तदुक्तम्—'एतदण्डकटाहेन तिर्यक् चोर्ध्वमधस्तथा । कपित्थस्य यथाबीजं सर्वतो वै समावृतम् ॥' इति । (वि. पु.) अण्डकटाहाद्दशगुणं जलावरणम् । एवं उत्तरोत्तरावरणस्य पूर्वपूर्वावरणतो दशगुणत्वं बोध्यम् । अण्डकटाहरूपपृथिव्यावरणेन सहाव्यक्तावरणपर्यन्तं परिगणनेनाष्टावरणत्वं बोध्यम् । जलाद्यावरणपरिगणनायां तु सप्तावरणत्वम् । ब्रह्माण्डानन्त्यं चोक्तं तत्रैव—'महान्तं च समावृत्य प्रधानं समवस्थितम् । अनन्तस्य न तस्यान्तः सङ्ख्यानं चापि विद्यते ॥ तदनन्तमसङ्ख्यातप्रमाणं चापि वै यतः । हेतुभूतमशेषस्य प्रकृतिः सा परा मुने ॥ अण्डानां तु सहस्राणां सहस्राण्ययुतानि च । ईदृशानां तथा तत्र कोटिकोटिशतानि च' ॥ इति । वर्णितं च ब्रह्माण्डस्वरूपं सत्सङ्गिजीवने पञ्चमप्रकरणे द्विषष्टितमेऽध्याये ततोऽनुसन्धेयम् ।

## सृष्टेर्नानाविध्यम् ।

समपञ्चि निरूपितं नाम ब्रह्माण्डस्वरूपम् । महदादिभिः पृथिव्यन्तैः परस्परसंहतैर्ब्रह्माण्डमुत्पाद्य तत्र चतुर्मुखं सृजतीश्वरः । चतुर्मुखपर्यन्ता सृष्टिः समष्टिसृष्टिरित्युच्यते । चतुर्मुखकर्तृका च

देवतिर्यङ्मनुष्यस्थावरादिसृष्टिर्व्यष्टिसृष्टिरुच्यते । सृष्टिरियं नवधा वर्णिता भागवते—'सर्गो नवविधस्तस्य प्राकृतो वैकृतश्च यः' इत्यादिना । आद्यस्तु महतः सर्गो द्वितीयस्त्वहमः, तृतीयो द्रव्यसर्गश्चतुर्थ इन्द्रियसर्गः पञ्चमो देव(मनः) सर्गः षष्ठोऽण्डसर्ग इति प्राकृताः षट् । स्थावराणां सर्गः सप्तमः षड्विधः, तिरश्चां सर्गोऽष्टमोऽष्टाविंशतिधा, नवमो मनुष्यसर्गः । प्राकृतसर्गे प्रसङ्गादुक्तो देवसर्गोऽपि वैकृत एव । तदन्तर्गतः कौमारसर्गस्तु उभयात्मकः । सनकादीनामादावेव सृष्टत्वात्प्राकृतत्वम् । कुमारेष्वन्तर्गतस्य नीललोहितस्य तु तैः सह सृष्टस्यापि प्रतिकल्पं सृज्यत्वाद्वैकृतत्वमिति । प्रतिकल्पं च सृष्टिर्वैकृतसर्गत्वेनाभिमता । देवसर्गश्चाष्टविधो मतः—विबुधाः पितरोऽसुराः, गन्धर्वाप्सरसः, सिद्धाः, यक्षरक्षांसि, चारणाः, भूतप्रेतपिशाचाः, विद्याधराः, किन्नरादयः इति ।

## प्रलयत्रैविध्यम् ।

एवं नाशोऽपि प्राकृतानां त्रिविध उक्तो नित्यनैमित्तिकप्राकृतभेदात् । 'कालद्रव्यगुणैरस्य त्रिविधः प्रतिसङ्क्रमः' इति । (स्कं. ३ अ. १०) मृतिकाले व्यवस्थितः प्रलयो नित्यः, द्रव्येण सङ्कर्षणमुखाग्न्यादिना जातः प्रलयो नैमित्तिकः, गुणसाम्यावस्थया जातो महदादीनां च प्रलयः प्राकृत इत्युच्यते । आत्यन्तिकप्रलयश्च मोक्ष इति वर्णितं विष्णुपुराणादौ । 'तमः परे देव एकीभवति' इत्युक्तरीत्या मूलमायापुरुषयोर्भगवत्यविभागलक्षणो लयोऽपि आत्यन्तिक इत्युच्यते । तथा चोक्तं वासुदेवमाहात्म्ये—'यदा च मायापुरुषौ कालोऽत्यक्षरतेजसि । तदिच्छया तिरो यान्ति स त्वेको वर्तते प्रभुः ॥ तदा स प्रलयो ज्ञेयो नारदात्यन्ति-

क्रमशः ॥' इति । सत्सङ्गिजीवनेऽपि चतुर्धा प्रलय उक्तः—'नित्यो दैनन्दिनश्चैव प्राकृताख्यस्तृतीयकः । आत्यन्तिकश्चेति मातः प्रलयोऽस्ति चतुर्विधः ॥' इति । हरिवाक्यसुधासिन्धौ च । ( तरंग १२ ) मोक्षस्यात्यन्तिकप्रलयरूपत्वमपि तत्रैवोक्तम्—'ज्ञानेन मायिकोपाधिलयश्चात्यन्तिको मतः' इति ।(तरंग २२२) चतुर्विधानां प्रलयानां कालगत्यनुविधायित्वं च श्रीमागवते वर्णितम्—'नित्यो नैमित्तिकश्चैव तथा प्राकृतिको लयः । आत्यन्तिकश्च कथितः कालस्य गतिरीदृशी ॥' इति । (स्क. १२)

## ( भूभ्रमणपतनवादनिरासः )

प्रसङ्गतो भूमण्डलस्य भमण्डलस्य च भ्रमणाभ्रमणपक्षावुपपादयामः समासतः—'हिरण्मयेन सविता रथेनाऽऽदेवो याति भुवनानि पश्यन्' इति श्रुत्याऽऽदित्यस्य तावत् भ्रमणं सिद्धम् । पुराणेषु ग्रहाणां नक्षत्राणां च भ्रमणमभिहितम्—'स हि ध्रुवः सर्वेषां ज्योतिर्गणानां ग्रहनक्षत्रादीनामनिमिषेणाव्यक्तरंहसा भगवता कालेन भ्राम्यमाणानां स्थाणुरिवावष्टम्भ ईश्वरेण विहितः शश्वदवभासते । त एते कालचक्र आयोजिता ध्रुवमेवावलम्ब्य वायुनोदीर्यमाणा आकल्पान्तं परिभ्रमन्ति' इत्यादिना । ( भाग. स्क. ५ अ. २३ ) यथा वेगेन गच्छद्भिरचलाः पदार्था गच्छन्त इव प्रतीयन्ते एवं सूर्योदिदृश्या भूमिर्भ्रमतीव । आर्यभट्टेन च भचक्रस्यैव समहस्य भ्रमणमभिहितम्—'उदयास्तमयनिमित्तं नित्यप्रवहेण वायुना क्षिप्तः । लङ्कासमपश्चिमगो भपञ्जरः सग्रहो भ्रमति' इति । 'आकाशे पृथिवी प्रतिष्ठिता' इति श्रुत्या च भुवः प्रतिष्ठितत्वमेव । तदप्युक्तं 'मध्ये समन्ता-

दण्डस्य भूगोलो व्योम्नि तिष्ठति। बिभ्राणः परमां शक्तिं ब्रह्मणो धारणात्मिकाम्॥' इति। (सूर्यसिद्धान्ते भूगोलाध्यायः ३२३) 'नित्यं त्रिलोकी भ्रमति श्रुतिवाक्यानुसारतः। अतो भचक्रं भ्रमति विपरीतं ग्रहान्वितम्॥' इति तु गणितैकदेशिमतम्। 'पूर्वाभिमुखं भ्रमति क्षोणी नास्ति भ्रमः खगक्षाणा'मिति चैकदेशिमतान्तरम्। अत्र पक्षे प्राग्देशपतनार्थमुत्क्षिप्ताः शिलादयो परभाग एव नियमतः पतेयुः, भुवस्तीव्रतरभ्रमणात्। प्रत्यङ्मुखं च गच्छतां पतत्रिप्रभृतीनां पुनः स्वावासनीडादिप्राप्तिश्च दुर्घटा, पृथिव्या द्रुततरप्राग्गतिमत्त्वेन स्वावासस्यातिदवीयस्तायाः प्रसङ्गात्। किञ्च एकदेशस्थिते च वर्षति बलाहके मुहूर्तमात्रान्मही शतयोजनाऽऽसिच्येत। अतिकुशलानामपि धन्विनां दक्षिणोत्तरावस्थितस्थिरलक्ष्यवेधो न स्यात्। अथ स्यात् शरविहङ्गमादीनामपि धरणीसममेव वायुना नोदनान्नोक्तप्रसङ्गः इति। मैवम्। प्रबलेन वायुना प्राङ्मुखतया प्रसभमाकृष्यमाणानां प्रत्यङ्मुखगतिप्रतिरोधप्रसङ्गात्। ज्योतिर्गणभ्रमणहेतोर्वायुविशेषस्य शास्त्रानुमत्या सम्भवेऽपि भूभ्रमणहेतोर्वायोः शास्त्रोपलम्भविरोधेनासम्भवाच्चेति।

जैनाभिमतः पतति गुरुत्वान्नित्यं पृथिवीति पक्षोऽप्येवमसमञ्जसो वेदितव्यः। गुरुत्वात्पतनस्य सति प्रतिबन्धके निरोधोपपत्तेः। श्रूयते हि—'एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ विधृतौ तिष्ठतः' इति। स्मर्यते च—'वासुदेवस्य वीर्येण विधृतानि महात्मनः' इति। किञ्च भुवः पतनेऽतिगुरुभूतायास्तस्याः पतनातिशयादुत्क्षिप्ताः शिलादयस्तदपेक्षयाऽतिलघीयांसो न कदाचिद्भुवमासीदेयुः। तेषां भुवोऽप्यतिशयितपतन॰

कल्पनं तु अतिसाहसम् । उपष्टम्भकवायुविशेषाद्भुवो मन्दं पवनमिति चेत्ततोऽपतनमेव किं नेष्यते ? । इति । उक्तं च कार्योन्विकैरपि—'अनिलाधाराः केचित्केचिल्लोका वसुन्धराधाराः । वसुधा नान्याधारा तिष्ठति गगने स्वशक्त्यैव ॥' इति । (महासिद्धान्त-१६-४) तदुक्तं तत्त्वमुक्ताकलापे—'तिष्ठत्युर्वी भचक्रं पवनरयवशाद्भ्राम्यतीत्युक्तमार्यैर्भ्रान्ते क्ष्मात्रिलोकीभ्रमणमिह तथा मेदिनीभ्रान्तिपातौ । तद्भ्रान्तौ प्राक्प्रतीचोः प्रसजति पतने पत्रिणोस्तारतम्यं पाते गुर्व्यास्तु तस्याः प्रलघु दिवि समुत्क्षिप्तमेना न यायात् ॥' इति । विस्तृतं च सर्वार्थसिद्धावित्यलं प्रसक्तविचारेण ।

एवं माया सकार्या वै वर्णिताऽत्र समासतः । चतुर्विंशतिधा यस्या विकारा महदादयः ॥ समेत्यान्योन्यमीशस्य सङ्कल्पादण्डकारिणः । ब्रह्माण्डान्तर्गता लोकाश्चतुर्दश समीरिताः ॥ चतुर्विधानां भूतानां भुवः कर्मफलस्य च । अण्डलोकान्तर्गतानां पदार्थानामनन्तता ॥ मायिकानां यद्यपि तथाप्येतत्सङ्ख्या तु सुस्थिरा । यतस्तेषां पञ्चभूतात्मकत्वान्नातिरेकिता ॥ कालाधीनो विनाशोऽपि मायिकानामुदीरितः । यतो मायिकभावेषु वैराग्यं स्याद्विवेकिनः ॥

## अथ कालनिरूपणम् ।

अथ कालं वर्णयामो योऽयं क्षोभक ईरितः । मायागुणानां सर्गादौ यतः सर्गः प्रवर्तते ॥ मायिकानां च सर्वेषां कालाधीना हि वै यतः । उत्पत्तिस्थितिनाशाश्च ज्ञायन्तेऽक्षागमादितः ॥ अतः कार्यस्य कृत्स्नस्य निमित्तं मायिकस्य तु ।

कालोऽयं किञ्च भूतादिव्यवहारेषु गोचरः ॥ सोऽयं लवक्षणाद्यात्मा गृह्यतेऽक्षैर्यथायथम् । विशेषणतयाऽर्थस्य शब्दादेस्तस्य तस्य च ॥ माया कालकृतानन्तपरिणामास्पदं यतः । अतः कालस्य मायाकार्येषु नित्यप्रकारता ॥ अखण्डस्तु महाकालो नित्यो विभुरपि स्मृतः । अचित्त्वादपि मायावदत्र तद्वर्णनं मतम् ॥

## कालस्यातिरेकः ।

'अनादिर्भगवान् काल' इत्याद्युक्त्याऽत्र केचन । कालस्येशानन्यभावं मन्यन्ते तन्न युक्तिमत् ॥ 'ब्रह्मा दक्षादयः काल' इत्यादौ तद्विभूतिता । स्फुटा ननु तदन्तर्यामित्वादैक्यवचोगतिः ॥ कालस्यापि च रूपत्वं वर्णितं पुंप्रधानवत् । मन्तव्यमीशादन्यत्वमतश्चास्य विवेकिभिः ॥ तथा हि विष्णुपुराणे वचनम्–'विष्णोः स्वरूपात्परतोदिते द्वे रूपे प्रधानं पुरुषश्च विप्र । तस्यैव तेऽन्येन धृते वियुक्ते रूपान्तरं तद्द्विज कालसंज्ञम् ॥' इति । श्रीभागवतेऽपि प्रकृतेश्चतुर्विंशतिविधत्वमुपपाद्य कालस्तदतिरिक्त उक्तः–'यः कालः पञ्चविंशकः' इति । तथा तत्रैव परमपुरुषस्य सर्गादिनियमनसामर्थ्यमेव काल इति केषाञ्चिन्मतमुक्त्वा प्रलये प्रकृतिलीनस्य पुरुषस्य नामरूपरहितस्य गुणसाम्यलक्षणस्य प्रधानस्य च जगन्निर्माणोपयुक्तप्रवृत्तिहेतुः कालो भगवदात्मकः, यथा पुरुषो भगवतो रूपं तथा कालश्चेत्युक्तम्–'प्रभावं पौरुषं प्राहुः कालमेके यतो भयम् । अहङ्कारविमूढस्य कर्तुः प्रकृतिमीयुषः ॥ प्रकृतेर्गुणसाम्यस्य निर्विशेषस्य मानवि । चेष्टा यतः स भगवान् काल इत्युपलक्षितः ॥ अन्तः-

पुरुषरूपेण कालरूपेण यो बहि । समन्वेत्येष सत्त्वानां भगवानात्ममायया ॥' इति । ( स्क ३, अ २६ ) श्रीविष्णुपुराणे च—'तदेव सर्वमेवैतत् व्यक्ताव्यक्तस्वरूपवत् । तथा पुरुषरूपेण कालरूपेण च स्थितम् ॥' इति प्रकृतिपुरुषकालानामेकरूपमेव रूपत्व वर्णितम् । 'कालोऽस्मि लोकक्षयकृत्' इति च कालाभिमानिरूपपरम् । अतो भगवत सृष्ट्यादिलीलोपकरणभूतस्तद्विभूतिभूत काल इति सिद्धम् । तथोक्त गीतायाम्—'अहमेवाक्षय काल' इति । उक्त च तत्त्वमुक्ताकलापे—'कालोऽस्मीति स्वगीता कथयति भगवान् काल इत्यासवर्यो हेतु सर्वस्य नित्यो विभुरपि च पर किं परेणेति चेन्न । कालान्तर्यामितादे स खलु समुदित सम्प्रतीते तु भेदे साधर्म्ये नैक्यहेतु स हि तदितरवद् घोषितस्तद्विभूति ॥' इति ।

## कालस्यानाद्यनन्तत्वम् ।

अनादिरनन्तश्चायम् । 'सदेव सोम्येदमग्र आसीत्' इत्यादौ सर्वोपसंहारेऽपि कालस्य श्रवणात् । सर्गात्पूर्वं प्रलयादनन्तरं च कालो नासीत्येतत्तु स्ववाचैव व्याहतम्, पूर्वं पश्चादिति व्यपदेशस्य कालविशेषसम्बन्धनिर्वाह्यत्वात् । 'अनादिर्भगवान् कालो नान्तोऽस्य द्विज विद्यते' 'अहमेवाक्षय काल' इत्यादि चास्यानाद्यनन्तत्वे प्रमाणम् । नाप्यस्य देशत परिच्छेद , नित्यविभूतावपि सत्त्वात् । 'सदा पश्यन्ति सूरय' इति श्रुतेस्तत्रापि कालसद्भावो हि प्रतीयते । 'कालं स पचते तत्र न कालस्तत्र वै प्रभु' इति तु कालस्य तत्र कार्यकरत्वाभावमात्रमाह । 'कलामुहूर्तादिमयश्च कालो न यद्विभूते परिणामहेतु' इति च

खण्डकालस्यापि तत्रत्यवस्तूनां परिणामहेतुत्वाभावमाह । नित्यविभूतावपि सत्त्वात्कालस्य गुणत्रयरहितत्वं चेति बोध्यम् ।

सत्त्वादिरहिताचिद्द्रव्यत्वं कालिकसम्बन्धेन नित्यविभूतिभिन्नं कार्यसामान्यं प्रति तादात्म्येन कारणत्वं कालिकसम्बन्धेन सर्वाधारत्वं च कालस्य लक्षणं भवति ।

ननु नित्यविभौ काले क्षणलवादिव्यवहारो न स्यात् । मैवम् । तत्तत्सूर्यपरिस्पन्दादिलक्षणोपाधिभेदात् क्षणादिव्यवहारोपपत्तेः । एवं काले भूतभविष्यद्वर्तमानत्वादिव्यवहारोऽपि उपाधिबलादेव निर्वाह्यः । तथा हि—प्रकृतशब्दप्रयोगाधिकरणीभूतः कालो वर्तमानः, वर्तमानकालिकध्वंसप्रतियोगी अतीतः, वर्तमानकालिकप्रागभावप्रतियोगी चागामी बोध्यः । केचित्तु वर्तमानं कालं नेच्छन्ति । तन्मतेऽतीतानागतयोरप्यसिद्धिप्रसङ्गः, तयोस्तदधीननिरूपणत्वात् । किञ्च वर्तमाननिषेधे प्रत्यक्षसामान्योच्छेदापत्तिः, वर्तमानैकविषयत्वात्तस्य । नन्वेवं कालोपाधिभिरेव सर्वव्यवहारे कालकल्पनाऽपार्थिकेति चेन्न । आगमसिद्धत्वेन कालस्याकाल्पनिकत्वात् ।

## कालस्य क्षणादिविकारवत्त्वम् ।

यद्वा कालस्यापि लवक्षणादिलक्षणविकारोऽभ्युपगम्यते । 'सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि । कला मुहूर्ताः काष्ठाश्चाहोरात्राश्च सर्वशः । अर्धमासा मासा ऋतवः संवत्सरश्च कल्पताम् ॥' (तै. ना.) इति कलादिकालविकाराणां सृज्यत्वश्रवणात् । न चात्रोपाधिसृष्टिरभिमानिसृष्टिर्वा विवक्षितेति वाच्यम् । स्वरसप्रतीतानां कालविकाराणामसति बाधके त्यागायोगात् । न च कालस्य विभुत्वमेव बाधकं विकारित्व इति वाच्यम् । स्थूलत्व-

कृत्स्वलक्षणस्य विकारस्य विभावसम्भवेऽप्यवस्थान्तरापत्ते सम्भवात् । विभोरपीश्वरज्ञानस्य सृष्टिसङ्कल्पादिलक्षणावस्थाभेदयोगवत् । कालस्यैव तद्विकाराणामपि विभुत्वमेव, क्षणादिनैव विश्वस्यापि विशेषणात् 'विश्वमिदानीं वर्तते' इति । न चाविभुत्वेऽपि क्षणादेः कालिकसम्बन्धेन विश्वाधारत्वं घटत इति वाच्यम् । क्षणादिलक्षणकालसंयोगातिरिक्तस्य कालिकसम्बन्धस्याप्रामाणिकत्वात् । अद्रव्येषु च संयुक्तापृथक्सिद्धेरेव क्षणादिसम्बन्धरूपत्वात् । तदुक्तं न्यायसिद्धाञ्जने—'एकेनैव क्षणेनास्य विश्वस्यापि विशेषणात् । कालवत्तत्क्षणानां च व्यापित्वमवगम्यते ॥' इति । क्षणदिनमासायनसंवत्सरादिरूपेण परिणामेऽपि कालस्य तत्तत्कालविशेषव्यञ्जकत्वमुपाधीनामुलिङ्गादीनामक्षुण्णमेव । ज्येष्ठे कालकृतं परत्वं क्षणसम्बन्धप्रकर्ष, कनिष्ठे कालकृतमपरत्वं च क्षणसम्बन्धाल्पता क्षणादिना कालपरिणामेन निर्वाह्ये ।

## कालस्य प्रत्यक्षत्वम् ।

क्षणादिपरिणामैश्चाय प्राकृतेषु कार्येषु भवति हेतु, तद्विशेषणतया प्रत्यक्षश्च, इदानीं घट इदानीमत्र रक्तं रूपं इदानीं मधुरो रसः इदानीं सुरभिर्गन्धः इदानीमुष्ण स्पर्शः इदानीं शब्दो मन्द इदानीं मे सुखमिति । एवं षडिन्द्रियवेद्यस्य कालस्य स्थितम् । योग्यत्वादि ह्युपलम्भव्यवस्थाप्यम् । उपलभ्यते च कालस्तत्तदर्थविशेषणतयेति तत्तदिन्द्रियग्रहणयोग्यताऽपि कालस्य कल्पनीयेति । तदुक्तं मीमांसकैः—'न सोऽस्ति प्रत्ययो लोके यत्र कालो न भासते' इति । उक्तं च तत्त्वमुक्ताकलापे—'कालोऽध्यक्षावसेयः क्षणलवदिवसाद्यशतोऽर्थान्

भवति हि नः काऽपि कालान्वयेऽपि । तत्संयोगाः परत्वादय इति च ततोऽप्येष नैवानुमेयो नो चेन्न क्वापि लोकव्यवहृतिविषयोऽव्यक्तवत्स्यादनेहा ॥ कालस्योपाधिभेदात्कतिचिदभिदधत्यब्दमासादिभेदं तत्तद्रूपेण कालः परिणमत इति प्राहुरेके तदा तु । ये तत्रोपाधयः स्युस्तदिह परिणतिं प्राप्नुयुः सानुबन्धाः नित्यो व्यापी च तादृक्परिणतिभिरसौ सर्वकार्ये निमित्तम् ॥' इति ।

## निमेषादिभेदः ।

कालस्य परिणामभेदा निमेषादयो वर्णिता विष्णुपुराणे—'निमेषो मानुषो योऽसौ मात्रा मात्राप्रमाणतः । तैः पञ्चदशभिः काष्ठा त्रिंशत्काष्ठा कला स्मृता ॥ नाडिका तु प्रमाणेन सा कला दशपञ्च च । नाडिकाभ्यामथ द्वाभ्यां मुहूर्तो द्विजसत्तम ॥ अहोरात्रं मुहूर्तास्तु त्रिंशन्मासो दिनैस्तथा । मासैर्द्वादशभिर्वर्षमहोरात्रं तु तद्दिवि ॥ त्रिभिर्वर्षशतैर्वर्षं षष्ट्या चैवासुरद्विषाम् । तैस्तु द्वादशसाहस्रैश्चतुर्युगमुदाहृतम् ॥ चतुर्युगसहस्रं तु कथ्यते ब्रह्मणो दिनम् । (अहः) स कल्पस्तत्र मनवश्चतुर्दश महामुने ॥ तदन्ते चैव मैत्रेय ब्राह्मो नैमित्तिको लयः ॥' इति । एकमात्रलघ्वक्षरोच्चारणक्रियोपलक्षितः कालो निमेषः । दिव्यैर्वर्षैर्द्वादशसहस्रैश्चतुर्युगम् । अन्यत्स्पष्टम् । भागवते च द्वे नाडिके मुहूर्तः, षट् सप्त वा मुहूर्ताः (वृद्धिह्रासापेक्षया) यामः प्रहर इत्यप्युच्यते । चत्वारो यामाः अहस्तावत्प्रमाणा च रात्रिरित्यप्युक्तम् । तथा चतुर्युगस्य मानं च वर्णितम्—'कृतं त्रेता द्वापरं च कलिश्चेति चतुर्युगम् । दिव्यैर्द्वादशभिर्वर्षैः सावधानं

निरूपितम् ॥ चत्वारि त्रीणि द्वे चैकं कृतादिषु यथाक्रमम् । सङ्ख्यातानि सहस्राणि द्विगुणानि शतानि च ॥ सन्ध्यासन्ध्यांशयोरन्तो यः कालः शतसङ्ख्ययोः । तमेवाहुर्युगं तज्ज्ञा यत्र धर्मो विधीयते ॥' इत्यादिना । अयमर्थः—कृतयुगं चतुःसहस्रदिव्यवर्षकालिकम्, तस्य पूर्वसन्ध्या चतुःशतं उत्तरसन्ध्या च तावती । त्रेतायुगं त्रिसहस्रदिव्यवर्षात्मकम्, तस्य पूर्वसन्ध्या त्रिशतं उत्तरसन्ध्या च तावती सन्ध्यांशसंज्ञिता । द्वापरं द्विसहस्रदिव्यवर्षात्मकम्, तस्य पूर्वसन्ध्या द्वे शते, उत्तरसन्ध्या च द्वे शते । कलिरेकसहस्रदिव्यवर्षात्मकः, तस्य पूर्वसन्ध्या एकं शतं सन्ध्यांशश्च तावानिति । त्रैलोक्याद्बहिश्चतुर्युगसहस्रं दिनं तावती च रात्रिः । तदप्युक्तं—'त्रैलोक्याद्युगसाहस्रं बहिराब्रह्मणो दिनम् । तावत्येव निशा तात यन्निमीलति विश्वसृट् ॥' इति । चतुर्दशानां मनूनां कालावधिरप्युक्तस्तत्रैव—'स्वं स्वं कालं मनुर्भुङ्क्ते साधिकां ह्येकसप्ततिम् ।' इति । किञ्चिदधिकचतुर्युगैकसप्ततिरेकैकस्य मनोः काल इत्यर्थः । इन्द्राश्च चतुर्दश प्रतिकल्पम् । सप्तर्षयोऽपि तथा । मन्वादयः स्वस्वाधिकारनियुक्ताः कल्पान्तं यावत्स्वायुःपरिमाणं महरादौ लोके वर्तन्त इति चान्यत्र व्यक्तम् ।

मनुष्यादीनां स्वस्ववर्षमानेन शतवर्षजीवित्वमुत्सर्गः 'शतायुर्वै पुरुष' इति श्रुतेः । ब्रह्मणोऽपि स्वीयाहोरात्रप्रमाणेन मासायनसंवत्सरक्रमेण शतवर्षजीवित्वमेव । तदुक्तं विष्णुपुराणे—'एवं तु ब्रह्मणो वर्षमेवं वर्षशतं स्मृतम्' इति । 'निजेन तस्य मानेन ह्यायुर्वर्षशतं स्मृतम् । तत्पराख्यं तदर्धं तु परार्धमभिधीयते ॥' इति च । परार्धपर्यन्तावधित्वाद्गणनाया द्विपरार्धकालो ब्रह्मा

युरित्युच्यते। 'एकं दश शतमस्मात्सहस्रमयुतं ततः परं लक्षम्। प्रयुतं कोटिमथार्बुदमब्जं खर्वं ततो निखर्वं च ॥ तस्मान्महासरोजं शङ्कुं सरितांपतिं ततश्चान्त्यम्। मध्यं परार्धमाहुर्यथोत्तरं दशगुणं हि वै तज्ज्ञाः ॥' इति हि गणनाप्रकारः। तथा चोक्तं विष्णुपुराणे—'स्थानात्स्थानं दशगुणं एकस्माद्गण्यते द्विज। ततोऽष्टादशमे भागे परार्धमभिधीयते ॥' इति।

## कालस्य भगवद्विभूतित्वम्।

एवं कालोऽनन्तस्वपरिणामभेदैराब्रह्मस्तम्बपर्यन्तानामुदयस्थितिविनाशहेतुर्भगवतः सृष्ट्यादिके लीलाव्यापारे प्रवृत्तस्य लीलोपकरणं भवति। सर्वशक्तोऽपि भगवान् सत्यसङ्कल्पो यथा स्वसङ्कल्पं तत्तत्कालागमनमपेक्ष्यैव प्राकृतसृष्ट्यादिकं करोतीति। कालस्य भगवच्छक्तित्वं सृष्टिस्थितिसंहारेषु तदुपकरणत्वं च 'स यावदुर्व्या भरमीश्वरेश्वरः स्वकालशक्त्या क्षपयंश्चरेद्भुवि।' 'योऽयं कालस्तस्य तेऽव्यक्तबन्धो चेष्टामाहुश्चेष्टते येन विश्वम्। निमेषादिर्वत्सरान्तो महीयांस्तं त्वेशानं क्षेम धाम प्रपद्ये ॥' (भागवत) 'ब्रह्मा दक्षादयः कालस्तथैवाखिलजन्तवः। विभूतयो हरेरेता जगतः सृष्टिहेतवः ॥ विष्णुर्मन्वादयः कालः सर्वभूतानि च द्विज। स्थितेर्निमित्तभूतस्य विष्णोरेता विभूतयः ॥ रुद्रः कालान्तकाद्याश्च समस्ताश्चैव जन्तवः। चतुर्धा प्रलये ह्येता जनार्दनविभूतयः ॥' (वि. पु.) इत्यादिवचनसिद्धम्। सत्सङ्गिजीवनेऽपि कालस्य परमात्मशक्तित्वं सृष्ट्याद्युपकरणत्वं वर्णितम्—'कालो माया पुमान् यस्य महत्तत्त्वादयस्तथा। शक्तयः सन्ति' 'कार्योत्पत्तौ हि सर्वत्र माया

निरूपितम् ॥ चत्वारि त्रीणि द्वे चैक कृतादिषु यथाक्रमम् । सङ्ख्यातानि सहस्राणि द्विगुणानि शतानि च ॥ सन्ध्यासन्ध्यांशयोरन्तो थ कालः शतसङ्ख्ययोः । तमेवाहुर्युग तज्ज्ञा यत्र धर्मो विधीयते ॥' इत्यादिना । अयमर्थः--कृतयुग चतुःसहस्रदिव्यवर्षकालिकम्, तस्य पूर्वसन्ध्या चतु शत उत्तरसन्ध्या च तावती । त्रेतायुग त्रिसहस्रदिव्यवर्षात्मकम्, तस्य पूर्वसन्ध्या त्रिशत उत्तरसन्ध्या च तावती सन्ध्यांशसंज्ञिता । द्वापरं द्विसहस्रदिव्यवर्षात्मकम्, तस्य पूर्वसन्ध्या द्वे शते, उत्तरसन्ध्या च द्वे शते। कलिरेकसहस्रदिव्यवर्षात्मक , तस्य पूर्वसन्ध्या एक शत सन्ध्यांशश्च तावानिति । त्रैलोक्याद्युद्विश्चतुर्युगसहस्रदिन तावती च रात्रिः । तदप्युक्त--'त्रैलोक्याद्युगसाहस्र बहिराब्रह्मणो दिनम् । तावत्येव निशा तात यन्निमीलति विश्वसृट् ॥' इति । चतुर्दशाना मनूनां कालावधिरप्युक्तस्तत्रैव--'स्व स्व काल मनुर्भुङ्क्ते सान्विकां ह्येकसप्ततिम् ।' इति । किञ्चिदधिकचतुर्युगैकसप्ततिरेकैकस्य मनोः काल इत्यर्थ । इन्द्राश्च चतुर्दश प्रतिकल्पम् । सप्तर्षयोऽपि तथा । मन्वादय स्वस्वाधिकारनिवृत्तौ कल्पान्त यावत्स्वायु परिमाण महरादौ लोके वसन्ति इति चान्यत्र व्यक्तम् ।

मनुष्यादीना स्वस्ववर्षमानेन शतवर्षजीवित्वमुत्सर्गः 'शतायुर्वै पुरुष' इति श्रुते । ब्रह्मणोऽपि स्वीयाहोरात्रप्रमाणेन मासायनसवत्सरक्रमेण शतवर्षजीवित्वमेव । तदुक्त विष्णुपुराणे--'एव तु ब्रह्मणो वर्षमेव वर्षशत स्मृतम्' इति । 'निजेन तस्य मानेन ह्यायुर्वर्षशत स्मृतम् । तत्पराख्यं तदर्धं तु परार्धमभिधीयते ॥' इति च । परार्धपर्यन्तावधित्वाद्गणनाया द्विपरार्धकालो महा

युरित्युच्यते। 'एकं दश शतमस्मात्सहस्रमयुतं ततः परं लक्षम्। प्रयुतं कोटिमथार्बुदमब्जं खर्वं ततो निखर्वं च ॥ तस्मान्महासरोजं शङ्कुं सरितांपतिं ततश्चान्त्यम् । मध्यं परार्धमाहुर्यथोत्तरं दशगुणं हि वै तज्ज्ञाः ॥' इति हि गणनाप्रकारः । तथा चोक्तं विष्णुपुराणे—'स्थानात्स्थानं दशगुणं एकस्माद्गण्यते द्विज । ततोऽष्टादशमे भागे परार्धमभिधीयते ॥' इति ।

## कालस्य भगवद्विभूतित्वम् ।

एवं कालोऽनन्तस्वपरिणामभेदैराब्रह्मस्तम्बपर्यन्तानामुदयस्थितिविनाशहेतुर्भगवतः सृष्ट्यादिके लीलाव्यापारे प्रवृत्तस्य लीलोपकरणं भवति । सर्वशक्तोऽपि भगवान् सत्यसङ्कल्पो यथा स्वसङ्कल्पं तत्तत्कालागमनमपेक्ष्यैव प्राकृतसृष्ट्यादिकं करोतीति। कालस्य भगवच्छक्तित्वं सृष्टिस्थितिसंहारेषु तदुपकरणत्वं च 'स यावदुर्व्या भरमीश्वरेश्वरः स्वकालशक्त्या क्षपयंश्चरेद्भुवि ।' 'योऽयं कालस्तस्य तेऽव्यक्तबन्धो चेष्टामाहुश्चेष्टते येन विश्वम् । निमेषादिर्वत्सरान्तो महीयांस्तं त्वेशानं क्षेम धाम प्रपद्ये ॥' (भागवत) 'ब्रह्मा दक्षादयः कालस्तथैवाखिलजन्तवः । विभूतयो हरेरेता जगतः सृष्टिहेतवः ॥ विष्णुर्मन्वादयः कालः सर्वभूतानि च द्विज । स्थितेर्निमित्तभूतस्य विष्णोरेता विभूतयः ॥ रुद्रः कालान्तकाद्याश्च समस्ताश्चैव जन्तवः । चतुर्धा प्रलये ह्येता जनार्दनविभूतयः ॥' (वि. पु. ) इत्यादिवचनसिद्धम्। सत्सङ्गिजीवनेऽपि कालस्य परमात्मशक्तित्वं सृष्ट्याद्युपकरणत्वं वर्णितम्—'कालो माया पुमान् यस्य महत्तत्त्वादयस्तथा । शक्तयः सन्ति' 'कार्योत्पत्तौ हि सर्वत्र माया

कालश्च कर्म च । स्वभाव ईक्षण पुंसो हरेरिच्छेति हेतव ॥' 'कालादिशक्तिभि स्वाभिर्विश्वसर्गादि कारयन्' इति । हरिवाक्यसुधासिंधौ च 'काल कर्म स्वभावश्च माया च पुरुषोऽक्षरम् । एतास्तच्छक्तय सन्ति ततोऽसौ परमेश्वर ॥' इति । 'काल पचति भूतानि' 'कालोऽयं परमाण्वादिर्द्विपरार्धान्त ईश्वरः । नैवेशितु प्रभुर्भूम्न ईश्वरो धाममानिनाम् ॥' ( भाग ) इत्यादिना च सर्वेषां भूतानामीश्वराणां च कालवश्यत्वं भगवद्व्यतिरिक्तानां प्रतिपन्नम् । परमात्मनस्तु काल प्रत्यपि नियन्तृत्व 'ज्ञ कालकालो गुणी सर्वविद्य ' 'काल स पचते तत्र न कालस्तत्र वै प्रभु' ।' महाकालस्यापि काल त्वा नुम पुरुषोत्तमम्' इत्यादिभिः । सत्सङ्गिजीवने च कालकालत्वमुक्त—'कालस्यापि हि य' काल ' 'नियन्ता कालमायादे ' 'जीवेशकालमायाना नियन्ता पुरुषस्य च । कृष्ण इत्येव निश्चित्य' 'कालस्य स्थूलसूक्ष्मस्य चरतोऽण्डे च तद्बहि । नियन्ता ह्येक एवास्ति' 'कालस्य प्रकृतेश्चापि नियन्ता पुरुषस्य च' इति । तथा च हरिवाक्यसुधासिंधौ कालादेः स्वस्वकार्यशक्तिनिष्पादक परमात्मेति वण्यते—'माया प्रकाशयति च काल तत्क्षोभक च सः' इति ।

एष क्षणाद्यात्मा काल प्रकृतिप्राकृतपरिणामहेतुर्वर्णितः । 'नित्येन प्रलयेनैष कालो नैमित्तिकेन च । प्राकृतिकेन रूपेण चरत्यात्यन्तिकेन च ॥' 'इत्थ प्रभो कालशक्त्या लयैरेतैश्चतुर्विधैः । असद्बुद्ध्याऽखिल तत्रारुचिर्वैराग्यमुच्यते ॥ वासुदेवेतरान् देवान् कालमायावशीकृतान् । विदित्वा तेषु च प्रीतिं

हित्वा तस्यैव नित्यदा ॥ गाढस्नेहेन या सेवा सा भक्तिरिति गीयते।' (वा. मा. अ. २५) 'नित्यो दैनन्दिनश्चैव प्राकृताख्यस्तृतीयकः । आत्यन्तिकश्चेति मातः प्रलयोऽस्ति चतुर्विधः ॥ तत्र प्रकृतिकार्यस्य ब्रह्माण्डस्याखिलस्य च। ब्रह्मादेः स्थावरान्तस्य भोगानां चापि सर्वशः ॥ विनाशो जायते नूनं कालेनैव बलीयसा । एवं क्षयं लोकयतां वैराग्यं तेषु सम्भवेत् ॥' 'मायिकेषु विरक्तानां पदार्थेषु विवर्धते । कृष्णेऽनुरागो जननि! तेन यान्ति परां गतिम् ॥' (स. प्र. १ अ. ३५) इति वचनोक्तप्रकारेण कालगत्या सर्वेषां प्राकृतानां तत्सम्बद्धानां च जीवेश्वराणां क्षरणशीलत्वमनुसन्दधानानां पुनर्भवेन्नाम मायिकेषु भावेषु अरुचिः, भवेच्च नित्यापरिच्छिन्नसाहजिकानन्दरूपे परब्रह्मणि श्रीकृष्णे गाढानुरागेन निरन्तरभजनलक्षणैकाग्रचित्तवृत्तिः, यतो निःश्रेयसमिति स्थितम् ।

यदवच्छेदरूपैस्तु क्षणादिभिरहर्निशम् । भूतानां भौतिकानां च विनाशः स्थूलसूक्ष्मकः ॥ ईश्वराणां च लोकानां यद्वशंवदता ध्रुवम् । सोऽयं कालो वर्णितोऽत्र स्थूलसूक्ष्मस्वरूपभाक् ॥ क्षणादिः सूक्ष्म इत्युक्तः स्थूलः संवत्सरादिकः । मायापुरुषवत्सोऽयं विभूतिर्ज्ञेय ईशितुः ॥



# जीवपरिच्छेद

## जीवस्वरूपम् ।

वर्णिते कालमायाख्ये जडद्रव्ये समासत ।
अथाजडं वर्णनीय तत्रादौ वर्ण्यतेऽजडः ॥ १ ॥
जीवात्मा यत्स्वरूप तु शुद्धमुत्सर्गतोऽपि हि ।
अनादिमायासम्बन्धादशुद्ध कर्महेतुकात् ॥ २ ॥
मायाकार्यसमारब्धदेहयोगवियोगत ।
स्वतोऽनुत्पत्तिनाश च जातादिव्यपदेशभाक् ॥ ३ ॥
आत्मा स्वतोऽनवच्छिन्नबोधानन्दात्मकोऽपि सन् ।
मायया मोहितत्वात्तु भवत्यज्ञश्च दु खित ॥ ४ ॥
मोहितत्वादेव देह जडमप्यभिमन्यते ।
आत्मेति ममतां देहानुबन्धिष्वपि सन्ततम् ॥ ५ ॥
ततो रागद्वेषदोषाभिभूत कुरुते त्वघम् ।
दुरन्तं फलमप्यस्य दु खजात भुनक्ति च ॥ ६ ॥
पुन पुनस्तादृगेव कर्म प्रारभतेऽवशः ।
प्राप्ते विपाकसमये कर्मणा फलमश्नुते ॥ ७ ॥
कालमायाभय चास्य नित्यमेव व्यवस्थितम् ।
एष मायाकर्मबन्धप्रवाहेणाभिभूयते ॥ ८ ॥
शरीर समवाप्त यत्कर्मपाकादनेन हि ।
तदस्य क्षेत्रमाहुस्तद्धेतुतत्त्वान्यमूनि वै ॥ ९ ॥
महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव च ।
अष्टौ प्रकृतयस्त्वेताः क्षेत्रस्यास्मिंश्च षोडश ॥ १० ॥

विकाराः सन्ति रसनाचक्षुस्त्वक्श्रोत्रनासिकाः ।
वाक्पाणिपादपायूपस्था मनश्च गुणास्तथा ॥ ११ ॥
शब्दस्पर्शौ रूपरसौ गन्धश्चेति श्रुतौ श्रुताः ।
कीर्तितं चैव गीतायां क्षेत्रं भगवता स्वयम् ॥ १२ ॥
इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते ।
महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव च ॥ १३ ॥
इन्द्रियाणि दशैकं च पञ्च चेन्द्रियगोचराः ।
इति क्षेत्रारम्भकाणि तत्त्वानि क्षेत्रवृत्तयः ॥ १४ ॥
विकाराश्चैव निर्दिष्टाः सङ्घात इति तस्य तु ।
स्वरूपं जडभूतांशसमुदायात्मकं स्मृतम् ॥ १५ ॥
इच्छा द्वेषः सुखं दुःखमिति तत्कार्यमीरितम् ।
क्षेत्राख्यस्य शरीरस्य सम्बन्धादात्मनः खलु ॥ १६ ॥
सुखादेश्च समुत्पत्तिरतोऽस्य क्षेत्रकार्यता ।
चेतनाधृतिरित्युक्त्या भोगायतनतोच्यते ॥ १७ ॥
कर्मबीजफलोत्पत्तिस्थानत्वेन शरीरिणः ।
शरीरं क्षेत्रमित्युक्तं आत्मा तद्वेदिता मतः ॥ १८ ॥
क्षेत्रस्य वेदनात्सोऽयं क्षेत्रज्ञ इति कथ्यते ।
एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति च स्मृतिः ॥ १९ ॥
ज्ञातृज्ञेयस्वभावत्वाद्विवेको देहदेहिनोः ।
वर्णितो भूतसङ्घाताऽसङ्घातात्मतयापि च ॥ २० ॥
भोगावच्छेदकीभूतं वपुस्तत्करणानि तु ।
इन्द्रियाणि च शब्दादिर्भोगस्य विषयो मतः ॥ २१ ॥

एते तु तारतम्येन प्रतिजीवं व्यवस्थिताः ।
भोक्ता तु पुरुषः प्रोक्तः शरीरादिविलक्षणः ॥ २२ ॥
अणुत्वे सति चित्त्वं वा शेषत्वे चेतनत्वं वा ।
लक्ष्म तस्य तु विज्ञेयं व्यावृत्तमचिदीशतः ॥ २३ ॥
न मायादेश्चित्त्वमस्ति न ह्यणुत्वादि चेश्वरे ।
यथाऽणुत्वादि जीवस्य तथाऽग्रे वर्णयिष्यते ॥ २४ ॥
देहादिरेव जीवात्मा नातिरिक्तोऽस्ति कश्चन ।
इति वादान्निरस्यात्मा तद्व्यावृत्तोऽद्य वर्ण्यते ॥ २५ ॥

## देहात्मवादः ।

अत्र लोकायता मन्यन्ते—योऽयमुपलभ्यते शिरःपाण्यादिलक्षणपिण्डविशेषात्मको देहः स एवात्मा । प्रत्यक्षमतिलङ्घ्य कोऽर्थः सिद्ध्येत् । अहं गच्छाम्यहं स्थूल इति प्रत्यक्षप्रतीतिर्हि गमनस्थौल्याद्याश्रयतयाऽहमर्थं ग्राहयन्ती देहमेवात्मानं गमयति । अनुमानात्तु प्रत्यक्षं प्रबलम् । ननु मृतशरीरे चैतन्यं नोपलभ्यते । किं तेन ; प्राणो हि तदा ततो विनिष्क्रान्तः । तदपगमे च शरीरं विशीर्णमेव । तथा च विनष्टश्चेतन इत्येव ब्रूमः । प्राणस्य ज्ञाने सहकारित्वादपि न मृते तत्प्रसङ्गः । किञ्च रोमहर्षमुखविकासादिसुखकार्यं देहे जायमानं स्वकारणस्य सुखस्य देहधर्मतामेवावगमयति । न ह्यन्यत्र कारणमन्यत्र कार्यमिति घटेत । तस्माद्देह एवात्मा ।

## तन्निरासः ।

ननु—किं शिरसि चैतन्यं मन्यसे, अथ पाणौ, अथ पादे, एकस्मिन्नेवैतेषु तदुपलम्भः कथम् ? । ननु सर्वेषु तेषु, हन्तानेकचेतनसमवायप्रसङ्गः । किं ततः ?, मिथो वैमत्ये विवादप्रसङ्गेन

व्यवहारोच्छेदप्रसङ्गः । अनेकपुरुषाधिष्ठिते ग्रामे वैगत्यं हि अवश्यंभावि । हस्ताद्यन्यतमोच्छेदे तदनुभूतस्य स्मरणानुपपत्तिः, अनुभवितुर्विनाशात् । ननु नावयवे प्रत्येकं चैतन्यम, अपितु शिरःपाण्यादिसङ्घाते । मैवम् । नहि सहतिमात्रेण प्रत्येकतोऽतिरिक्तता । एकत्र सहतानामपि वैमत्यप्रसङ्गोऽनिवार्यः । नन्ववयविनि वपुषि चैतन्यम् । को विशेषस्तावता ? । अवयविगतेन विशेषगुणेनावयवगुणपूर्वकेणैव हि भाव्यमिति प्रत्येकमवयवेष्वपि चैतन्यप्रसङ्गो हि दुर्वारः । ननु पाकजगुणेनेवानेन चैतन्यगुणेनाकारणगुणपूर्वकेणापि भवितुं शक्यम् । अथापि प्रत्येकावयवचैतन्यपक्षोक्तदोषादनिर्मोक्ष एव । पाकजोऽप्यवयवेष्वपि जायमानो हि दृष्टः । किञ्च कारणगुणपूर्वको वा पाकजो वा विशेषगुणो रूपादिर्यावद्द्रव्यभावी दृष्टः । चैतन्यं तु न तथा । तत् कथं तद्वत् देहधर्मो भवितुमर्हति । एतेन किण्वादिभ्यो मदशक्तिवत् अकारणगुणपूर्वकं चैतन्यं देह उत्पद्यत इत्येतदपि निरस्तम् । इदमत्राह प्राभाकरमतानुयायी शालिकानाथः—'स्यादेतत् मदशक्तिवच्चैतन्यमपीति, यथा मदशक्तिः पार्थिवेष्वणुषु असत्यपि तदारब्धे द्रव्ये सुराख्ये निष्पद्यते तथा चैतन्यमपि निष्पत्स्यते इति । तन्न । शक्तेरविशेषगुणत्वात् । शक्त्याख्यो हि गुणः सर्वत्र द्रव्येषु तत्तत्कार्यविषयः कार्यसमधिगम्योऽभ्युपगम्यते । चैतन्यं तु न देहादन्यस्य विद्यते इति विशेषगुणोऽसौ । अपि च—द्रव्यान्तरसंयोगादकार्यभूतेषु पार्थिवाणुष्वकारणगुणपूर्वकोऽपि मदशक्त्याख्यो गुणो नानुपपन्नः । तदारब्धे सुराख्ये कार्यद्रव्ये कारणगुणपूर्व एव, चैतन्यं तु न प्रत्येकपरमाणुष्वभ्युपगम्यते । तस्मात् शरीरादन्यस्य गुणो ज्ञानमिति'

इति । स्थूलोऽहं गच्छामीति प्रतीतिस्तु अहमर्थेदमर्थयोर्भेदाग्रहादेव । स्थूलोऽहं जानामीति च तथैव । देहात्मनोर्गाढसंयोगकारिता चैक्यबुद्धिरत्रान्यधर्मप्रतिपत्तिश्च । यथा अतितप्ते लोहे वह्नि-बुद्धिर्लोहस्त्वबुद्धिश्च । वस्तुतो यथा मम गृहं मम क्षेत्रमिति गृहक्षेत्रादिरात्मनो भिन्नत्वेनैव प्रतीयते एवं मम देह इति देहोऽपि विविक्ततया प्रतीयत एव । ममात्मेति तु घटस्य स्वरूपमित्यादिव-न्नेयम् । न चैवं मम देह इत्यत्रापि सम्भवतीति वाच्यम् । तत्र मम शब्देनावयवपरामर्शे हस्तादीनां मिलितानां चैतन्येऽस्माकं देह इति प्रतिसन्धानप्रसङ्गात् । न च करादि प्रत्येकं चेतनं इत्युक्तमेव । न च ममेति प्राणेन्द्रियविशिष्टस्य शरीरस्य परामर्शः, देह इति तु विशेष्यमात्रस्येति वाच्यम् । सप्राणेन्द्रियस्यापि देहस्य मम देह इति विविच्यानुसन्धानस्य दर्शनात् । अतो ममेदं शरीरमितीदन्तया गेहादिवत्प्रतीयमानो देहो देहिनोऽहमर्थादर्थान्तरभूत इति प्रतीति स्वारस्यादभ्युपेत्यम् । चेतनाधिष्ठिततया च चेष्टादिरिव रोमहर्षाद-योऽपि देहे भवेयुरेव । किञ्च—अहमर्थेदमर्थयोरनन्यतायां 'अहमिदं जानामी'तिप्रत्यये करचरणाद्यवयवयुक्तस्यावभासोऽवर्जनीयः । ज्ञा-तृतयाऽवभासमानस्य तस्य सोऽयमाकृतियोगः कस्मान्न स्फुरति ? । यथाऽऽह शालिकानाथः—'घटमहमुपलभे इति घटस्यानुभविता शरीरातिरिक्तः प्रतिभासते । शरीरं हि करचरणाद्यनेकावयवयोगि । न च घटानुभवसमये तस्यावभासोऽन्वयी । अवश्यं ज्ञातुरव-भासो मेयानुभवेष्वनुवर्तत इत्यास्थेयम् ।' इति । देहो नात्मा सङ्घात-रूपत्वात् घटादिवत् इत्याद्यनुमानतोऽपि देहस्यानात्मत्वसिद्धिः । उक्तं च तत्त्वमुक्ताकलापे—'यो मे हस्तादिवर्ष्मेत्यवयवनिवहाद्वा-

ति भिन्नः स एकः प्रत्येकं चेतनत्वे बहुरिह कलहो वीतरागो न जातः। तत्सङ्घातातिरिक्तेऽप्यवयविनि कथं तेष्वसिद्धा मतिः स्यात् सङ्घातत्वादिभिर्वा घट इव तदचित् स्यान्ममात्मेत्यगत्या ॥' इति।

श्रीविष्णुपुराणे च विप्रसौवीरराजसंवादे देहातिरेक आत्मनः स्पष्टमुपवर्णितः। तथाहि—सौवीरराजेनाज्ञातस्वरूपभवो जडविप्रो शिबिकावाहने नियुक्तो योगीन्द्रोऽपि प्रारब्धं कर्मभोगेन क्षपयिष्यन् शिबिकां वहन् शिबिकावाहकेषु द्रुतगतिष्वयं मन्दगतिः 'किं श्रान्तोऽस्यल्पमध्वानं त्वयोढा शिबिका मम। किमायाससहो न त्वं पीवानसि निरीक्ष्यसे ॥' इति राज्ञा पृष्टस्तस्य देहातिरिक्तात्मबुद्धिमुत्पिपादयिषुः प्रत्युत्तरयामास 'नाहं पीवा न चैवोढा' इत्यादिना। अहंशब्दवाच्यो ह्यात्मा, तस्य न पीनत्वादि, किन्तु भूतपरिणतिभेदस्य देहस्यैव। देहावयव एव च शिबिकावाहको नात्मा 'भूमौ पादयुगं त्वास्ते जङ्घे पादद्वये स्थिते। ऊर्वोर्जङ्घाद्वयेऽवस्थे तदाधारं तथोदरम् ॥ वक्षःस्थलं तथा बाहू स्कन्धौ चोदरसंस्थितौ। स्कन्धाश्रितेयं शिबिका मम भारोऽत्र किं कृतः ॥' इति। ततोऽस्य ज्ञानित्वमवगत्य शिबिकातोऽवरुह्य को भवानिति राज्ञाऽऽपृष्टो देहविषयेऽहंशब्दस्य भ्रान्तिमूलकत्वं 'शब्दोऽहमिति दोषाय नात्मन्येष तथैव तत्। अनात्मन्यात्मविज्ञानं शब्दो वा भ्रान्तिलक्षणः ॥' इति ज्ञापयन् देहेऽहंशब्दस्यानुपपत्तिमेवाह—'पिण्डः पृथक् यतः पुंसः शिरःपाण्यादिलक्षणः। ततोऽहमिति कुत्रैतां संज्ञां राजन् करोम्यहम् ॥ किं त्वमेतच्छिरः किं नु ग्रीवा तव तथोदरम्।

किमु पादादिकं किं वा तवैतत् किं महीपते ॥ समस्तावयवेभ्यस्त्वं पृथग् भूप व्यवस्थितः । कोऽहमित्येव निपुणो भूत्वा चिन्तय पार्थिव ॥' इति । प्रतिशरीरं चेतनैक्यस्यानुभवसिद्धत्वाद्देहस्य चानेकावयवसङ्घातरूपत्वादवयवातिरिक्तस्यावयविनोऽभावाच्च न शरीरस्यात्मत्वमिति यावत् । गीतायां च देहव्यतिरिक्तत्वमात्मनो विस्तरशो वर्णितमस्ति । अत एव देहस्येव नात्मनश्छेद्यत्वादि । हरिवाक्यसुधासिन्धौ च देहादन्यत्वमात्मनः स्पष्टं कथ्यते 'सच्चिदानन्दरूपोऽहं शरीरं तद्विपर्ययं । कथं भवेद् द्वयोरैक्यं तेजस्तिमिरयोरिव ॥' देहो जडो विकारी च कर्मतन्त्रश्च नश्वरः । आत्मा तु नित्यश्चिद्रूपो निर्विकारः प्रकाशकः ॥' इति ।

## इन्द्रियात्मवादखण्डनम् ।

अपरे त्वाहुः—इन्द्रियाण्यात्मेति । नैतदुपपद्यते । तथा सति हि एकस्मिन् वपुषि बहूनां चेतनानां समवायोऽभ्युपगतः स्यात् । बहूनां परस्परवार्तानभिज्ञत्वेन च व्यवहारविलोपप्रसङ्गः । योऽहमद्राक्षं सोऽहं स्पृशामीति प्रत्यभिज्ञानुपपत्तिश्च । सा हि द्रष्टुः स्प्रष्टुश्चैक्यं गमयति । इन्द्रियात्मवादे चान्यो द्रष्टा, अन्यश्च श्रोतेति । दृष्टस्पृष्टेऽप्यर्थे दृष्टमात्रे स्पृष्टमात्र इव भवेत् केवलं दृष्टं न स्पृष्टम्, केवलं स्पृष्टं न दृष्टमिति च प्रत्ययप्रसङ्गः । किञ्च—चक्षुरादीन्द्रियवैकल्ये सति विकलोऽहमिति धीर्नोपपद्येत । चक्षुषि विनष्टे तद्वैकल्येन वैकल्यं कोऽन्यो वेत्तु । भिन्नाश्चक्षुरादय आत्मानः । नान्य-

1 सत्वं नित्यत्वम् चित्त्वं ज्ञानरूपत्वम् । आनन्दत्वं अनुकूलत्वम् ।

2 प्राणेन्द्रियात्मवादिनस्तु सुनिश्चितचार्वाकाः ।

स्यात्मनः अन्येनात्मना साकल्यं वैकल्यं वा । न चान्योऽन्यं वेदितुं प्रभवतीति । चक्षुषा विकलोऽहमिति धिया च गम्यते चक्षुराद्युपकरणसम्पन्नोऽन्य एवाहमर्थ इति ।

## मन आत्मवादः ।

कश्चिदाह—सत्यं चक्षुरादीनीन्द्रियाण्यन्यान्यानि प्रतिनियतार्थावभासकानि, मनस्त्वेकम्, न ततोऽन्य आत्मा । अस्यैवोपकरणतां यान्ति चक्षुरादीनि करणानीति ।

## तन्निरासः ।

ननु किं मनसि प्रमाणं मन्यसे । चाक्षुषश्रावणादीनामेकाश्रयत्वोपपत्तये कल्प्यते तदिति चेन्न । यतो द्रष्टा श्रोता स्प्रष्टा मन्ता च विज्ञानात्मा चेतन एव । ननु—यं त्वं ज्ञातारं वदसि तं मनोऽनन्यं ब्रूमः । आत्मानमभ्युपगच्छता मनोऽप्यभ्युपगम्यते । मनसैव च सर्वनिर्वाहे किमात्मनान्येनेति । मैवम् । प्रतिनियतरूपाद्यर्थतया चक्षुरादीनामिव प्रतिनियतसुखाद्यर्थतया मनसोऽपि करणतयैव हि सिद्धिः । अन्यमना अभूवं यतोऽग्रेऽवस्थितमपि नावेदिषमिति च मनसोऽसन्निधानादात्मनि ज्ञानानुदयं प्रतिसन्धत्ते । तथा च श्रुतिः—'अन्यत्रमना अभूवं नादर्शम्' इति । 'अन्यत्रमना' इति व्यतिरेकनिर्देशोऽवहितेन मनसा शृणु इति च मनसो व्यतिरिक्तमात्मानं गमयति । 'त्रीण्यात्मनेऽकुरुत मनो वाचं प्राणम्' 'मनसा ह्येव पश्यति' इत्यादिश्रुत्या च वागादिवदात्मन उपकरणता मनसो गम्यते । स्मर्यते च भोक्तुरात्मनः प्रधानोपकरणत्वं मनसः—'मन एव मनुष्याणां कारणं बन्धमोक्षयोः । बन्धाय विषयासङ्गि मुक्त्यै निर्विषयं मनः ॥' इत्यादौ । अतो मनो

नात्मा । तथा चोक्तं तत्त्वमुक्ताकलापे—'बाह्याक्षेभ्योऽन्य आत्मा तदखिलविषयप्रत्यभिज्ञातुरैक्यात् कर्तुं स्मृत्यादिकार्ये करणमिति मनो मानसिद्धं ततोऽन्यत् ।' इति ।

## प्राणात्मवादनिरासः ।

देहात्मवादनिरसनेनैव प्राणात्मवादोऽपि निरस्तो भवति । वाय्ववयवसङ्घातरूपा हि प्राणाः । तेषां च प्रत्येकसमुदायचैतन्यविकल्पप्रासाद्देहस्येवानात्मत्वमेव । उक्तं च 'प्राणाः सङ्घातरूपा वपुरुदितनयात् न ध्रुवं चेतयन्ते' इति । देहे प्राणस्थित्यपगमान्यथा जीवस्थास्तिनास्तिव्यवहारात् 'प्राणोऽस्मि प्रज्ञात्मा' इति श्रुत्या च प्राणस्यात्मत्वं स्यादित्यतिशङ्का । प्राणस्यापि आत्मोपकरणतायाः 'त्रीण्यात्मनेऽकुरुत' इत्यादिश्रुत्या प्रतिपादितत्वात् 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति' इति श्रुत्या जीवेन सहोत्क्रान्तिश्रवणाच्च भवति देहे जीवस्थितौ लिङ्गं प्राणस्थितिः । अत एव निरुक्तव्यवहारोऽन्यथासिद्धः । 'प्राणोऽस्मि' इति श्रुतिस्तु इन्द्रप्राणशरीरकपरमात्मविषयेति परिहारः ।

## विज्ञानात्मवादः ।

अपरे त्वतिरिक्तात्मानमाक्षिपन्ति । विज्ञानेनैव सर्वव्यवहारसिद्धे किमन्येन तदाश्रयतया कल्पितेनात्मना । प्रतिदेहं भिन्नभिन्नभवन्तविज्ञानधारा प्रतिक्षणमन्या यथाऽनघटितवाऽनुवर्तमाना लोकसिद्धैव । सैवात्मा । सा च पूर्वपूर्ववासनावैचित्र्यात्तत्तदर्थोपरक्ता भवति कलुषिता, अत एव च बन्धव्यवहारः । सा चेदपगतवासना व्यपेतविषयोपरागा निर्मला भवेत् मुक्तिरिति भवति व्यवहारः । विज्ञानधारोपरतिरेवापवर्ग इति च कश्चित् । नास्ति

नीलादिर्बाह्योऽर्थः, विज्ञानमेव तु तत्तदर्थाकारमवभासते । यथोक्तं 'अविभागोऽपि बुद्ध्यात्मा विपर्यासितदर्शनैः । ग्राह्यग्राहकसंवित्तिभेदवानिव लक्ष्यते' । इति । सत्स्वपि बाह्येषु न ते स्थिराः किन्तु सर्व एव क्षणिका भावा इति ।

## तन्निरासः ।

अत्र ब्रूमः । विज्ञानेनैव सर्वव्यवहारसिद्धेरिति वचसि विज्ञानेन व्यवहारसिद्धिरित्यविवादम् । अवधारणे सर्वशब्दे च विसंवादः । व्यवहारमात्रं ज्ञानज्ञातृज्ञेयसापेक्षम् । व्यवहारो व्यवहर्तारं व्यवहार्यं चानपेक्ष्य स्वात्मानं यथा न लभते तथैव तन्मूलभूतं विज्ञानमपि विज्ञेयं विज्ञातारं चानपेक्ष्य स्वात्मानं न लभते । सत्यमपेक्षताम्, पारमार्थिकौ तावपेक्षते इति कोऽयं नियमः । ताभ्यामपारमार्थिकाभ्यामेव भाव्यमिति वा कोऽयं नियमः ? । ननु भोः—विना विज्ञानं न कस्यचित्प्रकाशः, प्रकाशपथमनुपगतो न व्यवहारपथमुपैति ; अतो व्यवहृतिनिर्वाहाय विज्ञानं तु पारमार्थिकमित्येवाभ्युपेयम् । स्वप्न इव विज्ञानमेवार्थात्मनाऽवभासत इत्युपपन्नः सर्वो व्यवहारः । कृतं पारमार्थिकेनान्येन । हन्त ते वस्तुतत्त्वाभ्युपगमे लाघवपर्यालोचनाकौशलम् । यत्प्रत्यक्षमप्यपलपितुं प्रभवसि । ननु दृश्यते गन्धर्वनगरमिति किं तत् पारमार्थिकम् ? । ननु पश्चात् बाधदर्शनादपारमार्थिकं तत् । नेह नीलादेर्बाधदर्शनम् । ननु सहोपलम्भनियमादभेदो नीलतद्धियोः । हन्त साहित्यनियम एवायमर्थद्वयसत्तां गमयति । साहित्यं हि द्वयोरेव । सहोपलम्भनियमे च उपलम्भकसामग्रीनैयत्यं प्रयोजकम् । अर्थाकारता चासत्यर्थे ज्ञानस्य वासनामात्रेण दुरुपपादा । किञ्च विज्ञानधाराऽनुवर्तत इत्येतावता न

नात्मा। तथा चोक्तं तत्त्वमुक्ताकलापे—'बाह्याक्षेभ्योऽन्य आत्मा तदखिलविषयप्रत्यभिज्ञातुरैक्यात् कर्तुं स्मृत्यादिकार्ये करणमिति मनो मानसिद्धं ततोऽन्यत् ।' इति ।

## प्राणात्मवादनिरासः ।

देहात्मवादनिरसनेनैव प्राणात्मवादोऽपि निरस्तो भवति । वाय्ववयवसङ्घातरूपा हि प्राणाः । तेषां च प्रत्येकसमुदायचैतन्यविकल्पभासाद्देहस्येवानात्मत्वमेव । उक्तं च 'प्राणाः सङ्घातरूपा वपुरुदितनयात् न ध्रुवं चेतयन्ते' इति । देहे प्राणस्थित्यपगमाख्यां जीवस्थास्थितिनास्तिव्यवहारात् 'प्राणोऽस्मि प्रज्ञात्मा' इति श्रुत्या च प्राणस्यात्मत्वं स्यादित्यधिकाशङ्का। प्राणस्यापि आत्मोपकरणतया 'श्रीण्यात्मनेऽकुरुत' इत्यादिश्रुत्या प्रतिपादितत्वात् 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति' इति श्रुत्या जीवेन सहोत्क्रान्तिश्रवणाच्च भवति देहे जीवस्थितौ लिङ्गं प्राणस्थितिः । अत एव निरुक्तव्यवहारोऽन्यथासिद्धः । 'प्राणोऽस्मि' इति श्रुतिस्तु इन्द्रप्राणशरीरकपरमात्मविषयेति परिहारः ।

## विज्ञानात्मवादः ।

अपरे त्वतिरिक्तात्मानमाक्षिपन्ति । विज्ञानेनैव सर्वव्यवहारसिद्धेः किमन्येन सदाप्रमतया कल्पितेनात्मना। प्रतिदेहं भिन्नभिन्नसन्ततिविज्ञानधारा प्रतिक्षणमन्यान्यज्ञानघटिताऽनुवर्तमाना लोकसिद्धैव । सैवात्मा। सा च पूर्वपूर्ववासनावैचित्र्यात्तत्तद्विषयोपरक्ता भवति कलुषिता, अत एव च बन्धव्यवहारः । सा चेदपगतवासना व्यपेतविषयोपरागा विमला भवेत् मुक्तिरिति भवति व्यवहारः । विज्ञानधारोपरतिरेवापवर्ग इति च कश्चित् । नास्ति

नीलादिर्बाह्योऽर्थः, विज्ञानमेव तु तत्तदर्थाकारमवभासते । यथोक्तं 'अविभागोऽपि बुद्ध्यात्मा विपर्यासितदर्शनैः । ग्राह्यग्राहकसंवित्तिभेदवानिव लक्ष्यते' । इति । सत्स्वपि ग्राह्येषु न ते स्थिराः किन्तु सर्व एव क्षणिका भावा इति ।

## तन्निरसः ।

अत्र ब्रूमः । विज्ञानेनैव सर्वव्यवहारसिद्धेरिति वचसि विज्ञानेन व्यवहारसिद्धिरित्यविवादम् । अवधारणे सर्वशब्दे च विसंवादः । व्यवहारमात्रं ज्ञानज्ञातृज्ञेयसापेक्षम् । व्यवहारो व्यवहर्तारं व्यवहार्यं चानपेक्ष्य स्वात्मानं यथा न लभते तथैव तन्मूलभूतं विज्ञानमपि विज्ञेयं विज्ञातारं चानपेक्ष्य स्वात्मानं न लभते । सत्यमपेक्षताम्, पारमार्थिकौ तावपेक्षते इति कोऽयं नियमः । ताभ्यामपारमार्थिकाभ्यामेव भाव्यमिति वा कोऽयं नियमः ? । ननु भोः—विना विज्ञानं न कस्यचित्प्रकाशः, प्रकाशपथमनुपगतो न व्यवहारपथमुपैति । अतो व्यवहृतिनिर्वाहाय विज्ञानं तु पारमार्थिकमित्येवाभ्युपेयम् । स्वप्न इव विज्ञानमेवार्थात्मनाऽवभासत इत्युपपन्नः सर्वो व्यवहारः । कृतं पारमार्थिकेनान्येन । हन्त ते वस्तुतत्त्वाभ्युपगमे लाघवपर्यालोचनाकौशलम् । यत्प्रत्यक्षमप्यपलपितुं प्रभवसि । ननु दृश्यते गन्धर्वनगरमिति किं तत् पारमार्थिकम् ? । ननु पश्चात् बाधदर्शनादपारमार्थिकं तत् । नेह नीलादेर्बाधदर्शनम् । ननु सहोपलम्भनियमादभेदो नीलतद्धियोः । हन्त साहित्यनियम एवायमर्थद्वयसत्तां गमयति । साहित्यं हि द्वयोरेव । सहोपलम्भनियमे च उपलम्भकसामग्रीनैयत्यं प्रयोजकम् । अर्थाकारता चासत्यर्थे ज्ञानस्य वासनामात्रेण दुरुपपादा । किञ्च विज्ञानधाराऽनुवर्तत इत्येतावता न

प्रत्यभिज्ञानिर्वाहः । प्रत्यभिज्ञा हि ज्ञातारं स्थिरमपेक्षते । यथा स्मृतिश्च । ननु धारैका । प्रलोभकमिदं वचनम् । धारा त्वविच्छिन्ना एकेति व्यपदिश्यते । प्रवहत् सलिलं तु भिन्नभिन्नमेव । क्षणिकं विज्ञानं यदुक्तं तत्र न किमपि ज्ञानं स्थिरम् । अन्यदेव दर्शनसमयेऽन्यदेव तु स्मरणसमये । अथैव सति कोऽनुभवति को वा स्मरति । ननु संस्कार उत्तरोत्तरेषु सङ्क्रामति । कोऽयं सङ्क्रमः । उत्तरोत्तरत्र सम्बन्ध इति चेत् स हि स्थिरस्यैकस्य घटेत, न तु क्षणविनाशिनः । अधोनिक्षिप्तस्य मृगमदस्याणवस्तु सर्वतः सूक्ष्मतमा उपर्युपरि वास तु प्रसर्पन्तीति सौरभोपलम्भ उपपद्यते । न च क्षणविनाशिनस्ते । ननु पूर्वपूर्वस्य कारणादुत्तरोत्तरकार्ये वासनाया उत्पत्तिरेव सङ्क्रम । विचारयामः—कयोर्जन्यजनकभाव इति । पूर्वोत्तरयो इति चेत्, पूर्वत्वमुत्तरत्वं च सर्वेषामविशिष्टमिति सत्त्वभेदेन तद्व्यवस्था दुरुपपादेव । न च समानदेशस्थतया नियमः, देशस्यापि स्थिरस्यैकस्याभावात् । नापि सदृशस्य सदृशारम्भकत्वमिति । भिन्नदेशस्थयोरपि जन्यजनकभावप्रसङ्गात् । एतेन ‘तस्मा दालयविज्ञानं यत्स्यादहमास्पदम् । तस्यात्प्रवृत्तिविज्ञानं यन्नीलादिकमुल्लिखेत् ॥’ इत्युक्तरीत्या आलयविज्ञानकल्पनयाऽपि न निस्तारः । तस्यापि क्षणिकत्वेन प्रत्यभिज्ञादेर्दुर्घटत्वात् । किञ्च अहं जानामीत्यहमर्थधर्मतया प्रतीतेः ज्ञानस्यात्मत्वकल्पनमनुपपन्नम् । आलयविज्ञानस्य च न वस्तुतो ज्ञातृत्वमनुमन्यते भवता । न च ज्ञातृत्वप्रतीतिर्भ्रान्तिः, नाहं जानामीति बाधबुद्धेरदर्शनात् । उक्तं चैतत्सर्वं तत्त्वमुक्ताकलापे—‘ज्ञानं च ज्ञातृधर्मः क्षणिकमपि च यत्तेन नात्यात्मभावः’ इति ।

नैकस्यार्थो नैकस्यानर्थो नैको नैकेनोपायेन नैकमर्थं साधयतीति व्यवहारव्यवस्थामात्रोच्छेदप्रसङ्गेन अनर्थावहतो न निवर्तेरन् प्रजा इति हन्त सुगतो वैराग्यमाधातुं तत्त्वमुपदिशतीति व्यामोहनम्।

## अद्वैतमतनिरासः।

एतेन नित्यमेकं विज्ञानमवलम्ब्य वेदान्तहार्दनिरूपणाय प्रवृत्तानामभिमतिरपि परास्ता। ननु वयं ज्ञेयं नापलपामः। अनृतमिति तु ब्रूमः। ननु सांवृतमिदमखिलमिति वदतः सौगतस्य आविद्यकमनृतमिति वदतस्तव च को विशेषः?। ननु ज्ञानमेव ज्ञेयात्मना भातीति ते। वयं तु ब्रूमः—नित्ये विज्ञानात्मनि अज्ञानेन परिकल्पितं शुक्ताविव रजतं यावद्व्यवहारमनुवर्तते। व्यवहारमूलभूतेऽज्ञाने विनष्टे निवर्तते सर्वोऽयं ज्ञातृज्ञेयभेदः। अज्ञानपरिकल्पितत्वात् ज्ञानैकनिवर्त्यत्वाच्चानृतमिति। अत्राह शालिकनाथः प्रकरणपञ्चिकायां—'एषोऽपि माहायानिकपक्षानुप्रवेशिनां ब्रह्मवादिनां व्यामोह एव। प्रत्यक्षप्रमाणसिद्धं ज्ञातृज्ञानज्ञेयभेदं शुक्तिरजतादिवदनृतमिति वदन् प्रमाणमर्यादामतिलङ्घते। सोऽयं कथं प्रमाणशरणानां कोटौ प्रवेशमर्हति।' इति। ननु प्रत्यक्षमप्याम्नायेन बाधितार्थतया न तत्त्वावेदकम्। यावद्व्यवहारं तु न बाध्यते इति प्रमाणव्यवस्था। तदिदं व्याहतं वचनम्, प्रमाणमप्रमाणं चेति। ननु को ब्रूते अप्रमाणमिति। व्यवहारपथे वर्तमानानामेव प्रमाणाप्रमाणचिन्ता। तदा प्रमाणमेव प्रत्यक्षम्। हन्त तर्ह्याम्नायोऽपि व्यवहारपथे वर्तमानमधिकृत्यैवेति वक्तव्यम्। एवं सत्याम्नायेन प्रत्यक्षस्य बाधः कथम्?। प्राबल्यादिति चेत्। किं प्राबल्यम्? आम्नाय इत्येव। मैवम्। शब्दराशौ लौकिकवचसां श्रौतवचसां च विरोधे प्राप्ते

पुरुषबुद्धिदोषमूलकत्वेन पौरुषेयवचसा दौर्बल्यम् । अपौरुषेयतया नित्यनिर्दोषतया चाम्नायवचसां प्राबल्यमिति युक्तम् । न तु अबाधितमपि प्रत्यक्षं श्रुतिर्बाधते इति । यत्र च प्रत्यक्षविरुद्धोऽर्थः श्रूयते, (आदित्यो यूप इत्यादौ) तत्रापि गौण्या वृत्त्या प्रत्यक्षाविरुद्ध एवार्थः उन्नेयः । अयमेव च प्रमाणनयनमार्गः ।

ननु भेदनिषेधश्रुतीनां प्रामाण्यं हीयेत । भेदश्रुतीनां प्रामाण्यं हीयेतेत्यत्र कं समाधिं पश्यसि । ननु व्यवहारतोऽवगतं भेदमनूद्य तत्त्वमवगमयन्ती श्रुतिस्तं प्रतिषेधति । ननु लोकतोऽनवगतः प्रकृतिपुरुषयोर्भेदः, तथा पुरुषाणां भेदः, ईश्वरस्य चैतेभ्यो भेदः, एवमप्राप्तमर्थजातमवगमयन्ती श्रुतिस्तदैव बाधते इति कथमुपपद्येत ? । ननु बाधो व्यक्तः । तेन विधिवचनं बाधितं स्यात् । मैवम् । विरोधे हि बाधः । विषयभेदव्यवस्थया भेदतन्निषेधश्रुत्योरविरोधेन नयने कस्ते प्रद्वेषः ? । तथाहि, सर्वस्य कार्यस्यास्य कारणात्मतालक्षणो हि भेदो निषिध्यते । घटशरावादीनां स्वात्मना मिथो भेदेऽपि मृदात्मतालक्षणभेदो हि नैव । ब्रह्मणश्च सकलजगदुपादानता तत्रतत्र श्रूयते । न चासत्कार्यवादमनुमन्यते श्रुतिः । एकस्यापि नानात्मना परिणमतः कारणकार्यावस्थाभेदेन एकत्वं नानात्वं चाबाधितं न्यायोपेतं च । तदेवं विषयभेदेन विरोधपरिहरणे सुकरे श्रुत्योरेव मिथ उपमर्द्योपमर्दकभावं कस्मात्कल्पयसि ? । ननु वचनयोर्द्वयोः समबलत्वे सम्पाद्यो विषयभेदः । प्रबला तु भेदनिषेधश्रुतिः, दुर्बला तु भेदश्रुतिः । ननु किं प्राबल्यं तस्याः ? । भेदश्रुत्युपमर्दैव तन्निषेधश्रुतिरुदेतीति । हन्त 'अग्नीषोमीयं पशुमालभेत' इति श्रुतिमुपमृद्यैव 'मा हिंस्यात्सर्वा भूतानि' इति श्रुतिरुदेतीति आलभनश्रुत्यपेक्षया हिंसानिषेधश्रुतेः

प्राबल्यादालभनश्रुतिर्बाध्येत । ननूत्सर्गापवादन्यायमविजानतोऽयमाक्षेपः । तत्र हि निषेधश्रुतिर्विधीयमानादन्यत्रावकाशं प्राप्य स्वयमपसरत्यनुपमृद्यैव विधिम् । ननु भोः श्रूयमाणं भेदमनुपमृद्यैवापसर्पेति विषयान्तरलाभेनेति सुशकं वक्तुमत्रापि । ननु 'नेह नानास्ति किञ्चन' इति निषेधश्रुतिर्भेदमात्रं क्रोडीकरोतीति चेत् । 'मा हिंस्यात्सर्वा भूतानि' इति श्रुतिर्भूतमात्रमपि क्रोडीकरोतीति तुल्यं तत्रापि । अपच्छेदनयश्च प्रयोगे प्रवर्तते न तु वचनार्थविनिर्णये । किञ्च—क्वचिदर्थे विवदतोरस्ति नास्तीति स्वस्वपक्षसाधनाय प्रतिज्ञावाक्यं प्रयुञ्जानयोर्वादिप्रतिवादिनोर्नास्तीति निषेधं प्रयुञ्जानः प्रतिवादी निषेधवचनस्य भाववचनोपमर्दनपूर्वकमेव समुत्थानात् प्राबल्येन प्रतिज्ञाप्रयोगमात्रेण विजयी भवेत् ।

ननु कारणमात्रस्य सत्यता कार्यमात्रस्यासत्यता च कण्ठरवेण श्रुत्यैव प्रतिपाद्यते 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' इति । अनेन कारणभूतस्य ब्रह्मणः सत्यता कार्यभूतस्य प्रपञ्चस्यासत्यता च व्यक्तमवगम्यते । नैवम् । कारणादनन्यतैव तु कार्यमात्रस्य प्रतिपाद्यतेऽत्र नासत्यता । अवस्थाभेदेऽपि घटशरावादिकार्यजातं कारणभूतान्मृद्द्रव्यान्नार्थान्तरम्, मृत्तिकेत्येव हि अबाधितेन प्रत्यक्षेण गम्यते । सत्यता चाबाधितप्रत्ययसिद्धता । ननु सदेव चेत् कार्यं नापूर्वम्, तर्हि भिन्नभिन्नव्यवहाराणां किमालम्बनम् । उच्यते—योऽयमवस्थाविशेषलक्षणो विकारभेदः, तत्प्रयुक्तश्च नामभेदः, तदुभयमेव वाचारम्भणम्—भिन्नभिन्नव्यवहारालम्बनम् । अतोऽसदेवोत्पद्यते इत्यपास्तम् । तदेवं स्वरसतो वाक्येनावगम्यमाने श्रुतेर्हार्दे क्व अध्यासवादस्य प्रसङ्गः । एकविज्ञानेन सर्वविज्ञानप्रति-

ज्ञानं च कार्यस्य कारणानन्यतायामेव स्वरसगतिकम्, न तु मिथ्यात्वे। शुक्तिस्वरूपे ह्यवगते कल्पितं रजतं बाध्यते, नतु विज्ञायते। विस्तरस्त्वन्यत्र। अतो ज्ञातृज्ञेयज्ञानभेदोऽबाधित-प्रतीतिसिद्धो यथार्थ एवेत्यास्तां तावत्। प्रकृतमनुसरामः।

देहेन्द्रियार्थमनःप्राणबुद्धिभ्योऽन्यत्वं चात्मनस्तैत्तिरीये अन्नमय-प्राणमयमनोमयेभ्योऽन्यत्वस्य विज्ञानमये ज्ञातरि प्रतिपादनादवग-म्यते। तथा आत्मनः शरीरादीनां च रथित्वस्य रथादित्वस्य च रूपणमुखेनोपकरण्युपकरणभावप्रतिपादनादपि शक्यमवगन्तुम्। तथा च कठश्रुतिः—'आत्मानं रथिनं विद्धि शरीरं रथमेव च। बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च॥ इन्द्रियाणि हया-नाहुर्विषयांस्तेषु गोचरान्। आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहु-र्मनीषिणः॥' इति।

सत्सन्निजीवने च देहेन्द्रियादिभ्योऽन्यत्वमात्मनः स्पष्टं वर्णित-मस्ति। यथा—'आत्मा जीव इह प्रोक्तो व्याप्य सर्वं वपुः स्थितः। बाह्यान्तःकरणानां तद्देवतानां प्रकाशकः॥ जाग्र-तादिष्ववस्थासु स्थूलादिषु वपुष्षु च। बद्धस्तादात्म्यसम्ब-न्धाद्वस्तुतस्तद्विलक्षणः॥ यथैव गोलकं लौहं तादात्म्येन धनञ्जय। व्याप्य स्थितोऽपि तद्भिन्नलक्षणोऽस्ति तथा ह्यसौ॥' 'स्थूलादिदेहत्रितयमानखादाशिखं च यः। व्याप्येन्द्रियान्तः-करणैः करोति विविधाः क्रियाः॥ अजो नित्यः शाश्वतश्च निरंशश्च प्रकाशकः। सोऽच्छेद्यादिगुणो ज्ञेयो जीवात्मा वर्णिसत्तम॥' 'चिद्रूप आत्मा विज्ञेयः साक्ष्यवस्थात्रयस्य च। देहेन्द्रियमनःप्राणबुद्ध्यादीनां प्रकाशकः॥' 'स्थूलादिदेहत्रि-

तयं सहाध्यात्माधिदैवतम् । गुणास्त्रयस्तथावस्था एतत्क्षेत्रमितीरितम् ॥ य एतद्वेत्ति स त्वात्मा क्षेत्रज्ञ इति कथ्यते । सामान्यसत्तया देहं स सर्वं व्याप्य वर्तते ॥ विशेषसत्तया त्वास्ते हृदि क्षेत्रज्ञ एव च । रत्नदीपप्रतीकाशो ज्ञाता सूक्ष्मोऽणुवद्ध्रुवः ॥' 'श्रोत्रमध्यात्ममित्युक्तं दिशस्तत्राधिदैवतम् । श्रोतव्यमधिभूतं तत्पुमांस्ताभ्यां प्रपद्यते ॥' इत्यारभ्य 'अध्यात्मादिविभागोऽयं स्फुटं त्रेधा निरूपितः । तत्र द्वे करणे ज्ञेये ज्ञेयं कर्म तृतीयकम् ॥ स त्रिष्वन्यतमाभावे कर्तुं न क्षमते क्रियाः । तथापि संविद्रूपोऽस्ति स्वयं तेभ्यः पृथक्स्थितः ॥' इति । हरिवाक्यसुधासिन्धौ च—'देहेन्द्रियान्तःकरणदेवताविषयादितः । बोद्धव्यः पृथगात्मा तु' 'चिद्रूपो ज्ञानवान्नित्यो निर्विकारः सुखात्मकः । स्थिरः सदैकरूपश्च स्वप्रकाशोऽतिनिर्मलः ॥ असङ्गी व्यापको द्रष्टा दिव्योऽच्छेद्यादिलक्षणः । अनङ्गोऽमायिकोऽमृत्युरात्माऽस्तीत्यवधार्यताम् ॥' 'चतुर्विंशतितत्त्वेभ्य आत्मा ज्ञेयः पृथक् परः' इति । सिद्धमेतावता देहादिभ्योऽन्य आत्मेति ।

## आत्मनः स्वयम्प्रकाशत्वम् ।

ननु—सिद्धान्तेऽप्यात्मा ज्ञानरूपः, तत्कथमात्मनो ज्ञानरूपत्वनिषेधः । उच्यते—यदिदं घटपटादिविषयावगाहि ज्ञानं घटमहं जानामीति प्रतीत्याऽहमर्थधर्मतया प्रतीयते तस्य नात्मत्वम् । किन्तु सविषयज्ञानाश्रयोऽहमर्थ एव धर्मितया प्रतीयमान आत्मा । स्वप्रकाशत्वात्स ज्ञानरूपोऽपि । स्वेतरनिरपेक्षप्रकाशत्वं च स्वयम्प्रकाशत्वम् । ज्ञानाश्रयस्यात्मनो ज्ञानरूपत्वात् धर्मभूतज्ञानस्यात्मस्वरूप-

निरूपकत्वेन स्वरूपनिरूपकधर्मशब्दस्य धर्मिपर्यन्तत्वाच्च 'यो विज्ञाने तिष्ठन्' इत्यादिश्रुतौ विज्ञानशब्देन संशब्दनम्। तथा च सूत्रम् 'तद्गुणसारत्वात्तद्व्यपदेशः प्राज्ञवत्' 'यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात्' इति। अत्र चकारेण स्वरूपस्य ज्ञानरूपत्वं ज्ञानव्यपदेशे निमित्तं क्रोडीकृतम्। सदा स्वयम्प्रकाशत्वादेव नात्मनि कदापि सन्देहः भवेत्यहमस्मि न वेति। 'कोऽयमात्मा योऽयं प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः' 'अत्रायं पुरुषः स्वयंज्योतिर्भवति' 'यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एव एवं वा अरेऽयमात्माऽनन्तरोऽबाह्यः कृत्स्नो प्रज्ञानघन एव' 'विज्ञानघन एव' इत्यादिश्रुतयश्चात्मनो ज्ञानरूपत्वे प्रमाणानि। न च ज्ञानस्य सविषयकत्वनियमात्स्वरूपस्य निर्विषयकस्य कथं ज्ञानत्वम्। स्वरूपज्ञानस्यापि स्वरूपविषयकत्वादेव सविषयकत्वोपपत्तेः। ननु स्वभिन्नविषयकत्वमपि ज्ञानस्य दृष्टम्। सत्यम्। तत्तु धर्मभूतस्य। धर्मिणस्तु स्वरूपविषयकत्वमेव। वस्तुतोऽत्रापि प्रत्यक्त्वैकत्वानुकूलत्वविषयकत्वमस्त्येव। अहमर्थो हि प्रत्यक्त्वेनानुकूलत्वेनैकत्वेन च स्वतो भाति। अत एव न स्वात्मन्येकानेकत्वसन्देहोऽहमनहत्वसन्देहोऽपि वा कदाप्युदेति।

## आत्मनः सुखत्वम्।

स्वरूपस्य सुखरूपत्वं तु 'सुखमहमस्वाप्स'मिति सुप्तोत्थितमतिसन्धानाज्ज्ञायते। अनेन हि स्वापकालिकं सुखत्वं स्वतोऽनुकूलत्वलक्षणमनुभूतं प्रतिसन्धीयते। न च स्वापकाले विषयानुभवजं सुखमनुभूतम्। विषयानुभवस्य तदानीं विरहात्। न च यथेदानीं सुखं भवति तथा पूर्वमस्वाप्समिति शक्यमुत्प्रेक्षितुम्। अतथाकार-

त्वात्प्रतिपत्तेः । क्रियाविशेषणेन हि क्रियासमानकालिकेन भूयते । 'मन्दमगच्छं मधुरमगाय'मित्यादौ तथैव दर्शनात् । न चैवमपि स्वापस्यैव सुखत्वं स्यात् नात्मन इति वाच्यम् । निरस्तनिखिलविकल्पस्वरूपावस्थितिलक्षणत्वात्स्वापस्य तत्सुखत्वस्य स्वरूपसुखत्व एव विश्रमात् । न च स्वरूपभूतज्ञानस्य संस्कारानाधायकत्वात् कथं सुखत्वांशे स्वरूपे च प्रतिसन्धानरूपत्वं निरुक्तप्रत्ययस्येति वाच्यम् । पूर्वगृहीतार्थग्राहित्वमात्रेण प्रतिसन्धानवाचोयुक्तेः । स्वरूपं तत्सुखत्वं च स्वापेऽप्यनुभूतं स्वरूपेणैव । जागरेऽपि तथैव गृह्यते । अस्वाप्समिति स्वापांशे त्वनुमितिः । आत्मानुभवलक्षणकैवल्यार्थिप्रवृत्त्या चात्मनः सुखरूपत्वं ज्ञातुं शक्यम् ।

## आत्मनोऽहमर्थत्वम् ।

स्वप्रकाशोऽयमात्मा अहमित्येव प्रकाशते, प्रत्यक्त्वात् । इदमहंबुद्धिशब्दाभ्यां हि पराक्प्रत्यक्तत्त्वविवेकः । योऽहमिति न भासते नासौ प्रत्यक् यथा घटः । स्वस्मै स्वयंप्रकाशत्वं च प्रत्यक्त्वं न स्वयंप्रकाशत्वमात्रम् । तच्चाहंबुद्धिशब्दव्यवस्थाप्यम् । ननु जडोऽपि देहः अहमिति भासते—स्थूलोऽहं गौरोऽहमिति । सत्यं, देहात्मभ्रमवतां त्वेवमेव प्रतीतिः । देहात्मविवेकवतां तु 'नाहं देवो मनुष्यो वा न तिर्यक् स्थावरोऽपि च । शरीराकृतिभेदास्तु देवाद्याः कर्मयोनयः ॥' इत्येव । यतः स्थूलोऽहमित्येवाकारो देहात्मभ्रमस्य, अतोऽपि आत्मनोऽहमर्थत्वं स्थितम् । 'एतावन्तं कालं न किञ्चिदहमज्ञासिष'मिति सुप्तोत्थितप्रतिसन्धानेन च सुषुप्तिकाले विषयज्ञानसामान्यस्य विरहोऽहमर्थस्य स्फुरणं च सिद्ध्यति । अतः सुषुप्तिकालेऽपि स्वतःसिद्ध्यन्नात्माऽहमर्थ एव । चैतन्यमेव अज्ञानसाक्षि-

तथा सुषुप्तौ वर्तते, अहमर्थस्त्वन्तःकरणं न तदेति तादृस्योपलम्भ-विरोधः स्थितः । अनेन हि प्रतिसन्धानेनाहमर्थस्य प्रकाशः सविषयकज्ञानसामान्यविरहश्च सिद्ध्यति । ननु मामप्यहं न ज्ञातवानिति अहमर्थस्यापि सुषुप्तौ प्रतीत्यभाव सिद्ध्यति । नैवम् । जागरावस्थदेहसुखादिबाह्यान्तराकारविशिष्टविषयकप्रतीत्यभावस्यैव तद्विषयत्वात् । अहमर्थस्यैव सदाऽप्रतीतौ तत्कालीनाहमर्थावस्थितिपरामर्शस्यायोगाच्च । स्वापात्पूर्वं कृतस्यापरदिने प्रतिसन्धानाच्चाहमर्थस्य स्वापे नाशो नाभ्युपगन्तुमुचितः । किञ्च ममैव नित्यमपरिच्छिन्नं सुखं भविष्यतीतीच्छया मोक्षोपायादौ प्रवर्तते पुमान् । स चेदहमर्थनाशं मोक्षे जानीयात् नैव प्रवर्तते तत्र । स्वरूपनाशस्यापुरुषार्थत्वात् । ननु निर्विशेषसच्चिदानन्दरूपमेव स्वस्य स्वरूपं तदवाप्तीच्छया मोक्षोपायेषु स्यात्प्रवृत्तिः । नैवम् । स्वर्गादेर्देहत्यागानन्तरभाविफलस्य भोक्तुर्देहातिरिक्तस्य देहनाशेऽप्यनाशेन इच्छाविषयत्वेन स्याभाम तदुपायेषु प्रवृत्तिः । भोक्तुरेवाहमर्थस्य मोक्षदशायां नाशे तु ज्ञाते न तथाविधाय मोक्षाय कोऽपि स्पृहयेन्मनःपूर्वकमिति । मुक्तात्माप्यहमित्येव प्रकाशते स्वस्मै प्रकाशमानत्वात् यथोभयसम्प्रतिपन्नो मदात्मा इति न्यायेन च मुक्तावपि अहमर्थप्रकाशः स्थितः । अत एव मुक्तस्य व्यवहारः 'अहमन्नम्' इत्यादिः । निरस्तसमस्ताविद्यादिदोषगन्धस्य परमेश्वरस्यापि अहमित्येव स्वस्वरूपानुसन्धानं 'हन्ताहमिमास्तिस्रो देवता' 'न त्वेवाहं जातु नासम्' इति । प्रत्यात्मकस्यसाक्षात्कारनिर्धूतनिखिलाविद्यानां वामदेवादीनामपि अहमित्येव स्वात्मानुभवः 'अहं मनुरभवमहं सूर्यश्च' इति । वेदपुरुषोऽपि स्वरूपमहमित्येव निर्दिशति 'मुमुक्षुर्वै शरणमहं प्रपद्ये'

इति। अतोऽहमर्थ एव आत्मा। तथाचोक्तं श्रीभाष्ये—'अहमर्थो न चेदात्मा प्रत्यक्त्वं नात्मनो भवेत्। अहंबुद्ध्या परागर्थात्प्रत्यगर्थो हि भिद्यते। निरस्ताखिलदुःखोऽहमनन्तानन्दभाक् स्वराट्। भवेयमिति मोक्षार्थी श्रवणादौ प्रवर्तते॥ अहमर्थविनाशश्चेन्मोक्ष इत्यध्यवस्यति। अपसर्पेदसौ मोक्षकथाप्रस्तावगन्धतः॥ मयि नष्टेऽपि मत्तोऽन्या काचिज्ज्ञप्तिरवस्थिता। इति तत्प्राप्तये यत्नः कस्यापि न भविष्यति॥ स्वसम्बन्धितया ह्यस्याः सत्ता विज्ञप्तितादि च। स्वसम्बन्धवियोगे तु ज्ञप्तिरेव न सिद्ध्यति॥ छेत्तुश्छेद्यस्य चाभावे छेदनादेरसिद्धिवत्। अतोऽहमर्थो ज्ञातैव प्रत्यगात्मेति निश्चितम्॥' इति। उक्तं चाभियुक्तैः—'प्रत्यक्त्वादुपलम्भतो मम सुखं भावीति मोक्षेच्छया मुक्तब्रह्ममुमुक्षुवेदवचसां सुप्तोऽहमित्युक्तितः। मां नाज्ञासिषमित्यपि स्ववपुराद्यज्ञानमात्राश्रयात् स्वापप्राच्यनिजक्रियास्मरणतोऽप्यात्माहमर्थः स्थिरः॥' इति।

## आत्मनो ज्ञातृत्वम्।

अहं जानामीति प्रतीत्या ज्ञानाश्रयत्वमपि अहमर्थस्यात्मनः सिद्ध्यति। श्रूयते च ज्ञानस्वरूपस्यैवात्मनो ज्ञानाश्रयत्वमपि—'एष हि द्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः—'यो वेदेदं जिघ्राणीति स आत्मा' इति। ननु ज्ञानस्य ज्ञानाश्रयत्वं न लोके दृष्टम्। ननु तस्य स्वातन्त्र्यमपि न दृष्टम्। शास्त्रबलात्स्वातन्त्र्यमिष्यते चेत् तद्बलादेव ज्ञातृत्वमपीष्यताम्। धर्मभूतस्यैव तु ज्ञानस्य पारतन्त्र्यं ज्ञानानाश्रयत्वं च न धर्मिणः। ज्ञानस्वरूपस्यापि ज्ञानाश्रयत्वं तेजोरूपप्रदीपस्य तेजोरूपप्रभाश्रयत्व-

सुखमेव । हरिवाक्यसुधासिन्धौ चात्मनो ज्ञानरूपत्वं ज्ञानाश्रयत्वं च वर्णितमस्ति—'ततो जीवः स्वरूपतः स्वभावतश्च चिद्रूपः' 'चिद्रूपो ज्ञानवान् नित्यो निर्विकारः सुखात्मकः ।' इति ।

यत्तु अन्तःकरणमेवाहमर्थः, चिच्छायापत्त्या भवति जानाम्यहमिति भ्रमः । इति । तत्रेदं विचार्यते—केयं चितश्छायापत्तिः । ननु चिदिति ज्ञप्तिमात्रम्, छायापत्तिश्च तस्य प्रतिफलनं दर्पण इव मुखस्यान्तःकरणेऽहमर्थे । अत एव दर्पणनिष्ठतया मुखस्येव अहमर्थनिष्ठतया ज्ञानस्य भवत्यारोपः अहं जानामीति । नैतद्युक्तम् । प्रतिफलता हि चाक्षुषेण भाव्यम् । यत्र प्रतिफलति तेनापि चाक्षुषेण भाव्यम् । बिम्बप्रतिबिम्बभावयोगो हि तत्रैव दृष्टः । ननु छायापत्तिरिति न मुख्यार्थम्, अध्यासमात्रपरमिति चेत् । कस्य कस्मिन्नध्यासः ? । ननु ज्ञानस्यान्तःकरणेऽहमर्थे । इदमपि न युज्यते । अध्यासो ह्यन्यत्र सतोऽन्यत्रारोपः । न चाहमर्थाद्न्यत्र ज्ञानं वर्तमानतया दृष्टम् । ननु नायं नियमः अध्यस्यमानेनान्यत्र सता भाव्यमिति । तर्ह्यसत्तस्मिन्नसता भाव्यमित्येव । एवमप्यध्यस्तस्यानृतत्वेन ज्ञानमात्रस्यानृतत्वापत्तेः । सत्यं ज्ञानमेव न सिद्ध्येत्तव । ननु अनध्यस्तं ज्ञानं स्वतन्त्रं निराश्रयं निर्विशेषं चास्ति सत्यमिति चेत् । न तत्र प्रमाणमुपलभामहे । किञ्च—शुक्तौ रजतमिवाहमर्थेऽन्तःकरणे ज्ञानं कल्पितं चेत्तस्य जातु बाधेन निषेधेन भाव्यम् । न च बाधः । नहि भवति नाहं ज्ञातेति । अपि तु ज्ञाता कर्ता भोक्ताऽहमित्येवाबाधितः प्रत्ययः । नन्वास्तामबाधितः प्रत्ययः, अहमर्थस्त्वन्तःकरणमेव, नात्मेति चेत् । किं ततः ? । अहमर्थेऽन्तःकरणे ज्ञानमध्यस्तमित्येतत्तु परित्यक्तम् । एतेन अभि-

संपर्कादयःपिण्डे औष्ण्यभ्रम इव चित्संपर्काद्भवत्यहमर्थेऽन्तः-करणे ज्ञातृत्वभ्रमः इत्यपि निरस्तम् । न हि सन्निहितेऽग्नावौष्ण्य-मिव सन्निहिते चिन्मात्रे ज्ञातृत्वमस्ति, यत्संपर्काज्ज्ञातृत्वमन्तःकर-णेऽध्यस्यत इति वक्तुं शक्येत । ननु भोः न वयं ज्ञातृत्वस्याध्यासं ब्रूमः, किन्तु घटतद्रूपादौ दृष्टस्य धर्मिधर्मभावस्य अहमर्थभूतान्तः-करणज्ञानयोरध्यासमभिमन्यामहे । सान्निध्यमनयोरस्मिन्नध्यासे मूलभूतो दोषः । सत्यमभिमतिरियं भवतः । अन्तःकरणे ज्ञान-धर्मित्वाध्यासवत् ज्ञाने अन्तःकरणधर्मित्वाध्यासो वा किं न स्यात्?, सान्निध्यदोषतौल्यात् । वस्तुतो युष्मदर्थलक्षणस्यान्तःकर-णस्यास्मदर्थत्वमनुपपन्नमेव । कापिलैः सह सौहार्दमहमर्थविनि-र्णये । कल्पते हन्त लाभाय पुरुषार्थविधूनने ॥ तस्मात्सिद्धं निर्बाधयाऽहं जानामीति प्रतीत्या ज्ञानस्यात्मधर्मत्वम् । एतन्निरू-पणं चैतत्परिच्छेदान्ते भविष्यति ।

## आत्मनः कर्तृत्वम् ।

कर्तृत्वमप्यस्यैव धर्मः । तथाहि 'भोक्ता भोग्यं प्रेरितारं च मत्वा' इति चिदचिदीश्वररूपतत्त्वत्रयं निरूपयन्ती श्रुतिश्चेतनं भोक्तृत्वेन लक्षयति । भोक्तृत्वे प्रयोजकं च कर्तृत्वम् । नह्यन्यः करोति अन्यो भुङ्क्ते इत्युपपद्येत । कर्मकर्तुरेव च कर्मणः फलम् । समर्थयति च कर्तृत्वमात्मनः सूत्रकारः 'कर्ता शास्त्रार्थवत्त्वात्' इति । तथा चोक्तं हरिवाक्यसुधासिन्धौ—'ज्ञाता देहेन्द्रियादीनामात्मा बोध्यः पृथक् पृथक् । एषां स्वरूपवक्ता च श्रोता मन्ता प्रमा-पकः । सर्वक्रियाणां कर्तेत्थमात्माऽस्मीत्यवधार्यताम् ॥' इति ।

यत्तु कैश्चित् कर्तृत्वं प्रकृतेरिष्यते तत्तु प्रत्यक्षतो व्याहतम् । अह-

इदं च कर्तृत्वं परमात्मायत्तम् । 'परात्तु तच्छ्रुतेः' इति सूत्रकारश्चाह । श्रुतिश्च 'अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा' 'य आत्मानमन्तरो यमयति' इति । उक्तं च तत्त्वमुक्ताकलापे— 'बोद्धा कर्ता च भोक्ता दृढमवगमितः प्रत्यगर्थः प्रमाणैः कर्तृत्वाभाववादे स्वयमिह भगवानान्यपर्यं त्वगायत् । कर्ता शास्त्रार्थवत्त्वात् कृतिषु च स पराधीन आभाषि सूत्रैश्चित्रैः कर्मप्रवाहैर्यतनविषमता सर्वतन्त्राविगीता ॥' इति ॥ उक्तं च पारतन्त्र्यं जीवानां स्वरूपस्थितिप्रवृत्तिषु हरिवाक्यसुधासिन्धौ—'जीवानां पारतन्त्र्यं च स्वतन्त्रत्वं परात्मनः ।' 'तं विनाऽक्षरपर्यन्तं स्थूलं सूक्ष्मं यदस्ति तत् । परतन्त्रमिति ज्ञेयं स्वतन्त्रस्त्वेक एव सः ॥' इति । सत्सङ्गिजीवनेऽपि 'एवं हि मातः सर्वेऽपि परतन्त्रा भवन्ति हि । कृष्ण एव स्वतन्त्रोऽस्ति सर्वसेव्यस्ततस्तु सः ॥' इति ।

ननु कर्तृत्वं चेत्पराधीनं तर्हि 'कर्ता शास्त्रार्थवत्त्वात्' इत्येतन्नोपपद्यते । नहि परेण प्रेर्यमाणः कर्म कुर्वन् विधिनिषेधानर्हति । मैवम् । ईश्वरो हि जीवस्य प्रलयकाले उपसंहृतकरणकलेवरस्यात एव कुण्ठितचित्प्रवृत्तिशक्तिकस्य करणकलेवरदानेन चित्प्रवृत्तिशक्त्यापादनमात्रेण भवत्याद्यप्रवृत्तौ हेतुः । जीवोऽपि तदाहितसामर्थ्यः स्वयमेव पूर्ववासनानुगुणं इष्टमनिष्टं तत्साधनं चावबुद्ध्य तत्तदुपादित्सुरुद्युङ्क्ते । एवं स्वबुद्धिरुचिपूर्वकप्रवृत्तिमत्त्वात्पराधीनस्यापि कर्तुः सम्भवति विधिनिषेधवश्यत्वम् । तथा च सूत्रं 'कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः' इति । आद्यप्रवृत्तावपि देहादिदानद्वाराऽस्त्येवोपकारकत्वमीश्वरस्य । आद्य-

मिद् जानामीतिवत् अहमिद करोमीत्येव हि भवति प्रत्ययः। तेन च ज्ञानस्येव कृतेरप्यात्मधर्मतैवावगम्यते। जानात्यन्यः करोत्यन्य इति चानुपपन्नम्। ननु 'अहङ्कारविमूढात्मा कर्ताऽहमिति मन्यते' इत्यात्मनः कर्तृत्व प्रतिक्षिप्यते। वचनस्य तात्पर्यमजानतोऽयमाक्षेप। इत्यमस्य हार्दम्—ज्ञानमिवेच्छा कृतिश्चात्मन एव धर्म। इय कृतिः कर्मसामान्ये साधारण कारणम्। कर्म च गुणविशेषोन्मेषानुगुण जायमान सात्विकादिभेदेन भिद्यत इति तत्तत्कर्मस्वसाधारण कारणानि गुणविशेषा एवेति प्रकृतेर्गुणमय्या गुणविशेषैः कार्यमाणेषु कर्मसु गुणवैषम्यप्रयोज्यत्वमविज्ञाय अहमेव कर्तेत्यहङ्कारविमूढात्मा मन्यते इति। भगवतैवोत्तरत्र व्यक्तीकृतोऽयमाशय—'पञ्चैतानि महाबाहो कारणानि निबोध मे। अधिष्ठान तथा कर्ता करण च पृथग्विधम्। विविधा च पृथक् चेष्टा दैव चैवात्र पञ्चमम्॥ शरीरवाङ्मनोभिर्यत्कर्म प्रारभते नर। न्याय्य वा विपरीतं वा पञ्चैते तस्य हेतव॥ तत्रैव सति कर्तारमात्मान केवलं तु य। पश्यत्यकृतबुद्धित्वान्न स पश्यति दुर्मति॥' इति। अत्र कर्ता इत्यात्मा निर्दिश्यते। अतश्च कृतिरात्मधर्म इति स्पष्टम्। 'दैवम्' इति च अधिष्ठानादीना चतुर्णामात्मतयाऽवस्थाय सत्ताप्रवृत्तिशक्त्याधायकः सर्वान्तरात्मा सर्वेश्वर। 'दैव चैवात्र पञ्चमम्' इति सर्वोपरि निर्देशात् पञ्चत्वस्य प्राधान्य गम्यते। न्याय्य वा विपरीत वा—विहित वा प्रतिषिद्ध वा। अनेन गुणवैषम्यमूलत्व गम्यते। तदेव हेतुपञ्चकसापेक्षेषु गुणवैषम्यानुगुणेषु कर्मसु तत्त्वविज्ञाय कारणान्तरसापेक्षतां दुरभिमत्या केवलमात्मानमेव कर्तारं पश्यति सोऽयमकृतबुद्धिर्विनश्यति। इति।

इदं च कर्तृत्वं परमात्मायत्तम् । 'परात्तु तच्छ्रुतेः' इति सूत्रकारश्चाह । श्रुतिश्च 'अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा' 'य आत्मानमन्तरो यमयति' इति । उक्तं च तत्त्वमुक्ताकलापे—'बोद्धा कर्ता च भोक्ता दृढमवगमितः प्रत्यगर्थः प्रमाणैः कर्तृत्वाभाववादे स्वयमिह भगवानान्यपर्यं त्वगायत् । कर्ता शास्त्रार्थवत्त्वात् कृतिषु च स पराधीन आभापि सूत्रैश्चित्रैः कर्मप्रवाहैर्यतनविषमता सर्वतन्त्राविगीता ॥' इति ॥ उक्तं च पारतन्त्र्यं जीवानां स्वरूपस्थितिप्रवृत्तिषु हरिवाक्यसुधासिन्धौ—'जीवानां पारतन्त्र्यं च स्वतन्त्रत्वं परात्मनः ।' 'तं विनाऽक्षरपर्यन्तं स्थूलं सूक्ष्मं यदस्ति तत् । परतन्त्रमिति ज्ञेयं स्वतन्त्रस्त्वेक एव सः ॥' इति । सत्सङ्गिजीवनेऽपि 'एवं हि मातः सर्वेऽपि परतन्त्रा भवन्ति हि । कृष्ण एव स्वतन्त्रोऽस्ति सर्वसेव्यस्ततस्तु सः ॥' इति ।

ननु कर्तृत्वं चेत्पराधीनं तर्हि 'कर्ता शास्त्रार्थवत्त्वात्' इत्येतन्नोपपद्यते । नहि परेण प्रेर्यमाणः कर्म कुर्वन् विधिनिषेधार्हतीति । मैवम् । ईश्वरो हि जीवस्य प्रलयकाले उपसंहृतकरणकलेवरस्यात एव कुण्ठितचित्प्रवृत्तिशक्तिकस्य करणकलेवरदानेन चित्प्रवृत्तिशक्त्यापादनमात्रेण भवत्याद्यप्रवृत्तौ हेतुः । जीवोऽपि तदाहितसामर्थ्यः स्वयमेव पूर्ववासनानुगुणं इष्टमनिष्टं तत्साधनं चावबुध्य तत्तदुपादित्सुरुद्युङ्क्ते । एवं स्वबुद्धिरुचिपूर्वकप्रवृत्तिमत्त्वात्पराधीनस्यापि कर्तुः सम्भवति विधिनिषेधवश्यत्वम् । तथा च सूत्रं 'कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः' इति । आद्यप्रवृत्तावपि देहादिदानद्वाराऽस्त्येवोपकारकत्वमीश्वरस्य । आद्य-

प्रवृत्तिफलतया द्वितीयादिप्रवृत्तावनुमतिपूर्वकं योजनम् । विहित-विषये प्रथमस्य प्रवृत्तमनुमनुते सः, निषिद्धविषये प्रवृत्त चोपेक्षत इति च पक्षोऽस्ति । सर्वथा तत्तत्प्रवृत्त्यनुगुणं फलं तस्मै तस्मै व्यव-स्थितं दत्ते सर्वेश्वर इति सर्वमवदातम् । तथा चोक्तं पूर्वाचार्यैः 'आदावीश्वरदत्तयैव पुरुषः स्वातन्त्र्यशक्त्या स्वयं तत्तज्ज्ञान-चिकीर्षणप्रयतनान्युत्पादयन् वर्तते । तत्रोपेक्ष्य ततोऽनु-मत्य विदधत्तन्निग्रहानुग्रहौ तत्तत्कर्मफलं प्रयच्छति ततः सर्वस्य पुंसो हरिः ॥' इति । अत्यन्तानुकूल्यप्रातिकूल्यव्यव-स्थितविषया तु ईश्वरस्य साक्षात्प्रयोजकत्वश्रुतिः । ननु प्रथम-प्रवृत्तावेवेश्वरस्यासाधारणकारणत्वं किन्न स्यादिति चेन्न । विधि निषेधशास्त्रवैयर्थ्यापत्त्या द्यप्रवृत्तौ साधारणहेतुत्वस्यैवेश्वराभिमतत्व-कल्पनात् । श्रुतप्रकाशिकायां चोक्तम्—'वैयर्थ्यं यावता न स्याद्विधानप्रतिषेधयोः । नियन्तृत्वश्रुतेस्तावान् सङ्कोचो न त्वतः परः ॥' इति । विस्तरस्तत्रैवानुसन्धेयः ।

## आत्मनोऽणुत्वम् ।

अणुपरिमाणत्वं चात्मनः श्रुतितदर्थापत्तिभ्यां सिद्ध्यति । श्रुति-स्तावत्—'एषोऽणुरात्मा चेतसा वेदितव्यो यस्मिन् प्राणः पञ्चधा संविवेश' 'आराग्रमात्रो ह्यवरोऽपि दृष्टः' 'वालाग्रशत-भागस्य शतधा कल्पितस्य च । भागो जीवः स विज्ञेयः' इति । 'हृदि ह्ययमात्मा' इत्यल्पस्थानता श्रूयते । सा च स्थानिनोऽल्प-त्वमाक्षिपति । उत्क्रान्तिगत्यागतयश्च श्रूयन्ते—'तस्य ह वा एतस्य हृदयस्याग्रं प्रद्योतते तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुषो वा मूर्ध्नो वाऽन्येभ्यो वा शरीरप्रदेशेभ्यः' 'ये वै के चास्मात्

लोकात्प्रयान्ति चन्द्रमसमेव ते सर्वे गच्छन्ति' 'तस्मात् लोका त्पुनरेत्यस्मै लोकाय कर्मणे' इति । किञ्च–स्वप्नस्थानेषु नाडीषु सुषुप्तिस्थाने च पुरीतति जीवस्वरूपस्यैव गतिः श्रूयते–'आसु तदा नाडीषु सृप्तो भवति' 'ताभिः प्रत्यवसृप्य पुरीतति शेते' इति । विभुत्वे चैतासामनुपपत्तिः। समर्थयति चाणुत्वं सूत्रकारः–'उत्क्रान्तिगत्यागतीनाम्' 'स्वात्मना चोत्तरयोः' 'नाणुरतच्छ्रुतेरिति चेन्न इतराधिकारात्' 'स्वशब्दोन्मानाभ्यां च' इति । अणोरप्यात्मनो धर्मभूतज्ञानव्याप्त्यैव यावद्देहावयवव्यापी भोग उपपद्यते । तथा च सूत्रं 'गुणाद्वाऽऽलोकवत्' इति । ज्ञानप्रभा च जीवस्य तत्तद्देहारम्भककर्मवशात् स्वाश्रयचेतनवत्येव देहे प्रसरत्यधिष्ठानाय न देहान्तरे । योगमहिम्ना पुनर्देहान्तरेष्वपि । अत एव सौभर्यादेरनेकदेहपरिग्रहस्तदवच्छेदेनानुभवश्चोपपद्यते । तत्तदवयवावच्छेदेन भोगप्रयोजककर्मनाशे च न तत्तदवयवे धर्मभूतज्ञानव्याप्तिः। एतदभिप्रायमेव च 'अथ यदैकां शाखां जीवो जहाति अथ सा शुष्यति' इत्यादिवचनम् । न चाणुत्वे जीवस्य 'स चानन्त्याय कल्पते' 'नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः' 'तस्यात्मपरदेहेषु सतोऽप्येकमयं हि यत्' इति श्रुतिस्मृतिभिः सर्वगतत्वप्रतिपादनं कथं घटत इति वाच्यम् । मुक्तावानन्त्यश्रुतेर्धर्मभूतज्ञानानन्त्यपरत्वात् । कर्मणा प्रतिरुद्धप्रसरं हि धर्मभूतज्ञानं तिरोधाननिवृत्तौ सर्वत्र व्याप्नोति । 'नित्यः सर्वगतः' इत्यत्र क्रमात्सर्वाचेतनेषु प्रविष्टत्वस्य वा अतिसूक्ष्मतयाऽप्रतिरुद्धगतिकत्वात्सर्वत्राचेतनेषु प्रवेशसामर्थ्यस्य वा 'वायुः सर्वत्रगो महा'नितिवदात्मजातीयस्य सर्वगतत्वस्य वा विवक्षितत्वात् । एवमेव 'तस्यात्मपरदेहेषु

सत' इत्यत्र चात्मजातीयस्य सर्वशरीरप्रवेशो विवक्षित इति। आराग्र-मात्रस्याप्यात्मनोऽङ्गुष्ठमात्रत्वं श्रूयमाणं च जीवनिकेतनस्य हृदयस्याङ्गुष्ठमात्रत्वेनोपपद्यते 'अङ्गुष्ठमात्रो रवितुल्यरूपः सङ्कल्पाहङ्कार-समन्वितो य' इत्यादौ। 'बुद्धेर्गुणेनात्मगुणेन चैव आराग्र-मात्र' इत्यत्र बुद्धेर्गुणेनाराग्रमात्र आत्मगुणेन महानित्यर्थकरण-त्वनुपपन्नम्। महानिति पदस्याश्रवणादध्याहारे क्लेशाच। बुद्धिपरि-माणेनाराग्रमात्रत्वं च बुद्धेः सुषुप्तिदशायामत्यन्तसङ्कोचाद्बोध्यम्। 'रवितुल्यरूप' इत्यनेन च यथा सूर्य एकदेशस्थितोऽपि सर्वं प्रका-शयति स्वप्रभया, एवं जीवो हृदये शरीरैकदेशे वर्तमानोऽपि स्वप्र-भया बुद्ध्या व्याप्य सर्वं प्रकाशयतीति लभ्यते। तथा च गीयते— 'यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः। क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत ॥' इति। एतत्सर्वं सङ्क्षेपेण तत्त्वमुक्ताकलापे—'देहान्तर्मात्रदृष्टेः पृथगिह विषयिप्राणजीवो-त्क्रमोक्ते भूयोवाक्यानुसारात् अणुरिति वचने तादृशोपाध्य-नुक्तेः। ईशादाराग्रमात्रो ह्यवर इति भिदावर्णनात् स्पन्द-वाक्यात् व्याप्त्युक्तिर्ज्ञातिधर्मप्रतिहतिविनिवृत्त्यादिमात्रेण जीवे ॥' इति।

यत्तु आत्मनोऽणुत्वे मानसप्रत्यक्षानुपपत्तिरिति काणादैरुच्यते। तन्न। विभुत्वेऽप्याकाशादिवन्मानसप्रत्यक्षानुपपत्तिप्रसङ्गात्। यथो-पलम्भं व्यवस्था त्वणुत्वपक्षेऽपि घटते। 'एषोऽणुरात्मा चेतसा वेदितव्य' इति श्रुतिश्च मनोग्राह्यत्वमणोरप्यात्मन आह। यत्तु देशान्तरे भोग्योत्पादस्य भोक्त्रदृष्टाधीनत्वात् अदृष्टसन्निधानस्य चादृष्टवत्पुरुषसन्निधानमन्तराऽनुपपत्तेः पुंसो विभुत्वमेष्टव्यम्,

किञ्च विभुत्वे शरीरगमनमात्रेण देशान्तरेषु भोगनिर्वाहः, अणुत्वे तु आत्मनोऽपि गमनं कल्प्यमिति गौरवमिति । तदपि मन्दम् । विहित-निषिद्धक्रियाजनितस्य पुण्यपापरूपस्यादृष्टस्य तत्तत्कर्तृविषयकेश्वर-प्रीतिकोपलक्षणत्वातिरेकेण चेतननिष्ठादृष्टधर्मान्तररूपत्वस्यासिद्धेः । श्रुतिस्मृती हि भगवदाज्ञारूपे । तदुक्तं 'श्रुतिस्मृती ममैवाज्ञा' इति । अतस्तच्छासनानुवृत्त्यतिवृत्तिभ्यां तस्य तत्तत्कर्तरि अनुग्रहनिग्रहस-ङ्कल्पयोर्नासम्भवः । तत एव तत्तद्देशकालानुभाव्यतत्तत्फलोदय-सम्भवे न जीवस्य विभुत्वकल्पनाया अवसरः । किञ्च विभुत्वे जीव-स्यान्यदीयदेहाद्यवच्छेदेनापि अन्यस्योपभोगप्रसक्तिः । न च तदीया-दृष्टजनितेनैव देहादिना तस्योपभोगो नान्यादृष्टजनितेन तेनेति व्यवस्थेति घटते । आत्मनो विभुत्वेऽदृष्टस्यापि प्रत्यात्मनियतत्वानु-पपत्तेः । पञ्चाग्निविद्यादौ चात्मनो गमनं श्रुतमिति न श्रौतेऽर्थे लाघ-वगौरवचर्चावतारो यथा दृष्टे इति ।

यत्तु आत्मनां देहपरिमाणत्वं जैनैरुच्यते—पिपीलिकाशरीरे पिपी-लिकापरिमाणो गजशरीरे गजपरिमाण इति । तदपि न । आत्मनः सङ्कोचविकासरूपावस्थास्वीकारे स्वरूपान्यथाभावलक्षणस्य विका-रस्य प्रसक्तेः । किञ्च योगिभिः युगपद्व्यवहितदेशस्थानेकशरीरपरिग्रहे आत्मनो भिदुरत्वापत्तिः । किञ्च मुक्तौ परिमाणविरहः प्रसज्यते स्वदेहाधीने परिमाणे । परिमाणसिद्ध्यर्थमेव मुक्तौ कस्यचिद्देहस्य परिग्रह इच्छाभोगाद्यभावेऽपीति त्वगतिकगतिः । अत आत्मनः परिमाणं किञ्चित्स्वाभाविकं मुक्तिकालिकमेष्टव्यम् । तस्यात्मनश्च नित्यत्वाद्बन्धावस्थायामपि तत्परिमाणमेव युक्तम् । तथा च सूत्रम्— "अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः' इति । उक्तं च तत्त्वमु-

काकलापे—'नात्मा देहानुरूप विविधपरिणतिर्निर्विकारोक्तिबाधात् स्थूलोऽहं मूर्ध्नि जातं सुखमिति च मतिस्तस्य देहात्ममोहात् । नानादेहश्च योगी प्रसजति भिदुरः पुंसि देहप्रमाणे मुक्तौ देहात्ययात्स्यात्परमिति विरहस्तत्प्रयुक्तेऽस्य माने ॥ निर्मुक्तस्त्वन्मते स्यात्कथमपरिमितो नित्यमूर्ध्वं प्रधावन् देहः कश्चित्तदानीमपि यदि नियतः स्यात्तु तन्निघ्नतास्य । इच्छातो देहमेकं विशति स परमित्यर्थमेवेति हास्यं तस्मादस्माकनीत्या परिमितिरिह सा स्थायिनी या विमुक्तौ ॥' इति ।

## आत्मनो नित्यत्वम् ।

नित्यश्चायम् । तथा च श्रूयते— 'न जायते म्रियते वा विपश्चिन्नायं कुतश्चिन्न बभूव कश्चित् । अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे ॥ हन्ता चेन्मन्यते हन्तुं हतश्चेन्मन्यते हतम् । उभौ तौ न विजानीतो नायं हन्ति न हन्यते ॥' 'नित्यो नित्यानां चेतनश्चेतनानाम्' 'अविनाशी वाऽरेऽयमात्मा' 'ज्ञाज्ञौ द्वावजौ' इति । गीतायां च देहस्य विनाशित्व आत्मनो नित्यत्वं च विस्तरशोऽस्ति वर्णितम्—'अविनाशि तु तद्विद्धि येन सर्वमिदं ततम् । विनाशमव्ययस्यास्य न कश्चित्कर्तुमर्हति ॥ अन्तवन्त इमे देहा नित्यस्योक्ताः शरीरिणः । अनाशिनोऽप्रमेयस्य तस्माद्युध्यस्व भारत ॥' इत्यादिना । 'वासांसि जीर्णानि यथा विहाय नवानि गृह्णाति नरोऽपराणि । तथा शरीराणि विहाय जीर्णान्यन्यानि संयाति नवानि देही ॥' इति चैकस्यैवात्मनः पूर्वपूर्वदेहपरित्याग-

पूर्वकमुत्तरोत्तरनानानूतनदेहपरिग्रह उच्यते। देहपातानन्तरभाविस्व-र्गादिफलसाधनविधयश्च भोक्तुरात्मनो नित्यत्वमन्तराऽनुपपद्यमाना नित्यत्वमाक्षिपन्ति । किञ्च सर्गाद्यकालिकविषमसृष्टेः पूर्वपूर्वकल्पी-यजीवीयकर्मवैचित्र्यहेतुकताया वाच्यतया सिद्धे जीवस्यानादित्वेऽ-नादिभावस्य आत्यन्तिकस्वरूपोच्छेदायोगान्नित्यत्वमपि सिद्ध्यति । जीवस्यानादित्वमपि 'प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि' इत्युक्तम् । आत्मनामनित्यत्वे तु कृतहानाकृताभ्यागमप्रसङ्गो मोक्ष-शास्त्राणां चासामञ्जस्यं भवेत् । आत्मनोऽनुत्पत्तिमत्त्वं सूत्रकृताऽपि समर्थितम्—'नात्मा श्रुतेर्नित्यत्वाच्च ताभ्यः' इति । नित्यस्यापि जीवस्य सृज्यत्वजातत्वादिव्यवहारास्तत्तद्देहयोगादिविशिष्टवेषाभि-प्रायेण नेतव्याः । सत्सङ्गिजीवने चोक्तं नित्यत्वादि—'नानादुःखवि-काराढ्यो योऽयं देहोऽस्ति देहिनाम् । आत्मा ततोऽस्ति भिन्नो वै निर्विकारः सुखात्मकः ॥ अच्छेद्योऽसावभेद्यश्च नित्योऽजः शाश्वतोऽक्षरः । देहेन्द्रियान्तःकरणदेवतासुप्रकाशकः ॥' इति । हरिवाक्यसुधासिन्धौ च—'श्रुतौ हि नित्यो नित्यानामिति तन्नित्यतोदिता । नत्वेवाहं जातु नासमित्यादौ च स्मृता-वपि ॥' 'अतो नित्याश्चेतनाश्च जीवा ईशाश्च सर्वशः । कृष्णाद्भिन्ना भवन्तीति श्रीभाष्ये निर्णयः कृतः ॥' 'जीवाः स्वरूपतो नित्याः कृष्णाद्भिन्नाः परस्परम् । असंलग्नाश्च विज्ञे-या चिद्रूपा माययाऽऽवृताः ॥' 'उत्पत्तिराविर्भावश्च तिरो-भावो लयः स्मृतः । कृष्णेच्छयैव जीवादेर्जन्मनाशौ तु न क्वचित् ॥' 'नित्यसिद्धा एव जीवा मायायां सन्ति सर्वशः । पृथिव्यामिव बीजानि ते नोद्गच्छन्ति नूतनाः ॥' इति ।

## आत्मनां भेदः ।

भिन्नश्चात्मा प्रतिशरीरम्, सुखदुःखादिवैचित्र्यात्। अयं च पुरुषभेदः सर्वैरपि वेदप्रामाण्यवादिभिर्दर्शनकारैरभ्युपगतः । श्रीहरिणाऽप्यभ्युपगत —'एकैकस्मिन्नतो देहे जीव एकैक एव हि' इति । अनभ्युपगम्य पुरुषभेदं बन्धमोक्षव्यवस्था दुरुपपादा । ननु निषिध्यते शरीरभेदेऽप्यात्मभेदः—'यद्यन्योऽस्ति परः कोऽपि मत्तः पार्थिवसत्तम । तदैषोऽहमयं चान्यो वक्तुमेवमपीष्यते ॥' 'तस्यात्मपरदेहेषु सतोऽप्येकमयं हि यत्' इति । नैवम् । प्रकारभेदनिषेधपरत्वाद्वचनस्य । प्रतिशरीरभिन्नानामपि जीवानां स्वरूप ह्येकरूपम् । सर्वे एव हि विज्ञानैकाकाराः । देवत्वमनुष्यत्वादिभेदः सर्वोऽयं शारीर इति । व्यक्तं चैतत्तत्रैव—'चतुर्विधोऽपि भेदोऽयं मिथ्याज्ञाननिबन्धनः । देवादिभेदेऽपध्वस्ते नास्त्येवावरणो हि सः ॥' इति । प्रकारैक्यमभिप्रेत्य च भवति एकशब्दप्रयोगो भेदनिषेधश्च अयमयं चैको श्रीहिरिति, अयं श्रीहिरस्माद्व्रीहेर्नान्य इति च । वैपम्यप्रतिषेधपराणीदृशानि वचनानीति यावत् । केचिन्मन्यन्ते—आमोक्षं जीवभेदः, मुक्तौ तु ब्रह्मभावेन न भेद इति । नैवम् । अस्त्येव मुक्त्यवस्थायामपि भेदः । तथा च श्रूयते 'तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति' इति । स्मर्यते च—'मम साधर्म्यमागताः । सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ॥' इति । 'निर्दोषं हि समं ब्रह्म' इति च निरस्ताविद्यादिदोषाणामात्मनां परस्परं साम्यमात्रमुच्यते नाभेदः । 'यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति । एवं मुनेर्विजानत आत्मा भवति गौतम ॥' इति कठश्रुतौ च ब्रह्मसारूप्यमेव मुक्तावुच्यते । दृष्टान्तेऽपि

जलयोर्हि न स्वरूपैक्यम् । ब्रह्मरूपाविर्भावादेव च भवति ब्रह्मणाऽभेदव्यवहारो 'ब्रह्म वेद ब्रह्मैव भवति' इति । सूत्रकारैरपि 'सुषुप्त्युत्क्रान्त्योर्भेदेन' 'मुक्तोपसृप्यव्यपदेशाच्च' इत्यादिना मुक्तावपि भेद उक्तः । मुक्तस्य भोगमात्रसाम्यं परमात्मना नतु जगत्कारणत्वादीति च 'जगद्व्यापारवर्जं' 'भोगमात्रसाम्यलिङ्गाच्च' इति सूत्रयोर्वर्णितम् । न च मुक्तौ भेदश्रुतीनामर्वाचीनमुक्तिविषयत्वं न तु परममुक्तिविषयत्वमिति वाच्यम् । प्रजापतिवाक्यानन्दवल्ल्यादिषु परममुक्तावपि भेदस्य प्रतिपादितत्वात् । सर्वोऽप्ययमर्थः सत्सङ्गिजीवने स्फुटमुक्तः—'भेदो हि वास्तवो नूनं जीवेशब्रह्मणां हरेः । नित्यानां नित्य इत्यादिश्रुतिभिः प्रतिपादितः ॥ ब्रह्मवित्परमाप्नोतीत्येषा श्रुतिरपि स्फुटम् । प्राह ब्रह्मविदां सेव्यं परं ब्रह्मेति सन्मते ॥ आत्मा शरीरं यस्यास्ति नैवात्मा वेत्ति यं तथा । य आन्तरो यमयति ह्यात्मानममृतः प्रभुः ॥ शरीरमक्षरं यस्य नैव यं वेत्ति चाक्षरम् । आन्तरो यो यमयति ह्यक्षरं सोऽमृतः प्रभुः ॥ इत्याद्यर्थाः श्रुतिगणास्त्वक्षरब्रह्मणोऽपि च । प्राहुः कृष्णशरीरत्वं तद्भिन्नत्वं तथा स्फुटम् ॥' इति ।

## आत्मन आनन्दित्वम् ।

आत्मनः स्वाभाविकमानन्दित्वमेव, 'ज्ञानानन्दमयस्त्वात्मे'त्यानन्दमयत्वप्रतिपादनात् । कर्मोपाधिकस्तु दुःखान्वयः । तथा चोक्तं विष्णुपुराणे 'निर्वाणमय एवायमात्मा ज्ञानमयोऽमलः' इति । 'अविद्या कर्मसंज्ञाऽन्या तृतीया शक्तिरिष्यते । यया क्षेत्रज्ञशक्तिः सा वेष्टिता नृप सर्वगा । संसारतापानखिलानवाप्नोत्यतिसन्ततान्' । इति च । तथा च वर्णितमात्मस्वरूपं

श्रीमद्यामुनमुनिभिः—'देहेन्द्रियमनःप्राणधीभ्योऽन्योऽनन्यसाधनः । नित्यो व्यापी प्रतिक्षेत्रमात्मा भिन्नः स्वतः सुखी ॥' इति । हरिवाक्यसुधासिन्धौ च 'आत्मैकः सुखरूपोऽस्ती'त्युक्तम् ।

## आत्मनो भगवच्छेषत्वम् ।

भगवच्छेषभूतश्चायमात्मा । तथा च श्रुतिः—'यस्यास्मि न तमन्तरैमि' 'पतिं विश्वस्यात्मेश्वरम्' इत्यादिः । 'यस्यात्मा शरीरम्' इति च भगवच्छरीरत्वमात्मनः श्रूयते । अतोऽप्यात्मनः परमात्मशेषत्वं लभ्यते । शरीरं हि शरीरिणोऽतिशयाधायकत्वाच्छेषभूतम् । 'ज्ञानानन्दमयस्त्वात्मा शेषो हि परमात्मनः' 'परवानस्मि काकुत्स्थ त्वयि वर्षशतं स्थिते' 'दासोऽहं कोसलेन्द्रस्य रामस्याक्लिष्टकर्मणः' 'दासभूताः स्वतः सर्वे ह्यात्मानः परमात्मनः । नान्यथा लक्षणं तेषां बन्धे मोक्षे तथैव च ॥' 'स्वोज्जीवनेच्छा यदि ते स्वसत्तायां स्पृहा यदि । आत्मदास्यं हरेः स्वाम्यं स्वभावं च सदा स्मर ॥' 'स्वत्वमात्मनि सञ्जातं स्वामित्वं ब्रह्मणि स्थितम् । उभयोरेष सम्बन्धो न परोऽभिमतो मम ॥' 'अहमात्मा न देहोऽस्मि विष्णुशेषोऽपरिग्रहः ।' इत्यादीनि अध्यात्मशास्त्रवचनानि च शेषशेषिभावं जीवपरयोरावेदयन्ति । अयमर्थः सत्सञ्जीवने 'ब्रह्माह कृष्णदासोऽस्मि' इत्यनेनाष्टाक्षरमन्त्रेण ज्ञापितः ।

ननु शेषत्वस्य दुःखरूपत्वान्न जीवस्वरूपानुबन्धित्वम् । तथात्वे हि आनन्दमयत्वमस्य स्वरूपमुपरुध्येत । मैवम् । कर्मोपाधिकस्यैव शेषत्वस्य दुःखरूपताया दर्शनात् । किञ्च स्वामिनो दुर्गुणत्वे हि तच्छेषत्वं दुःखरूपं भवति । सुगुणत्वे तु तदेवानन्दाय स्यात् । यथा

वा सत्याः सुगुणभर्त्रनुवृत्तिर्महते मोदायैव कल्पते, एवं भगवच्छे-षत्वमप्यमन्दानन्दायैव भवतीति । तथा चाभ्यधायि तत्त्वसारे वात्स्यवरदगुरुभिः—'शेषत्वं ननु दुःखमीक्षितमतो मुक्तेषु युक्तं न तन्नैवं माधवदास्यमौपनिषदं जागर्ति भूयः प्रियम् । धर्मिग्राहकमानधीक्षतमतस्तद्दुःखतासाधनं यद्वा तद्व्यतिरिक्तदास्यमसुखं साध्येत सिद्धं हि तत् ॥' इति । अध्यात्मशास्त्रसारभूतोऽयमर्थः । अत एवोक्तं श्रीभागवते—'सेवानुरक्तमनसामभवोऽपि फल्गुः' 'मत्सेवया प्रतीतं च सालोक्यादिचतुष्टयम् । नेच्छन्ति सेवया पूर्णाः कुतोऽन्यत्कालविद्रुतम् ॥' 'नैकात्मतां मे स्पृहयन्ति केचिन्मत्पादसेवाभिरता मदीहाः ।' 'अपवर्गमात्यन्तिकं परमपुरुषार्थमपि नो एवाद्रियन्ते भगवदीयत्वेनैव परिसमाप्तसर्वार्थाः' इत्यादि । भगवच्छेषत्वस्यात्मस्वरूपत्वादेव स्वरूपानुरूपो मोक्षपुरुषार्थो भगवत्सेवैवेत्युक्तं शिक्षापत्र्याम्—'कृष्णसेवा मुक्तिश्च गम्यताम्' इति । हरिवाक्यसुधासिन्धौ च—'आत्माहं ब्रह्मरूपोऽस्मि महापुरुषसेवया । तथाविधोऽपि कृष्णस्य दासोऽहं राधिकापतेः ॥' देहत्रयपृथक्सत्तारूप आत्मैव केवलम् । हरिदासोऽहमस्मीति वेदनं ज्ञानमुत्तमम् ॥' 'सच्चिद्रूपः स एवास्मि हरेर्दासः सदा शुचिः । विलक्षणोऽतिमलिनात् क्षेत्रादस्मि जडादहम् ।' 'ब्रह्माऽहं कृष्णदासोऽस्मीत्येवं यर्ह्यस्य निश्चयः । सुदृढो जायते तर्हि मुक्तसंज्ञामुपैति हि ॥' इति ।

आत्मधर्मभूताश्च अणुत्वशेषत्वादयः शास्त्रतो ज्ञायन्ते न पुनः स्वयंप्रकाशात्मकस्वस्वरूपत एव । प्रत्यक्त्वानुकूलत्वैकत्वैरेव स्वयं-

प्रकाशमानत्वादात्मनः । अत एवात्मनि नित्यत्वानित्यत्वविभुत्वाणुत्वादिषु विवाद स्वयम्प्रकाशेऽपि घटते । आत्मा देहादिव्यतिरिक्तोऽदृष्टत्वात्, आत्मा अणुर्निरवयवत्वे सति क्रियावत्त्वात् इत्याद्यनुमानगोचरोऽपि भवति । परशरीरं सात्मकं चेष्टावत्त्वात् इत्याद्यनुमानेन च भवति ग्रहणं परात्मन । योगजधर्मसंस्कृतेन च मनसाऽणुत्वशेषत्वादिविशिष्टः स्वात्मा साक्षात्क्रियते । यथोक्तमात्मसिद्धौ—'एवमात्मा स्वतः सिद्धश्चागमेनानुमानत । योगाभ्यासभुवा स्पष्टं प्रत्यक्षेण प्रकाशते ॥' इति । न च ज्ञानान्तरगोचरत्वे स्वयप्रकाशत्वविरोध । ज्ञानान्तरं विनाऽपि प्रकाशमानस्वरूपत्वलक्षणस्य स्वयप्रकाशत्वस्याकारविशेषावगाहिज्ञानान्तरविषयत्वेन विरोधाभावात् । एवमात्मा स्वयप्रकाशतया मितिरूपो ज्ञानविषयतया मेयो ज्ञानाश्रयतया माता च भवति । तदुक्तं प्रज्ञापरित्राणे—'प्रमाता च प्रमेयं च प्रमाणं च भवेत्पुमान्' इति । प्रमाणमिति भावे ल्युट् । प्रमारूप इत्यर्थ । धर्मभूतज्ञानं तु स्वयम्प्रकाशतया मितिरूपं ज्ञानान्तरविषयातया मेयं च भवति । न मातृ । घटादयस्तु मेया एव । तथा चोक्तं तत्रैव 'प्रमा मेया च धीरेव मेया एव घटादय ' ॥ इति ।

एवमेवात्मस्वरूपं वर्णितं भगवता शिक्षापत्र्याम्—'हृत्स्थोऽणुसूक्ष्मश्चिद्रूपो ज्ञाता व्याप्याखिलां तनुम् । ज्ञानशक्त्या स्थितो जीवो ज्ञेयोऽच्छेद्यादिलक्षण ॥' इति । हृत्स्थ इति शरीरैकदेशे हृत्पद्मेऽवस्थितत्वस्य प्रतिपादनादात्मनः न शरीरादिरूपत्वमिति व्यज्यते । अच्छेद्यादिलक्षण इति च देहादिवैलक्षण्यस्थैर्यपरम् । हृदयस्थस्यापि 'नेत्रस्थं जाग्रतं विद्यात्' इति जाग-

रणे नेत्रस्थानत्वकीर्तनं धर्मभूतज्ञानद्वारकेण नेत्रशब्दोपलक्षितबाह्येन्द्रियसामान्याधिष्ठानेनोपपद्यते। न हि जागरणे नेत्रमात्रे स्थितिः सम्भवति। तथा सति श्रवणाद्यभावप्रसङ्गात्। अतो नेत्रशब्द उपलक्षणमेव। अणोश्चानेकत्र युगपत्स्थितिः स्वप्रभास्थानीयज्ञानव्याप्त्यैव घटते। पर्यायेणानेकेन्द्रियसम्बन्धे तु गमनदर्शनादेर्यौगपद्यायोगप्रसङ्गः। वर्णितमेतच्छ्रीभाष्ये—'जीवस्यापि सर्वेन्द्रियव्यापारानुगुणत्वाय सर्वेन्द्रियकन्दभूते स्थानविशेषे वृत्तिरिति चक्षुषि नावस्थानम्' इति। सूत्रितं च हृदयस्थानत्वमात्मनः—'अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि' इति। 'गुहां प्रविष्टावात्मानौ हि तद्दर्शनात्' इति च। स्मृतिश्चात्र 'द्वासप्ततिः सहस्राणि हृदयादभिनिःसृता। हिताहिता नाम नाड्यस्तासां मध्ये शशिनिभम्। मण्डलं तस्य मध्यस्थ आत्मा दीप इवाजलः॥' इत्यादिरनुसन्धेया। 'कण्ठे स्वप्नं विनिर्दिशेत्' इति स्वप्ने कण्ठसमीपस्थहृदयानुबन्धिनाडीगमनाभिप्रायम्। 'आसु तदा नाडीषु सुप्तो भवति' इति श्रुतेः। नाडीनां हृदयानुबन्धित्वं च 'शतं चैका च हृदयस्य नाड्यः' इति श्रुतिसिद्धम्। 'सुषुप्तं हृदयस्थम्' इति च सुषुप्तौ 'हृदयते' इति व्युत्पत्त्या हृदयशब्दितपरमात्मसंश्लेषविशेषाभिप्रायम्। 'यत्रायं पुरुषः स्वपिति नाम सता सोम्य तदा सम्पन्नो भवति' 'प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम्' इत्यादिश्रुतेः। एतेन सुषुप्तावेव हृदयस्थानत्वोक्त्या न जागरणे हृदयस्थानत्वमिति शङ्का निरस्ता। 'तुरीयं मूर्धनि स्थितम्' इति तु चरमशरीरादुत्क्रान्तिसमयाभिप्रायमेव। 'तासां मूर्धानमभिनिःसृतैका तयोर्ध्वमायन्नमृतत्वमेति' इतिश्रुतेरित्यास्तां तावत्।

प्रकाशमानत्वादात्मनः । अत एवात्मनि नित्यत्वानित्यत्वविभुत्वाणुत्वादिषु विवादः स्वयम्प्रकाशेऽपि घटते । आत्मा देहादिव्यतिरिक्तोऽजडत्वात्, आत्मा अणुर्निरवयवत्वे सति क्रियावत्त्वात् इत्याद्यनुमानगोचरोऽपि भवति । परशरीरं सात्मकं चेष्टावत्त्वात् इत्याद्यनुमानेन च भवति ग्रहणं परात्मनः । योगजधर्मसंस्कृतेन च मनसाऽणुत्वशेषत्वादिविशिष्टः स्वात्मा साक्षात्क्रियते । यथोक्तमात्मसिद्धौ—'एवमात्मा स्वतः सिद्धश्चागमेनानुमानतः । योगाभ्यासभुवा स्पष्टं प्रत्यक्षेण प्रकाशते ॥' इति । न च ज्ञानान्तरगोचरत्वे स्वयंप्रकाशत्वविरोधः । ज्ञानान्तरं विनाऽपि प्रकाशमानस्वरूपत्वलक्षणस्य स्वयंप्रकाशत्वस्याकारविशेषावगाहिज्ञानान्तरविषयत्वेन विरोधाभावात् । एवमात्मा स्वयंप्रकाशतया मितिरूपो ज्ञानविषयतया मेयो ज्ञानाश्रयतया माता च भवति । तदुक्तं प्रज्ञापरित्राणे—'प्रमाता च प्रमेयं च प्रमाणं च भवेत्पुमान्' इति । प्रमाणमिति भावे ल्युट् । प्रमारूप इत्यर्थः । धर्मभूतज्ञानं तु स्वयम्प्रकाशतया मितिरूपं ज्ञानान्तरविषयतया मेयं च भवति । न माता । घटादयस्तु मेया एव । तथा चोक्तं तत्रैव 'प्रमा मेया च धीरेव मेया एव घटादयः' ॥ इति ।

एवमेवात्मस्वरूपं वर्णितं भगवता शिक्षापत्र्याम्—'हृत्स्थोऽणुसूक्ष्मश्चिद्रूपो ज्ञाता व्याप्याखिलां तनुम् । ज्ञानशक्त्या स्थितो जीवो ज्ञेयोऽच्छेद्यादिलक्षणः ॥' इति । हृत्स्थ इति शरीरैकदेशे हृत्पद्मेऽवस्थितत्वस्य प्रतिपादनादात्मनः न शरीरादिरूपत्वमिति व्यज्यते । अच्छेद्यादिलक्षण इति च देहादिवैलक्षण्यस्थैर्यपरम् । हृदयस्थस्यापि 'नेत्रस्थं जाग्रतं विद्यात्' इति जाग-

रणे नेत्रस्थानत्वकीर्तनं धर्मभूतज्ञानद्वारकेण नेत्रशब्दोपलक्षितबाह्येन्द्रियसामान्याधिष्ठानेनोपपद्यते । न हि जागरणे नेत्रमात्रे स्थितिः सम्भवति । तथा सति श्रवणाद्यभावप्रसङ्गात् । अतो नेत्रशब्द उपलक्षणमेव । अणोश्चानेकत्र युगपत्स्थितिः स्वप्रभास्थानीयज्ञानव्याप्त्यैव घटते । पर्यायेणानेकेन्द्रियसम्बन्धे तु गमनदर्शनादेर्यौगपद्यायोगप्रसङ्गः । वर्णितमेतच्छ्रीभाष्ये—'जीवस्यापि सर्वेन्द्रियव्यापारानुगुणत्वाय सर्वेन्द्रियकन्दभूते स्थानविशेषे वृत्तिरिति चक्षुषि नावस्थानम्' इति । सूत्रितं च हृदयस्थानत्वमात्मनः—'अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि' इति । 'गुहां प्रविष्टावात्मानौ हि तद्दर्शनात्' इति च । स्मृतिश्चात्र 'द्वासप्ततिः सहस्राणि हृदयादभिनिःसृता । हिताहिता नाम नाड्यस्तासां मध्ये शशिनिभम् । मण्डलं तस्य मध्यस्थ आत्मा दीप इवाचलः ॥' इत्यादिरनुसन्धेया । 'कण्ठे स्वप्नं विनिर्दिशेत्' इति स्वप्ने कण्ठसमीपस्थहृदयानुबन्धिनाडीगमनाभिप्रायम् । 'आसु तदा नाडीषु सृप्तो भवति' इति श्रुतेः । नाडीनां हृदयानुबन्धित्वं च 'शतं चैका च हृदयस्य नाड्यः' इति श्रुतिसिद्धम् । 'सुषुप्तं हृदयस्थम्' इति च सुषुप्तौ 'हृदयते' इति व्युत्पत्त्या हृदयशब्दितपरमात्मसंश्लेषविशेषाभिप्रायम् । 'यत्रायं पुरुषः स्वपिति नाम सता सोम्य तदा सम्पन्नो भवति' 'प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम्' इत्यादिश्रुतेः । एतेन सुषुप्तावेव हृदयस्थानत्वोक्त्या न जागरणे हृदयस्थानत्वमिति शङ्का निरस्ता । 'तुरीयं मूर्धनि स्थितम्' इति तु चरमशरीरादुत्क्रान्तिसमयाभिप्रायमेव । 'तासां मूर्धानमभिनिःसृतैका । तयोर्ध्वमायन्नमृतत्वमेति' इतिश्रुतेरित्यास्तां तावत् ।

हृत्स्थ इत्युक्त्या प्रतिशरीरं जीवभेदोऽपि व्यञ्जित । हृदयान्तः-स्थानत्वप्रतिपादनादात्मनो न विभुत्वमिति लभ्यते । तर्हि किं मध्यमपरिमाणत्व नेत्याह 'अणुसूक्ष्म' इति । सर्वत्राचेतने प्रवेष्टुं समर्थः । नास्य कुत्रचिद्गतेरुपरोध इति निश्चितविषयत्व सूक्ष्मशब्दस्यार्थं । अणोरप्यात्मनः सर्वगत्ववचन सर्वत्रापि प्रवेशनसामर्थ्याभिप्रायमिति च सूक्ष्मशब्दस्य तात्पर्यम् । नन्वस्तु अणुसूक्ष्मत्व अथापि वैशेषिकनय इव जडरूपोऽस्तु तत्राह 'चिद्रूप' इति । चिदिति भावे क्विबन्तो ज्ञानवाची प्रसिद्धः । क्वचित्कर्तरि क्विबन्तो ज्ञातर्यपि प्रयुज्यते । अथाप्यत्र ज्ञाता इत्यनन्तरवचनात् ज्ञानवाच्येवाय चिच्छब्द । ननु साङ्ख्यादिनय इव किं ज्ञानमात्ररूपः नेत्याह 'ज्ञाता' इति । ज्ञानाश्रयोऽपीत्यर्थ । ज्ञातेत्यनेन कर्तृत्व भोक्तृत्व च विवक्षितम्, अहमर्थत्वमपि । कृतिभोगयोर्ज्ञानावस्थाविशेषत्वाज्ज्ञानस्याहन्त्वसामानाधिकरण्यानुभवाच । नन्वणुत्वे सकलदेहानुयायिवेदनानुपपत्तिस्तत्राह—'व्याप्याखिलां तनुं ज्ञानशक्त्या स्थितो जीवः' इति । ज्ञानमेव शक्तिः—कार्योपयोग्यपृथक्सिद्धविशेषण, तेन स्वप्रभास्थानीयेन व्याप्तेः यावद्देहप्रदेशानुयायिवेदनोपपत्तिः । आत्मधर्मभूतस्यापि ज्ञानस्य यावद्देहं व्याप्ति प्रदीपधर्मभूतप्रभाया इव विकासशक्त्या घटते इति भावः । 'अच्छेद्यादिलक्षण' इति चात्मस्वरूपस्य निर्विकारत्वेन नित्यत्वमपि विवक्षितम् । विस्तरतो व्याख्यातोऽय श्लोको भाष्ये । तदुपसंहारगतश्लोकद्वयमात्रमत्रोदाहरामः—'आत्मानं देहमाहु' कतिचन कतिचिन्नेन्द्रियं केचिदाहुर्विज्ञानस्यान्वयायं कतिचन जगदुर्नित्यविज्ञानमात्रम् । अप्यन्तैकान्तवृद्धाः कुमतिविलसित

सर्वमेतद्विलङ्घ्य ज्ञाता कर्ता मिथोऽन्यो हृदिहृदि विलसत्येष इत्याहुरेनम् ॥ स्वयंज्योतिरणुः सोऽयमहंप्रत्ययगोचरः । हृद्यः कौस्तुभवद्भूयात्सख्या येन तु चेष्टते ॥' इति ।

## आत्मत्रैविध्यम्

सोऽयमात्मा प्रकृतिसंसर्गवान् प्रकृतिसंसर्गप्रध्वंसवान् प्रकृतिसंसर्गात्यन्ताभाववानिति भवति त्रिवर्गः । आद्यो बद्धो द्वितीयो मुक्तस्तृतीयो नित्य ( अनादिः ) इति व्यपदिश्यते । पुण्यवत्त्वं पापवत्त्वं सङ्कुचितज्ञानवत्त्वं वा बद्धलक्षणम् । स्वसमानकालिककर्मप्रागभावासमानाधिकरणकर्मध्वंसवत्त्वं मुक्तलक्षणम् । कर्मात्यन्ताभाववत्त्वं नित्यासङ्कुचितज्ञानत्वं वा नित्यलक्षणम् ।

## बन्धवर्णनम् ।

तत्र कर्मपाशेन प्रकृतौ प्रग्रथितो बद्धो नाम भवति क्लेशकर्मविपाकाशयदूषितः । प्रकृतिश्च जीवस्यापरिच्छिन्नज्ञानानन्दलक्षणस्वभावावरणभूता स्थूलरूपा सर्गे सूक्ष्मरूपा च प्रलये सर्वदा तमभिसम्बद्धा स्वपरिणामभूतेष्वेव देहगेहादिषु 'देहतदीययोः । जीवस्याहंममताहेतु'रित्युक्तप्रकारेण अहंममताभिमानमुत्पाद्य मोहयन्ती आमोक्षमेनं न त्यजति । 'देहयोगाद्वा सोऽपि' इति सूत्रभाष्ययोश्च स्थूलसूक्ष्मरूपप्रकृतिसम्बन्धो जीवस्य स्वरूपावारको वर्णितः । जीवोऽपि मायया तिरोहितस्वस्वरूपो देहगेहादिष्वेव निरूढाहंममताभिमानो यथाभिमानं तत्तदनुबन्धिरक्षणायानवरतं प्रवृत्तः सुखलवलिप्सया नानाविधाकृत्यकरणादिनाऽनन्तदुःखसागर एव निमज्जन्नवसीदति । सेयं बद्धावस्था 'समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः' इति श्रुतौ वर्णिता समा-

सत । कर्मणा देहसम्बन्धस्ततो मिथ्याज्ञान ततः पुन कर्म तेन देहसम्ब घ पुनरित्येव चक्रवत्परिवर्तमानोऽय ससारोऽनादि ।

पुण्यपापरूपकर्मानुसारेण चास्योच्चावचविविधविचित्रसाध्वसाधुयोनिप्राप्तिः श्रूयते—'साधुकारी साधुर्भवति पापकारी पापो भवति' 'पुण्य पुण्येन कर्मणा पाप पापेन' 'तद्य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीया योनिमापद्येरन् ब्राह्मणयोनिं क्षत्रिययोनिं वैश्ययोनिं वा अथ य इह कपूयचरणा अभ्याशो ह यत्ते कपूया योनिमापद्येरन् श्वयोनिं वा सूकरयोनिं वा चण्डालयोनिं वा' इति । शरीरं च चतुर्विध देवतिर्यङ्मनुष्यस्थावरभेदेन हेतुभेदेनापि भवति चतुर्धा जरायुजमण्डज स्वेदजमुद्भिज्ज चेति । 'तेषा खल्वेषा भूताना त्रीण्येव बीजानि भवन्त्यण्डज जीवजमुद्भिज्जम्' इति श्रुतावुद्भिज्जशब्देनैव स्वेदजस्यापि ग्रहणम् । तथा च सूत्र—'तृतीयशब्दावरोध' सशोकजस्य' इति । एकैकस्यैकविंशतिलक्षावान्तरविधाभेदाद्भवति योनीना चतुरशीतिसङ्ख्याकत्वमिति च सत्सम्प्रदायविदामुक्तिः (?) सत्सङ्गिजीवनेऽवर्णि—'जरायुजाण्डजोद्भिज्जस्वेदजाख्या खनीश्च ते' इति । 'योनीश्चतुरशीतिं च लक्षाणि पुनरेव ते' इति च । तथाऽप्ययमर्थो हरिवाक्यसुधासिन्धौ स्पष्टमुक्तः—'केचित्सत्त्वमया जीवा सन्ति केचिद्रजोमया । केचित्तमोमया सन्ति तद्गुणा कर्महेतवः ॥ तेषा गुणानुरूपाणा कर्मणामीश्वरः फलम् । ददाति तादृशान् देहान् दत्त्वोत्तममध्यमाधमान् ॥ जरायुजानण्डजाश्च स्वेदजानुद्भिदस्तथा । दत्ते देहान् यथाकर्म न वैषम्यं स्वत' प्रभौ ॥' 'चतुरशीतिलक्षाणि श्रूयन्ते देहजातयः । अनुभूता हि ताः सर्वा सर्वैरपि च देहिभि ॥' इति ।

जीवत आध्यात्मिकादिदुःखं मृतस्य च नरकदुःखं वाचामगोचरम् । आध्यात्मिकादिदुःखत्रयस्य निदर्शनं चोक्तं स्मृतौ 'सकुटुम्बः क्षुधाविष्टो दुर्जनेनाथ ताडितः । पातितो ज्वलिते वह्नौ क्रमात्त्रिषु निदर्शनम् ॥' इति । संसारदुःखं च वर्णितं सत्सङ्गिजीवने हरिगीतायां 'गर्भवासमहादुःखं जन्मदुःखं ततो महत् । व्याधिदुःखं जरादुःखं मृत्युदुःखं पुनः पुनः ॥ आध्यात्मिकादि त्रिविधं दुःखं माप्नुवन्ति ते जनाः । यथाकर्म लभन्ते वै रुदन्तो भुञ्जते च तत् ॥' इति । 'यमदूतकरान् प्राप्य महतीर्यान्ति यातनाः' इति च । एवं जागरणावस्थायां दुःखान्वय उक्तः । स्वप्नेऽपि जाग्रद्दशावद्भयहेतुपदार्थदर्शनं वर्ण्यते—'ता वा अस्यैता हिता नाम नाड्यो यथा केशः सहस्रधा भिन्नः तावताऽणिम्ना तिष्ठन्ति शुक्लस्य नीलस्य पिङ्गलस्य हरितस्य लोहितस्य (अन्नरसस्य) पूर्णाः अथ यत्रैनं घ्नतीव जिनन्तीव हस्तीव विच्छाययति गर्तमिव पतति यदेव जाग्रद्भयं पश्यति तदत्राविद्यया (कर्मणा) मन्यते' इति । तथा स्वप्नार्थानामपि बाह्यार्थानामिव सत्यत्वमीश्वरसृष्टत्वं च 'यानि ह्येव जाग्रत्पश्यति तानि सुप्तः' 'न तत्र रथा न रथयोगा न पन्थानो भवन्ति अथ रथान् रथयोगान् पथः सृजते... ..स हि कर्ता' इति श्रुतिसिद्धम् । अत एव स्वप्नेऽपि जीवस्यासनगमनकर्मकरणादीनामपि श्रूयमाणानामुपपत्तिः । ईश्वरो जीवानामतिपरिमितपुण्यपापफलं स्वप्ने तत्कालमात्रावसानपदार्थसृष्ट्या प्रयच्छतीति श्रीभाष्ये वर्णितम् । स्वप्ने सुखान्वयवद्दुःखान्वयस्यापि दर्शनान्न स्वाप्निकमपि रूपं जीवस्य स्वाभाविकम् । अत एव उपदिष्टेऽपि तस्मिन् 'नाह-

मत्र भोग्यं पश्यामि' इति श्रुत्वा तस्या पुनरात्मस्वरूपावजिगमिषया प्रश्नः प्रजापतिं प्रति। अथ या सुषुप्त्यवस्था करणग्रामाद्यधिष्ठानेनायत्तस्य विश्रान्त्यर्था तत्र यद्यपि न भयदर्शनं तथापि स्वपरविज्ञानाभावाच्चेतनस्यासत्समत्वात् सौषुप्तिकमपि जीवस्य स्वाभाविकं रूपम्। अत एवोपदिष्टेऽपि तस्मिन्निर्भये इन्द्रस्य न तत्रादरः। तथा च श्रूयते—'नाह खल्वयमेवं सम्प्रत्यात्मानं जानाति अयमहमस्मीति नो एवेमानि भूतानि विनाशमेवापीतो भवति नाहमत्र भोग्यं पश्यामि' इति। अथेन्द्रस्यात्मस्वरूपोपदेशयोग्यतामवधार्य स्वाभाविकमपहतपाप्मत्वादिरूपं निर्दिष्टम्। अनादिकर्महेतुकाचित्संसर्गोत्स्वाभाविकस्यापि रूपस्यावृतत्वात्तु जीवस्य बन्धावस्थेति यावत्। तथा च श्रूयते तत्रैव—'यथा प्रयोग्य आचरणे युक्त एवमेवायमस्मिन् शरीरे प्राणो युक्तः' इति।

'आब्रह्मस्तम्बपर्यन्ता जगदन्तर्व्यवस्थिता। प्राणिनः कर्मजनितसंसारवशवर्तिनः॥' इत्युक्तप्रकारेण मन्विन्द्रचतुर्मुखप्रभृतीनां भूरादिलोकत्रैलोक्यचतुर्दशलोकेश्वराणामपि बद्धत्वमेव। एते चाधिकारिकपुरुषाः। एषु निष्पन्नभगवज्ज्ञाना अपि प्रारब्धफलतया तत्तत्पदेषु निहिताः प्रारब्धं भोगेन क्षपयित्वा मुक्तिं प्राप्नुवन्ति। तथा च सूत्रं 'यावदधिकारमवस्थितिराधिकारिकाणाम्' इति। पुण्यवशाच्चतुर्मुखलोकं प्राप्तानामपि तत्रैव कृतपरमब्रह्मसमाधीनां सह ब्रह्मणा प्रतिसञ्चरे मुक्तिः स्मर्यते 'ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे। परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम्॥' इति।

बद्धेषु बुभुक्षुमुमुक्षुभेदाद्द्वैविध्यं भवत्यधिकारिणाम् । ऐहिकामुष्मिकफलभोगेप्सवो बुभुक्षवः । ये पुनरनादृतशास्त्रप्रमाणाः प्रत्यक्षैकशरणा ग्राम्यभोगैकासक्ताः पशुसधर्माणः तान् वयमत्र बुभुक्षुशब्देन न निर्दिशामः । ये तु बुभुक्षया त्रयीधर्ममनुप्रपन्नास्त एवेह बुभुक्षव इति निर्दिष्टाः । पुण्यकर्मणां च धूमादिमार्गेण द्युलोकप्राप्तिस्तत्रामृतमयदेवशरीरप्राप्तिपूर्वकः स्वर्गानुभवस्ततः क्षीणे पुण्ये पुनः कर्मभूमिं प्रति प्रत्यावर्तनं च वर्णितं छान्दोग्ये । 'अथ य इमे ग्राम इष्टापूर्ते दत्तमित्युपासते ते धूममभिसंभवन्ति धूमाद्रात्रिं रात्रेरपरपक्षं अपरपक्षाद्यान् षड्दक्षिणैति मासांस्तान् नैते संवत्सरमभिप्राप्नुवन्ति मासेभ्यः पितृलोकं पितृलोकादाकाशमाकाशाच्चन्द्रमसम्' इति तावद्धूमादिमार्गेण चन्द्रलोकप्राप्तिः श्रूयते । 'एष सोमो राजा' इति च देवशरीरप्राप्तिः । 'तस्मिन् यावत्सम्पातमुषित्वाथैतमेवाध्वानं पुनर्निवर्तन्ते' इति च पुनरावृत्तिः । एकादशेन्द्रियप्राणसंयुक्तैः भूतसूक्ष्मैः सम्परिष्वक्त एवायं संसारे परिभ्रमतीति च तदन्तरप्रतिपत्त्यधिकरणे निर्णीतम् । 'तस्मिन्नेतस्मिन्नग्नौ देवा श्रद्धां जुह्वति' 'इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' इति जीवसम्बन्धिनां श्रद्धापूशब्दोपलक्षितानां भूतसूक्ष्माणां स्थूलशरीररूपपरिणामश्रवणाद्भूतसूक्ष्मसहितत्वं जीवस्य गमनागमनयोः सिद्धम् । 'तमुत्क्रान्त'मित्यादिश्रुत्या चेन्द्रियप्राणसाहित्यम् । सोऽयमिन्द्रियप्राणभूतसूक्ष्मसङ्घातः सूक्ष्मं शरीरमित्युच्यते । महाप्रलये तु भूतसूक्ष्मादीनां विलयेऽपि कर्मोज्ञानवासनालक्षणं कारणशरीरमनुवर्तते । सत्सङ्गिजीवने च शरीरत्रयस्वरूपं वर्णितमस्ति—'देहोऽयं स्थूलसंज्ञोऽस्ति मलमूत्रमयोऽ-

श्रुतिः । सम्बन्धाज्जीवसत्तायास्तस्मिन्प्रेमास्ति देहिनाम् ॥ स्थूलदेहस्य मध्येऽस्ति जीवस्यान्यत्कलेवरम् । प्राणेन्द्रियमनोबुद्धिसङ्घातः सूक्ष्मसञ्ज्ञितम् ॥ एतत्सूक्ष्मं वपुः प्रोक्तं वपुषोः स्थूलसूक्ष्मयोः । अन्योन्याश्रय एवास्ति सूक्ष्मस्यान्तश्च कारणम् ॥ तच्चाविद्यामयं प्रोक्तं युक्तं सञ्चितकर्मभिः । बन्धेनानादिना तेन जीवस्त्वग्बीजवद्धृतः ॥ यथा भूमेश्च गन्धस्य न भावो व्यतिरेकतः । तथा कारणदेहस्य जीवस्य न पृथक् स्थितिः ॥' इति । पञ्चभूतमात्राणामपि सूक्ष्मशरीरान्तर्भाव उपलक्षितोऽत्र । चेतनेन गाढसम्बन्धात् स्थूलशरीरारम्भकत्वतश्च सूक्ष्मकारणयोरपि शरीरपदव्यवहारोपपत्तिः ।

बुभुक्षाभेदात् भोगसाधनतया परिगृह्यमाणधर्मभेदाच्च भवन्ति विविधा बुभुक्षवः । सामान्यतस्तु देवतान्तरपरा भगवत्पराश्चेति द्वैविध्यं वक्तुं सुशकम् । ईश्वरतनुभूतेन्द्रादिदेवतामात्राराधनपराः साक्षादीश्वराराधनपराश्चेति यावत् । स्मर्यते च—'कामैस्तैस्तैर्हृतज्ञानाः प्रपद्यन्तेऽन्यदेवताः । तं तं नियममास्थाय प्रकृत्या नियताः स्वया ॥ यो यो यां यां तनुं भक्तः श्रद्धयाऽर्चितुमिच्छति । तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् ॥ स तया श्रद्धया युक्तस्तस्याराधनमीहते । लभते च ततः कामान् मयैव विहितान् हि तान् ॥' इति । 'चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन । आर्तो जिज्ञासुरर्थार्थी ज्ञानी च' इति च । अत्र 'आर्तोऽर्थार्थी' चेति बुभुक्षवो निर्दिष्टा द्विविधाः । आर्तो नष्टैश्वर्यकामः । अपरस्तु नूतनैश्वर्यकामः । 'जिज्ञासुर्ज्ञानी'ति च मुमुक्षवो द्विविधाः । तत्र जिज्ञासुः स्वानुभवमात्रार्थः केवलः । ज्ञानी तु

स्वात्मानुभवसुखेऽपर्यवस्यन् परमपुरुषानुभवसेवारसकामः । ज्ञानी च द्विविधः—साध्योपायनिष्ठः सिद्धोपायनिष्ठश्चेति । कर्मज्ञानाङ्गको भक्तियोगः साध्योपायस्तत्र निष्ठा यस्यायमाद्यः । साध्योपायेन यः प्रसन्नः फलं प्रयच्छति सर्वेश्वरः परमात्मा, तमेवोपायत्वेनाऽध्यवस्य परित्यज्य उपायान्तरं तमेव शरणं प्रपन्नाः ये, ते तु सिद्धोपायनिष्ठाः ।

## मोक्षनिरूपणम् ।

मोक्षश्च मुख्यो गुणमयादस्माद्ब्रह्मण्डलाद्बन्धनागाराद्विनिर्गमपूर्वकाक्षरधामस्थपरमपुरुषोपसम्पत्त्यनन्तरभाविस्वस्वरूपाभिनिष्पत्तिलक्षणस्तदनुभवसेवागर्भः । तथा च श्रूयते—'एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परंज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते' इति । परंज्योतिश्च परमात्मा । अर्चिरादिना मार्गेण प्राप्य देशविशेषं परमात्मानं समुपसम्पन्नस्य भवति स्वस्वरूपाविर्भावः । अर्चिरादिमार्गश्च पञ्चाग्निविद्यादिषु श्रुतः—'तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभिसम्भवन्ति अर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान्षडुदङ्ङेति मासांस्तान् । मासेभ्यः संवत्सरं संवत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयत्येष देवयानः पन्था' इत्यादिना । गीतायां च पुण्यकर्मणां गन्तव्यो धूमादिमार्गः पुनरावृत्तिः, ज्ञानिनां तु अर्चिरादिमार्गोऽपुनरावृत्तिश्च प्रतिपादिताः—'यत्र काले त्वनावृत्तिमावृत्तिं चैव योगिनः । प्रयाता यान्ति तं कालं वक्ष्यामि भरतर्षभ ॥ अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् । तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः ॥ धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम् । तत्र

चान्द्रमस ज्योतिर्योगी प्राप्य निवर्तते ॥ शुक्लकृष्णे गती ह्येते जगत शाश्वते मते । एकया यात्यनावृत्तिमन्ययाऽऽवर्तते पुनः ॥' इति । हरिवाक्यसुधासिन्धौ चोक्तोऽर्चिरादिमार्गं 'प्राप्यमेकान्तिकेनैव ब्रह्मधामार्चिरध्वना' इति । सत्सङ्गिजीवनेऽपि निर्दिष्ट 'अर्चिमार्गाधिष्ठितदेवैश्च नियन्ता मुक्ताना वै ब्रह्मगतिं प्रापयितासि' इत्यादौ । विचारितश्च भगवता बादरायणेन शारीरकमीमासायामर्चिरादिपादे । अर्चिराद्यातिवाहिकदेवताभूयस्तया मार्गस्यार्चिरादिरिति नाम । आतिवाहिकाश्च पुरुषा कण्ठीकृताः प्राचार्यैः —'अर्चिरह सितपक्षानुदगयनाब्दमरुदर्केन्दून् । अपि वैद्युतवरुणेन्द्रप्रजापतीनातिवाहिकानाहु ॥' इति ।

स्वस्वरूप च 'अपहतपाप्मा विजरो विमृत्युर्विशोकोऽविजिघत्सोऽपिपास सत्यकाम सत्यसङ्कल्प ' इत्युक्तमपहतपाप्मत्वादिगुणाष्टकम् । अनादिकर्मप्रवाहेणाभिभूतस्यास्य कर्मप्रक्षयेऽभिव्यक्तिरेव न त्वपूर्वस्वरूपस्योदय , येनोदितेन विनाशिना भाव्यमित्याशङ्कावकाश । स्मर्यते च स्वाभाविकानां रूपाणामाविर्भावमात्र मुक्तौ न त्वपूर्वाणामुत्पाद इति—'यथा न क्रियते ज्योत्स्ना मलप्रक्षालनान्मणे । दोषप्रहाणान्न ज्ञानमात्मन क्रियते तथा ॥ यथोदपानकरणात्क्रियते न जलाम्बरम् । सदेव नीयते व्यक्तिमसतः सम्भव कुतः ॥ तथा हेयगुणध्वसादवबोधादयो गुणाः । प्रकाश्यन्ते न जन्यन्ते नित्या एवात्मनो हि ते ॥' इति ।

ननु स्वाभाविकस्यापि रूपस्याविद्ययाऽभिभूतस्य तदपगमे युक्त आविर्भावः, स एव मोक्ष इति युक्त नाम । अथ किमन्यदुपसम्पादनीयम् । 'परज्योति'रित्यात्मज्योतिरेव परमित्युच्यते, चेत-

न्यैकस्वभावतया प्रकाशकत्वयोगात्। जडाद्व्यावर्तकं च परमिति। नैवम्। 'तथा विद्वान् नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्' इति उपेत्रुपेययोः पुरुषयोर्भेदो हि स्पष्टं गम्यते। तथा 'ब्रह्मविदाप्नोति परम्' इत्यत्रापि। ब्रह्मविदिति प्राप्ता परमिति च प्राप्यम्। तथा तत्रैवानुपदं तस्यैनार्थस्य विवेचनम्—'यो वेद निहितं गुहायां परमे व्योमन् सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता' इति। तथा तत्रैव 'रसो वै सः रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति' इति। अयं स इति लब्धृलभ्ययोर्भेदेन निर्देशः। 'विज्ञानसारथिर्यस्तु मनः प्रग्रहवान्नरः। सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्॥' इति च अनुकूलेन बुद्ध्याख्यसारथिना शोभने पथि नीयमानस्य रथिन आत्मनो भवाध्वपारभूतविष्णुपदप्राप्तिः प्रतिपाद्यते। 'एतैरुपायैर्यतते यस्तु विद्वांस्तस्यैष आत्मा विशते ब्रह्मधाम' इति च श्रुत्यन्तरं मुक्तप्राप्ययोर्धामधामिनोर्मुक्ताद्भेदं प्रतिपादयतीति।

कतिचन ( कापिलाः ) पुनरविगणय्येश्वरं प्रकृतिपुरुषविवेकमात्रेण कैवल्यलक्षणमपवर्गं पुरुषस्य वदन्तः, अन्ते पुनरेवं वदन्ति—'तस्मान्न बध्यते नापि मुच्यते नापि संसरति कश्चित्। संसरति बध्यते मुच्यते च नानाश्रया प्रकृतिः॥' इति। अपरे ( हैरण्यगर्भाः ) पुनः ईश्वरं जगतो निमित्तकारणभूतं तत्प्रणिधानं च प्रकृतिविविक्तात्मस्वरूपध्यानेऽपवर्गसाधनभूते आरादुपकारकतयाऽभ्युपगच्छन्तोऽप्यपवर्गविचारे पूर्वेषामेव पक्षमनुप्रविशन्ति। उभयेऽप्येते भोगापवर्गयोः पुरुषार्थतामापाततो ग्राहयन्तः तत्त्वतो विचारे तत्प्रतिषेध एव विचारं परिसमापयन्ति।

सुखदुःखादि सर्वं त्रिगुणपरिणतेर्बुद्धेरेव धर्म इति हि तदभिमतम् । पुरुषस्तु पुष्करपलाशवन्निर्लेपः । यस्तु प्रकृतिपुरुषयोरविवेकस्तद्विवेको वा सोऽपि तस्या एवेति हि स्वीकार्यम् । अथ बन्धो वा मोक्षो वा कस्य, कस्य वा मुमुक्षा यस्यायमपवर्गः फलं स्यात् । ननु सत्यं पुरुषो निर्लेपः, अथापि प्रकृतिपरिणतेर्बुद्धेः पुंसश्च मिथः सन्निधानाज्जडायामपि चैतन्याध्यासः, तथा पुंसि कर्तृत्वाध्यासो भेदाग्रहमूलको भवति । ततश्च जायते संसरणम् । गृहीते तु भेदेऽध्यासः समूलो निवर्तते । सोऽयमपवर्गः । यथोक्तम्—'तस्मात्तत्संयोगादचेतनं चेतनावदिव लिङ्गम्' 'गुणकर्तृत्वे च तथा कर्तेव भवत्युदासीनः' 'ज्ञानेन चापवर्गो विपर्ययात्तद्विपर्यासः ॥' इति । 'एवं तत्त्वाभ्यासान्नास्मि न मे नाहमित्यपरिशेषम् । अविपर्ययाद्विशुद्धं केवलमुत्पद्यते ज्ञानम् ॥ तेन निवृत्तप्रसवामर्थवशात्सप्तरूपविनिवृत्ताम् । प्रकृतिं पश्यति पुरुषः प्रेक्षकवदवस्थितः स्वस्थः ॥ प्रकृतेः सुकुमारतरं न किञ्चिदस्तीति मे मतिर्भवति । या दृष्टाऽस्मीति पुनर्न दर्शनमुपैति पुरुषस्य ॥' इति च । कृपाणे प्रतिफलितमुखमलिनतान्यायेन जपाकुसुमसन्निहितस्फटिकरागन्यायेन चातात्त्विकं पुंसः संसरणमित्येतत्पक्षसारः । तर्हि कस्य वेद संसरणम् । प्रकृतेरेव । 'संसरति बध्यते मुच्यते च नानाश्रया प्रकृतिः ।' हन्त तर्हि बद्धो मुक्त इतीयं व्यवस्था विलुप्ता नाम । सत्यम् । पुंस्येषा व्यवहृतिरतात्त्विकी, नानाश्रयायां तस्यां तु साऽस्त्येव । सैव पुंसः सन्निधानात्स्वस्यामारोपिततदीयचैतन्यभावा तं समपेक्ष्य स्वविलासान् प्रदर्शयन्ती तेन विविच्य दृष्टा निवर्तते 'रङ्गस्य दर्शयित्वा निवर्तते नर्तकी

यथा रङ्गात्। पुरुषस्य तथाऽऽत्मानं प्रकाश्य विनिवर्तते प्रकृतिः।' अहो मिथो व्याहतं ब्रुवन् कथं नाम स्वपक्षं स्थापयति भवान्। 'पुरुषोऽस्ति भोक्तृभावात्कैवल्यार्थप्रवृत्तेश्च।' इत्यनेन भोगापवर्गौ पुंसोऽनुमन्येते। 'तस्मान्न बध्यते नापि मुच्यते' इति प्रतिषिध्येते च। पुनरिदमिह विचारयामः—संसरणमूलं यो भेदाग्रहः स कस्माद् भेदस्य कस्मिन् वर्तमानस्याग्रहः?, ननु पुरुषे सतः त्रिगुणाद् भेदस्य। किमस्ति भेदो नाम धर्मः पुरुषे स्वरूपादतिरिक्तः?। यद्यतिरिक्तः, सिद्धान्तभङ्गः। अथानतिरिक्तः, चिन्मात्रतया स्वरूपं सदैव प्रकाशते इति कथं भेदाग्रहः। किञ्च—अविक्रिये पुंसि ज्ञानक्रियाकर्तृतारूपं ज्ञातृत्वं नोपपद्यते इति ज्ञातृत्वमपि प्रतिक्षिपतस्तव मते प्रकृतेर्भेदमात्मगतमपि नैव पुमान् वेत्तीति सदैव पुंसि भेदाग्रहो निराबाधः। अथ प्रकृतिरेव स्वगतं पुरुषाद् भेदमविज्ञाय संसरति, विज्ञाय विनिवर्तते संसरणात् इति चेद्धन्त पुरुषार्थकथा विलुप्तैव स्यात्। किञ्च भेदाग्रहे अन्योन्यधर्माध्यासे वा मूलतया भवताऽभिमतं प्रकृतिपुरुषसान्निध्यं सदैव सर्वान् प्रत्यविशिष्टमिति नैकस्याप्यपवर्गप्रसङ्गः। असौ बद्धः अयं तु मुक्त इति व्यवस्थाऽपि दुर्घटा। तथा चोक्तं तत्त्वमुक्ताकलापे—

'नीरूपे बिम्बितत्वं क नु भवति कथं रूपशून्यस्य तत्स्यात्
निर्लेपे संसृतिः का कथमतिविशदो निष्क्रियश्चैष मुह्येत्।
नित्यं वा किं न मुह्येदुपधिभिरितरैर्वेत्तु भेदं कथं वा को वा
मोक्षोऽद्य पुंसः प्रथममपि न खल्वस्य दुःखादिगन्धः॥
व्यापिन्येकाऽपि साङ्ख्यैः प्रकृतिरभिहिता सर्वसाधारणी सा
व्याप्ता जीवाश्च सर्वे प्रकृतिपरिणतिर्भोग एषामभीष्टः। सर्वे

सर्वस्य भोगाः स्युरिह तत इमे सन्निधानादिसाम्याद्बुद्धीच्छाद्यं च सर्वं प्रकृतिगतमतो न व्यवस्था ततोऽपि ॥' इति ।

अपरे ( अद्वैतिनः ) पुनरंशतः कापिलीं प्रक्रियामनुसरन्त , अंशतश्च सौगतीं प्रक्रिया अतात्त्विक्या अविद्यायाः सकलभेददर्शनमूलभूताया निवृत्तिमेव मोक्षं तत्साधनभूतं च तत्त्वज्ञानं तत्त्वमसीति वाक्यजन्यं ब्रह्माहमस्मीत्यपरोक्षलक्षणमाचक्षते । 'येनाक्षरं पुरुषं वेद सत्यम्' इति वेदनीयतया श्रूयमाणं परमपुरुषं सकलविशेषप्रत्यनीकनित्यचैतन्यमात्रलक्षणमेकमद्वितीयं सत्यमभ्युपगच्छन्त , दृश्यस्यास्य सर्वस्य च तदितरस्य तस्मिन्नधिष्ठाने शुक्ताविव रजतस्याविद्याकल्पिततया मिथ्यात्वं, अविद्याख्यदोषस्यापि तस्यैव मिथ्यात्वं वदन्त , औपनिषदं तत्त्वं योगाचारमतच्छायया नयन्ति। पुरुषस्वरूपविशोधने कापिलप्रक्रियामनुसरन्तोऽपि पुरुषबहुत्वे विप्रतिपद्यन्ते। त्रिगुणपरिणतावेव कर्तृत्वं स्थापयन्तोऽपि गुणमयस्य सत्यत्वे विप्रतिपद्यन्ते । दृश्यस्य सर्वस्य मिथ्यात्वं स्वीकुर्वन्तोऽपि मिथ्यात्वनिर्वहणप्रकारे विप्रतिपद्यन्ते । एषां मतेऽपि न बध्यते नापि मुच्यते आत्मा परमार्थतः । अथापवर्गाख्यः पुरुषार्थः कः । ननु प्रपञ्चस्यास्य सुखदुःखमयस्याविद्याकल्पितस्य स्वाप्नप्रपञ्चस्येव प्रबोधेन ब्रह्मविद्यया समूलस्य निवृत्तिरपवर्गः । हन्त भो शोभते निदर्शनम् । निदर्शने स्वाप्नदृश इव प्रपञ्चदृशः कस्यचित्सत्ता वक्तव्या, यस्य प्रपञ्चदर्शनमूलमूलाविद्यान्वयः , विद्यया तदपगमश्च । स च तव मते दुर्घटः । या चाविद्यायाः शक्तिरिष्यते आच्छादिका विक्षेपिकेति, तया कोऽयमाच्छाद्यते । प्रकाशैकरसस्य ब्रह्मण आच्छादनं नोपपद्यते । यवनिकेव मध्ये स्थित्वाऽऽच्छादयतीति

चेत् कयोरिति वक्तव्यम् । जीवपरयोरिति चेत् । नैवं भवता वक्तुं शक्यते । न हि जीवो नामान्यः कश्चिदस्ति । अविद्यया कल्पितो जीव इति चेत्, ब्रह्मस्वरूपमाच्छाद्य कल्पयेज्जीवं, जीवं कल्पयित्वा च तं प्रति ब्रह्मस्वरूपमाच्छादयेदित्यन्योन्याश्रयप्रसङ्गः । ब्रह्मैवाविद्यया संसरति, तस्यैव संसरणनिवृत्तिर्मोक्ष इति तूपहासास्पदम् । निरस्तश्चायं पक्षः श्रीभाष्ये विस्तरशः ।

अपरे तु (नैयायिकाः) पुरुषभेदं प्रपञ्चसत्यतां चाङ्गीकुर्वन्तः पारमार्थिकं पुरुषस्य मिथ्याज्ञानान्वयं तन्मूलभूतसुखदुःखान्वयं च स्वीकुर्वन्तः, आत्यन्तिकं दुःखविनाशमपवर्गमाचक्षते । अयमाशयः—अनात्मन्यात्मबुद्धिरविद्या देहात्माभिमानलक्षणा, सा चानादिकालानुस्यूता, तया रागद्वेषलक्षणो दोषः, तेन प्रवृत्तिः, तया च धर्माधर्मौ, ताभ्यां जन्म, ततश्च सुखदुःखान्वयः पुनर्मिथ्याज्ञानं च, ततो दोषादि । सोऽयमात्मनो बन्धः । 'न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति' इति श्रुत्या शरीरसम्बन्धस्य सुखदुःखान्वयहेतुत्वमवगम्यते । तस्य च धर्माधर्ममूलकत्वम्, तयोश्च प्रवृत्तिमूलकता, तस्याश्च रागद्वेषमूलकत्वम्, तयोश्च देहात्माभिमानलक्षणाविद्यामूलकता । एवं बन्धमूलहेतोरविद्यायाः श्रवणमननपूर्वकध्यानपरिपाकनिष्पन्नात्मस्वरूपसाक्षात्कारेण विनाशे क्रमेण तत्प्रयोज्यानां दोषादिजन्मान्तानां व्यपगमे सञ्चितानां च कायव्यूहेन भोगतो नाशादात्यन्तिकदुःखनिवृत्तिलक्षणोऽपवर्गः कैवल्यावस्थितिरूप आत्मनः सिध्यति । तथा च न्यायसूत्रं—'दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः' इति । कैवल्यावस्थितिश्च बुद्धिसुखदुःखेच्छादिसक-

त्वविशेषगुणशून्यावस्थिति । (बुद्ध्यादयो हि क्षणद्वयावस्थायिनो मनःसंयोगादिकारणजन्या, अपगते शरीरे न बुद्धेरप्युदयावसरः) आत्मस्वरूपध्याननिष्पत्तये ईश्वरोपासनं च करणीयमित्येषां पक्षः । सेयं कैवल्यावस्था पाषाणकल्पेति नास्यैकोऽपि स्पृहयेत् । ननु सति ज्ञाने दुःखमवर्जनीयमिति न स्यादस्य बन्धविच्छेदः । कोऽयं नियमो ज्ञानं दुःखं जनयेदिति । ननु विना मनोयोगं न ज्ञानमुत्पद्येत । तस्मिंश्च सति शरीरसम्बन्धः प्राप्तः । तथा सति बद्ध एवायम् । ज्ञानमागन्तुको धर्म इति यदुक्तं तत्रायं दोषः । अथ ज्ञाने विनष्टे मुक्तौ कथमयं चेतन इत्युच्येत । 'नहि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते' इतिश्रुत्या च ज्ञानस्यानपगमो मुक्तौ गम्यते । तत् श्रुतिविरुद्धोऽयं पन्थाः ।

जैमिनीयाः पुनः केचित् बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्काराणामात्यन्तिकनिवृत्तिमात्रलक्षणं कैवल्यमपवर्गमाचक्षते । इयानेव विशेषः एषामाक्षपादेभ्यः—ज्ञानापगमेऽपि ज्ञानशक्तियुक्त एव मुक्तात्मा, यतश्चेतन इति । रागद्वेषप्रवृत्तिधर्माधर्मजन्मसुखदुःखैरविद्यामूलकैः कार्यकारणभावापन्नैः संसृतिः, यथावस्थितात्मस्वरूपध्यानप्रकर्षजन्यविशदसमात्मावभासलक्षणया विद्ययाऽपवर्गः । सा च विद्या कर्मसमुच्चिता धर्माधर्मक्षयाय प्रभवति । उक्तं च शास्त्रदीपिकायाम्—'सुखदुःखविहीनोऽसौ मुक्तः स्वस्थोऽवतिष्ठते । किमिदं स्वस्थ इति, ये ह्यागमापायिनो धर्मा बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्कारास्तानपहाय यदस्य नैजं रूपं ज्ञानशक्तिसत्ताद्रव्यत्वादि तस्मिन्नवतिष्ठते इत्यर्थः । तस्मात् सुखदुःखादिसमस्तवैशेषिकगुणोच्छेदो मोक्षः, सुखदुःखोच्छेदश्च

धर्माधर्मयोरुच्छेदात्, धर्माधर्मयोरुच्छेदश्च उत्पन्नानां धर्माधर्माणामुपभोगेन नित्यनैमित्तिककर्मानुष्ठानेन आत्मज्ञानेन च, उत्पाद्यानां च काम्यानुष्ठाननिमित्तानां धर्माणां तदननुष्ठानेनानुत्पादात्, विहिताकरणप्रतिषिद्धानुष्ठाननिमित्तानां चाधर्माणां विहितानुष्ठानेन प्रतिषिद्धाकरणेन च परिहारात्, असति शरीरारम्भे पूर्वशरीरनिपाते चाशरीरोऽवस्थितो मुक्तो भवति ।' इति । ननु कथमभावस्य पुरुषार्थता । कुतो न पुरुषार्थता । दुःखाभिहतो भीतभीतो दुःखतस्तदपगमं प्रार्थयेतैव । सुखमपि धर्ममूलकं शरीरसम्बन्धसापेक्षं दुःखमिव । विवृतं चैतत् शास्त्रदीपिकायाम्— 'दुःखपरिलोपाच्च पुरुषार्थत्वम् । सुखपरिलोपादपुरुषार्थत्वमिति चेत्—नैवमल्पं हि संसारे सुखं तदपि सूरयः । बहुप्रयाससाध्यत्वात् दुःखमेवानुजानते ॥ जन्ममृत्युजराव्याधिदुःखान्यनुदिनं नृणाम् । स्वयमेव विना यत्नान्निपतन्ति सहस्रधा ॥ विहिताकरणात् नित्यं प्रतिषिद्धनिषेवणात् । महदामुष्मिकं दुःखं यन्नरैर्नैव गम्यते ॥ बहुदुःखपरिष्वक्तं यन्नाम स्वल्पकं सुखम् । सुरापानादिसुखवत् वर्जनीयं विवेकिनाम् ॥ एवंभूतेऽपि संसारे ये रक्ताः सुखतृष्णया । न तेषामधिकारोऽस्ति मुक्तिशास्त्रे कथञ्चन ॥ संसारादुद्विजन्ते ये दृष्टलोकपरावराः । त एव खलु मुच्यन्ते न तु यः प्राकृतो जनः ॥ तेषामेवापवर्गाख्यः पुरुषार्थो महात्मनाम् । तेषामेवाधिकारश्च मुक्तिशास्त्रे मनीषिणाम् ॥ तेनाभावात्मकत्वेऽपि मुक्तिर्नापुरुषार्थता । सुखदुःखोपभोगो हि संसार इति शब्द्यते ॥ तयोरनुपभोगं तु मोक्षं मोक्षविदो विदुः ॥' इति ।

मुक्तिस्वरूप तत्तद्वाद्यभिप्रेत प्रदर्शितम् । सर्वबन्धविनिर्मोकपूर्वकैवल्यसस्थितिः ॥ मुक्तिर्मतैते ससारनिवृत्त्यैकाभिलाषुकै । सत्यमेते न जानन्ति स्वरूपप्रासमुत्तमम् ॥ शेषिणः परिपूर्णस्य गुणैश्वर्यविभूतिभि' । निरस्ताखिलदोषस्यामन्दानन्दमयस्य वै ॥ अनुभूतिसुख भूरिप्रीत्यानुभवजन्यया । सेवामकृत्वाऽवस्थातुमशक्तस्य रसात्मकम् ॥ नानासेवाविधान च पुरुषार्थमनुत्तमम् । इदमेव तु जीवस्य सत्य मोक्षसुख महत् ॥ प्रमाणवचनान्यत्र निर्दिष्टान्येव ह्यात्मनः । शेषत्ववर्णने ज्ञेयः श्रीभाष्यादिषु विस्तर' ॥

## मुक्तस्य सार्वज्ञ्यम् ।

मुक्तौ ज्ञानशक्तिमात्र विद्यते जीवस्य न ज्ञानमित्येतदपि मत मुक्तावपि सर्वसाक्षात्कारप्रतिपादकश्रुतिविरुद्धम् । तथा च श्रुति –'सर्वं ह पश्य' पश्यति' 'एतान् कामान् पश्यन् रमते य एते ब्रह्मलोके' इत्यादिः । ननु कामदर्शन मुक्तेः स्याद्विघातकम् । नैवम् । अत्र हि काम्यन्त इति कामा भगवत कल्याणगुणा एव विवक्षिताः । नन्वेवमपि 'जक्षत् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा' इत्यादिना प्रतिपन्न ह्यन्नपानादिक स्यात्तथा । नैवम् । यथासङ्कल्पं सर्वकामसिद्धिमात्रस्यापहतपाप्मत्वादिस्वरूपाविर्भावफलभूतस्यात्र विवक्षितत्वात् । तथा हि श्रुत्यन्तरं 'सर्वमाप्नोति सर्वशः' इति । न च भगवदनुभवैकभोगो मुक्तः केवल स्वार्थतया किञ्चित्कामयेत सङ्कल्पयेद्वा । भगवदनुभवसेवाशेषतया च सङ्कल्पमात्रसृष्टाः सर्वेऽपि पदार्था दिव्या एवेति न मुक्तेर्विरोधः । प्राकृतेष्वन्वयविशेषो हि बन्ध । न त्वेषामस्ति

सः। 'नोपजनं स्मरन्निदं शरीरम्' 'न पश्यो मृत्युं पश्यति न रोगं नोत दुःखताम्' इति च प्राकृतहेयदेहाद्यदर्शनं श्रूयते इति।

## मुक्तस्य देहादियोगः।

एवं 'स एकधा भवति त्रिधा भवति पञ्चधा। सप्तधा नवधा चैव पुनश्चैकादश स्मृतः। शतं च दश चैकं च सहस्राणि च विंशतिः।' इति निरवयवस्याच्छेद्यस्वरूपस्यैकस्यात्मनो मुक्तौ श्रूयमाणं बहुभवनमपि अप्राकृतनानाशरीरयोगलक्षणं भगवतः सर्वविधसेवोपयुक्तं न मुक्तेर्विघातकं वेदितव्यम्। 'न ह वै सशरीरस्य' इत्यादिश्रुतेः प्रकरणाद्बन्धकालिककर्मकृतप्राकृतशरीरयोगविषयत्वात्। तस्यैव च दुःखादिहेतुत्वदर्शनात्। त्रिगुणद्रव्यापेक्षया विलक्षणमप्राकृतमेव द्रव्यं किञ्चित् भगवद्दिव्यलोकनगरधामादिरूपेणाप्राकृतगन्धकुसुमोद्यानादिरूपेण च वर्तमानमनाद्यनन्तं मुक्तानामैच्छिकरूपाद्याकारेणापि परिणतिं प्राप्नोति तदा तदेति तु मोक्षशास्त्रप्रक्रिया। मुक्तस्य शरीरादिकमस्ति न वेति विशये 'अभावं बादरिराह ह्येवम्' इति शरीराद्यभावं बादरेरभिमतमुक्त्वा, 'भावं जैमिनिर्विकल्पामननात्' इति च शरीरादिभावं 'स एकधा भवति त्रिधा भवति' इत्यादिविकल्पोपदेशसिद्धं जैमिन्यभिमतमुक्त्वा, मुक्तौ सत्यसङ्कल्पस्य यथासङ्कल्पं कदाचिच्छरीरादिभावं कदाचिच्च तदभावं स्वाभिमतं प्रदर्शितवान् भगवान् बादरायणः—'द्वादशाहवदुभयविधं बादरायणोऽतः' इति। एकस्याणोरात्मनो नानादेहेषु व्याप्तिं च ज्ञानद्वारिकामाह 'प्रदीपवदावेशस्तथाहि दर्शयति' इति। श्रीभाष्ये च सम्यक् निरूपितो मुक्तस्य दिव्यदेहेन्द्रिययोगः।

तत्त्वविवेकविधुराः केचित्तु मुक्तस्यात्मन एव देहाकारेण स्वरूपपरिणामं भगवत्सेवार्थं मन्यन्ते । तदसत् । आत्मनोऽणुपरिमाणत्वस्य श्रुतिस्मृतिसूत्रैः स्वाभाविकत्वसिद्धेः स्वाभाविकाकारावस्थानलक्षणायां मुक्तौ तस्यैव सम्भवात् । मुक्तावानन्त्यश्रुतिस्तु धर्मभूतज्ञानस्यानन्त्यपरा व्याख्याता । तत्तु स्वतो विभ्वपि सङ्कोचविकासार्हम् । न ह्यात्मनः सदैकस्वरूपस्य सङ्कोचो विकासो वा । किञ्च निर्विकारस्य निरवयवस्याच्छेद्यस्य चास्यैव नानाव्यवहितदेहरूपपरिणामे खण्डितत्वं प्रसज्यते करचरणादिसङ्घातात्मकत्वं सविकारत्वं च । (विकारः परिणामः) किञ्च चेतनस्यास्य स्वरूपपरिणामं सम्भवतीश्वरवत् । अप्राकृतद्रव्यं तु अजडमपि स्वयमचेतनं सचेतनभूतेश्वरनित्यमुक्तेच्छानुसारान्नानाऽप्राकृतदिव्याकारादिरूपेण परिणमतीति युक्तम् । चेतनाचेतनयोरपरिणामित्वपरिणामित्वलक्षणस्वभावनियमस्तु नित्यभगवत्सङ्कल्पाधीनः । अतो न तत्सङ्कल्पतोऽपि मुक्तस्य देहरूपपरिणामसम्भवः । तथा च वर्णितं भट्टपराशरपादैः 'रूपप्रकारपरिणामकृतव्यवस्थं विश्वं विपर्यसितुमन्यदसच्च कर्तुम् । क्षाम्यन् स्वभावनियमं किमुदीक्षसे त्वं स्वातन्त्र्यमैश्वरमपर्यनुयोज्यमाहुः ॥' इति । तस्य तस्य वस्तुनः स्वभावनियमो निरङ्कुशस्वतन्त्रस्य परमात्मनो नित्येच्छासिद्धोऽपर्यनुयोज्य इत्यर्थः । 'अथ नामधेयं सत्यस्य सत्यं प्राणा वै सत्यं तेषामेष सत्यम्' इति (बृ उ) वाक्यव्याख्यानावसरे गोपालानन्दमुनिभिरपि आविष्कृतं जीवस्यापरिणामित्वं—'प्राणा जीवाः सत्यं स्वरूपतोऽविकृतत्वात् । तेषामेष सत्यम् । सम्बन्धसामान्ये षष्ठी । तेभ्योऽप्येष

स्वभावतोऽविकृतत्वात्। यद्वा प्राणानां सत्यताप्येतत्सङ्कल्पायत्तेति तेषामेष सत्य'मिति। स्वरूपविकारवत्त्वादचेतनमनृतमुच्यते। स्वरूपविकाराभावाच्च जीवः सत्यमिति। तस्याविकारिस्वरूपत्वं च भगवत्सङ्कल्पायत्तमिति भावः। 'गुणापाये ब्रह्मशरीरमेति' 'निरिच्छंस्त्यजति प्राणान् ब्राह्मीं संविशते तनुम्' इत्यादिश्रुतिस्मृतिषु चाप्राकृतदेहप्राप्तिरेवोच्यते न तु स्वरूपतो देहभावः। किञ्च—'मुक्तात्मानो दिव्यवस्त्रभूषणादिभिरुज्ज्वलाः। दिव्यस्रगनुलेपाद्यैः शोभमानाश्च वर्णिताः॥ सच्चिदानन्दरूपाश्च दिव्याङ्गवस्त्रभूषणाः। हरिवाक्यसुधासिन्धौ तथा सत्सङ्गिजीवने॥ अप्राकृतेन्द्रियप्राणा दिव्यालङ्कारवाससः। न मुक्तस्य स्वतो वस्त्रभूषादिबहुरूपतः॥ परिणामो युज्यते हि नित्याखण्डस्य वस्तुनः। किञ्चैवं सति बन्धेऽपि जीव एव प्रपद्यते॥ देहादिभावमित्येवं कुतो वा नानुमन्यते। तथा च लोकायतकपक्षादपि जघन्यता॥ तस्मात्स्वरूपतो नानापरिणामस्य चेतने। बन्ध एवासम्भवे तु मुक्तौ स्यात्सम्भवः कथम्॥ मुक्तस्य वस्त्राभरणस्थानादिबहुरूपतः। विवर्तते च यद्वस्तु विशुद्धं भास्वरं स्वतः॥ तदेव देहरूपेण मुक्तस्य भवति ध्रुवम्। स्पष्टं चैतत्सम्प्रदायग्रन्थेष्वस्ति निरूपितम्॥

तथाहि—हरिवाक्यसुधासिन्धौ मुक्तस्याप्राकृतपरप्रकृतितो देहः प्रादुर्भवति, तेन सङ्गतो भगवतः सेवायां वर्ततेऽयमिति वर्णनान्मुक्तौ देहदेहिभेदः स्पष्टं प्रतीयते—'कृष्णेच्छयाऽथ दिव्योऽसौ पराप्रकृतितो मुने। आविर्भवति देहो वै तेन संयुज्यते च सः॥' इति। विवृतं च टीकायां—"अथ—अनन्तरम्। अस्य—चिद्रूपस्य

जीवस्य । कृष्णेच्छया—सम्यगुपासितश्रीहरिसङ्कल्पेन । पराभक्तेरिति—अक्षरब्रह्मात्मकपराभक्तेः सकाशात् । देहः—ब्रह्ममयतनुः । आविर्भवति । स—एवंभूतो भगवद्भक्तात्मा । तेन—आविर्भूतब्रह्मशरीरेण सह संयुज्यते—तदभिमानयुक्तो भवति । 'गुणापाये ब्रह्मशरीरमेति' इति श्रुतेः" इति । अत्राभिमान्यभिमन्तव्यभावोक्त्या देहात्मनोर्भेदो लभ्यते । स्वरूपस्यैव परिणामे को वाऽभिमन्ता किं वाऽभिमन्तव्यम् । 'ते स्निग्धभक्ता देहान्ते गत्वा भागवतं पदम् । कृष्णेच्छानुसृतान् देहान् प्राप्नुवन्ति हि निर्गुणान् ॥ तादृशास्ते ततो भक्ता श्रीहरिं तत्र धामनि । प्रेम्णा संसेवमानास्तु वर्तन्तेऽतिमुदान्विताः ॥' इत्यत्र च देहदेहिभेदः स्पष्टं प्रतीयते । अत्र निर्गुणानित्यभाक्तनत्वं मुक्तदेहानां विवक्षितम् । 'भक्त एवंविधो ज्ञानी देहान्ते चिन्मयाकृतिः । ब्रह्मधामैव संप्राप्य सेवायां वर्तते हरेः ॥' इत्यत्र च चिन्मयाकृतिरित्यत्राकृतिशब्दः शरीरवाची । बहुव्रीहिणा च तद्विशिष्टत्वं लभ्यते । तथा च विवृत टीकायाम्—'ब्रह्ममयशरीरः सन्' इति । स्वरूपस्यैव शरीरतया परिणामे तु ब्रह्मशरीरं सदिति व्याख्येयं भवेत् । अतोऽपि भेदो ज्ञायते । सत्सङ्गिजीवने च 'दिव्यां तनुं ब्रह्मरूपां प्राप्य कृष्णेच्छया स च । दिव्यं विमानमारुह्य स्वेष्टं तद्धाम याति वै ॥ गोलोके सोऽक्षरे धाम्नि वैकुण्ठे वापि भक्तराट् । कृष्णस्य वर्ततेऽखण्डं सेवायां सर्ववन्दितः ॥' 'एकान्तिनो वैष्णवा ये ते त्यक्त्वा भौतिकानिह । देहान् लब्ध्वा दिव्यतनूर्गोलोकं धाम यान्ति हि ॥' 'स तुरीयप्रकाशोऽथ दिव्यं भागवताभिधम् । देहं स लब्ध्वा परमे भग-

वद्धास्मि मोदते ॥ न तस्य कर्मजन्योऽसौ देहः किन्त्वस्ति चिन्मयः । प्रलये न व्यथामेति न सर्गे च स जायते ॥ सत्यसङ्कल्पापहतपाप्मत्वादिगुणान्वितः । स मुक्तो वर्तते तत्र सेवमानो हरिं मुदा ॥' 'वासुदेवप्रसादेन ततो भागवतीं तनुम् । सम्प्राप्य परमानन्दं जुषमाणः स वर्तते ॥' इत्यादिषु मुक्तस्य देहयोगमात्रं प्रतिपाद्यते न तु स्वरूपस्यैव देहभावः । नापि सम्प्रदायमूलग्रन्थेषु कुत्रापि मुक्तस्यैव देहरूपेण परिणाम इति वर्णितमस्ति । अतः 'स एकधा त्रिधा भवति' इति श्रुत्युक्तं मुक्तस्य बहुभवनं नानादेहयोगलक्षणमेव युक्तम् ।

## मुक्तानां भोगसाम्यम् ।

मुक्तानां परस्परं सर्वेश्वरेण च साम्यमेव स्वरूपरूपभोगैः । अपहतपाप्मत्वादिगुणाष्टकस्य ब्रह्मस्वरूपस्याविर्भावात्स्वरूपतः साम्यम् । 'स एकधा भवति' इत्यप्राकृतरूपान्वयाद्रूपतः साम्यम् । 'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता' इति च भोगतः साम्यम् । न च सर्वकर्मबन्धविनिर्मोकपूर्वकं परमपुरुषमुपसन्नानां तदनुभवैकभोगानां च तरतमभावे किञ्चित्प्रयोजकमस्ति । तदुक्तमभियुक्तैः—'सर्वकर्मविनिर्मुक्ते मुक्तिभेदः कथं भवेत् । कर्मैकदेशयोगे तु न मुक्तिर्भुक्तिभेदवत् ॥' इति । अत एव वर्णितं सत्सङ्गिजीवने 'रूपं समृद्धिरैश्वर्यं स्थानं भोगाः सुखानि च । समान्येतानि सर्वेषां सच्चिदानन्दरूपिणाम् ॥ न्यूनत्वे चाधिकत्वे वा भोगादेस्तत्र सर्वथा । इच्छैवैकास्ति भोक्तृणां हेतुर्नान्यस्तु कर्हिचित् ॥ यथा कश्चित्समृद्धोऽपि स्वेच्छयैव नराधिपः । भोगान् भुङ्क्ते न भुङ्क्ते

वा तथा तेऽपि निजेच्छया ॥' इति । 'मत्सेवया प्रतीत च सालोक्यादिचतुष्टयम् । नेच्छन्ति सेवया पूर्णाः कुतोऽन्यत्कालविद्रुतम् ॥' इत्याद्युक्ता सालोक्यादयस्त्वयान्तरमुक्तिभेदा गौणा । मुख्या मुक्तिस्तु सायुज्यलक्षणा । युज्यत इति युक्गुण । समानगुणकत्व सायुज्यमपहतपाप्मत्वादिगुणाष्टकवत्त्वरूपम् । इदमेव 'मम साधर्म्यमागताः' इति भगवतोक्त साधर्म्यम्, 'निरञ्जन परम साम्यमुपैति' इति श्रुत्युक्त साम्य च । तथा चोक्त सुधासिन्धौ—'निरञ्जन इति श्रुत्या महिमाऽस्यैव वर्ण्यते । मायाञ्जनविहीनेन साम्य यत्प्राप्यते हरे ॥ साम्य साधर्म्यमित्युक्त प्राप्नोति परम स तत् ।' इति । अत्र च सालोक्यादिकमन्तर्भूतम् । तथा चोक्त तत्त्वमुक्ताकलापे—'सालोक्याद्या प्रभेदा ननु परिपठिताः क्वापि मोक्षस्य नैव सायुज्यस्यैव तत्त्वात्तदितरविषये मुक्तिशब्दस्तु भाक्त । तस्मिन् ते च त्रय स्युस्तदपि च सयुजोर्भाव इत्यैकरस्य भुक्साम्य लोकसाम्यादिवदपरधिया तावतैवैक्यमोह ॥' इति । 'लोकेषु विष्णोर्निवसन्ति केचित्सामीप्यमृच्छन्ति च केचिदन्ये । अन्ये तु रूप सदृश भजन्ते सायुज्यमेके स तु मोक्ष उक्त ॥' 'मोक्ष सालोक्यसारूप्य प्रार्थये न कदाचन । इच्छाम्यह महाबाहो सायुज्य तव सुव्रत ॥' इत्यादिवचनेषु सालोक्यादीनामवान्तरमुक्तिभेदत्व सायुज्यस्यैव मुख्यमोक्षत्व च प्रोक्तम् । 'सायुज्य प्रतिपन्ना ये तीव्रभक्तास्तपस्विनः । किङ्करा मम ते नित्य भवन्ति निरुपद्रवाः ॥' इति च सायुज्यमुक्तिं प्राप्ताना भगवत्सेवारसानुभवयोगित्वमुच्यते । अत्र सेवागर्भि-

तमेव सायुज्यं मुख्यो मोक्ष इति स्थितम् । अत एव सेवाविरहितस्य सायुज्यस्याप्यनुपादेयत्वमुक्तं श्रीभागवते—'सालोक्यसार्ष्टिसामीप्यसारूप्यैकत्वमप्युत । दीयमानं न गृह्णन्ति विना मत्सेवनं जनाः ॥' इति । स्वरूपत ऐक्यासम्भवादेकत्वं सायुज्यरूपं वोध्यमत्र । तथा च वर्णितं सत्सङ्गिजीवने—'निष्कामा इतरे ते तु कृष्णसेवनमन्तरा । मुक्तीश्चतुर्विधाः सिद्धीश्चाष्टौ नेच्छन्ति कर्हिचित् ॥' 'विहीनान् सेवया विष्णोरसौ मुक्तिं चतुर्विधाम् । अपि नेच्छेच्च कैवल्यं तुच्छं स्वर्गादि किं पुनः॥' इति । अत एव 'तेजःपुञ्जेऽक्षरे धाम्नि नित्यं कृष्णो विराजते । तद्भक्ताश्च तदाकाराः सेवन्ते स्वामिनं हि तम् ॥ कृष्णः स्वामी सेवकास्ते पुरुषाः पुरुषोत्तमम् । भजन्तीति विशेषोऽस्ति तत्सारूप्येऽपि सेविनाम् ॥' इत्यत्र सायुज्यमुक्तिं प्राप्तानामत्यन्तसरूपाणामपि भगवता सेव्यसेवकभावलक्षणो भेदोऽस्तीति वर्णितम् । अतश्च सायुज्यमुक्तिर्ब्रह्मैकतापत्तिलक्षणेति मतमनादरणीयम् । हरिवाक्यसुधासिन्धौ ४६ तरङ्गप्रभृतौ च सर्वमेतन्निरूपितमस्ति श्रीहरिणा ।

## मुक्त्युपायसङ्कीर्तनम् ।

## भक्तिनिरूपणम् ।

प्रसङ्गात्प्रकृतमुक्तिसाधनस्वरूपं निरूप्यते । 'ब्रह्मविदाप्नोति परं' 'तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' इति परब्रह्मभूतस्य पुरुषोत्तमस्य वेदनमेव मुक्तिसाधनं श्रूयते । वेदनं च न शास्त्रजन्यज्ञानमात्रम्, किन्तु श्रवणमननाभ्यां सुदृढावधारितशास्त्रार्थस्य तदनन्तरभाविध्यानात्मकमेव । तथा

च श्रुतयः—'अनुविद्य विजानाति' 'विज्ञाय प्रज्ञां कुर्वीत' 'आत्मेत्येवोपासीत' 'आत्मानमेव लोकमुपासीत' 'ओमित्येवात्मानं ध्यायथ' इत्याद्याः । मोक्षसाधनीभूतस्य ज्ञानस्यासकृदावृत्तज्ञानरूपत्वं सूत्रकृताऽप्युक्तं—'आवृत्तिरसकृदुपदेशात्' इति । 'एवं मुक्तिफलानियमः' इति पूर्वसूत्रे हि मोक्षसाधनं ज्ञानं प्रस्तुतम् । तस्यैवासकृदावृत्तत्वमत्र सूच्यत इति । आह च वृत्तिकारः—'वेदनमुपासनं स्यात्तद्विषये श्रवणात्' इति । असकृदावृत्तं च ज्ञानं ध्यानमुपासनमिति चोच्यते । तच्च विजातीयप्रत्ययान्तराव्यवहितमविच्छिन्नस्मृतिसन्ततिलक्षणं ध्रुवानुस्मृतिशब्देन सशब्द्यते 'ध्रुवा स्मृतिः स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः' इति । तथा च वृत्तिकारः—'उपासनं स्याद्ध्रुवानुस्मृतिर्दर्शनान्निर्वचनाच्च' इति । अत्र च वाक्ये ध्रुवानुस्मृतेः मोक्षहेतुत्वमुक्तम् । 'भिद्यते हृदयग्रन्थिः तस्मिन् दृष्टे परावरे' इत्यत्र च दर्शनस्य । वाक्यद्वयैकार्थ्यानुरोधेन च दर्शनसमानाकारायाः ध्रुवानुस्मृतेः मोक्षोपायत्वं बोध्यम् । तथा च 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इत्यत्रापि श्रवणमनने अनूद्य दर्शनसमानाकारं ध्यानं विधित्सितम् । भगवद्विषये ध्यानं च प्रीतिपूर्वकं कर्तव्यं भवति । 'नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन । यमेवैष वृणुते तेन लभ्यः' इत्यत्र न केवलं श्रवणमनननिदिध्यासनैर्भक्तिविरहितैर्लभ्यः परमात्मा । किन्तु परमपुरुषवरणीयताहेतुगुणविशेषलक्षणभक्तियुक्तेनैवोपासकेन लभ्य इति वर्णनात् । तथा च प्रीतिपूर्वकं क्रियमाणध्यानमेव भक्तिशब्देनोच्यते । तथा च निरुक्तिः—'स्नेहपूर्वमनुध्यानं भक्तिरित्य-

भिधीयते' इति । तथा चोक्तमभियुक्तैः—'वेदनं ध्यानविश्रान्तं ध्यानं श्रान्तं ध्रुवास्मृतौ । सा च दृष्टित्वमभ्येति दृष्टिर्भक्तित्वमृच्छति' इति । अस्याश्च ध्रुवानुस्मृतेराप्रयाणादनुवर्तनीयत्वं 'स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसंपद्यते न च पुनरावर्तते' इति श्रुतिसिद्धम् । सूत्रितं च 'आप्रयाणात्तत्रापि हि दृष्टम्' इति । अहरहरभ्यासेनैव हि परभक्तित्वादिलक्षणा विपाकाः सम्भवेयुः ।

स्थिते चाप्रयाणादनुवर्तनीयत्वे नित्यनैमित्तिकादिवर्णाश्रमोचितं कर्मापि यावदायुषमनुवर्तनीयमेव भगवदाराधनैकवेषमुपासनाङ्गतया । तथा च सूत्रं 'सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्' 'सहकारित्वेन च' इति । ध्रुवानुस्मृतेर्हि अन्तःकरणविशुद्धिनिष्पाद्यत्वं 'सत्त्वशुद्धौ ध्रुवा स्मृतिः' इति श्रुतम् । सत्त्वमन्तःकरणं तच्छुद्धिश्चाहारशुद्ध्या श्रूयते 'आहारशुद्धौ सत्त्वशुद्धिः' इति । आहारस्य च शुद्धिर्जात्याश्रयनिमित्तकृतदोषराहित्यं यज्ञशिष्टत्वं च । तथा चोपासनोपयोगिचित्तशुद्धेर्यज्ञविनियुक्तविशुद्धाहारसेवयैव सम्भवाद्यज्ञाद्यधिकारापादकं नित्यनैमित्तिककर्माप्यनुष्ठेयमेव । यज्ञशिष्टाहारसेवनस्य च पापनिबर्हणद्वारा रजस्तमःकालुष्यनिवर्तकतया सत्त्ववर्धकतया च चित्तशुद्धावुपयोगो गीयते—'यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्वकिल्बिषैः । ते त्वघं भुञ्जते पापा ये पचन्त्यात्मकारणात्' इति । उपासनोपयोगिशरीरधारणस्य यज्ञशिष्टाहारेणैव निष्पाद्यत्वात्कर्मणोऽवर्जनीयत्वं च गीतम्—'शरीरयात्रापि च ते न प्रसिद्ध्येदकर्मणः' इति । तथाऽनभिसंहितफलस्य भगवदाराधनैकवेषस्य

च श्रुतय –'अनुविद्य विजानाति' 'विज्ञाय प्रज्ञां कुर्वीत' 'आत्मेत्येवोपासीत' 'आत्मानमेव लोकमुपासीत' 'ओमित्येवात्मानं ध्यायथ' इत्याद्या । मोक्षसाधनीभूतस्य ज्ञानस्यासकृदावृत्तज्ञानरूपत्वं सूत्रकृताऽप्युक्त–'आवृत्तिरसकृदुपदेशात्' इति । 'एवं मुक्तिफलानियमः' इति पूर्वसूत्रे हि मोक्षसाधन ज्ञानं प्रस्तुतम् । तस्यैवासकृदावृत्तत्वमत्र सूच्यत इति । आह च वृत्तिकार – 'वेदनमुपासनं स्यात्तद्विषये श्रवणात्' इति । असकृदावृत्तं च ज्ञानं ध्यानमुपासनमिति चोच्यते । तच्च विजातीयप्रत्ययान्तराव्यवहितमविच्छिन्नस्मृतिसन्ततिलक्षणं ध्रुवानुस्मृतिशब्देन संशब्द्यते 'ध्रुवा स्मृति स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः' इति । यथा च वृत्तिकारः–'उपासनं स्याद् ध्रुवानुस्मृतिर्दर्शनान्निर्वचनाच्च' इति । अत्र च वाक्ये ध्रुवानुस्मृतेः मोक्षहेतुत्वमुक्तम् । 'भिद्यते हृदयग्रन्थिः तस्मिन् दृष्टे परावरे' इत्यत्र च दर्शनस्य । वाक्यद्वयैकार्थ्यानुरोधेन च दर्शनसमानाकारतया ध्रुवानुस्मृते मोक्षोपायत्वं बोध्यम् । तथा च 'आत्मा वा अरे द्रष्टव्य' श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इत्यत्रापि श्रवणमनने अनूद्य दर्शनसमानाकारं ध्यानं विधित्सितम् । भगवद्विषये ध्यानं च प्रीतिपूर्वकं कर्तव्यं भवति । 'नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन । यमेवैष वृणुते तेन लभ्य ' इत्यत्र न केवलं श्रवणमनननिदिध्यासनैर्भक्तिविरहितैर्लभ्यः परमात्मा । किन्तु परमपुरुषवरणीयताहेतुगुणविशेषलक्षणभक्तियुक्तेनैवोपासकेन लभ्य इति वर्णनात् । तथा च प्रीतिपूर्वकं क्रियमाणध्यानमेव भक्तिशब्देनोच्यते । यथा च निरुक्ति –'स्नेहपूर्वमनुध्यानं भक्तिरित्य-

भिधीयते' इति। तथा चोक्तमभियुक्तैः–'वेदनं ध्यानविश्रान्तं ध्यानं श्रान्तं ध्रुवास्मृतौ। सा च दृष्टित्वमभ्येति दृष्टिर्भक्तित्वमृच्छति' इति। अस्याश्च ध्रुवानुस्मृतेराप्रयाणादनुवर्तनीयत्वं 'स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसंपद्यते न च पुनरावर्तते' इति श्रुतिसिद्धम्। सूत्रितं च 'आप्रयाणात्तत्रापि हि दृष्टम्' इति। अहरहरभ्यासेनैव हि परभक्तित्वादिलक्षणा विपाकाः सम्भवेयुः।

स्थिते चाप्रयाणादनुवर्तनीयत्वे नित्यनैमित्तिकादिवर्णाश्रमोचितं कर्मापि यावदायुषमनुवर्तनीयमेव भगवदाराधनैकवेषमुपासनाङ्गतया। तथा च सूत्रं 'सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्' 'सहकारित्वेन च' इति। ध्रुवानुस्मृतेर्हि अन्तःकरणविशुद्धिनिष्पाद्यत्वं 'सत्त्वशुद्धौ ध्रुवा स्मृतिः' इति श्रुतम्। सत्त्वमन्तःकरणं तच्छुद्धिश्चाहारशुद्ध्या श्रूयते 'आहारशुद्धौ सत्त्वशुद्धिः' इति। आहारस्य च शुद्धिर्जात्याश्रयनिमित्तकृतदोषराहित्यं यज्ञशिष्टत्वं च। तथा चोपासनोपयोगिचित्तशुद्धेर्यज्ञचिनियुक्तविशुद्धाहारसेवयैव सम्भवाद्यज्ञाद्यधिकारापादकं नित्यनैमित्तिककर्माप्यनुष्ठेयमेव। यज्ञशिष्टाहारसेवनस्य च पापनिबर्हणद्वारा रजस्तमःकालुष्यनिवर्तकतया सत्त्ववर्धकतया च चित्तशुद्धावुपयोगो गीयते–'यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्वकिल्बिषैः। ते त्वघं भुञ्जते पापा ये पचन्त्यात्मकारणात्' इति। उपासनोपयोगिशरीरधारणस्य यज्ञशिष्टाहारेणैव निष्पाद्यत्वात्कर्मणोऽवर्जनीयत्वं च गीतम्–'शरीरयात्रापि च ते न प्रसिद्ध्येदकर्मणः' इति। तथाऽनभिसंहितफलस्य भगवदाराधनैकवेषस्य

कर्मणः भगवत्प्रसादद्वारोपासनासिद्धावुपयोगित्वं चागायि 'यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम्। स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः ॥' इति।

तथा 'तस्मादेवंविच्छान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवात्मानं पश्येत्' 'नाविरतो दुश्चरितान्नाशान्तो नासमाहितः। नाशान्तमानसो वापि प्रज्ञानेनैनमाप्नुयात्' इत्यन्वयव्यतिरेकाभ्यां दुश्चरितनिवृत्तिकामक्रोधवेगराहित्यशमदमादिलक्षणसहकारियोगित्वं चोपासनस्यावगम्यते। अविहितनिषिद्धानर्थककाम्येष्विन्द्रियव्यापारनिवृत्तिलक्षणस्य शमादेरङ्गभूतनिष्कामक्रियानुष्ठानेन न विरोधः। अत एव 'शमदमाद्युपेतः स्यात्तथापि च' इति सूत्रेऽनुष्ठेयभक्त्यङ्गनिष्कामकर्मभिः समुच्चय एव शमदमादेर्वर्णितः। विवेकादिसाधनसप्तकं च ध्रुवानुस्मृतेरुक्तं वृत्तिकृता बोधायनेन—'तल्लब्धिर्विवेकविमोकाभ्यासक्रियाकल्याणानवसादानुद्धर्षेभ्यः सम्भवान्निर्वचनाच्च' इति। विवेकः—शुद्धाहारसेवया देहादेर्विवेचनं दुष्टाहारवर्धितेभ्यो देहादिभ्यः। विमोकः—कामानभिष्वङ्गः। शुभाश्रयस्य पुनः पुनः परिशीलनमभ्यासः। शक्तितो वर्णाश्रमधर्माचरणं निष्कामतया क्रिया। कल्याणानि—सत्यार्जवदयादानाहिंसानभिध्याः। (अभिध्या—निष्फलचिन्ता, तदभावोऽनभिध्या) शोकहेतूपनिपातादावपि अतिदैन्यराहित्यं अनवसादः। हर्षहेतूपनिपातेऽप्यतिहर्षराहित्यमनुद्धर्षः। एतेषां च ध्रुवानुस्मृतिहेतुत्वं यथासम्भवं दृष्टादृष्टविधयोह्यम्। साधनसप्तके चास्मिन् कर्मणः शमादेश्च यथासम्भवमन्तर्भावो बोध्यः।

'तत्प्राप्तिहेतुर्ज्ञानं च कर्म चोक्तं महामुने । आगमोत्थं विवेकाच्च द्विधा ज्ञानं तथोच्यते ॥' इति विष्णुपुराणवचने च कर्मज्ञानयोरङ्गाङ्गिभावेन ब्रह्मप्राप्तिहेतुत्वमभिमतम् । शास्त्रजन्यं ज्ञानं प्रथमं विवेकादिसाधनसप्तकजन्यं ज्ञानमुपासनात्मकं च द्वितीयम् । 'विद्यां चाविद्यां च यस्तद्वेदोभयं सह । अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते' इत्यत्र च कर्मज्ञानसमुच्चयोऽङ्गाङ्गिभावेन । अविद्यया—कर्मणा मृत्युं—विद्योत्पत्तिप्रतिबन्धकं पापं तीर्त्वा विद्यया—अनन्तरप्रवृत्तयोपासनारूपयाऽमृतमश्नुते—मोक्षं प्राप्नोतीत्यर्थात् । 'इयाज सोऽपि सुबहून् यज्ञान् ज्ञानव्यपाश्रयः । ब्रह्मविद्यामधिष्ठाय तर्तुं मृत्युमविद्यया ॥' इत्युपबृंहणानुसारादयमेवार्थो ग्राह्यः । 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' इत्यत्रापि सन्प्रकृत्यर्थवेदनाङ्गत्वमेव यज्ञादेर्विवक्षितम् । रथेन जिगमिषतीत्यादौ गमनादावेव रथादिकरणकत्वान्वयस्य दर्शनात् । यथा शमादेश्चित्तैकाग्र्यसम्पादनद्वारोपासनाङ्गत्वं एवं कर्मणोऽपि चित्तनैर्मल्यसंपादनद्वारा युक्तं तत् । तथा चोक्तं तत्त्वमुक्ताकलापे—'स्वान्तध्वान्तप्रसूतं दुरितमपनुदन् योगिनः सत्त्वशुद्ध्यै सर्वो वर्णादिधर्मः शमदमसुखवत्सन्निपत्योपकारी । विद्यां चेत्यादिवाक्येष्वनुकथितमिदं नैकवाक्यानुरोधात् कर्मापेक्षाभिसन्धिं क्वचन विवृणुते तत्समुच्चित्यवादः ॥' इति । 'त्रयो धर्मस्कन्धाः—यज्ञोऽध्ययनं दानमिति प्रथमः, (गार्हस्थ्यं) तप एव द्वितीयः, (वानप्रस्थसन्यासौ) ब्रह्मचार्याचार्यकुलवासीति तृतीयः, त्रयोऽप्येते पुण्यलोका भवन्ति ब्रह्मसंस्थोऽ-

मृतत्वमेति' इति श्रुतौ सर्वेष्वपि चाश्रमेषु ब्रह्मणि ध्याननिष्ठाया अमृतत्वसाधनभूताया अभिधानात्तत्तदाश्रमोचितमेव कर्म तस्य तस्याधिकारिणोऽनभिसंहितफलमनुष्ठीयमानं विद्याङ्गं भवतीति बोध्यम् । यज्ञादिसर्वापेक्षत्ववचनं तु विद्याया गृहस्थाधिकारिविषयम् । 'कृत्स्नभावात्तु गृहिणोपसंहारः' 'अत एव चाग्नीन्धनाद्यनपेक्षा' इति सूत्रयोश्च सर्वेष्वाश्रमेषु उपासनान्वयः । ऊर्ध्वरेतःस्वाश्रमेषु यज्ञादिविरहितैराश्रमोचितैरेव कर्मभिर्विद्योपकारश्च वर्णितः । एवं कर्मणो विद्याङ्गत्वं स्थितम् ।

धर्मस्य भक्त्यङ्गत्वादेव धर्मेण सहैव भक्तेः करणीयत्वं शिक्षापत्र्यामादिष्टं 'धर्मेण सहिता कृष्णभक्तिः कार्येति तद्रहः' 'धर्मेण रहिता कृष्णभक्तिः कार्या न सर्वथा' इति । सत्सङ्गिजीवनेऽपि वर्णाश्रमोचितधर्मपरैरेव कृष्णभक्तेः कार्यत्वं यावद्देहमानं स्वधर्माणामत्याज्यत्वं च कथितं—'स्ववर्णाश्रमधर्मेण युक्ता श्रीराधिकापतेः । भक्तिः कार्या दृढेत्येतल्लक्षणं शुद्धवाध्वनः ॥' 'तस्माद्भवद्भिः सततं स्वधर्मनियतस्थितैः । उत्साहेनैव कर्तव्या तद्भक्तिः श्रद्धयाऽन्वितैः ॥ यावद्देहस्मृतिर्वः स्यात्स्वस्वधर्मा मयोदिताः । तावन्नैते क्वचित्त्याज्या इत्याज्ञा मेऽस्ति सत्तमाः ॥' 'वर्णाश्रमोचितं धर्मं स्वाधिकारानुसारिणम् । यावद्देहस्मृतिस्तावत्पालयंस्तं भजेत्सदा ॥' इति । हरिवाक्यसुधासिन्धौ च—'यावद्देहस्मृतिस्तावन्मच्छ्रितैः सकलैरपि । यथार्हं नियमाः पाल्या इत्याज्ञा मम वर्तते ॥' 'धर्मोपेता ततो भक्तिः कार्या' इति ।

ज्ञानमप्यङ्गमुपासनस्य । तच्च तावत् स्वात्मपरमात्मविवेकविषयं

शास्त्रजन्यम् । अधिगतस्वस्वरूपपरस्वरूपस्यैव ह्युपासनान्वयः । 'अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति' इति श्रुतौ च ज्ञानयोगजनितात्मसाक्षात्कारस्य परमात्मोपासनाङ्गत्वं तृतीयाश्रुत्या लभ्यते । गीतायां च कर्मयोगज्ञानयोगाभ्यामध्यक्षितस्वस्वरूपस्य परभक्त्युत्पत्तिर्वर्णिता 'ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति । समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम् ॥' इति । शिक्षापत्र्यां च स्वस्वरूपयाथात्म्यभावनं भक्त्यङ्गमुक्तं–'निजात्मानं ब्रह्मरूपं देहत्रयविलक्षणम् । विभाव्य तेन कर्तव्या भक्तिः कृष्णस्य सर्वथा ॥' इति । सत्सङ्गिजीवने चोपासनाङ्गभूतस्य ज्ञानस्य जीवात्मपरमात्मविषयकत्वमुक्तं 'तच्च ज्ञानं द्विधा प्रोक्तं तत्रैकं ज्ञानमात्मनः । परमात्मस्वरूपस्य ज्ञानं चेत्यपरं मतम् ॥' इति । हरिवाक्यसुधासिन्धौ च–'विशुद्धात्मस्वरूपेण भजनीयो हरिः सदा ।' 'आत्मनिष्ठा दृढा कृष्णमाहात्म्यस्य च वेदनम् । एते भवेतां यस्यात्र स संपूर्ण इतीयताम् ॥' 'नाहं देहोऽस्मि चिद्रूप आत्मैवेति निजान्तरे । भावयद्भिर्हरिः सेव्यो भक्तैः सोऽस्तीष्टसिद्धिदः ॥' 'एवं निर्गुणसद्रूपात्मनैव प्रीतिरादरात् । कार्या श्रीराधिकाकान्ते' 'मायिकोपाधिरहितसन्मात्रेणात्मना हरेः । साक्षादुपासना सर्वैः करणीयाऽस्ति सर्वथा ॥' 'प्रीतिः कार्या हरौ दृढम् । सा तु केवलसद्रूपात्मना कार्या न चान्यथा ॥' इत्यादि ।

वैराग्यं नाम परमात्मतदनुबन्धिव्यतिरिक्तेषु वैतृष्ण्यम् । तच्चाल्पास्थिरत्वदुःखानुबन्धाद्यनुसन्धानाद्भवति । तदप्यङ्गमेवोपासनस्य । सति हि विषयान्तररागे मुमुक्षाया अनवस्थानादुपासनाया असि-

द्विप्रसङ्गः । वैराग्यस्य स्वरूपं च विविच्य वर्णितं सत्सङ्गिजीवने— 'वैराग्यस्य स्वरूपं ते कथयाम्यथ मानदे ॥ भगवन्तं विनाऽन्यत्र रागाभावस्तदुच्यते ॥ देहे च दैहिकेष्वम्ब ! स्त्रीपुत्रधनवेश्मसु । पशुयानोपकरणक्षेत्रादिष्वरुचिस्तथा ॥ शब्दादिपञ्चविषयभोगेषु विविधेषु च । अनर्घ्यवस्त्रभूषादौ राज्यभोगेषु चारुचिः ॥ स्वर्गादौ पुण्यलोके च सद्भोगेष्वखिलेष्वपि । अनासक्तिः सर्वथेति वैराग्यं स्पष्टमीरितम् ॥ एवं संसृतिदुःखं ये पश्यन्त्यत्र मुहुर्नृणाम् । तेषामुदेति वैराग्यं सत्सङ्गात्तच्च वर्धते ॥' इति ।

एवं त्रितयाङ्गकत्वं भक्तेर्वर्णितं श्रीमद्यामुनमुनिभिर्गीतार्थसङ्ग्रहे गीताप्रमेयनिर्देशे—'स्वधर्मज्ञानवैराग्यसाध्यभक्त्येकगोचरः । नारायणः परं ब्रह्म गीताशास्त्रे समीरितः ॥' इति । वेदार्थसङ्ग्रहे चोपवर्णितं श्रीभाष्यकारैरुपासनस्य धर्मज्ञानाङ्गकत्वं—'जीवपरयाथात्म्यज्ञानपूर्वकवर्णाश्रमधर्मेतिकर्तव्यताकपरमपुरुषचरणयुगलध्यानार्चनप्रणामादिरत्यर्थप्रियस्तत्प्राप्तिफलः' इति । इदं च वैराग्यस्याप्युपलक्षणम् । उपासनं मानसं ध्यानलक्षणं, वाचिकं कीर्तनं, अर्चनप्रणामादिकं च शारीरम् । वेदनध्यानादिशब्दैश्च अर्चनप्रणामादिसहितस्य पूर्णोपासनस्यैव विवक्षितत्वम् । 'सततं कीर्तयन्तो मां यतन्तश्च दृढव्रताः । नमस्यन्तश्च मां भक्त्या नित्ययुक्ता उपासते ॥' 'मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।' इत्याद्युपबृंहणानुसारात् । सत्सङ्गिजीवने च धर्मज्ञानवैराग्याणां भक्त्यङ्गत्वं सुस्पष्टमुक्तम्—'सच्छास्त्रसम्मतं मातः शृणु मद्वचनं हितम् । मायैव विष्णोः सर्वेषामस्ति

संसृतिकष्टदा ॥ तस्यास्तु सन्निवृत्तिः स्यात्कृष्णे भक्त्याऽतितीव्रया । स्वधर्मज्ञानवैराग्योपेतया मनसि स्थिरे ॥' 'धर्मो ज्ञानं च वैराग्यं भक्तेर्वेद्यानि तत्त्वतः । अङ्गानि त्रीण्युत्तमाङ्गहृत्पादाख्यान्यनुक्रमात् ॥' 'भक्तिर्भगवति श्रेयः साधनं मे मतं परम् । स्वधर्मज्ञानवैराग्यैर्युक्ता कार्या च सा दृढम् ॥ सच्छास्त्राणां च सर्वेषां सिद्धान्तोऽस्त्ययमेव हि । साङ्गां भक्तिं ततः कृष्णे कुरु मोक्ष्यसि संसृतेः ॥' 'स्वधर्मज्ञानवैराग्ययुजा भक्त्या ह्यनन्यया । ये भजेयुस्त एवामुं तथाभूतं विचक्षते ॥' 'मुख्या मया तु तव भक्त्यधिकारिणो ये वैराग्यधर्मनिजबोधयुतास्त एव' ।' इति । हरिवाक्यसुधासिन्धौ च—'स्वधर्मज्ञानवैराग्योपेता भक्तिर्दृढा तु या । सैवास्ति भगवत्तोषहेतुरित्यवगम्यताम् ॥' 'अतः प्रीतिर्हरावेव कार्या सद्भिः सदा मुदा । धर्मज्ञानविरागेषु तत्सेवौपयिकेषु च ॥' 'चिद्रूपेणात्मना कार्या धर्मज्ञानविरागयुक् । भक्तिर्भगवतो नित्यमनन्येनैव भावतः ॥' 'आत्मज्ञानं च वैराग्यं यद्धर्मो वा य आत्मनः । दृढः स्याद्गुणता तेषां कार्या भक्तेस्तु मुख्यता ॥ एषामन्यतमो यस्तु भक्तौ स्यादन्तरायकृत् । गुणोऽपि स तु विज्ञेयो नूनं दोष इवाहितः ॥' (तरंग१५८)'स्वधर्म आत्मनिष्ठा च वैराग्यं मायिकार्थतः । अङ्गान्येतानि भक्तेर्वै सन्ति तत्पुष्टिहेतवः ॥ एकाकिन्येव भक्तिस्तु जीवं तारयितुं क्षमा । देशकालादिवैषम्ये पान्ति धर्मादयश्च ताम् ॥' 'स पप्रच्छ सतो भक्तिः केनोपायेन कर्हिचित् । असतो देशकालादेर्योगेऽपि नाप्नुयात्क्षतिम् ॥ ततस्तदुत्तरं कर्तुमशक्तांस्तांस्तदाह सः । आत्मज्ञानेन वैराग्य-

युजा क्वापि न तत्क्षति ॥ विना विरक्तिं भक्तस्य मायिकार्थेऽपि नश्वरे । प्रीतिर्भगवतीव स्याचत पात सदध्वनः ॥ आत्मज्ञानं विना देह्य सुखं दुःखं यदाऽऽपतेत् । भक्तोऽपि हर्षशोकाभ्यां तदा विह्वलतामियात् ॥ ततस्तदुभयेनैव भक्तिर्निर्विघ्नतामियात् । एतदेव ततो भक्त साधनं दृढयेच्छ्रिया ॥ विरक्त्या भगवन्मूर्तीतराकाराश्च सर्वश । क्रियन्ते मायिका मिथ्या न स्यात्तेषु ततो रुचिः ॥ तथैवात्मावबोधेन सुखं दुःखं च मायिकम् । भवेद्भक्तस्य मिथ्यैव स्यान्न विह्वलता तत ॥' 'ते यदा शरणं गत्वा साक्षात्त सर्वकारणम् । स्वधर्मज्ञानवैराग्ययुजा भक्त्या भजन्ति च ॥ तदैव तीर्त्वा तन्मायां ज्ञानिभक्तास्तु ते द्विज । समानत्वं प्रयान्त्येव नारदर्षिशुकादिभि ॥' 'रोचते भक्त ईदृग्मे मनस्तत्रावरुध्यते । स्वधर्माचलनिष्ठो यश्चिद्रूपात्माभिमानवान् ॥ तेजोराशौ हरिर्नित्यं तिष्ठतीति विदन् दृढम् । भक्तिं यस्तस्य कुर्याच्च प्रीत्या दृढविरक्तिमान् ॥ केवलं भगवत्प्रीत्यै निश्छद्म विदधीत यः । तपो योगं व्रतादिं च सत्समागमलालस ॥' 'स्वधर्मज्ञानवैराग्योपेता भक्तिर्दृढा हरे । साधनीया प्रयत्नेन स्यादेकान्तिकता यतः ॥ एकान्तिकस्तु यो भक्तो वासुदेवे स निश्चितम् । प्रविश्यास्ते सेवते च लक्ष्मीवच्च सदाऽऽदरात् ॥' इत्यादि ।

गीतायां भगवद्गुणमाहात्म्यज्ञानस्य भक्त्युत्पत्तिवृद्धिहेतुत्वमुक्तम्—'एतां विभूतिं योगं च मम यो वेत्ति तत्त्वत । सोऽविकम्पेन योगेन युज्यते नात्र संशयः ॥ अहं सर्वस्य प्रभवो मत्त सर्वं प्रवर्तते । इति मत्वा भजन्ते मां बुधा भावसम-

न्विताः ॥' इति । सत्सङ्गिजीवने च–'श्रीकृष्णो भगवान् साक्षात् यो विष्णुः पुरुषोत्तमः । स एव सर्वभावेन सेवनीयो मुमुक्षुभिः ॥ सतां सङ्गेन बुद्ध्वादौ तन्माहात्म्यं तदासया । स्वधर्मज्ञानवैराग्ययुजा भक्त्या स सेव्यताम् ॥ सच्छ्य एतच्छ्रुतेः कृष्णमाहात्म्यं सम्यगीयते । तेनैव भक्तिः कृष्णे स्यात् स्वधर्मादिभिरन्विता ॥' 'तदीयमाहात्म्यविबोधपूर्वं स्वभावतो वृत्तिरविच्युता या । सप्रेम तस्मिन् सकलेन्द्रियाणां सा भक्तिरुक्ता नवधास्ति साऽपि ॥' 'स्नेहेन सेवनं यत्तु माहात्म्यज्ञानपूर्वकम् । तदेव लक्षणं ज्ञेयं भक्तेरिह महाव्रताः ॥ नराकृतिरपि कृष्णः सकलैश्वर्यसंयुतः । दिव्यविग्रह एवेति माहात्म्यं ज्ञेयमस्य च ॥ क्रियमाणाऽपि भक्तिस्तु माहात्म्यज्ञानमन्तरा । न वर्धते न च गुणास्तं भजन्ति शमादयः ॥ साप्यारम्भदशायां तु वर्धमानापि निर्बला । ध्रुवं नश्यति तारुण्यात् प्राक् स्त्रीव क्षयरोगिणी ॥ माहात्म्यज्ञानपूर्वं सा क्रियमाणा त्वनुक्षणम् । विवर्धतेऽतिबलिनी दाववह्निशिखा यथा ॥ विज्ञातं येन माहात्म्यं यावत्तस्य तु तावती । श्रद्धा कृष्णे भवेत्स्याच्च भक्तिः श्रद्धानुरूपिणी ॥ विज्ञाय तस्य माहात्म्यं श्रद्धया या कृता दृढम् । भक्तिः सैकैव मेऽत्यन्तं प्रसन्नत्वस्य कारणम् ॥' इत्यादि । हरिवाक्यसुधासिन्धौ च–'माहात्म्यातिशयज्ञानं विना कृष्णस्य सर्वथा । प्रीतिर्न स्यादतो नित्यं सेव्याः सन्तस्तदासये ॥' ( तरंग २१ ) 'धर्मनिष्ठैस्ततो भक्तैर्भजद्भिर्नवधा हरिम् । आत्मनिष्ठा च माहात्म्यज्ञानं साध्यं हरेर्दृढम् ॥' 'उपासनायाः सिद्धिश्च कृष्णस्य स्यात्तदैव हि ।

माहात्म्यवेदनं सम्यग् यदा स्यात्तन्निषेवया ॥' 'राधापतेः स्वरूपस्य माहात्म्यस्य च तत्त्वतः । वेदनं यत्तदेवोक्तं परमं मुक्तिकारणम् ॥' 'भक्तिं हरौ विदधता माहात्म्यं तस्य सर्वथा । यथा ज्ञेयं तथा वच्मि येन भक्तिर्भवेद् दृढम् ॥' 'माहात्म्यज्ञानरहिता भक्तिः साक्षाद्धरावपि । वर्धमानापि सा नाशं परिणामे ह्यवाप्स्यति ॥ तस्माच्छ्रीकृष्णमाहात्म्यमञ्जसा सत्प्रसङ्गतः । सच्छास्त्रसेवनाद्वापि वेदितव्यं प्रयत्नतः ॥' 'स्वधर्मो ज्ञानवैराग्ये सम्यङ् माहात्म्यबोधयुक् । भक्तिर्भगवतश्चेति साधनानि महान्ति च ॥' 'राधारमणमाहात्म्यातिशयस्यावबोधनात् । अवसर्पति मानोऽस्य ॥' 'एवं हि कृष्णमाहात्म्यसम्यग्ज्ञानेन देहिनाम् । कः को न सद्गुणः सिध्येन्नश्येत्कः को न दुर्गुणः ॥' 'भक्तेस्तु सम्यङ् माहात्म्यं बुद्ध्वा कृष्णस्य तस्य या । प्रीत्या सेवा सैव मता सर्वेषां सुलभा न सा ॥' 'कृष्णमाहात्म्यबोधेन मायैषा तु निवर्तते । यदा तदैव कृष्णे स्यात्प्रीतिश्च स्थिरतात्मनः ॥' 'माहात्म्यज्ञानयुग्भक्तिर्ज्ञानवैराग्यशोभना । दृढा यस्य भवेन्नित्यं भक्त एकान्तिको हि सः ॥' 'महत्त्वावबोधयुग्भक्तिर्दृढा भगवतः स हि । गुणस्तथाविधो ज्ञेयः' 'माहात्म्यावबोधेन युक्ता भक्तिस्तु या हरेः । सा विघ्नैर्न विहन्येत' स्वधर्मज्ञानवैराग्यैः सहिता यस्य मापते । माहात्म्यबोधयुग्भक्तिः स्यात्सोऽस्ति बुद्धिमत्तरः ॥' 'किञ्च ये भगवद्रूपास्तै सपार्श्वं बलद्वयम् । आत्मनिष्ठाबलं चाथ माहात्म्यस्य बलं हरेः ॥' इत्यादि ।

अयमेव कर्मज्ञानवैराग्याङ्गको भक्तियोग ऐकान्तिको धर्म

उच्यते भागवतधर्म इति च । तथा चोक्तं स्कान्दे वासुदेवमाहात्म्ये—'स्वधर्मज्ञानवैराग्यैः सह लक्ष्मीवदीश्वरे । तस्मिन्ननन्या भक्तिर्या धर्म एकान्तिकः स वै ॥' 'त्रिभिः स्वधर्मप्रमुखैर्युक्ता भक्तिरियं मुने ! । धर्म एकान्तिक इति प्रोक्तो भागवतश्च सः ॥' इति । सत्सङ्गिजीवने च तथैवोक्तम्—'इत्थं ये दीक्षिता भक्ताः स्वस्वधर्मेषु संस्थिताः ॥ ज्ञानवैराग्यसम्पन्नाः प्रोक्ता एकान्तिका हि ते ॥' 'एतानाश्रित्य सद्धर्मान् ज्ञानवैराग्यसंयुतान् । भजेयुर्ये वासुदेवं प्रोक्ता एकान्तिनो हि ते ॥' 'प्रवृत्तश्च निवृत्तश्च धर्मो हि द्विविधो मतः । द्वयोऽपि विष्णुसम्बन्धाद्भवत्येकान्तसंज्ञितः ॥ निवृत्तधर्मैकान्तित्वं प्रापुर्हि सनकादयः । प्रवृत्तधर्मैकान्तित्वं मरीच्याद्यास्तथाऽऽभुवन् ॥ एकान्तेनैव धर्मेण मुक्तिरात्यन्तिकी मता । न केवलं निवृत्तेन धर्मेणापीतरेण वा ॥ स्वरूपमस्य धर्मस्य कथ्यते चाधुना स्फुटम् । विद्वद्भिरपि दुर्ज्ञेयं विना हरिसमाश्रयम् ॥ आन्तराणां च बाह्यानां करणानां स्वभावतः । नैरन्तर्येण सक्ताः स्युर्विष्णावखिलवृत्तयः ॥ ततः पुमान् प्रवृत्तं वा निवृत्तं कर्म वैदिकम् । कुर्यादहिंसं निष्कामं ज्ञानवैराग्ययुक्तु यत् ॥ स एवैकान्त इत्युक्तो धर्मो निःश्रेयसप्रदः । तद्वन्तः पुरुषा ये ते प्रोक्ता एकान्तिका बुधैः ॥ स्वधर्मादियुतानन्यभगवद्भक्तिलक्षणः । एष धर्मो हि भवतीत्यल्पसत्त्वैः सुदुर्धरः ॥ एकान्तिनो वैष्णवा ये ते त्यक्त्वा भौतिकानिह । देहान् लब्ध्वा दिव्यतनूर्गोलोकं धाम यान्ति हि ॥ इत्येकान्तस्य धर्मस्य लक्षणं कथितं स्फुटम् । तपांस्युग्राणि यत्प्राप्त्यै चक्रुः

पूर्वं महर्षयः ॥ तस्मान्मुमुक्षुरिच्छेद्य श्रेय आत्यन्तिकं स तु । एकान्तधर्मं सेवेत मुक्तः स्यात्ससृतेस्ततः ॥' इति । हरिवाक्य-सुधासिन्धौ च—'साध्यं कृष्णैकान्तिकत्वं तेषामस्त्यतिदुर्लभम् । स्वधर्मज्ञानवैराग्या भक्तिरेकान्तिकत्वकृत् ॥' 'स्वधर्मज्ञानवैराग्यैर्युक्ता भक्तिं हरेस्तु यः । अनन्यां विदधीतासौ भक्त एकान्तिको मतः ॥' 'औद्धवे सम्प्रदायेऽस्मिन् स त्वेकान्तिक उच्यते । भक्तिर्दृढा भवेद्यस्य ज्ञानवैराग्यधर्मयुक् ॥ मुमुक्षुणा सेवनीयः स च प्राधान्यमर्हति ।' इत्यादि ।

अस्यैकान्तिकधर्मस्य प्राप्तिर्भगवत्सङ्गाद्भागवतसङ्गाद्वा स्यादित्यपि वासुदेवमाहात्म्ये प्रोक्तम्—'साक्षाद्भगवतः सङ्गात्तद्भक्तानां च देहिनाम् । धर्मो ह्येकान्तिकः पुम्भिः प्राप्यते नान्यथा क्वचित् ॥' सतः मुखाद्भगवन्माहात्म्यश्रवणस्य भक्त्युत्पादकत्वं सत्सङ्गस्य साङ्गभक्तिपोषकत्वं च सत्सङ्गिजीवने न्यरूपि तावाम्—'एतेषामेव सङ्गेन साङ्गा भक्तिर्मुमुक्षुभिः । कृष्णस्य प्राप्यते नूनं माहात्म्यज्ञानपूर्विका ॥ एभ्यः कृष्णावताराणां चरित्रश्रवणं भवेत् सङ्गस्य एतच्छ्रुते कृष्णमाहात्म्यं सम्यगीयते । तेनैव भक्तिः कृष्णे स्यात्स्वधर्मादिभिरन्विता ॥' 'पुंसां गुणाश्च दोषाश्च सदसत्सङ्गतोऽपि हि यूयं सर्वे ततो भक्ताः सतामेव समागमम् । कुर्वन्त एवाऽऽचरत स्वस्वधर्मं यथोचितम् ॥' 'सर्वेषां देहिनां भक्ताः ! कृष्णभक्तिर्विमुक्तिदा । उदेति सा तु सत्सङ्गाभ्रश्यत्यसुरसङ्गतः ॥' इति । हरिवाक्यसुधासिन्धौ च—'मनोलयस्तु साङ्गाया भक्तेर्दार्ढ्यीकृती भवेत् । तच्चैकान्तिकभक्तानां स्यान्निष्कैतवसेव

नात् ॥' 'नित्यं सतां प्रसङ्गेन तन्माहात्म्यावबोधनम् ।' इति । उक्तः सर्वोऽप्यर्थः सत्सङ्गिजीवने सुस्पष्टं सङ्गृहीतः—'धर्मस्त्याज्यो न कैश्चित्स्वनिगमविहितो वासुदेवे च भक्तिर्दिव्याकारे विधेया सितघनमहसि ब्रह्मणैक्यं निजस्य । निश्चित्यैवान्यवस्तुष्वणुमपि च रतिं संपरित्यज्य सन्तस्तन्माहात्म्याय सेव्या इति वदति निजान् धार्मिको नीलकण्ठः ॥' इत्यादौ ।

यद्यपि वेदान्तविहितेषु सद्दहरानन्दमयादिविद्याभेदेषु त्रैवर्णिकानामेवाधिकारोऽपशूद्राधिकरणनयसिद्धः । अथापि भगवन्माहात्म्यज्ञानपूर्विका निरन्तरप्रीतिलक्षणा भक्तिः, अर्चनादयश्च भक्तिभेदाः प्रीतिकारिता नवधा सर्वाधिकारिसाधारणा एव । स्ववर्णाश्रमोचिताश्च धर्मा निष्कामतयोपसंहर्तुं शक्या एवेतरैरपि । तथेतिहासपुराणश्रवणाद्यभ्यनुज्ञया ज्ञानमपि सुसंपाद्मेव । शब्दादिविषयेषु वैराग्यं भगवति रक्षकत्वाध्यवसायपूर्विका निःसीमप्रीतिश्चैतेष्वपि सम्भवत्येव । अत एषामपि मुक्त्यन्वयो नानुपपन्नः । उक्तं च गीतायां—'मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः । स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम् ॥ किं पुनर्ब्राह्मणाः पुण्या भक्ता राजर्षयस्तथा । अनित्यमसुखं लोकमिमं प्राप्य भजस्व माम् ॥' इति । तथा चोक्तं तत्त्वमुक्ताकलापे—'पुम्भिः सिद्धाधिकारैः क्रतव इव निराकाङ्क्षभावं भजन्त्यः प्रोक्तास्त्रैवर्णिकार्हाः श्रुतिनयवशतो यद्यपि ब्रह्मविद्याः । अस्तेयाद्यैः प्रपत्त्या परिचरणमुखैरप्यधीतैः स्वजातेः सर्वेऽपि प्राप्नुयुस्तां परगतिमिति तु ब्राह्मगीतादिसिद्धम् ॥' इति । सर्वसाधारणा भक्तिप्रकाराश्च वर्णिता वासुदेवमाहात्म्ये—

'वासुदेवेतरान् देवान् कालमायावशीकृतान् । विदित्वा तेषु च प्रीतिं हित्वा तस्यैव नित्यदा ॥ गाढस्नेहेन या सेवा सा भक्तिरिति गीयते । श्रवणं कीर्तनं तस्य स्मृतिश्चरणसेवनम् ॥ पूजा प्रणामो दास्यं च सख्यं चात्मनिवेदनम् । इत्येतैर्नवभिर्भावैर्यः सेवेत तमादरात् । अनन्यया धिषणया स हि भक्त इतीर्यते ॥' इति ।

शिक्षापत्र्यां च धर्मादीनां चतुर्णां स्वरूपं सङ्क्षेपेण वर्णितमस्ति— 'धर्मो ज्ञेयः सदाचारः श्रुतिस्मृत्युपपादितः । माहात्म्यज्ञानयुग्भूरिस्नेहो भक्तिश्च माधवे ॥ वैराग्यं ज्ञेयमप्रीतिः श्रीकृष्णेतरवस्तुषु । ज्ञानं च जीवमायेशरूपाणां सुष्ठु वेदनम् ॥' इति । सत्सङ्गिजीवने च—'वेदप्रणिहितो धर्मो ह्यधर्मस्तद्विपर्ययः' 'यमार्याः क्रियमाणं हि स्तुवन्त्यागमवेदिनः । स धर्मो यं च निन्दन्ति तमधर्मं प्रचक्षते ॥' 'तत्र त्रयाणां लोकानां सेश्वराणां तु धारकः । धारणीयश्च जीवेशैः सदा धर्मः स उच्यते ॥ स चापि वर्तते नृणां वर्णाश्रमविभागतः । श्रुतिस्मृतिसदाचारैः प्रमितो हि पृथक् पृथक् ॥' 'श्रुतिस्मृत्युदितं धर्ममनुतिष्ठन् हि मानवः । इह कीर्तिमवाप्नोति प्रेत्य चानुत्तमं सुखम् ॥' 'नानादुःखविकाराढ्यो योऽयं देहोऽस्ति देहिनाम् । आत्मा ततोऽस्ति भिन्नो वै निर्विकारः सुखात्मकः ॥ एवं ..... एषात्मनिष्ठा सुदृढा ज्ञानमित्युपवर्णितम् । वैराग्यस्याथ वक्ष्यामि लक्षणं साधुसम्मतम् ॥ स्वरूपमादौ देहस्य ज्ञेयं स्वस्य परस्य च । ..... क्षयिष्णुत्वं सदु खत्वमित्थं ज्ञात्वाऽखिलस्य च । अनासक्तिः स्वदेहादौ या तद्वैरा-

त्यमुच्यते ॥ वासुदेवावतारेऽथ माहात्म्यज्ञानपूर्विका। स्नेहेन सेवावृत्तिर्या सा भक्तिरिति कथ्यते ॥ श्वेतद्वीपे ब्रह्मपुरे गोलोकेऽपि च धामनि। वैकुण्ठादौ यदैश्वर्यं दिव्यं दिव्याश्च पार्षदाः ॥ स्वेच्छया मनुजाकारे हरौ तद्विद्यतेऽखिलम्। दिव्यभावेनेति बोधो माहात्म्यज्ञानमुच्यते ॥' इति। इति ज्ञात्वैव नवभिः प्रकारैः श्रवणादिभिः। सेवनं तस्य यत्प्रेम्णा तत्प्रोक्तं भक्तिलक्षणम् ॥ ज्ञानवैराग्यसहितां भक्तिमेवंविधां तु ये। हरौ कुर्युः स्वधर्मस्थास्ते तु भक्तोत्तमा मताः ॥' इति च। हरिवाक्यसुधासिन्धावप्येवं धर्मादीनां स्वरूपं सप्रपञ्चं निरूपितमस्ति।

भक्तिश्च द्विविधा सकामा निष्कामा चेति। 'चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन !। आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ ! ॥' इत्युक्तप्रकारेण ऐश्वर्याद्यर्थितया क्रियमाणा सकामा। भगवत्सेवाफलतया क्रियमाणा च निष्कामा। तथोक्तं सत्संगिजीवने—'भजधातोस्तु सेवार्थः प्रेम क्तिन्प्रत्ययस्य च। स्नेहेन भगवत्सेवा भक्तिरित्युच्यते बुधैः ॥ पतिव्रता यथा नारी सेवेत स्वपतिं यथा। अनन्यभावेन हरिं मुमुक्षुः सर्वदा भजेत् ॥ ××× एवं भजन्ति ये कृष्णं श्रुत्यादिनवलक्ष्मया। भक्त्या ते कथिता भक्ता द्विविधास्तेऽपि कीर्तिताः ॥ तत्राद्यास्तु सकामास्ते धर्ममर्थं च विस्तृतम्। कामं च स्वेप्सितं मोक्षं कृष्णादेवाप्नुवन्ति हि ॥ देहान्ते ते च कृष्णस्य गोलोकादिषु धामसु। लभन्ते स्वेष्टसौख्यानि तस्मादेवाक्षयाणि हि ॥ निष्कामा इतरे ते तु कृष्णसेवनमन्तरा। मुक्तीश्चतुर्विधाः

सिद्धीश्चाष्टौ नेच्छन्ति कर्हिचित् ॥ दीयमानं भगवताऽप्यैश्वर्यमिदमूर्जितम् । तस्य सेवान्तरायत्वात् न गृह्णन्ति हृदाऽपि ते ॥ निष्कामभावेनेत्थ यो मात' कृष्ण भजेन्नरः । भक्तोत्तम स विज्ञेय' पूर्णो हृदयमस्य हि ॥' 'तदीयमाहात्म्यविबोधपूर्वं स्वभावतो वृत्तिरविच्युता या । सप्रेम तस्मिन् सकलेन्द्रियाणां सा भक्तिरुक्ता नवधास्ति सापि ॥ ××× उक्ता नवैते ननु भक्तिभेदाः स्वशक्तितस्तैर्भजनीय ईशः । नरा सकामा निजवाञ्छितार्थांस्तेनाप्नुवन्ति ह्यपरे च मुक्तिम् ॥ निष्कामभक्तिस्तु हरौ प्रवृत्ता दिने दिने सिद्धिगणाद्गरिष्ठा । जीवस्य कोशं जरयत्यवश्य वैश्वानरो भुक्तमिवोदरोऽन्नम् ॥ अनन्यभक्तास्तु रमापतेर्ये नेच्छन्ति कैवल्यमपीह ते तु । सेवारतास्तस्य तदर्थचेष्टास्तेनैव पूर्णा' सतत प्रसन्नाः ॥' इति ।

## प्रपत्तिनिरूपणम् ॥

तत्र सकामभक्तिः साधनभक्ति , निष्कामभक्ति साध्यभक्तिरित्यभिधीयते । साध्यभक्तिनिष्ठानां तु भगवत्येव सुदृढोपायत्वबुद्धि । एषां च भगवानेवोपायो भवति । तथा च शरण्यवचनम्—'सर्वधर्मान् परित्यज्य मामेकं शरण व्रज । अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुच ॥' इति । उपायभूतोऽपि स्वयं भगवानेषां प्रार्थनानुसारेणैव सर्वं कार्यं करोतीति उपायत्वप्रार्थनाऽवश्य करणीया नाम । सेयमुपायत्वप्रार्थना प्रपत्तिः । तथा चोक्तं—'अनन्यसाध्ये स्वामीष्टे महाविश्वासपूर्वकम् । तदेकोपायतायाञ्चा प्रपत्ति शरणागति ॥' इति ।

भक्तियोगाच्छरणागतौ विशेषो यथा । भक्तियोगोऽसकृदाप्रयाणादनुष्ठेयः । इयं तु सकृदेवानुष्ठेया । तथा च वचनानि— 'सकृदेव प्रपन्नाय तवास्मीति च याचते । अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं मम ॥' 'अहमस्मि तवैवेति प्रपन्नाय सकृत्स्वयम् । देवो नारायणः श्रीमान् ददात्यभयमुत्सुकः ॥' इति । भक्तियोगः प्रारब्धव्यतिरिक्तानां कर्मणां निवर्तकः । शरणागतिस्तु प्रारब्धस्यापि । 'उपायभक्तिः प्रारब्धव्यतिरिक्ताघनाशिनी । साध्यभक्तिस्तु सा हन्त्री प्रारब्धस्यापि भूयसी' ॥ 'आर्तानामाशु फलदा सकृदेव कृता ह्यसौ । दृप्तानामपि जन्तूनां देहान्तरनिवारणी' ॥ इति वचनात् । अत एव शरणागतिनिष्ठानां तद्देहपात एव मोक्षः सिद्ध्यति । किञ्च अन्तिमस्मृत्यपेक्षा भक्तियोगस्य । 'प्रयाणकालेऽपि च मां ते विदुर्युक्तचेतसः ।' 'अन्तकाले च मामेव स्मरन् मुक्त्वा कलेवरम् । यः प्रयाति स मद्भावं याति नास्त्यत्र संशयः ॥' इत्यादिवचनात् । प्रपत्तेस्तु तदनपेक्षा । प्रपन्नविषये 'अहं स्मरामि मद्भक्तं नयामि परमां गतिम्' इति वराहमूर्तेर्भगवतो वचनात् । प्रपन्नस्यापि भक्तिरस्ति पुरुषार्थतया । अत एव प्रपत्तेः साध्यभक्तिरिति नाम । अतो मद्भक्तशब्देन निरुक्तवचने प्रपन्नपरामर्श उपपन्नः ।

'सर्वधर्मान् परित्यज्य' इत्यनेन च सर्वधर्माणामुपायतयाऽनुष्ठानमेव व्यावर्त्यते । अत एव कर्मणां भगवदाज्ञाकैङ्कर्यरूपतया भक्तेर्भगवद्गुणानुभवरूपतया च प्रपन्नैराचरणमुपपन्नम् । ज्ञानं वैराग्यं च प्रपन्नस्याप्यावश्यकमेव । अर्चनादिषु चास्य रागत एव प्रवृत्तिः नोपायबुद्ध्या । आनुकूल्यस्य सङ्कल्पः प्रातिकूल्यस्य वर्जनं

च प्रपन्नस्य स्वारसिकावाकारविशेषौ। य परमात्मानमेव स्वरक्षणोपायत्वेनाध्यवस्यति स हि तदनुकूलवृत्तावेव वर्तेत, तदाज्ञारूपशास्त्रनिषिद्धे च नैव प्रवर्तेतेति। कार्पण्यं नामोपायान्तरराहित्यं प्रपत्तावङ्गभूतम्। रक्षिष्यत्यवश्यं शरणागतं मामिति दृढाध्यवसायपूर्वकं तस्मिन्नेवोपायत्वप्रार्थना शरणागतिः। उपायत्वप्रार्थनापूर्वकं च क्रियमाणमात्मात्मीयभरसमर्पणमात्मनिक्षेप उच्यते। सोऽयं प्रपत्तेरात्मनिक्षेपणांशेन न्यास इत्युच्यते, प्रार्थनांशेन च शरणागतिरिति। सेयं षड्धा शरणागतिरुक्ता—'आनुकूल्यस्य सङ्कल्पः प्रातिकूल्यस्य वर्जनम्। रक्षिष्यतीति विश्वासो गोप्तृत्ववरणं तथा। आत्मनिक्षेपकार्पण्ये षड्विधा शरणागतिः॥' 'प्रपत्तेरानुकूल्यस्य सङ्कल्पोऽप्रातिकूलता। विश्वासो वरणं न्यासः कार्पण्यमिति षड्विधा॥' इति।

प्रपत्तौ च नाधिकारिनियमः। साधनभक्तावनधिकारिणामपि अयं योगो वर्णितः शास्त्रेषु। तथा च वचनानि—'प्राप्तुमिच्छन् परां सिद्धिं जनः सर्वो ह्यकिञ्चनः। श्रद्धया परया युक्तो हरिं शरणमाश्रयेत्॥ ब्रह्मक्षत्रविशः शूद्राः स्त्रियश्चान्तरजास्तथा। सर्व एव प्रपद्येरन् सर्वधातारमच्युतम्॥' 'न जातिभेदं न कुलं न लिङ्गं न गुणक्रियाः। न देशकालौ नावस्थां योगो ह्ययमपेक्षते॥' 'शरणं त्वां प्रपन्ना ये ध्यानयोगविवर्जिताः। तेऽपि मृत्युमतिक्रम्य यान्ति तद्वैष्णवं पदम्॥' (ब्राह्मे) इति। आकिञ्चन्यमनन्यगतित्वमेव चाधिकारिविशेषणम्। आकिञ्चन्यमुपायान्तरराहित्यं, अनन्यगतित्वं रक्षकान्तरराहित्यम्। तथा चोक्तं—'अहमस्म्यपराधानामालयोऽकिञ्चनोऽगतिः। त्वमेवोपाय-

भूतो मे भवेति प्रार्थना मतिः । शरणागतिरित्युक्ता सा देवेऽस्मिन् प्रयुज्यताम् ॥' इति । 'यद्येन कामकामेन न साध्यं साधनान्तरैः । मुमुक्षुणा यत्साङ्ख्येन योगेन न च भक्तितः । प्राप्यते परमं धाम यतो नावर्तते यतिः । तेन तेनाप्यते तत्तन्न्यासेनैव महामुने ! । परमात्मा च तेनैव प्राप्यते पुरुषोत्तमः ॥' ( अहिर्बुध्न्यसंहिता ) इति च प्रपत्तेः सर्वफलसाधनत्वमुच्यते । तथा चोक्तं वेदान्ताचार्यैः—'सुदुष्करेण शोचेद्यो येन येनेष्टहेतुना । स स तस्याहमित्येव चरमश्लोकसङ्ग्रहः ॥' इति । किञ्चोपायान्तरनिष्ठानां प्रपत्तिरपेक्षिताऽङ्गतया, प्रपन्नस्य तु नोपायान्तरम् । किन्तु तन्निवृत्तिरेव । आकिञ्चन्याधिकारकत्वात्प्रपत्तेः । ब्रह्मास्त्रशणसूत्रबन्धनन्यायेनोपायान्तरसंसर्गे हि प्रपत्तिः च्युता भवतीति । साधनान्तरानुष्ठानसमर्थानामपि अविलम्बतो मोक्षमिच्छतां प्रपत्तावधिकारः 'भक्त्या परमया वापि प्रपत्त्या वा महामुने । प्राप्योऽहं नान्यथा प्राप्यो मम कैङ्कर्यलिप्सुभिः ॥' इति विकल्पोऽपि शक्ताशक्तविलम्बक्षमाक्षमरूपाधिकारिभेदेन व्यवस्थितः । अतो न लघुगुरुविकल्पानुपपत्तिशङ्कावकाशः । वस्तुतः प्रपत्तिनिष्ठाया अपि दृढतमाध्यवसायगर्भतया गुरुत्वमस्त्येव । अत एवोच्यते 'उपायः सुकरः सोऽयं दुष्करश्च मतो मम ।' इति । 'नरस्य बुद्धिदौर्बल्यादुपायान्तरमिष्यते । त्वामेव शरणं प्राप्य निस्तरन्ति मनीषिणः ॥' इत्यत्र च बुद्धिदौर्बल्यशब्देनाध्यवसायदार्ढ्यराहित्यं, मनीषिण इति चाध्यवसायदार्ढ्यं विवक्षितमिति । निरुक्तप्रकारेण प्रपत्तेर्नानाविधं वैशिष्ट्यमभिप्रेत्यैव श्रुतिस्मृत्योरुद्घुष्यते 'न्यासमेषां तपसामतिरिक्तमाहुः' 'कृतान्यनेन

सर्वाणि तपासि तपतावर । सर्वे तीर्था सर्वयज्ञा सर्वदानानि च क्षणात् । कृतान्यनेन मोक्षश्च तस्य हस्ते न सशयः ॥' 'यानि निःश्रेयसार्थानि चोदितानि तपासि वै । तेषा तु तपसा न्यासो ह्यतिरिक्त तपः श्रुतम् ॥' इति ।

प्रपत्तेरपि भगवद्विषयज्ञानविशेषरूपतया न 'तमेव विदित्वा' इति श्रुतिविरोधो मुक्त्युपायत्वे । अय च प्रपत्तियोग शेषिणि रक्षकत्वप्रार्थनालक्षणः शेषस्वरूपानुगुणो नितराम् । शेषभूतस्य रक्षण हि शेषिण एव कृत्यमिति । सेय भगवत्येवोपायत्वप्रार्थनालक्षणा प्रपत्तिः 'श्रीकृष्ण त्व गतिर्मम' इति मन्त्रे गर्भिता । मुक्तिलक्षणसेवापुरुषार्थाभ्यर्थना च 'ब्रह्माह कृष्णदासोऽस्मि' इति मन्त्रे । द्वयमन्त्रे ( श्रीमन्नारायणचरणौ शरण प्रपद्ये । श्रीमते नारायणाय नम ) ऽप्येवमेव पूर्ववाक्ये उपायत्वप्रार्थना, उत्तरवाक्ये च मुक्तिलक्षणसेवाप्रार्थना गर्भिता । 'कालमायापापकर्मयमदूतभयादहम् । श्रीकृष्णदेवं शरण प्रपन्नोऽस्मि स पातु माम् ॥' इति सङ्कल्पमन्त्रे च शरणागति सप्रकारा संसूचिता ।

शरणागतेन च वैष्णवदीक्षावता भाव्यम्, दीक्षातदभावयो स्तुतिनि न्दादर्शनात् । 'सप्राप्य वैष्णवीं दीक्षा विष्णु भुवि भजन्ति ये । ते कृतार्था मनुष्या वै सारभूता भुवोऽपरे ॥' 'अदीक्षितस्य वामोरु ! कृत सर्वमनर्थकम् । पशुयोनिमवाप्नोति दीक्षाहीनो नरो मृत ॥' इति । अयमर्थः सत्सङ्गिजीवने स्फुटमुक्तः—'सप्राप्य दीक्षामिह भक्तिधर्मयुक्ताद्गुरोर्भागवतीं नर' प्राक् । अर्चां तत' प्राप्य तदुक्तरीत्या भक्तिं विदध्यादपतन्द्रि विष्णो ॥' इति । दीक्षा च सनियममन्त्रादिग्रहण-

लक्षणा। दीक्षाशब्दनिरुक्तिश्च—'दीयते विमलं ज्ञानं क्षीयते कर्मवासना। दिव्यं ज्ञानं यतो दद्यात् कुर्यात्पापस्य सङ्क्षयम्॥ तस्माद्दीक्षेति सा प्रोक्ता मुनिभिस्तन्त्रवेदिभिः॥' 'दीपयत्याशु विज्ञानं मोहं च क्षालयत्यतः। दीक्षेति कथिता सद्भिः प्राप्तव्या वैष्णवी तु सा॥' इति। दीक्षानुबन्धिनश्च पञ्च संस्कारा उक्ताः—'तापः पुण्ड्रस्तथा नाम मन्त्रो यागश्च पञ्चमः। संस्काराः पञ्च सम्प्रोक्ताः पारमैकान्त्यहेतवः॥' इति। यागो नाम परमात्मनि स्वात्मनः समर्पणं न्यासलक्षणम्, आचार्यानुग्रहप्राप्तभगवत्प्रतिमार्चनं वा। तथा च भागवते वचनम्—'लब्धानुग्रह आचार्यात्तेन सन्दर्शितागमः। महापुरुषमभ्यर्चेन्मूर्त्याऽभिमतयाऽऽत्मनः॥' इति। विस्तरस्तु साम्प्रदायिकग्रन्थेषु द्रष्टव्यः। हरिवाक्यसुधासिन्धावपि 'सर्वधर्मान्परित्यज्य' 'मामेव ये प्रपद्यन्ते' इत्यादिवाक्यं प्रमाणतया परिगृह्य शरणागतिप्रकारो वर्णितः—'आश्रयोऽतिदृढः स्याच्चेच्छ्रीकृष्णस्य नृणामिह। तेनैकेनैव भगवान् सम्प्रसीदति निश्चितम्॥ कृष्णप्रसादहेतुभ्यः सर्वेभ्योऽपि महत्तरम्। एतद्धि साधनमिति ज्ञातव्यं श्रेय इच्छता॥' (तरङ्ग ३२) 'श्रेय आत्यन्तिकं यत्तद्धरेः साक्षात् समाश्रयात्। भवतीत्येव जानीहि नास्तीदृक् साधनान्तरम्॥' इति। आश्रयशब्दः प्रपत्तिपर्यायः।

गुरूपदेशलब्धात्मपरमात्मयाथात्म्यविज्ञानो भगवन्तमेव स्वस्य सर्वविधानिष्टनिवृत्तौ सर्वविधेष्टप्राप्तौ चोपायभूतमाचार्यद्वारा समाश्रित्य तदुपदिष्टमक्रेण तदाज्ञारूपाणि कर्माणि कैङ्कर्यबुद्ध्या प्रीत्या कुर्वन् शब्दादिषु विरक्तो माहात्म्यज्ञानपूर्वकं तदुपासनमेव कर-

णत्रयेणापि प्रीत्या पुमर्थतयैव कुर्वन् सतत निःश्रेयसाय कल्पते । एवं भूतं च स्वभक्तं स्वसन्निहितस्वरक्षणभरं 'स्थिते मनसि सुस्वस्थे शरीरे सति यो नरः । धातुसाम्ये स्थिते स्मर्ता विश्वरूपं च मामजम् ॥ ततस्तं म्रियमाणं तु काष्ठपाषाणसन्निभम् । अहं स्मरामि मद्भक्तं नयामि परमां गतिम् ॥' इत्युक्तप्रकारेण स्वयमेवान्तकाले स्मृत्वा तस्याविद्यादिकं निःशेषं विनिवर्त्य देशविशेषे स्वसन्निधिं प्रापय्याविर्भूतस्वस्वरूपाय तस्मै परिपूर्णस्वानुभवसेवासुखलक्षणमोक्षसाम्राज्यं प्रयच्छति पुरुषोत्तम इति पाञ्चरात्रागमशास्त्रसारतमरहस्यार्थः ।

केचित्तु 'तत्त्वमसि' इति वाक्यजन्यं निर्विशेषचिन्मात्रब्रह्मात्मैक्यज्ञानमेवापरोक्षात्मकमविद्यानिवर्तकम्, निष्पन्ने च साक्षात्कारे इहैव मुक्तो भवतीति वर्णयन्ति । तन्न सम्यक् । 'पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति' इति श्वेताश्वतरश्रुतौ नियाम्यनियामकभावधार्यधारकभावशेषशेषिभावादिना जीवपरयोर्भेदेन ज्ञानस्यैव परमात्मप्रसादद्वारा मुक्तिसाधनत्वस्य प्रतिपादितत्वात् । देहादिभ्यः पृथग्भूतमात्मानं प्रेरितृस्वरूपाभिन्नं मत्वा मुक्तो भवतीत्यर्थवर्णनं तु क्लिष्टम् । चशब्दस्य 'जुष्टस्ततस्तेन' इत्यस्य चानन्वयात् । तत्रैवोपनिषदि 'भोक्ता भोग्यं प्रेरितारं च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत् ।' 'क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एकः ॥' इत्यादिना जीवपरयोस्तत्त्वतो भेदस्यैव बहुशो वर्णितत्वाच्च । वाक्यस्य प्रत्यक्षज्ञानं प्रति जनकत्वमप्यनुपपन्नम्, इन्द्रियाणामेव तत्र सामर्थ्यात् । न चैन्द्रियकार्थविषयकवाक्यस्यापरोक्षज्ञानजनकत्वं सम्भवति । नैवम् ।

भूतले घटोऽस्तीति वाक्यस्य प्रत्यक्षार्थविषयकस्यापि परोक्षैकजनकत्वात् । सति त्विन्द्रियार्थसन्निकर्षे तत्र जायमानं ज्ञानं प्रत्यक्षमेव न वाक्यजन्यम् । स्वतः सदा भासमानार्थगोचरस्य वाक्यस्याऽपरोक्षधीजनकत्वमित्येतदपि मन्दम् । तदर्थस्य स्वत एव भानोपपत्तेर्वाक्यस्यानपेक्षितत्वात् । सतोऽपि वाऽकिञ्चित्करत्वात् । स्वरूपप्रकाशानवगताकारान्तरविषयत्वे च वाक्यजन्यज्ञानस्य तदंशे परोक्षत्वमेव धर्मवांस्त्वमसीत्यादिवाक्यजन्यज्ञानस्येव धर्मांशे । यत्तु दशमस्त्वमसीत्युदाहरणं वाक्यजन्यापरोक्षस्य, तत्रापि यावन्न दशमत्वेन सन्निकर्षो न तावदध्यक्षम् । जाते तु सन्निकर्षे तज्जमेव तन्न वाक्यजम् । सन्निकर्षसम्पादनप्रवृत्तिमात्रप्रयोजकता परोक्षज्ञानजनकस्य वाक्यस्येति यावत् । तत्त्वमसीत्यत्रापि त्वंशब्दविवक्षितस्य जीवस्वरूपमात्रस्य स्वतःप्रकाशत्वेऽपि तमात्मानं प्रति ब्रह्मणः स्वतो भानस्यासम्भवात् ब्रह्मात्मकत्वांशे परोक्षात्मकमेव ज्ञानं प्रथमतो वाक्यजन्यम् । अथ निदिध्यासनविपाकेन च ब्रह्मात्मकत्वसाक्षात्कारो मानसो जायते इति तु परमार्थः । जीवब्रह्मणोर्भिन्नत्वेऽपि शरीरात्मभावेन समानाधिकरणव्यपदेशार्हतया पुनरुपासनानुभवश्चाहं ब्रह्मासीति ब्रह्मात्मकत्वेन न्यरूपिषाताम्—'आत्मेति तूपगच्छन्ति ग्राहयन्ति च' 'अविभागेन दृष्टत्वात्' इति सूत्रयोः ।

यदपि जाते ब्रह्मात्मकत्वसाक्षात्कारे दग्धपटवत्प्रतिभासमानेऽपि शरीरादिकेऽयं मुक्त एव । अत एव श्रूयते 'यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः । अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते ॥' इति जीवन्मुक्तिरिति । तत्र ब्रूमः—यदि शरीरादि-

सम्बन्ध साक्षात्कारेण दग्धो नाय जीवति । शरीरादिसम्बन्ध एव हि जीवन बन्ध इत्यप्युच्यते । अथ न दग्ध कथ मुक्त, बन्धस्य सत्त्वात् । जीवन्मुक्तस्यापि शरीरादेर्गमनाद्यव्यवहारादिव्यवहाराश्च दृश्यन्त एव । अतो न दग्धपटसाम्यम् । नहि दग्धपटस्य प्रतिभासातिरेकेण कार्यान्तराहता । किञ्च जीवत एव मुक्तौ मुक्त्यर्थं मूर्धन्यनाड्योत्क्रान्त्यादिप्रतिपादन श्रौतमनुपपन्न स्यात् । तथा च श्रूयते—'शत चैका च हृदयस्य नाड्यस्तासा मूर्धानमभिनि सृतैका । तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति' इति । न चापरमुक्तिविषयेय श्रुतिरिति वाच्यम् । 'विमुक्तश्च विमुच्यते' इति हि पूर्वं प्रक्तम् । शरीरे स्थित एव रागद्वेषादिदोषैर्विमुक्त अन्तकाले च मूर्धन्यनाड्या निष्क्रम्य मार्गविशेषेण देशविशेष प्राप्य विमुच्यत इति तदर्थः । अत्रावस्थिते शरीरे मुक्ति पूर्वमुक्ता सा अपरा, अनन्तरोक्ता च परा । अतः परममुक्त्यर्थैवोत्क्रान्तिः प्रतिपाद्यत इति । आपस्तम्बादिभिश्च जीवन्मुक्तिर्निरस्ता—'बुद्धे क्षेमप्रापण तच्छास्त्रैर्विप्रतिषिद्धम् । बुद्धे चेत् क्षेमप्रापणमिहैव न दुःखमुपलभेत' इत्यादिना । 'अथ मर्त्योऽमृतो भवति' इत्यस्य च रागद्वेषादिदोषनिवृत्तौ पुन ससारकारणाभावान्मुक्तप्राय इत्यर्थ । 'अत्र ब्रह्म समश्नुते' इति च उपासनाकालीनब्रह्मानुभवपरम् । 'समाना चासृत्युपक्रमादमृतत्व चानुपोष्य' इति सूत्रभाष्ये एवमेव वर्णित श्रीभाष्यकारै । अतो जीवन्मुक्तव्यवहारो मुक्तप्रायत्वाभिप्रायो गौण एव । तथा चोक्त तत्त्वमुक्ताकलापे—'मुक्ति प्राणाक्षदेहादिभिरुपाधिभिरत्यन्तविश्लेषरूपा जीवन्नायोऽपि तैः सङ्गम इति विहतेजीं-

वतः सा कथं स्यात्। आपस्तम्बादयश्च श्रुतिगतिभिरिमां युक्तिभिश्च न्युदासुः जीवन्मुक्तादिशब्दः क्वचिदुपचरितस्तत्समावस्थयैव ॥' इति । अतो भक्तिप्रपत्त्यधीनभगवत्प्रसादाधीन एव परमो मोक्षोऽक्षरे धाम्नि तदनुभवसेवालक्षण इति युक्तम् । ननु 'स स्वराड्भवति' इति मुक्तस्य स्वराट्त्वं श्रूयमाणं मुक्तावपि सति परमात्मशेषत्वे विरुद्ध्येत । मैवम् । संसारदशायां यादृशं पारवश्यमभूत्तन्निवृत्तिपरत्वात् स्वराट्त्ववचनस्य । 'अन्यराजानस्ते क्षय्यलोका भवन्ति' इति कर्मपारवश्यं हि संसारदशायां श्रूयते तन्न मुक्तौ । ईश्वरपरतन्त्रोऽपि तत्सङ्कल्पतः स्वस्याप्रतिहतसङ्कल्पत्वान्मुक्तो यथासङ्कल्पं सर्वं प्राप्तुं क्षमत एव । अत एव महर्षिभिरुपवर्णितम्— 'पारतन्त्र्यं परे पुंसि प्राप्य निर्गतबन्धनः । स्वातन्त्र्यमतुलं प्राप्य तेनैव सह मोदते ॥' इति । अत एव च सूत्रे 'अनन्याधिपति' रित्येवोक्तं न त्वनधिपतिरिति । सूत्रेऽन्यशब्दः श्रुत्यनुसारात्कर्मपरो बोध्यः । ईश्वरस्य तु मुक्तेन समानाभिप्रायत्वात् मुक्तात्मनोऽनन्यत्वं विवक्षितम् । अतो भगवच्छेषस्यापि मुक्तस्य स्वराट्त्वमुपपन्नमेव ।

## नित्यसूरिवर्णनम् ।

ये पुनरक्षरे धाम्नि नित्यदिव्यविग्रहा अनन्तगरुडविष्वक्सेनादयो नन्दसुनन्दश्रीदामप्रभृतयश्च सन्ति ते अनादिमुक्ता नित्यसूरय इत्यप्युच्यन्ते । तेषु केचित्प्रतिनियताधिकाराश्च सन्ति भगवन्नित्येच्छया । 'यत्रर्षयः प्रथमजा ये पुराणाः' 'तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः' 'ते ह नाकं महिमानः सचन्ते यत्र पूर्वे साध्याः सन्ति देवाः' 'यदक्षरे परमे प्रजाः' 'तद्विप्रासो विपन्यवो जागृवांसः समिन्धते । विष्णोर्यत्परमं पदम्' 'वैकुण्ठे

सम्बन्ध साक्षात्कारेण दग्धो नाय जीवति । शरीरादिसम्बन्ध एव हि जीवन बन्ध इत्यप्युच्यते । अथ न दग्ध कथ मुक्त, बन्धस्य सत्त्वात् । जीवन्मुक्तस्यापि शरीरादेर्गमनाभ्यवहारादिव्यवहाराश्च दृश्यन्त एव । अतो न दग्धपटसाम्यम् । नहि दग्धपटस्य प्रतिभासातिरेकेण कार्यान्तरार्हता । किञ्च जीवत एव मुक्तौ मुक्त्यर्थं मूर्धन्यनाड्योत्क्रान्त्यादिप्रतिपादन श्रौतमनुपपन्न स्यात् । तथा च श्रूयते–'शतं चैका च हृदयस्य नाड्यस्तासा मूर्धानमभिनि सृतैका । तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति' इति । न चापरमुक्तिविषयेय श्रुतिरिति वाच्यम् । 'विमुक्तश्च विमुच्यते' इति हि पूर्व प्रकृतम् । शरीरे स्थित एव रागद्वेषादिदोषैर्विमुक्त अन्तकाले च मूर्धन्यनाड्या निष्क्रम्य मार्गविशेषेण देशविशेष प्राप्य विमुच्यत इति तदर्थः । अत्रावस्थिते शरीरे मुक्ति पूर्वमुक्ता सा अपरा, अनन्तरोक्ता च परा । अतः परममुक्त्यर्थैवोत्क्रान्ति प्रतिपाद्यत इति । आपस्तम्बादिभिश्च जीवन्मुक्तिर्निरस्ता–'बुद्धे क्षेमप्रापणं तच्छास्त्रैर्विप्रतिषिद्धम् । बुद्धे चेत् क्षेमप्रापणमिहैव न दुःखमुपलभेत' इत्यादिना । 'अथ मर्त्योऽमृतो भवति' इत्यस्य च रागद्वेषादिदोषनिवृत्तौ पुन संसारकारणाभावान्मुक्तप्राय इत्यर्थः । 'अत्र ब्रह्म समश्नुते' इति च उपासनाकालीनब्रह्मानुभवपरम् । 'समाना चासृत्युपक्रमादमृतत्व चानुपोष्य' इति सूत्रभाष्ये एवमेव वर्णित श्रीभाष्यकारैः । अतो जीव मुक्तव्यवहारो मुक्तप्रायत्वाभिप्रायो गौण एव । तथा चोक्त तत्त्वमुक्ताकलापे–'मुक्तिः प्राणाक्षदेहादिभिरुपाधिभिरत्यन्तविश्लेषरूपा जीवद्भावोऽपि तैः सङ्गम इति विहतेर्जी-

**वतः सा कथं स्यात्। आपस्तम्बादयश्च श्रुतिगतिभिरिमां युक्तिभिश्च व्युदासुः जीवन्मुक्तादिशब्दः क्वचिदुपचरितस्तत्समावस्थयैव॥'** इति। अतो भक्तिप्रपत्त्यधीनभगवत्प्रसादाधीन एव परमो मोक्षोऽक्षरे धाम्नि तदनुभवसेवालक्षण इति युक्तम्। ननु **'स स्वराड्भवति'** इति मुक्तस्य स्वराट्त्वं श्रूयमाणं मुक्तावपि सति परमात्मशेषत्वे विरुध्येत। नैवम्। संसारदशायां यादृशं पारवश्यमभूत्तन्निवृत्तिपरत्वात् स्वराट्त्ववचनस्य। **'अन्यराजानस्ते क्षय्यलोका भवन्ति'** इति कर्मपारवश्यं हि संसारदशायां श्रूयते तन्न मुक्तौ। ईश्वरपरतन्त्रोऽपि तत्सङ्कल्पतः स्वस्याप्रतिहतसङ्कल्पत्वान्मुक्तो यथासङ्कल्पं सर्वं प्राप्तुं क्षमत एव। अत एव महर्षिभिरुपवर्णितम्— **'पारतन्त्र्यं परे पुंसि प्राप्य निर्गतबन्धनः। स्वातन्त्र्यमतुलं प्राप्य तेनैव सह मोदते॥'** इति। अत एव च सूत्रे **'अनन्याधिपति'**रित्येवोक्तं न त्वनधिपतिरिति। सूत्रेऽन्यशब्दः श्रुत्यनुसारात्कर्मपरो बोध्यः। ईश्वरस्य तु मुक्तेन समानाभिप्रायत्वात् मुक्तात्मनोऽनन्यत्वं विवक्षितम्। अतो भगवच्छेषस्यापि मुक्तस्य स्वराट्त्वमुपपन्नमेव।

## नित्यसूरिवर्णनम्।

ये पुनरक्षरे धाम्नि नित्यदिव्यविग्रहा अनन्तगरुडविष्वक्सेनादयो नन्दसुनन्दश्रीदामप्रभृतयश्च सन्ति ते अनादिमुक्ता नित्यसूरय इत्यप्युच्यन्ते। तेषु केचित्प्रतिनियताधिकाराश्च सन्ति भगवन्नित्येच्छया। **'यत्रर्षयः प्रथमजा ये पुराणाः' 'तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः' 'ते ह नाकं महिमानः सचन्ते यत्र पूर्वे साध्याः सन्ति देवाः' 'यदक्षरे परमे प्रजाः' 'तद्विप्रासो विपन्यवो जागृवांसः समिन्धते। विष्णोर्यत्परमं पदम्' 'वैकुण्ठे**

तु परे लोके नित्यत्वेन व्यवस्थिता । पश्यन्ति च सदा देव नेत्रैर्ज्ञानेन चामरा ॥' 'नित्यातीतो जगद्धाता नित्यैर्मुक्तैश्च सेवित । बद्धाञ्जलिपुटैर्हृष्टैर्निर्मलैर्निरुपद्रवै ॥' 'उपाश्रित नन्द-सुनन्दमुख्यै· उपास्यमान गरुडेन चामत ' 'श्रीदा-मविष्वक्सेनाद्यै पार्षदप्रवरैर्निजै । सेवित राजचिह्नैश्च छत्र-व्यजनचामरै ॥' इत्यादिप्रमाणजात नित्यसूरिविषये जागर्ति । अत एव मुक्तप्रवाहैणैवोपपत्तौ नित्यसूरय केचन सन्तीत्यभ्युपग-मोऽनर्थक इति वादस्य नावसरः । यदा भगवतोऽप्राकृत लोक-धामादिक नित्यमिष्यते तदा नित्यपार्षदमात्रे को वा विद्वेष ।

नित्येषु मुक्तेषु च स्त्रीपुंविग्रहभेदोऽपि शास्त्रसिद्ध । तथा हि— 'ह्रीश्च ते लक्ष्मीश्च पत्न्यौ' 'अस्येशाना जगतो विष्णुपत्नी' 'नित्यैवैषा जगन्माता विष्णोः श्रीरनपायिनी' 'अन्येषु चाव-तारेषु विष्णोरेषानपायिनी' 'राघवत्वेऽभवत्सीता रुक्मिणी कृष्णजन्मनि' 'श्रीर्वधूः साकमास्ते' 'राधालक्ष्मीयुतो नित्यं वसामि स्वाश्रितै सह' इत्यादौ नित्य भगवतो दिव्यमहिषीयोगो वर्णित । तथा विमलादिनित्यपरिचारिकायगश्चोक्तो भगवच्छास्त्रेषु। 'जयासुशीलाललितामुखाना वृन्दै· सखीना सह राधया च । समर्च्यमान रमया च भामाकलिन्दजाजाम्बवतीमुखा-नाम् ॥' इति च वासुदेवमाहात्म्ये । सम्प्रदायग्रन्थेषु च राधाल-क्ष्म्यादीना स्त्रीरूपिणीनां नित्य भगवत्सेवानिरतत्व वर्णितमस्ति— 'राधारमाद्या अपि शक्तयस्त भजन्ति सम्राजमिव स्वदास्यः' 'राधारमादिभि स्वाभि शक्तिभिश्च निषेवितम् ॥' 'राधा-लक्ष्म्यादिभिस्तत्र सेव्यमानः स्वशक्तिभि । रत्नसिंहासने

रम्ये श्रीकृष्णो हि विराजते ॥' 'राधारमाप्रमुखशक्तिभिरानताभिर्भक्त्यानुवेलमभिसेवितपादपद्मः ॥' 'तस्यापश्यन् वामभागे लक्ष्मीं पद्मकरां च ते। × × × वीजयन्तीं निजपतिं तादृशीं राधिकां तथा × × × योऽस्मत्स्वामी स एवासि कृष्णो राधारमायुतः। × × × कोट्यर्केन्दुप्रकाशस्य राधालक्ष्मीयुतस्य ते । ईक्षणं भक्तिधर्मादेश्चात्यन्तं दुर्लभं नृणाम् ॥ 'संपूजितो राधिकया च लक्ष्म्या' 'श्रीकृष्णो भगवान् तत्र सदा स्वामी विराजते । सप्रेम राधालक्ष्मीभ्यामर्च्यमानपदाम्बुजः ॥' 'लीलाविहरणं राधादिभिः परमधामनि' 'कोट्यर्काभनखद्योतो ह्यक्षरादौ य ईश्वरः । राधालक्ष्म्यादिभिर्दिव्यसामग्र्या सेव्यतेऽनिशम् ॥' 'तस्य पादरजो मूर्ध्ना राधालक्ष्म्यादिशक्तिभिः । ईशैर्ब्रह्मादिभिः प्रीत्या योगेशैश्चोह्यतेऽखिलैः ॥' "राधालक्ष्मीतत्सखीभिर्जुष्टो ध्येयः प्रभुर्भवेत् । ... श्रीराधातत्सखीनां च रूपाण्यपि पृथक् पृथक् । अवश्यं तत्र वर्ण्यानि तदङ्गानि पृथक् पृथक् ॥ राधादीनां तु देवीनां वाङ्माधुर्यं सुगन्धिता । यादृशं चास्ति सौन्दर्यं तादृग् नास्त्येव कुत्रचित् ॥' इत्यादि.। श्रीभाष्यकारैश्च वर्णितं वेदार्थसङ्ग्रहे—'स्वाभिमतस्वानुरूपस्वरूपरूपगुणविभवैश्वर्यशीलाद्यनवधिकमहिममहिषी' इति । गद्यत्रये च—'शेषशेषाशनगरुडप्रमुखनानाविधानन्तपरिजनपरिचारिकापरिचरितचरणयुगलः' इति । विरजामुपसन्ने च मुक्ते परमात्मनाऽऽज्ञप्तानामप्सरःस्त्रीणां मालादिहस्तानां मुक्तमलङ्कर्तुं प्रत्युद्गमनं श्रूयते कौषीतक्याम्—'तं पञ्चशतान्यप्सरसां प्रतिधावन्ति शतं मालाहस्ताः शतमञ्जनहस्ताः शतं

चूर्णहस्ताः शत वासोहस्ता शत फणहस्तास्तास्त ब्रह्मालङ्कारेणालङ्कुर्वन्ति स ब्रह्मालङ्कारेणालङ्कृतो ब्रह्म विद्वान् ब्रह्मैवाभिप्रैति' इति।

सत्यपि स्त्रीपुंविग्रहभेदे न प्राकृतवत्कामविकारस्यावसरः, यतः श्रीपुरुषोत्तमानुभवैकप्रवणाः सर्वे। वर्णित चैतत्सत्सङ्गिजीवने—'एकान्तिकाना मुक्ताना कोटिभिस्तत्परिश्रितम्। योषाभिः कृष्णभक्ताभिर्मुक्ताभिश्चापि कोटिश ॥ स्त्रियश्च पुरुषाश्चैते भवन्ति दिव्यमूर्तय । अप्राकृतेन्द्रियप्राणा दिव्यालङ्कारवा सस ॥ कृष्णादेव सुखेच्छाऽस्ति तेषा तत्र न चान्यत'। सुखं सर्वं हि सर्वेभ्यो ददाति स च सर्वदा ॥ न तेषा स्त्रीपुंसाना परस्परम्' इति। द्व वा सुधासिन्धौ च—'विलोक्य मातरं स्वस्य स्वसार वापि कन्यकाम्। सुरूपामपि नोदेति विक्रिया मनसि क्वचित् ॥ इय मातेत्यादिबुद्धेर्दार्ढ्यात्तत्रान्यथा मति। यथा न जायते पुस कामुकस्यापि कर्हिचित् ॥ तथैव भगवद्भक्तसुन्दरीष्वपि सर्वदा। जगन्मात्रादिबुद्ध्यैव नोदियाद्विक्रिया क्वचित् ॥' इति।

नित्यानां मुक्तानां च भगवत्सेवाप्रकारोऽपि वर्णितस्तत्रैव—'श्रीदामविष्वक्सेनाद्यै पार्षदैर्दिव्यविग्रहै'। सेव्यमानश्च सच्छत्रचामरव्यजनादिभि ॥ सुदर्शनादिभि स्वास्त्रैर्मूर्तिमद्भिरुपाश्रितः। ऐश्वर्याद्यैर्भगै' षड्भि सिद्धिभिश्चाणिमादिभि ॥ असङ्ख्यैश्च महामुक्तैर्दिव्यसुन्दरविग्रहै। दिव्यैरनेकोपचारैः पूज्यमानपदाम्बुजः ॥' 'श्रीदामनन्दप्रमुखै पार्षदैर्दिव्यविग्रहैः। सेव्यमान सितच्छत्रचामरादिभिरादरात् ॥ शिव-

ब्रह्मादिभिर्नैकब्रह्माण्डाधीश्वरैर्नतैः । मुक्तैरन्यैश्चार्च्यमानो गन्धपुष्पांशुकादिभिः ॥' इति । 'भक्ता एकान्तिका येऽत्र देहान्ते तेऽपि धाम तत् । प्राप्याक्षरसधर्माणः सेवन्ते कोटिशो हरिम् ॥ अतः सत्सङ्गिभिः सर्वैः प्राप्यं धामाक्षरं बृहत् । तन्मुक्तपङ्क्तौ स्थास्याम इति कार्योऽत्र निश्चयः ॥' 'तस्मिन् हि परमे धाम्नि सदा कृष्णो विराजते । स्वसधर्मैरसंख्यातैर्महामुक्तैरुपासितः ॥' 'निजेऽक्षरे परे धाम्नि कोटिसूर्यादिभास्वरे । सदा दिव्याकृतिः कृष्णो भगवान् पुरुषोत्तमः ॥ मुक्तैर्विराजते दिव्यब्रह्मरूपैर्निषेवितः । स एव कृपया भूमौ जायतेऽत्र नराकृतिः ॥' 'अक्षरात्मकमुक्तौघसेविताङ्घ्रिश्च वर्तते ।' 'दिव्यसिंहासनारूढं नैकमुक्तगणैर्वृतम्......दिव्यचन्दनपुष्पस्रक्शेखरैरर्चितं निजैः' 'दिव्याभिः सर्वसम्पद्भिः पार्षदैर्दिव्यविग्रहैः । शक्तिभिः सेव्यमानश्च स्वतन्त्रोऽस्तीश्वरेश्वरः ॥' 'परोक्षं ब्रह्मधामस्थं गोलोके द्विभुजं सदा । राधया च श्रिया जुष्टं कोटिसूर्यसमद्युति ॥ श्रीदामनन्दप्रमुखैः पार्षदैस्तन्निषेवितम् ॥' 'अक्षरे धाम्नि कृष्णस्य तद्भक्तानां च सर्वशः । याः सन्त्याकृतयस्तास्तु सत्या दिव्याश्च भासुराः ॥ पुरुषाकृतयः सन्ति स च ते तत्र धामनि । सच्चिदानन्दरूपाश्च दिव्याङ्गवस्त्रभूषणाः ॥ तैः सेवितोऽसौ विविधैः प्रेम्णा दिव्योपचारकैः । परमानन्ददस्तेभ्यो वर्तते तत्र सर्वदा ॥' इति च ।

वर्णितं नाम जीवस्य स्वरूपं ज्ञातृतादिकम् । जीव इत्युच्यते देहादिकजीवयितृत्वतः ॥ तथा च जीवशब्दार्थः सुधासिन्धौ समीरितः । प्रकाशकत्वाच्चिद्रूपो जीवनाज्जीव

उच्यते ॥ प्रतीपमञ्चनाच्चैव प्रत्यगित्युच्यते त्वयम् । सर्वो ह्यीदमिति त्वन्यस्मा एव प्रतिभासते ॥ आत्मा त्वहमिति स्वस्मै तस्मात्सिद्धा प्रतीपता । धारकत्वनियन्तृत्वशेषित्वैर्व्याप्नादयम् ॥ वपुष्यात्मेति कथितो यद्वा वै विषयादनात् । शरीराख्ये पुरे शेते यतोऽत पुरुषो मत ॥ क्षेत्रस्य वेदितृत्वाच्च क्षेत्रज्ञ इति कथ्यते । स्वरूपमस्य तु सदा भासमानमहत्विति ॥ अतो ज्ञानस्वरूपोऽय ज्ञाता च विषयग्रहात् । घटादिज्ञानरूपस्तु न स्वय नित्य एष हि ॥ अस्यार्थग्रहरूपत्वे स्युर्नित्या अर्थबुद्धय । अतोऽस्य धर्मो यज्ज्ञान तदेवार्थस्य बोधने ॥ क्षम ह्रासविकासादियोगि तच्चोररीकृतम् । प्रसङ्गतोऽवबुद्ध्यर्थं तल्लक्ष्माद्यत्र कथ्यते ॥ अस्य प्रकाराः कतिचिद्भ्रमप्रत्यक्षतादय । उक्ता प्रमाणभागेऽत्र कथ्यन्ते कतिचित्पुन ॥

## धर्मभूतज्ञाननिरूपणम् ।

### ज्ञानलक्षणम् ।

नित्यविभूतिभिन्नत्वे सत्यचेतनत्वे सति स्वयम्प्रकाशत्वम्, विभुत्वे सति कालान्यत्वे सत्यपृथक्सिद्धधर्मत्वम्, अर्थप्रकाशासाधारणकारणत्वमित्यादीनि ज्ञानस्य लक्षणानि । यद्यपि स्वयम्प्रकाशत्व जीवपरयोः, अथापि नाचेतनत्वम् । तदुभय नित्यविभूतौ, न तु तद्भेदः । नित्यविभूतिभिन्नत्वे सत्यचेतनत्व प्रकृत्यादेः, न तु स्वयम्प्रकाशत्वम् । अपृथक्सिद्धिः सत्त्वादौ, न तु विभुत्वम् । विभुत्वे सतीश्वरापृथक्सिद्धत्व काले, न तु तद्भेदः । कालान्यत्वे सति विभुत्वमीश्वरे, न तस्यापृथक्सिद्धधर्मत्वम् । ज्ञानस्य त्वहमर्थमा-

त्मानं प्रत्यपृथक्सिद्धधर्मत्वं प्रतीतमहं जानामीति। घटादेरर्थस्य प्रकाशो नाम व्यवहारानुगुण्यम्। तदसाधारणकारणं च ज्ञानमेव। यद्यपि जीवज्ञानस्य न विभुत्वं सर्वद्रव्यसंयोगित्वलक्षणम्। अथापि तदर्हत्वरूपमेवात्र विवक्षितम्। सुषुप्तौ सतोऽपि ज्ञानस्य भानाभावोऽतिसङ्कोचावस्थाप्राप्त्या। विषयप्रकाशकाल एव तु स्वाश्रयायेदं स्वयंप्रकाशम्। उत्पन्ने घटज्ञानेऽहं घटज्ञानवान्न वेति संशयस्यानुदयाद्धटज्ञानस्य प्रकाशे वक्तव्ये तस्यान्याधीनत्वकल्पनायां गौरवात्स्वपरनिर्वाहकत्वमाश्रित्य स्वाधीनत्वकल्पनस्यैव युक्तत्वात्। अत एव ज्ञानस्यातीन्द्रियत्वमनुमेयत्वं च ज्ञाततालिङ्गेनेति मतनिरासः। विषयविषयिभावलक्षणसम्बन्धमात्रेण ज्ञातो घट इति प्रतीतेर्निर्वाहे ज्ञातताशब्दितस्य धर्मान्तरस्य कल्पनायां चातिगौरवम्। अन्यथा इष्टत्वद्विष्टत्वकृतत्वादिकमपि धर्मान्तरं कल्पनीयं प्रसज्यते। अतीतानागतेषु च ज्ञातताव्यवहारो विषयविषयिभावेनैव निर्वाह्यः, तेषां ज्ञानकालेऽसत्त्वेन समवाय्यभावेन ज्ञाततायास्तदोत्पत्तेरयोगात्। साधितं च ज्ञानस्य स्वयम्प्रकाशत्वं बुद्धिलक्षणबुद्धीश्वरबुद्ध्यादिनिदर्शनेन तत्त्वमुक्ताकलापे 'धीत्वाद्बुद्धीति सिद्धा स्वयमितरमतिर्बुद्धिलक्ष्मादिधीवद्यद्वा सर्वज्ञधीवन्न समतियुगवान् नापि चैकोनवेदी। नो चेद्धारामतौ सा प्रथममपि सती नावबुद्धेति धीः स्यात् स्वस्यां वृत्तेर्विरोधोऽप्युपशमनमियादुक्तदृष्टान्तनीत्या॥' इति।

## ज्ञानस्य नित्यत्वम्।

नित्यस्यात्मनः स्वरूपनिरूपकधर्मत्वेनेदं नित्यं च। तथा च श्रुतिस्मृतयः—'अविनाशी वा अरे अयमात्मा अनुच्छित्तिधर्मा'

'एवमेवास्य परिद्रष्टुरिमा षोडशकला पुरुषायणा पुरुषं प्राप्यास्तं गच्छन्ति' 'न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते अविनाशित्वादात्मनः' 'ज्ञानं वैराग्यमैश्वर्यं धर्मश्च मनुजेश्वर ! । आत्मनो ब्रह्मभूतस्य नित्यमेतच्चतुष्टयम् ॥' (अत्र धर्मो भगवच्छेषत्वम्) इत्याद्या । आद्ये अनुच्छित्तिधर्मेत्यत्र बहुव्रीहिगर्भबहुव्रीहिणा धर्मतोऽप्यनुच्छित्तिलाभात्, द्वितीये कलापोडशकस्य लयकालेऽपि स्वरूपनिरूपकधर्मत्वेन निर्देशतो लयाभावावगमात्, तृतीये स्वरूपनिरूपकधर्मत्वेन निर्देशात्स्वाविनाशप्रयुक्ताविलोपकीर्तनाच्च ज्ञानस्य नित्यत्वं सिद्ध्यति । 'ज्ञोऽत एव' इत्यस्मात् श्रुतिप्रमाणादेवात्मा ज्ञ एवेत्यवधारणेन ज्ञानस्यात्मस्वभावत्वव्यवस्थापनाच्च नित्यत्वं लभ्यते । नच ज्ञानस्य नित्यत्वे सुषुप्त्यनुपपत्तिः, सर्वविज्ञानोपरमस्यैव सुषुप्तित्वादिति वाच्यम् । विद्यमानस्यापि ज्ञानस्योद्भूततमोगुणाभिभूतकरणकत्वेनार्थाप्रकाशकत्वादेव सुषुप्त्युपपत्तेः । 'पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात्' इति सूत्रे च सुषुप्तौ सतोऽपि ज्ञानस्य जागरस्वप्नयोर्विषयग्रहणकाल एवाभिव्यक्तिरुच्यते । मुक्तौ च ज्ञानमस्त्येव । मुक्तस्य सर्वसाक्षात्कारश्रुतेः 'सर्वं ह पश्यः पश्यती'त्यादेः । 'न प्रेत्यसंज्ञास्ती'ति मुक्तौ ज्ञाननिषेधश्रुतिस्तु हेयदुःखाद्यदर्शनपरा । 'नोपजनं स्मरन्निदं शरीरम्' 'न पश्यो मृत्युं पश्यति न रोगं नोत दुःखताम्' इत्याद्यैककण्ठ्यात् । एवं सुषुप्तिमुक्त्योरप्यन्वयाज्ज्ञानस्य नित्यत्वं स्थितम् ।

## ज्ञानस्य प्रसरणसङ्कोचौ ।

नित्यस्यात्मनो नित्यभूतं च ज्ञानं एकैकस्यैकैकमेव लाघवाच्च

मन्तुम् । तस्यैव ज्ञानस्य तत्तदिन्द्रियद्वारिकया तत्तत्कालिकतत्तदर्थग्रहणार्थप्रसृतिभिदया पुनस्तत्तदर्थज्ञानभेदः प्रसिद्धः। प्रसरणसङ्कोचौ च ज्ञानस्य "प्रज्ञा च तस्मात्प्रसृता पुराणी" (श्वेता.) "आवृतं ज्ञानमेतेन ज्ञानिनो नित्यवैरिणा" 'अविद्याकर्मसंज्ञान्या तृतीया शक्तिरिष्यते। यया क्षेत्रज्ञशक्तिः सा वेष्टिता नृप सर्वगा ॥ संसारतापानखिलानवाप्नोत्यतिसन्ततान् । तया तिरोहितत्वाच्च शक्तिः क्षेत्रज्ञसंज्ञिता ॥ सर्वभूतेषु भूपाल तारतम्येन वर्तते । अप्राणवत्सु स्वल्पा सा स्थावरेषु ततोऽधिका ॥ सरीसृपेषु तेभ्योऽपि ह्यतिशक्त्या पतत्रिषु । पतत्रिभ्यो मृगास्तेभ्यस्तच्छक्त्या पशवोऽधिकाः ॥ पशुभ्यो मनुजाश्चातिशक्त्या पुंसः प्रभाविताः। तेभ्योऽपि नागगन्धर्वयक्षाद्या देवता नृप ॥ शक्रः समस्तदेवेभ्यस्ततश्चातिप्रजापतिः। हिरण्यगर्भोऽपि ततः पुंसः शक्त्युपलक्षितः ॥' 'इन्द्रियाणां हि चरतां यद्येकं क्षरतीन्द्रियम् । तेनास्य क्षरति प्रज्ञा दृतेः पादादिवोदकम् ॥' इत्यादिश्रुतिस्मृतिसिद्धौ ।

अयमाशयः—स्वतः सर्वविषयावगाहनसमर्थमपि ज्ञानं बन्धावस्थायां कर्मणा सङ्कुचितत्वात्तत्तज्जीवगतसुकृततारतम्यात्प्रतिजीवं तरतमभावापन्नविषयग्रहणात्मकं वर्तत इति । तरतमभावेन विषयग्रहणमपि तदेन्द्रियद्वारकं प्रसरणभेदमपेक्ष्य । प्रसरणतन्निवृत्त्यपेक्षश्च घटज्ञानमुत्पन्नं पटज्ञानं विनष्टमित्यादिव्यवहारः । अत्र श्रीभाष्यं—"अतः क्षेत्रज्ञावस्थायां कर्मणा सङ्कुचितस्वरूपं तत्तत्कर्मानुगुणेन तरतमभावेन वर्तते । तच्चेन्द्रियद्वारेण व्यवस्थितम् । तमिममिन्द्रियद्वारा ज्ञानप्रसरमपेक्ष्योदयास्तमय-

व्यपदेशः प्रवर्तते" इति । योगिना तु प्रकृष्टादृष्टविशेषसहकारा-द्विप्रकृष्टादिप्रकाशकत्व धिय । मुक्तधियस्तु कर्मकृततिरोधानस्या-त्यन्तिकनिवृत्त्या सर्वविषयावगाहिताळक्षणो वैभवातिशय । सूत्र-कारैश्च ससारदशायां कर्मानुगुणाद्भगवत सङ्कल्पाज्जीवज्ञानादे स्वाभाविकावस्थातिरोधानमुपासनादिप्रसन्नस्य तस्यैव सङ्कल्पविशे-षाच्च तिरोधाननिवृत्त्या स्वाभाविकनिरातिशयविकासप्रादुर्भावोऽ-प्यसूत्रि—"पराभिध्यानात्तु तिरोहित ततो ह्यस्य बन्धविपर्ययौ" "देहयोगाद्वा सोऽपि" "सम्पद्याविर्भाव स्वेन शब्दात्" इत्यादिना । मुक्तज्ञानस्य युगपद्द्वित्रिक्षणान्तरे वा सर्वब्रह्माण्डोदर-व्यापित्वमुपपन्न एव सहस्रदीधिते रश्मीना द्यावापृथिव्योरन्तराळे कृत्स्नेऽपि व्याप्तिरिव वेगातिशयाद्भगवत्सङ्कल्पबलाच्च घटते । उक्त चैतत्सर्व तत्त्वमुक्ताकलापे—"ज्ञातुर्ज्ञप्तेरलोप कथयति निगम स्मर्यते चैवमेषा तस्मादेकत्वसिद्धौ प्रसरणभिदया तन्निदैकत्र पुसि । योग्यादृष्टेरभावान्न च भवति सुषुप्त्याद्यवस्थासु धाधः तत्तद्वस्तुप्रकाशक्षणविरहवती न प्रकाशेत बुद्धि ॥ नित्य नित्यादिबुद्धिर्निखिलविषयिणी तद्वदेव स्वभाव शास्त्रे क्षेत्र-ज्ञबुद्धेरपि समधिगत कर्मभिस्तन्निरोध । सङ्कोचोल्लासयोश्च प्रतिनियतिरिह स्यादुपाधिप्रभेदान्नि शेषोपाधिमोक्षे निखि लविषयतामश्नुवीत स्वभावात् ॥ मुक्ताना धी क्रमाच्चेत् प्रसरति न कदाप्यन्तमेषाधिगच्छेत् सङ्क्षिप्तायाश्च दूरान्ति-कपरिपतने यौगपद्य न शक्यम् । सयोगो भूतभव्येष्वपि न हि घटते तद्धि य साम्प्रतिक्या इत्याद्यैर्न क्षतिः स्यात् श्रुतिमु-खविदिते योग्यतावैभवेऽस्याः ॥" इति ।

## ज्ञानस्य द्रव्यत्वम् ।

इन्द्रियद्वारेण प्रसृत्य द्रव्येण संयोगाज्ज्ञानस्य द्रव्यत्वम्; गुणक्रियावत्त्वात् । आत्मसम्बन्धमपरित्यज्यैव विकासशक्त्या प्रसरणादात्मधर्मत्वं च स्थितम् । यथा प्रभायाः प्रदीपादिधर्मभूतायाः प्रदीपसम्बन्धापरित्यागेनैवान्यत्र व्याप्तिः । अत एव प्रभारूपतेजोधर्मकत्वात्तेजस्वीति व्यपदेशः प्रदीपादेः । यो यदाश्रितस्वभावः स तद्गुण इति च गुणलक्षणम् । वैशेषिककल्पिताऽद्रव्येष्वेव गुणपरिभाषा तु नादर्तव्या । अप्रधानेषु सेवकादिषु दध्यादिष्वपि हि गुणत्वव्यपदेशो लौकिकवैदिकसम्प्रदायसिद्धः । तथा चोक्तं श्रीमद्यामुनमुनिभिः—"आश्रयादन्यतो वृत्तेराश्रयेण समन्वयात् । द्रव्यत्वं च गुणत्वं च ज्ञानस्यैवोपगम्यताम् ॥" इति । उपपादितं च तत्त्वमुक्ताकलापेऽपि ज्ञानस्य द्रव्यत्वम्—"बुद्धिर्द्रव्यं विकारान्वयत इतरवद् बोद्धृवच्चाजडत्वात् सङ्कोचादिप्रयोगा बहव इह तथा नह्यमुख्या भवेयुः । एवं नास्या गुणत्वं गलति न खलु तत्तन्त्रसङ्केतसिद्धं लोके धर्मस्वभावो गुण इति विदितं सापि सिद्धा प्रभावत् ॥" इति ।

## विषयविषयिभावः ।

अत्रेदं बोध्यम्—ज्ञानस्येन्द्रियद्वारा प्रसृत्य संयोगो वर्तमानैर्विषयैर्घटते । स एव विषयतालक्षणो योग्यविषये । तद्गुणेषु च योग्येषु संयुक्ताश्रितत्वं विषयत्वम् । वाय्वादिना संयोगेऽपि अप्रकाशनं चाक्षुषेण ज्ञानेन तस्यायोग्यत्वात् । चक्षुर्द्वारकप्रसरणविशिष्टस्य ज्ञानस्य वाय्वाद्यग्राहकत्वात् । अतीतानागतैस्तु सम्बन्धो विषयविषयिभावलक्षणः एवैषितव्यः । स च स्वरूपसम्बन्ध-

विशेषोऽतिरिक्तो वाऽस्तु। तथा चोक्तं सर्वार्थसिद्धौ 'मुक्तानां धीक्रमाच्चेदि'ति श्लोकव्याख्याने—"मुख्यासम्भवे गौणग्रहः साधारण। तथा च सयोगसम्भवे स एव ग्राह्यः। तदभावे विषयविषयिभावस्तत्स्थानापन्नः स्वीकार्य" इति।

## इच्छादीनां ज्ञानेऽन्तर्भावः।

इच्छाद्वेषसुखदुःखयत्नसंस्काराश्च ज्ञानस्यैवावस्थाभेदाः। आगन्तुकापृथक्सिद्धधर्मो ह्यवस्था। तद्वत्त्वं च द्रव्यलक्षणं ज्ञानस्यास्ति। प्रत्यक्षत्वानुमानत्वादिवदिच्छात्वद्वेषत्वादेरपि ज्ञानस्यैव तत्तदुपाधिप्रयुक्तावस्थाभेदरूपत्वं सम्भवति। यथा प्रकृतेर्महदादिविकाराः। यथा इच्छैकैव विषयभेदात्कामक्रोधसज्ञां लभते—अनुकूलविषयप्राप्तीच्छा कामः प्रतिकूलविषयनिरासेच्छा च क्रोध इति। यथा वा एकैव भगवत इच्छा सिसृक्षा सञ्जिहीर्षेति चोच्यते विषयभेदात्। विषयभेदनियममात्रेणेच्छातो द्वेषस्य गुणान्तरत्वे तु मानेर्ष्यासूयादीनामपि गुणान्तरत्वं प्रसज्यते। चन्द्रस्पर्शादीच्छन्तोऽपि न चन्द्रग्रहणे प्रवर्तामहे। अतो यत्नस्त्ववस्थाभेद इच्छातिरिक्तः स्वीकर्तव्यः। सुखदुःखहेतुभूतानुकूलप्रतिकूलज्ञानयोरेव सुखदुःखरूपत्वमुचितम्। 'सुखमनुभवामी'त्यादि तु 'घटं पश्यामी'त्यादिवत्। साक्षस्य ज्ञानस्य नित्यद्रव्यत्वात्पूर्वानुभवसूक्ष्मांश एव संस्कारोऽपीति। न च "कामः सङ्कल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिः ह्रीर्धीर्भीरित्येतत्सर्वं मन एव" इति श्रुतौ कामादीनां मनोधर्मत्वोक्त्या कथं ज्ञानावस्थारूपत्वमिति वाच्यम्। तत्र कामादिज्ञानावस्थाजनकव्यापारविशिष्टस्य मनसः कामाद्यभेदोपचारात् "आयुर्वै घृत"मित्यादिवत्। प्रकरणानुसाराद्यमे-

वार्थः । सर्वशब्दानां वाचोच्चार्यमाणानां वागभिन्नत्वेन वर्णनं हि तत्रैवास्ति ।

अत्र संसारदशायां धर्मभूतज्ञानस्य तत्तद्विषयसंप्रयोगोपाधिवशाज्जायमानाः सुखत्वदुःखत्वाद्यवस्थाभेदाः कर्मवैचित्र्यकृता न स्वाभाविकाः, गुणमयप्रकृतिसंसर्गविशेषप्रयुक्तत्वात । सर्वोपाधिविनिर्मोके या भगवद्विभूतिभूतसकलपदार्थावगाह्यपरिच्छिन्नानन्दरूपसाक्षात्कारावस्थाप्राप्तिः सैव स्वाभाविकी । तथा चोक्तं विष्णुपुराणे—"निर्वाणमय एवायमात्मा ज्ञानमयोऽमलः । दुःखाज्ञानमला धर्माः प्रकृतेस्ते न चात्मनः ॥ जलस्येवाग्निसंसृष्टस्थालीसङ्गात्तथापि हि । शब्दोद्रेकादिकान् धर्मान् तत्करोति यथा मुने ॥ तथात्मा प्रकृतेः सङ्गादहम्मानादिदूषितः । भजते प्राकृतान् धर्मानन्यस्तेभ्योऽपि सोऽव्ययः ॥" इति । ( अत्रात्मधर्मस्य दुःखादेः प्रकृतिसंसर्गोपाधिनिबन्धनत्वात्प्रकृतेरित्युक्तं प्राप्ताप्राप्तविवेकतः ) "निरस्तातिशयाह्लादसुखभावैकलक्षणा । भेषजं भगवत्प्राप्तिरेकान्तात्यन्तिकी मता ॥" इति च । मुक्तौ सर्वोऽपि पदार्थो भगवद्विभूतित्वेनानुकूलतयैव भासते न कोऽपि प्रतिकूलतया । तदुच्यते 'नोत दुःखता'मिति । अनुकूलप्रकाश एवानन्दो नाम । तथा च सर्वसाक्षात्कारिणो मुक्तस्यापरिच्छिन्नानन्दयोगः सिद्ध्यति । एवं मुक्तेन क्रियमाणे परिपूर्णपरब्रह्मानुभवसुखे च ब्रह्माण्डाधिपत्यादिसुखं समुद्रे बिन्दुरिव कणिकामात्रमिति वर्णितं तत्त्वमुक्ताकलापे—"निःसीमब्रह्मतत्त्वानुभवभवमहाह्लाददुग्धार्णवेऽस्मिन् निःशेषैश्वर्यजीवानुभवरस-

भरो विन्दुभावोपलक्ष्य ।" इति । एव मुक्तिकाले जीवज्ञानस्य अनवधिकातिशयविकास स्थित ।

स्वाभाविक हि ज्ञानस्य सर्वार्थानामपि स्फुटम् । साक्षात्प्रकाशकत्व तु मुक्तावीशादिबुद्धिवत् ॥ बन्धे तु कर्मणा ज्ञान तिरोभूत न सर्वगम् । किन्त्विन्द्रियद्वारिकया प्रसृत्या ग्राहक मतम् ॥ नित्यजीवस्वभावत्वाज्ज्ञानस्यापि हि नित्यता । प्रसारतन्निवृत्तिभ्या जातनष्टत्वधीर्मता ॥ द्रव्यत्वेऽप्यस्य सङ्कोचविकासाद्यन्वयात्सति । नित्यमात्माश्रयत्वेन तद्गुणत्व व्यवस्थितम् । द्रव्यत्वादेव चान्यत्राश्रयात्प्रसरसम्भव । अभक्त्वा धर्मिसम्बन्धमालोकस्येव तेजस ॥

त्रिवर्गता तु जीवस्य योक्ता बद्धादिभेदत । ज्ञानावस्थाभेदत सा विभाव्या तत्त्वदर्शिभि ॥ ये तु सङ्कुचितज्ञाना बद्धास्ते सम्प्रकीर्तिताः । पश्चादुद्भूतबोधा ये मुक्तास्ते तु प्रकीर्तिता ॥ नित्योद्भूतप्रबोधास्तु कथ्यन्ते नित्यसूरयः । अनादिमुक्ता इति च कीर्त्यन्ते त्वेत एव हि ॥ चतुर्मुखमहेशाद्या ईश्वरा ये च तेऽपि हि । अन्तर्भवन्ति बद्धेषु गताश्च प्राकृत लयम् ॥ ये मुक्तास्ते द्विधा केचित्स्वात्मभोगैकतत्परा । परे तु परमेशस्य भोगसेवासु तत्परा ॥ मुक्ताः केचित्तु शब्द्यन्ते ब्रह्म चाक्षरमित्यपि ॥ मुक्तौ कर्मतिरोधाननिवृत्तौ चेतनस्य तु ॥ चेतनाया बृहद्भावाद्ब्रह्मशब्दोऽत्र युज्यते । परब्रह्मगुणस्याविर्भावादथापि वा ॥ मुक्तिकालिकभोगस्य क्षरणाभावतोऽक्षरम् । उच्यते मुक्तरूप चापुनरावृत्तिदर्शनात् ॥ धर्मज्ञानान्यवैतृष्ण्यपूर्वभक्तिश्च वै हरौ । नि श्रेयसकरी पुसो वर्णिताऽत्र समासत ॥

---

## ईश्वरपरिच्छेदः ।

### परमात्मनिरूपणम् ।

यदुपासनया जीवो मुच्यते वन्धनाद् ध्रुवम् ।
तस्य स्वरूपप्रभृति वर्णयाम इह स्फुटम् ॥
स एव परमात्मा च परंब्रह्मेति कीर्त्यते ।
नारायणो वासुदेवः पुरुषोत्तम इत्यपि ॥
सर्वेश्वरः सर्वजगद्धाताऽयं परमो मतः ।
महापुरुषनाम्ना च पौरुषे सूक्त ईरितः ॥
आत्मब्रह्मादिशब्दा अप्येतस्यैवाभिधायकाः ।
असङ्कुचितया वृत्त्या प्रयुक्तास्तत्र तत्र च ॥
धारकत्वादिभिः सर्वचेतनाचेतनेष्वयम् ।
व्याप्नोतीत्यात्मशब्दस्य मुख्या वृत्तिस्त्विहैव हि ॥
एवं ब्रह्मादिशब्दानां मुख्यवृत्तिरिहैव तु ।
वक्ष्यतेऽथापि जीवेषु प्रयुक्ता गुणलेशतः ॥
तद्व्यावृत्त्यै त्विमे शब्दाः परशब्दसमन्विताः ।
प्रयुज्यन्तेऽत्र शास्त्रेषु जडजीवविलक्षणे ॥
यथा हि चेतनत्वाविकारित्वगुणयोगतः ।
जीवस्याचिद्भिदा प्रोक्ता तथा सा परमात्मनः ॥
जीवेभ्यस्त्रिविधेभ्यश्च वैलक्षण्यं परस्य तु ।
वैभवाज्ज्ञानशक्त्यादेश्चानन्त्यान्निरुपाधिकात् ॥
नित्यानामपि माहात्म्यं परेच्छावशतो यतः ।
अतो न निरुपाधित्वं तस्यापि भवति ध्रुवम् ॥

द्रव्यत्वादे समानत्वेऽप्यवादे पृथिवीभिदा ।
यथा तथा समे चित्त्वे जीवभेद परात्मन ॥
किञ्च जीवसजातीयत्वे न तेन प्रयोजनम् ।
प्रधानपुम्भिरेव स्याल्लोकयात्रा तथा सति ॥
जीवेष्वेवातिशयितज्ञानशक्त्यादिक पुमान् ।
ईश्वरः कश्चिदित्याहु केचित्तन्न श्रुतेर्मतम् ॥
आधारत्वनियन्तृत्वशेषित्वप्रमुखैर्गुणै ।
अन्तर्यामिब्राह्मणादौ ततो भेद श्रुतोऽस्य यत् ॥
अतो हेयप्रत्यनीककल्याणगुणसागर ।
मन्तव्य ईश्वर साक्षाद्भगवान् पुरुषोत्तम ॥

### परब्रह्मस्वरूपम् ।

वस्तुस्वरूपे ज्ञाते हि जिज्ञासा लक्षणादिके ।
अत स्वरूप प्रथम कथ्यतेऽस्य श्रुतौ श्रुतम् ॥
तत्र धर्मो द्विधा प्रोक्त स्वरूपस्य निरूप
निरूपितस्वरूपस्यातिशयाधायकोऽपर ।
विना येन धिय धर्मिस्वरूप नाधिरोहति
स धर्म आद्य कथितोऽपरो ज्ञाते नि
यथा च कम्बुग्रीवादि कलशस्य निरूप
तेन ज्ञाते च कलशे हैमत्वादि

किञ्चाविद्यानन्वयोऽपि जीवानां नास्ति सर्वथा ।
मुक्तस्य भूतपूर्वाज्ञानान्वयो दोष इष्यते ॥
नित्यस्यापि पराधीनत्वादिदोषो विवक्ष्यते ।
निरवद्यश्रुतिः सर्वाविद्यायोगपरा हि यत् ॥
सदा परब्रह्मणि तत् स्वरूपं श्रुतितोऽस्य तु ।
निर्दोषानन्तविज्ञानानन्दात्मकमुदाहृतम् ॥

श्रुतयस्तावत् 'सत्यं ज्ञानमनन्तं ब्रह्म' 'विज्ञानमानन्दं ब्रह्म' 'निरवद्यं निरञ्जनम्' 'अजरोऽमृतोऽभयो ब्रह्म' 'आनन्दोऽजरोऽमृतः' 'रसो वै सः' 'प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म' 'यद्वाव कं तदेव खं यदेव खं तदेव कं' इत्याद्याः। 'आनन्दादयः प्रधानस्य' 'इतरे त्वर्थसामान्यात्' इति सूत्रयोश्च सत्यज्ञानानन्तानन्दामलत्वादीनां परब्रह्मस्वरूपनिरूपकत्वेन सर्वोपासनानुयायित्वं भाषितं श्रीभाष्यकारैः ।

सत्यं ज्ञानमनन्तं ब्रह्मेति वाक्यमुदाहृतम् ।
तस्यार्थो वर्ण्यते यत्स्यात्स्वरूपप्रमितिर्विभोः ॥
तत्र सत्यपदं ब्रूते सततैकस्वरूपकम् ।
तेनाचिद्वस्तुनो भेदो गम्यते विक्रियावतः ॥
ऐकरूप्यमसङ्कोचाद्धर्मितो धर्मतोऽपि च ।
अतो बद्धाच्च भेदः स्याद्विक्रियाश्रयधर्मकात् ॥
बन्धे हि जीवज्ञानं तु नैकरूपं व्यवस्थितम् ।
विकासादिन्द्रियद्वारात्स्वापे सङ्कोचतोऽस्य च ॥
एवं ज्ञानपदं ब्रूते ह्यसङ्कुचितवृत्तितः ।
स्वरूपतः स्वभावाच्च नित्यासङ्कोचबोधताम् ॥

सिद्ध्येत्पुंसः परस्यातो भेदो मुक्तात्मवर्गतः ।
न हि स्वभावतो नित्यासङ्कोचज्ञानताऽस्य च ॥
पूर्वं ह्येतत्स्वभावस्य सङ्कोचः सर्वसम्मतः ।
भेदश्च जडवर्गात्स्यात्स्वरूपज्ञानतोक्तितः ॥
तथाऽनन्तपदात्त्रैधापरिच्छेदपराद्विभोः ।
परिच्छिन्नस्वरूपेभ्यो नित्येभ्योऽपि भिदा स्थिता ॥
विकारिमात्राद्भेदस्य यदि सत्यपदात्प्रभोः ।
जडमात्राच्च भेदस्य सिद्धिर्ज्ञानपदान्मता ॥
तथाप्यनन्तपदतस्त्रिविधाज्जीवतो भिदा ।
सिद्ध्येदेव स्थितश्चैव परोऽचिज्जीवतः परः ॥

अनन्तपदं चासङ्कोचाद्देशतः कालतो गुणतो वस्तुतश्च परिच्छेदराहित्यमाह । तथा चानन्तनाम्नो निरुक्तिः—'देशतः कालतो वाऽपि गुणतो वस्तुतोऽपि वा । अवधिर्यस्य नास्तीति सोऽनन्तः समुदाहृतः ॥' इति । अत्र देशतोऽवधिर्नाम एतद्देशे वर्तते नान्यत्रेति प्रदेशनियमः, यथा घटादेः । तदभावश्च सर्वदेशसम्बन्धित्वलक्षणे विभुत्वे पर्यवस्यति । इदानीं वर्तते नान्यदेति कालतोऽवधिः, तन्निषेधेन चानाद्यनन्तत्वं सिद्ध्यति । एत एव गुणाः सन्ति नान्य इति गुणेयत्ता गुणतोऽवधिः, स नास्तीत्यनेन चासङ्ख्येयकल्याणगुणाकरत्वम् । घटः पटो न इत्यादिवद्वस्तुकृतावधिर्वस्तुपरिच्छेदः, तन्निषेधेन च 'ज्योतींषि विष्णुर्भुवनानि विष्णुः' इति सर्ववस्तुसामानाधिकरण्यनिर्देशार्हत्वरूपं सर्वशरीरकत्वम् । यद्वा वस्तुकृतपरिच्छेदो नाम समाभ्यधिकान्तरवत्ता, अयमेतत्सदृश इति वा एतन्न्यून इति वा, तदभावश्च समाभ्यधिक-

राहित्यलक्षणः । तथा च श्रूयते—'न तत्समश्चाभ्यधिकश्च दृश्यते' इति । समाभ्यधिकराहित्यं च सर्वप्रकारानौपाधिकसर्वावधिकोत्कर्षरूपं निखिलहेयप्रत्यनीकत्वविशिष्टसमस्तकल्याणगुणगणपरिपूर्णत्वे पर्यवस्यति । एतत्कल्पे गुणतोऽपरिच्छेदोऽत्रैवान्तर्भवति । इदं च त्रिविधपरिच्छेदराहित्यं 'नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययम्' इत्यादावपि व्यक्तं परमात्मनः । सर्वगतं सर्वत्रान्तर्यामितया व्याप्तं, सर्वशरीरकत्वेन सर्वात्मभूतमित्यर्थः । तत्र हेतुः सुसूक्ष्मत्वम् । अव्ययमिति च सर्वत्र प्रविष्टस्यापि स्वाभाविकानन्तकल्याणगुणगणप्रच्युतिराहित्यमभिप्रैति । सर्वत्र पूर्ण एवासौ परमात्मेति भावः । त्रिविधानां च जीवानां कालकृतपरिच्छेदराहित्येऽपि न देशतो वस्तुतो वा परिच्छेदराहित्यम् । तत्तु परमात्मन एव । एवं 'सत्यं' 'निरवद्यं निरञ्जनम्' 'अजरोऽमरः' इत्यादिना विकारादिनिखिलहेयप्रत्यनीकं, 'ज्ञानमनन्तं' 'कं ब्रह्म खं ब्रह्म' 'यदेष आकाश आनन्दः' इत्यादिना चापरिच्छिन्नज्ञानानन्दलक्षणं ब्रह्मस्वरूपं निखिलाचिज्जीवविलक्षणं प्रसिद्ध्यतितराम् । इतरानपेक्षप्रकाशत्वात्स्वरूपं ज्ञानरूपं, कार्त्स्न्येन स्वस्मा अनुकूलतयैवाभासाद्यानन्दरूपं भवति । अनुकूलप्रकाशत्वमेव ह्यानन्दत्वम् । एतेन ज्ञानानन्दयोर्भेदान्नोभयरूपत्वं स्वरूपस्य सम्भवतीति शङ्का निरस्ता ।

परमात्मस्वरूपं चेदं स्वस्मै स्वयं भासमानमहमित्येव भासते, प्रत्यक्त्वात् । भवति च परमात्मनोऽप्यहमिति स्वरूपव्यपदेशः— 'हन्ताहमिमास्तिस्रो देवताः' इत्यादौ । क्षराक्षरशब्दितबद्धमुक्तविलक्षणं च स्वरूपं 'अहं'मित्येव निर्दिष्टं श्रीकृष्णेन—'यस्मात्क्षरमती-

तोऽहमक्षरादपि चोत्तमः । अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥' इति । 'अहमात्मा गुडाकेश सर्वभूताशय-स्थितः ।' 'न त्वेवाहं जातु नास' इत्यादौ च स्वरूपेऽहंशब्दः प्रयुक्तः । परमात्मस्वरूपस्यैव हि सर्वभूतान्तरात्मत्वं सम्भवति । नित्यत्वं च स्वस्वरूपस्यैव जीवस्वरूपनित्यत्वे दृष्टान्तविधया विव-क्षितमिति । तथा 'अहं सर्वस्य प्रभवः' 'तेषामहं समुद्धर्ता' 'अहं त्वा सर्वपापेभ्यः' इत्यादिषु बहुषु स्थलेषु चाऽहमिति परमात्मनो निर्देशो जागर्ति नाम । 'किन्त्वहं साम्प्रतं भूमौ' 'सोऽहं पूर्णं करिष्यामि' 'भक्त्यैवाहं प्रसन्नः स्यां' 'अहमे-वास्मि वै साक्षात्' इत्यादिषु श्रीहरिणापि स्वस्वरूपमहमिति निर्दिष्टं चास्ति । अतश्चाहंप्रत्ययः परस्य ब्रह्मणो नान्तःकरणोपाधिकः, किन्तु स्वरूपप्रयुक्त एवेति सिद्धम् ।

सच्चिदानन्दरूपोऽयं कीर्त्यते तत्र तत्र च । नैतावता प्रसिद्ध्येत्तु निर्विशेषत्वमस्य वै ॥ सत्यशब्दार्थ एवोक्तः सच्छ-ब्देन हि सर्वथा । सदैकरूपता, ज्ञानघनत्वं च समीरितम् ॥ चिच्छब्देन ज्ञानशब्दस्यार्थ, आनन्दशब्दतः । प्रोक्ता त्वान-न्दघनता सानुकूल्यैकलक्षणा ॥ स्वरूपतो धर्मतश्च ज्ञानान-न्दात्मतात्मिका । विज्ञानानन्दघनता न निर्धर्मत्वसाधिका ॥ हरिवाक्यसुधासिन्धौ च—'सच्चिदानन्दरूपोऽसौ' 'ज्ञानमानन्द-रूपं च सूक्ष्मं तत्त्वं निरञ्जनम् । वासुदेवः परब्रह्म क्षेत्रज्ञः पुरुषोत्तमः ॥' इत्यादिना ज्ञानानन्दस्वरूपत्वं परमात्मन उक्तम् । सत्सङ्गिजीवनेऽपि—'निर्गुणो निर्विकारश्च सच्चिदानन्दलक्षणः । अनन्तकोटिब्रह्माण्डाधारोऽनन्तोऽपि यः स्वयम् ॥' 'स्वतन्त्रः

स्वप्रकाशश्च' 'श्रीकृष्णो यः परंब्रह्म स्वयंज्योतिः परात्परः । ज्ञेयो नारायणो विष्णुर्भगवान् पुरुषोत्तमः ॥' इत्यादौ अनन्तज्ञानानन्दस्वरूपत्वं तस्योपवर्णितम् ।

## परब्रह्मणो लक्षणम् ।

परस्वरूपमित्युक्तमथ तल्लक्ष्म कथ्यते ।
लक्ष्येतरेभ्यो व्यावृत्तिहेतुर्लक्षणमुच्यते ॥
बहूनां ब्रह्मधर्माणां भवेल्लक्षणता ततः ।
अलक्ष्याद्भेदकत्वस्याविशेषादेकशोऽपि हि ॥

तथा हि—(१) विभुत्वे सति चेतनत्वम् (२) स्वत एव सदा निरस्तनिखिलहेयत्वम् (३) स्वाभाविकानन्तकल्याणगुणवत्त्वम् (४) सर्वाधारत्वम् (५) सर्वनियन्तृत्वम् (६) सर्वशेषित्वम् (७) चेतनाचेतनशरीरकत्वम् (८) सर्वकर्मसमाराध्यत्वम् (९) सर्वकर्मफलप्रदत्वम् (१०) सर्वजगदेककारणत्वम् (११) मुमुक्षूपास्यत्वम् (१२) मुक्तप्राप्यत्वम् इत्यादीनि तस्य लक्षणानि सम्भवन्ति । यद्यप्येकेनैव लक्षणेन समस्ताचिज्जीवविलक्षणं ब्रह्मस्वरूपमधिगतं भवति, अथापि नानाविधवैभवप्रतिपत्त्युपयुक्तानि नानालक्षणानि साधीयांस्येव ।

## प्रथमलक्षणविचारः ।

तत्र विभुत्वं नाम व्यापकत्वं सर्वदेशसम्बन्धित्वलक्षणम् । श्रूयते चेदं परमात्मनः 'स वा एष महानज आत्मा' 'महान्तं विभुमात्मानं मत्वा धीरो न शोचति' 'परात्परं यन्महतो महान्तं' 'विवेश भूतानि चराचराणि' 'वेदाहमेतमजरं पुराणं सर्वात्मानं सर्वगतं विभुत्वात्' 'सर्वव्यापी स भगवान्' इति ।

अगीयत च भगवता स्वस्य सर्वव्यापित्व 'मया ततमिद सर्वं जगदव्यक्तमूर्तिना' 'सर्वस्य चाह हृदि सन्निविष्ट' इति । 'यो लोकत्रयमाविश्य' इति च । यद्यपि कालस्य धर्मभूतज्ञानस्य च विभुत्वमस्ति, अथापि न चेतनत्व तयो । चेतयते इति हि चेतन , स च ज्ञाताऽहमर्थ एव, न ज्ञानमात्रम् । चेतनत्व यद्यपि जीवाना वर्तते, अथापि न विभुत्वम् । यद्यपि स्वभावतो विभुत्व मुक्तानामपि, अथापि न स्वरूपत । स्वरूपत एव च सर्वव्यापित्वमेतल्लक्षणघटक बोध्यम् । परमात्मस्वरूपस्य तु 'य आत्मनि तिष्ठन्नात्मनोऽन्तर स त आत्माऽन्तर्याम्यमृत' 'आत्मानमन्तर्हृदि सन्तमात्मनाम्' 'अहमात्माऽऽत्मना धात ' 'कृष्णमेनमवेहि त्वमात्मानमखिलात्मनाम्' 'अखिलदेहिनामन्तरात्मदृक्' 'आत्मात्मा चाक्षरात्मा च' इत्यादिवचनैर्बद्धमुक्तलक्षणसर्वजीवान्तर्व्यापित्वप्रतिपादनाच्च विभुत्व लभ्यते । 'व्याप्य सर्वानिमाँल्लोकान् स्थित सर्वत्र केशव । ततश्च विष्णुनामासि विशेर्धातोः प्रवेशनात् ॥' 'सर्वत्रासौ समस्तं च वसत्यत्रेति वै यत । ततः स वासुदेवेति विद्वद्भि परिपठ्यते ॥' इत्यादिनिरुक्तिबलाच्च । 'ईशावास्यमिद सर्व यत्किञ्च जगत्या जगत्' इति च नियन्त्रा परमात्मना इद चेतनाचेतनात्मक कृत्स्न जगन्नियन्तव्यतया व्याप्तमिति प्रतिपाद्यते । अतो गगनादिव्याप्त्यपेक्षया विलक्षणेय व्याप्ति प्रतीयते । 'तदेजति तन्नैजति तद्दूरे तद्वदन्तिके । तदन्तरस्य सर्वस्य तदु सर्वस्यास्य बाह्यत ॥' 'यच्च किञ्चिज्जगत्यस्मिन् दृश्यते श्रूयतेऽपि वा । अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः ॥' इत्यत्र च सर्वेषु चेतनाचेतनेषु

अन्तर्बहिश्च व्याप्तिर्व्याप्तुरीश्वरस्य नारायणत्वं च व्यक्तम्। गीयते चान्तरात्मतया व्याप्तिः—'अहमात्मा गुडाकेश सर्वभूताशयस्थितः' इति। 'सर्वं समाप्नोषि ततोऽसि सर्वः' इति च श्रीकृष्णं प्रत्यर्जुनवाक्यम्। श्रीविष्णुनामसहस्रे विष्णुनाम च सर्वव्यापकत्वमस्याऽऽह। तथा च निरुक्तिः—'चराचरेषु भूतेषु वेशनाद्विष्णुरुच्यते' इति। 'अप्रमेयात्मा' इति नाम च सर्वेष्वेव चिदचिद्विभूतिषु बहिरन्तश्च व्याप्तिमाह। निरुक्तिश्च 'एकैकशोऽप्रमेया या ह्यसङ्ख्याता विभूतयः। तासां चैवाप्रमेयात्मा व्यापनाद्बहिरन्ततः' इति। 'अनेन सर्वगतत्वमायामयशब्दादिभ्यः' 'नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात्' इति ब्रह्मसूत्रयोश्च ब्रह्मणो विभुत्वमभिहितम्।

स्वरूपस्वभावैर्लोके ये महत्तराः पदार्थास्तेभ्योऽप्युत्कर्षातिशयात् 'महतो महीयान्' इति श्रुतिशिरःसु जोघुष्यतेऽयम्। एवंभूतस्याप्यस्य सर्वेषु सूक्ष्मेष्वपि प्रवेशोऽप्रतिरोधलक्षणं निरतिशयं सौक्ष्म्यमनुसन्धाय 'अणोरणीयान्' इति च श्रुतौ व्यपदेशः। तथा चाणुरिति नाम्नो निरुक्तिः—'अतिसूक्ष्महृदाकाशाव्यक्तजीवप्रवेशने। शक्तिमानणुरित्युक्तः' इति। इदमेव निरतिशयसूक्ष्मत्वं 'यत्परं ब्रह्म सर्वात्मा विश्वस्यायतनं महत्। सूक्ष्मात्सूक्ष्मतरं नित्यम्' 'सर्वगतं सुसूक्ष्मम्' 'यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित्' 'यदर्चिमदणुभ्योऽणु च' 'बृहच्च तद्दिव्यमचिन्त्यरूपं सूक्ष्माच्च तत्सूक्ष्मतरं विभाति' इत्यादिष्वाम्नायते। शाण्डिल्यविद्यायां चात्यन्तं बृहतोऽप्यस्योपासकानुग्रहार्थं आश्रितवात्सल्यादल्पायतने हृदयकमले सूक्ष्मरूपेण सन्निधानमनुसन्धेयतयो-

पदिश्यते 'एष मे आत्माऽन्तर्हृदयेऽणीयान् व्रीहेर्वा यवाद्वा एष मे आत्माऽन्तर्हृदये ज्यायान् पृथिव्या ज्यायानन्तरिक्षाज्ज्यायान् दिवो ज्यायानेभ्यो लोकेभ्य' इति । प्रपञ्चितश्चायमर्थः श्रीभाष्ये 'अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेव व्योमवच्च' इति सूत्रे । अणीयस्त्वश्रुतेरेवमतिसूक्ष्मत्व एव तु । तात्पर्यमिति परमे महत्त्वेऽस्य न तु क्षतिः ॥

ब्रह्मशब्दवाच्यत्वादपि परमात्मस्वरूपस्य विभुत्वसिद्धिः । ब्रह्मशब्दो हि स्वरूपतः स्वभावतश्च निरतिशयबृहत्त्ववत्येव मुख्यवृत्तः । तथा च यास्कनिरुक्तं 'ब्रह्म परिवृढं सर्वतः' इति । यद्यपि मुक्तौ जीवात्मना ज्ञानबृहत्त्वं भवति, 'स चानन्त्याय कल्पते' इति श्रुतेः । तद्योगेन च ब्रह्मशब्दस्तेषु प्रयुज्यते 'ब्रह्म वेद ब्रह्मैव भवति' 'निर्दोषं हि समं ब्रह्म' 'ब्रह्मभूतः प्रसन्नात्मा' इत्यादिषु । एवं यावत्स्वविकारव्याप्तिमत्त्वेनाव्यक्ते प्रधानेऽपि ब्रह्मशब्दः प्रयुज्यते 'तस्मादेतद्ब्रह्म नामरूपमन्नं च जायते' 'मम योनिर्महद्ब्रह्म' इत्यादिषु । अथापि तत्र तत्र सातिशयं बृहत्त्वमुपचारनिमित्तमाश्रित्य गौण एव व्यपदेशः, न मुख्यः । 'वेदे भूरिप्रयोगाच्च गुणयोगाच्च शार्ङ्गिणि । तत्रैव ब्रह्मशब्दोऽयं मुख्यवृत्तो महामुने ॥' इति स्मृतेः । 'बृहति बृंहयति तस्मादुच्यते परं ब्रह्म' 'बृहत्त्वाद्बृंहणत्वाच्च ब्रह्मेति परिपठ्यते' इति श्रुतिस्मृतिभ्यां च स्वरूपतः स्वभावतश्च स्वयं निरतिशयबृहत्त्ववान् चेतनाचेतनयोश्च बृहत्त्वमापादयन् सर्वजगत्कारणं मुमुक्षूपास्यो मोक्षप्रदश्च श्रीमन्नारायण एव ब्रह्मशब्दमुख्यार्थं प्रतिपादित इत्यन्यत्र विस्तरः । वर्णितश्चायमर्थः सत्सङ्गिजीवने—'कृष्ण' पर

बृहत्' 'कृष्णाख्यं हि परं बृहत्' 'ब्रह्मशब्दो मुख्यतया कृष्ण एव प्रवर्तते । भगवच्छब्दवद्विद्वन्निति जानीहि निश्चितम् ॥ स्वरूपेण गुणैश्चापि निरवध्यतिशायिता । तस्यैवास्तीति ब्रह्माख्यामन्वर्थां श्रुतयो विदुः ॥' इति । 'स कृष्णस्तु विभुः' 'सर्वत्र व्यापकोऽपीशः खमिवास्त्यातिनिर्मलः' इति च विभुत्वं परमात्मस्वरूपस्य स्पष्टमभिहितं हरिवाक्यसुधासिन्धावपि ।

## परमात्मनश्चेतनत्वम् ।

'पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' 'नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्' 'यः सर्वज्ञः सर्ववित्' 'ब्रह्मणा विपश्चिता' 'ज्ञः कालकालः' 'योऽस्याध्यक्षः' 'प्राज्ञेनात्मना सम्परिष्वक्तः' 'सर्वदृक् सर्ववेत्ता समस्तशक्तिः परमेश्वराख्यः' 'सर्वज्ञता तृप्तिरनादिबोधः' 'यो वेत्ति युगपत्सर्वं प्रत्यक्षेण सदा स्वतः' इत्यादिभिर्निरुपाधिकनित्यसर्वविषयकापरोक्षज्ञानवत्त्वं च परमात्मनो लभ्यते । बद्धानां ज्ञानं न सर्वविषयकम् । मुक्तानां सर्वविषयकमपि न नित्यम्, पूर्वं सङ्कुचितवृत्तित्वात् । अनादिमुक्तानां नित्यं सर्वविषयकमपि न निरुपाधिकम्, तथात्वस्य भगवन्नित्यसङ्कल्पनिबन्धनत्वात् । अतो जीवज्ञानविलक्षणमेतदीयं ज्ञानमिति स्थितम् । 'अहं बहु स्यां' इत्याकारकमीक्षणं विपश्चित्त्वशब्दितं भगवदसाधारणं न मुक्तस्यापीति 'नेतरोऽनुपपत्तेः' 'जगद्व्यापारवर्जं' इति सूत्रभाष्ये व्यक्तम् । गीतं च भगवता स्वस्य सार्वज्ञ्यम्— 'वेदाहं समतीतानि वर्तमानानि चार्जुन । भविष्याणि च भूतानि मां तु वेद न कश्चन ॥' 'वेदान्तकृद्वेदविदेव चाहम्'

इत्यादिना। 'प्रज्ञा च तस्मात्प्रसृता पुराणी' 'मत्तः स्मृतिर्ज्ञानमपोहनं च' इत्यादिश्रुतिस्मृतिभ्यां इतरेषां ज्ञानप्रसरणसम्पादकत्वेन प्रसिद्धस्य हृषीकेशस्य सार्वज्ञ्ये किं वक्तव्यम्। विष्णुनामसहस्रे 'महाबुद्धिः' इति नामव्याख्याने च श्रीपराशरभट्टार्यैः भगवज्ज्ञानस्य सर्वविषयत्वं नित्यत्वं प्रत्यक्षरूपत्वममोघत्वं च भाषितम्। यथा "–महत् ज्ञानमस्येति महाबुद्धिः, इदं चास्याशेषदेशकालस्वभावविप्रकृष्टाविप्रकृष्टविषयं, सार्वज्ञ्यात्। अविशयविपर्यासतया यथार्थं, क्लेशकर्मविपाकाशयाद्यपरामर्शात्। स्वाभाविकत्वान्नित्यं च। करतलामलकावलोकनवदपरोक्षं च, वैशद्यात्। अमोघं च सर्वनिर्वहणात्। तथा च वचनं–'मनसैव जगत्सृष्टिं संहारं च करोति यः। तस्यारिपक्षक्षपणे कियानुद्यमविस्तरः॥' इत्यादि। तथा 'पश्यत्यचक्षुः स शृणोत्यकर्णः' इत्यादिनाऽवगतकरणनैरपेक्ष्यस्यापि एतज्ज्ञानप्रसरणस्यैच्छिकं करणापेक्षत्वं पुण्डरीकाक्षश्रुतिप्रसिद्धत्वादेः। अथापि न करणनियमः, सर्वेण सर्वकार्यकरणशक्तेः" इति। अत्र प्रमाणं च जयाख्यसंहितावचनमुदाहृतं–'सर्वतः श्रुतिमाश्चासौ यथा हृकुच्छ्रवकोरगः' इति। तथा 'उदारधीः' इतिनाम्ना च भगवदीयज्ञानस्य सर्वोपकारकत्वमुक्तम्। तथा च निरुक्तिः–'सर्वोपजीव्यसार्वज्ञ्यादुच्यते स उदारधीः' इति।

अनन्तज्ञानानन्दस्वरूपस्यास्यानन्तज्ञानानन्दगुणाश्रयत्वमपि 'यः सर्वज्ञः सर्ववित्' 'ब्रह्मणा विपश्चिता' 'तस्माद्वा एतस्माद्विज्ञानमयादन्योऽन्तर आत्माऽऽनन्दमयः' 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह। आनन्दं ब्रह्मणो विद्वान्' इत्या-

दिश्रुतिप्रसिद्धं सम्भवत्येव । जगज्जन्मादिकारणत्वेन लक्षितस्य परस्य ब्रह्मणोऽचिज्जीववैलक्षण्यप्रतिपादनप्रवृत्तयोरीक्षत्यानन्दमयाधिकरणयोः सूत्रकृताऽप्यपरिच्छिन्नज्ञानानन्दयोर्गुणयोरेव ह्यचिज्जीववैलक्षण्यसाधकप्रधानहेतुतयोल्लेखः कृतः—'ईक्षतेर्नाशब्दम्' 'आनन्दमयोऽभ्यासात्' इति ।

ज्ञानानन्दस्वरूपे हि ब्रह्मण्यस्ति न सम्भवः ।
ज्ञानानन्दाश्रयत्वस्य गुणित्वाभावतो गुणे ॥
मैवं वोचो गुणत्वं हि न सिद्धं ब्रह्मणोऽपि तु ।
प्रधानभावाद्द्रव्यत्वमेवातो गुणसम्भवः ॥
द्रव्यस्य ज्ञानरूपत्वमानन्दत्वं कथं भवेत् ।
उच्यते प्रतिभासे स्वेऽनपेक्षातोऽवबोधता ॥
अनुकूलतयाऽऽनन्दत्वं च द्रव्येऽपि सम्भवेत् ।
धर्मभूतं तु यज्ज्ञानं सुखं वा न तदाश्रयः ॥
तद्भवेद्धर्मिणस्तु स्यात्तद्वत्त्वं नात्र बाधकम् ।
यथा प्रदीपो ज्योतिः सन् ज्योतीरूपप्रभाश्रयः ॥
एवं सुखज्ञानरूपोऽप्ययं तद्धर्मको भवेत् ।
ज्ञानाद्यभावो ज्ञानादेर्धर्मत्वोपाधिको मतः ॥

आर्थगुणनिषेधपरता च ज्ञानानन्दश्रुतेः सूत्रकृता प्रतिक्षिप्ता—'आह च तन्मात्रम्' 'दर्शयति चाथो अपि स्मर्यते' इति सूत्राभ्याम् । ज्ञानश्रुतिर्ज्ञानत्वगुणयोगमात्रमाह । तेन तद्विरुद्धस्य जाड्यादेर्निषेधः सिद्ध्येन्नाम, नतु धर्मिस्वरूपज्ञानत्वाविरुद्धानां गुणानाम् । यथा रक्तोऽयमिति रक्तत्वयोगप्रतिपादनादरक्तव्यावृत्तिमात्रं सिद्ध्यति; न तु रसादेः समानाधिकरणस्य गुणान्तरस्य निषेधः, गुणान्तराणि च ब्रह्मणः श्रुतिस्मृतिवाक्यगणः प्रदर्शयतीति सूत्रद्वयस्य

तात्पर्यम् । अपरिच्छिन्नज्ञानानन्दाश्रयस्य ब्रह्मण 'सत्य ज्ञानमनन्त ब्रह्म' 'आनन्दो ब्रह्म' इति ज्ञानानन्दव्यपदेशस्तद्गुणसारत्वा-त्पि सम्भवति । सति हि तत्प्राचुर्ये तद्रूपताव्यपदेश स्वारसिक एव लोके दरीदृश्यते । यथा—शर्कराप्रचुरः खाद्यपदार्थ शर्करा इत्येव व्यपदिश्यते, लवणप्रचुरश्च लवण इत्येव । यथा वा कण्टकभू-यिष्ठो ग्रामः कण्टक इति च । एव चैतन्यानन्दप्रधानः प्राज्ञो ज्ञाना-नन्दव्यपदेशमर्हति । प्रज्ञ एव च प्राज्ञ , 'प्रज्ञादिभ्यश्च' इति स्वार्थेऽणो विधानात् । अतश्च न ज्ञानादिव्यपदेशमात्रेण गुणनिषेध शङ्कनीय । तदेव विभु परमात्मा ज्ञानानन्दघन इति स्थितम् । तथा च श्रुति —'विज्ञानघन एवानन्दमय ' इति । ज्ञानानन्द-श्रुतेरेव द्विधा निर्वाह ईरित । ज्ञानानन्दप्रधानत्वाज्ज्ञानान-न्दत्वतोऽपि च ॥ हरिवाक्यसिधासिन्धौ च—'स्वप्रकाशश्च सर्ववित्' इति ज्ञानस्वरूपत्व ज्ञानाश्रयत्वमपि निर्दिष्ट परस्य ब्रह्मण । सत्सञ्जिजीवनेऽपि 'नारायणो वासुदेव स्वतन्त्र स्वप्रकाशक । आनन्दादिव्यमूर्तिश्च विष्णु कृष्णोऽच्युतोऽव्यय ॥ सर्वज्ञ सत्यसङ्कल्प सर्वकर्मफलप्रद ।' 'स्वतन्त्र स्वप्रकाशश्च सर्वकारणकारणम् । अनेककल्याणगुण स ज्ञेय पुरुषो-त्तम ॥' 'आत्माऽऽत्मना चेतनाना चेतनश्च श्रुतीरित ' इति ज्ञानानन्दस्वरूपस्यैव ज्ञानसङ्कल्पाद्यन तगुणवत्त्वमभिहितमस्ति ।

## द्वितीयतृतीयलक्षणविचार ।

( ब्रह्मण उभयलिङ्गत्वम् )

चिदानन्दः परात्माऽसौ विभुश्चेतन ईरितः ।
अथोच्यतेऽस्य निर्दोषकल्याणगुणता सदा ॥

स्वत एव सदा निरस्तसमस्तहेयत्वं स्वाभाविकानन्तकल्याणगुणवत्त्वं चोभयलिङ्गमित्यभिधीयते। असाधारणधर्मतयैनयोर्ब्रह्मण इतरवैलक्षण्यानुमापकत्वात्। यद्यपि निरस्तहेयत्वं मुक्तानामस्ति, अथापि न तत् सदा तेषाम्। सदातनमपि तन्नित्यानां न स्वतः, नित्यभगवत्सङ्कल्पाधीनत्वात्तेषां तथात्वस्य। एवं सदा कल्याणगुणवत्त्वमपि तेषां परसङ्कल्पौपाधिकत्वान्न स्वाभाविकमिति बोध्यम्। तथाच वर्णितं श्रीवत्साङ्कमिश्रैः—'इच्छात एव तव विश्वपदार्थसत्ता नित्यं प्रियास्तव तु केचन ते हि नित्याः। नित्यं त्वदेकपरतन्त्रनिजस्वरूपा भावत्कमङ्गलगुणा हि निदर्शनं नः ॥' इति।

स्वत एव सदा निरस्तसमस्तहेयत्वं तावत् श्रूयते परमात्मनः— 'नैतं सेतुमहोरात्रे तरतो न जरा न मृत्युर्न शोको न सुकृतं न दुष्कृतं सर्वे पाप्मानोऽतो निवर्तन्ते अपहतपाप्मा ह्येष ब्रह्मलोकः' इति। अत्र तरतिः प्राप्तिवचनो वेदान्तं तरतीतिवत्। एतं नोल्लङ्घत इति व्याख्याने तु सदा सर्वहेयानामत्रैवावस्थानं प्रतीयेत। तथाच 'सर्वे पाप्मानोऽतो निवर्तन्ते' इत्याद्युत्तरसन्दर्भो विरुध्येत। अहोरात्रयोः परिच्छेदकत्वेन प्राप्तिः; कर्मणश्च वशित्वेन प्राप्तिः प्रसक्ता प्रतिषिध्यते। अपहतपाप्मत्वं च कर्मसामान्यप्रतिभटत्वं कृतेऽपि कर्मणि तत्तत्फलजननशक्त्युत्पादप्रतिरोधकत्वलक्षणम्॥ 'न सुकृतं न दुष्कृतं सर्वे पाप्मान' इति पुण्यस्यापि पाप्मन्शब्देन क्रोडीकाराच्चापहतपाप्मेत्यादौ पाप्मन्शब्देन कर्मसामान्यमेव विवक्षितम्। एवंभूतत्वात्कर्मवश्यत्वतत्कृतशोकादीनां सदा ब्रह्मण्यप्राप्तिरिति भावः। अत एवोदिति नामास्य श्रूयते—'तस्योदिति नाम स वा एष सर्वेभ्यः पाप्मभ्य उदितः'

इति । स्वरूपानुबन्धि नाम चेद् सत्ता स्वत एव कर्मोद्भूतत्व एवास्य सङ्गच्छते । 'एष आत्मा अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः' इति श्रुतिश्च परस्य ब्रह्मणः सर्वं हेयजातं प्रतिषिध्य कल्याणगुणान् विदधाति । अशनायापिपासे शोकमोहौ जरामृत्यू इत्यूर्मिषट्कं व्यावर्त्यतेऽपहतपाप्मेत्यादिना पदषट्केन । तत्र मोहस्य देहात्मभ्रमादिलक्षणस्य 'अनृतेन हि प्रत्यूढाः' इत्यनृतशब्दितसांसारिकफलकर्महेतुकत्वात्कर्मनिवृत्तिप्रतिपादकेनापहतपाप्मेत्यनेन तन्निवृत्तिरर्थसिद्धा । कर्मफलशोकादिराहित्यं तु स्वशब्देनैव प्रतिपादितम् । यद्यपि मुक्तानामप्यहतपाप्मत्वादिकमस्ति, परं तत्तिरोधानार्हम् । संसारकाले हि तिरोहितं तत्कर्मणोपासनाप्रीतभगवत्प्रसादेन प्रकृतिबन्धविनिर्मोकपूर्वकं पुरुषोत्तममुपसन्नस्य चाविर्भवति । तथा च सूत्र—'पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ' 'सम्पद्याविर्भावः स्वेनशब्दात्' 'उत्तराच्चेदाविर्भूतस्वरूपस्तु' इति । परमात्मा तु नित्याविर्भूतस्वतःसिद्धापहतपाप्मत्वसत्यकामत्वादि । 'एष सर्वेश्वर एष भूताधिपतिरेष भूतपालः' 'प्रधानक्षेत्रज्ञपतिर्गुणेशः' 'पापनुदं भगेशं' इत्यादिवाक्यैरसङ्कोचान्नित्यानामपि नियन्तृत्वेन स्वामित्वेन च प्रतिपन्नस्य परमात्मन एव तद्गुणानामपि व्यवस्थापकत्वम् । 'पत्यादिशब्देभ्यः' इतिसूत्रे च त्रिविधानपि चेतनान् प्रति स्वामित्वनियन्तृत्वादिकं परब्रह्मणो निरूपितमित्यास्तां तावत् ।

ननु 'एष आत्माऽपहतपाप्मा' इत्यादिवाक्यं न गुणतात्त्विकतायां प्रमाणम्, दहरोपासनाविधिशेषत्वात् । उपासनं हि

कल्पितैरपि गुणैः सम्भवतीति। अत्र ब्रूमः—स्यान्नाम कल्पितैरपि भावनम्। प्रकृते कल्पितत्वं कथं निश्चीयते। प्रत्युत काम्यमानत्वेन कामशब्दितानां गुणानां सत्यत्वमेवोच्यतेऽत्र। कर्मसम्बन्धनिषेधपूर्वकं श्रुतानां गुणानामकर्मकृतत्वेन स्वाभाविकत्वं च लब्धम्। 'य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामान् तेषां सर्वेषु लोकेषु कामचारो भवति' इति श्रुतौ च परमात्मस्वरूपस्येव तदीयगुणानामपि पारमार्थिकानामेव भावनया प्रजापतिवाक्योक्तसत्यसङ्कल्पादिस्वरूपाविर्भावलक्षणं मोक्षफलं प्रतिपाद्यते। मुक्त्युपायोपासनाकर्मतया च स्वरूपस्येव गुणानामपि पारमार्थिकत्वम्। नह्ययथार्थभावनस्य मुक्त्युपायत्वम्। सर्वकल्याणगुणाश्रयस्यैव परस्य ब्रह्मणः साकल्येन चिन्तयितुमशक्यत्वात्पुनः कतिपयैर्गुणविशेषैस्तत्र तत्र विद्यायामुपास्यत्वं श्रूयते। अतो विद्यान्तरोपास्यमपि ब्रह्म वस्तुतो विद्यान्तरोक्तगुणविशिष्टमेव। अत एव तत्प्राप्तिफलानां दहराद्युपासनानां विकल्पोऽसूत्रि—'विकल्पोऽविशिष्टफलत्वात्' इति। सद्विद्यायां च जगत्कारणत्वादिभिः कतिपयैर्गुणैरुपास्यमानापि देवता वस्तुतः सकलकल्याणगुणविशिष्टैव, स्वरूपानुबन्धित्वाद्गुणानाम्। अतः सगुणैव तत्राप्यनुसन्धेया प्राप्या चेति दहरविद्यादिभिस्तस्या अपि विकल्पो वाक्यद्रमिडभाष्यकाराभ्यामुपपादितः। तथा च वाक्यं—'युक्तं तद्गुणकोपासनात्' सगुणाया देवताया उपास्यत्वात्तस्या एव प्राप्यत्वं युक्तमित्यर्थः। व्याख्यातं च द्रमिडभाष्यकारेण विद्याविकल्पं वदता—"यद्यपि सच्चित्तो न निर्भुग्नदैवतं गुणगणं मनसानुधावेत्। तथाप्यन्तर्गुणामेव देवतां भजत इति तत्रापि सगुणैव देवता प्राप्यते" इति।

'अन्तर्गुणा'मिति पदेन गुणानां ब्रह्मस्वरूपानुबन्धित्वं विवक्षितम् । श्रूयते च स्वाभाविकत्वं—'पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' इति । अतो ब्रह्मगुणानामुपासनार्थं कल्पितत्वमेवेति न शक्यं वक्तुम् । परमनिःश्रेयससाधनस्य ब्रह्मवेदनस्य फलमपि ब्रह्मसम्बन्धिसकलकल्याणगुणानुभवलक्षणमेवानन्दवल्ल्यां प्रतिपाद्यते—'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता' इति । परममुक्तिकालीनानुभवविषयत्वाच्च ब्रह्मगुणानां पारमार्थिकत्वमेव सिद्ध्यति । 'सत्यधर्मपराक्रम' इति नाम च भगवद्गुणचेष्टितानां सत्यत्वमाह ।

एतेन—परब्रह्म निर्गुणं, यद्वेदनात्परा मुक्तिः सेत्स्यति । अपरं तु ब्रह्म सगुणम् । परविद्यानधिकारिणामेतदुपासनयैतत्सायुज्यलक्षणामपरां मुक्तिं प्राप्तानां परब्रह्मवेदनाधिकारसम्पत्त्याऽधिगतपरविद्यानां परान्तकाले परमा मुक्तिर्भवितेति कल्पनं दत्तोत्तरम् । श्वेताश्वतरे वेद्यपरतत्त्वनिरूपणप्रकरण एव ज्ञानशक्त्यादिगुणानां स्वाभाविकत्वोक्तेः । अविद्याया ब्रह्मस्वभावत्वायोगेन स्वाभाविकीत्यस्याविद्याकार्येत्यर्थवर्णनस्यासमञ्जसत्वात् । 'य ईशेऽस्य जगतो नित्यमेव नान्यो हेतुर्विद्यते ईशनाय' इति नित्यनिरङ्कुशैश्वर्यस्यानौपाधिकत्वश्रवणात्तत्सहचरितानां ज्ञानादीनामपि निरुपाधिकत्वसिद्धेश्च । किञ्च तत्रैव चिदचित्प्रपञ्चोऽयं यस्मादुदयादिमुखेन विपरिवर्तते सोऽयं जगत्कारणभूतः प्रकृतिप्राकृतेभ्यः कालात्कर्तृभूतेभ्यो जीवेभ्यश्चात्यन्तविलक्षणो विश्वस्याधारः षाड्गुण्यपरिपूर्णः । तं स्वान्तर्यामिणं विदित्वा जीवो मुक्तो भवतीत्युच्यते—'स वृक्षकालाकृतिभिः परोऽन्यो यस्मात्प्रपञ्चः परिवर्ततेऽ-

यम् । धर्मावहं पापनुदं भगेशं ज्ञात्वाऽऽत्मस्थममृतं विश्वधाम' इति । वृक्षवच्छेदनार्हत्वाद्वृक्ष इति विक्रियार्हप्रकृतिकार्याणि विवक्षितानि । आकृतिशब्देन चासमन्तात्कृतिर्विविधकर्मसु कर्तृत्वमस्येति जीवः । एवं चिदचिद्वैलक्षण्यं पूर्वार्धेनोक्तम् । ज्ञानोत्पत्तिविरोधिपापनिवर्तकत्वेन ज्ञानानुकूलकर्मप्रेरकत्वेन च स्वज्ञाननिष्पादकत्वं भगशब्दितानां कल्याणगुणानामाश्रयत्वं वेदितुरन्तरात्मत्वं मरणाद्यवद्यरहितत्वं सर्वाधारत्वं च वेद्यस्य परब्रह्मण उत्तरार्धेन प्रतिपादितम् । अत्र 'अमृतं' 'भगेशं' इति पदद्वयेनोभयलिङ्गत्वं तस्य सिद्ध्यति । एवं तत्रैव प्रकरणे सर्वजगत्स्रष्टृत्वमवाप्तसमस्तकामत्वमनन्याधीनत्वं सर्वज्ञत्वं सर्वविद्याप्रवर्तकत्वं सर्वचेतनाचेतननियन्तृत्वं तच्छेपित्वं संसारमोक्षहेतुत्वमनन्येश्वरत्वं सर्वेश्वरत्वं सर्वान्तर्यामित्वमित्यादयो गुणाः कल्याणगुणसामान्यवस्त्वपरेण गुणीतिशब्देन तत्तद्विशेषशब्दैश्च वेद्यस्य परस्यैव ब्रह्मणो निरुपाधिकाः प्रतिपादिताः—'स विश्वकृद्विश्वविदात्मयोनिर्ज्ञः कालकालः गुणी सर्वविद्यः । प्रधानक्षेत्रज्ञपतिर्गुणेशः संसारमोक्षस्थितिबन्धहेतुः । स तन्मयो ह्यमृत ईशसंस्थो ज्ञः सर्वगो भुवनस्यास्य गोप्ता' इत्यादिना । न चात्र प्रकरणे उपासनाशब्दः श्रूयते, येनोपासनाशेषतया गुणानां कीर्तनमिति कथ्येतापि । अपि तु परममोक्षोपायवेदनकर्मीभूतस्य परस्यैव ब्रह्मण एतैर्गुणैर्विशेषणं स्वरूपकीर्तनमेव मन्तव्यम् । नन्वत्रैव प्रकरणे निषेधोऽपि श्रूयते—'निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्' 'एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा । कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च' इति । सत्यम् ।

स तु हेयगुणक्रियादिगोचर । निष्कलत्व–निरवयवत्वम् । तत्र लिङ्गं निष्क्रियत्वं चेष्टाराहित्यम् । अवयवनिषेधेन च तत्समुदायरूपस्य शरीरस्य निषेधसिद्धि । शान्तत्व–शरीरसम्बन्धप्रयुक्तोर्मिषट्करहितत्वम् । शरीरनिषेधे हेतुर्निरवद्यत्वम्, अवद्यं कर्म तत्सम्बन्धराहित्यमिति यावत् । अकर्मत्वादेवाञ्जनशब्दितकर्मफललेपशून्यत्वं चात्र ब्रह्मणो विवक्षितम् । शान्तादिपदसमभिव्याहाराच 'निष्कल'मित्यादेः प्राकृतशरीरादिनिषेधपरत्वमवगम्यते । यच्छरीरे यत्क्रियायुक्तस्योर्मीणां प्रसङ्गस्तच्छरीरादेरेव निषेध्यत्वात् । न तु जगत्सर्जनादेर्व्यापारस्याप्राकृतस्य षाड्गुण्यविग्रहस्य चात्रैव 'स्वाभाविकी ज्ञानबलक्रिया च' 'वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात्' इत्यादिना प्रतिपादितस्य निषेध । निर्गुणशब्देनापि सत्त्वादिगुणत्रयवश्यताया एव निषेधः । सर्वेषु भूतेषु तैरविदितस्तदन्तर्यामितया सर्वं तत्तद्गुणानुगुणकर्मसु प्रवर्तयन् य ईशः सदा सर्वं साक्षात्कुर्वन्नास्ते, स सर्वस्य चेता–स्रष्टापि सर्जनव्यापारफलभूतकर्मफलानुभवानन्वयात्केवल –उदासीन । अगुणवश्यतया फलाभिसन्धिपूर्वककर्तृत्वाभावात् । तथा च भगवता स्वयमेवोक्त "चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः । तस्य कर्तारमपि मां विद्ध्यकर्तारमव्ययम् ॥ न मां कर्माणि लिम्पन्ति न मे कर्मफले स्पृहा" इति । "सर्वभूतानि कौन्तेय प्रकृतिं यान्ति मामिकाम् । कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम् ॥ प्रकृतिं स्वामवष्टभ्य विसृजामि पुनः पुनः । भूतग्राममिमं कृत्स्नमवशं प्रकृतेर्वशात् ॥ न च मां तानि कर्माणि निबध्नन्ति धनञ्जय । उदासीनवदासीनमसक्तं तेषु कर्मसु ॥"

इति च । स सर्वजगत्कर्ता 'एको देवः...दिव्यो देव एको नारायणः' इति श्रुतिप्रसिद्धः समाभ्यधिकदरिद्रोऽप्राकृतपरमव्योमनिलयोऽतिभास्वरदिव्यमङ्गलविग्रहो नारायण इति च 'एको देव' इति मन्त्रार्थः । पूर्वं हि क्षेत्रज्ञस्य गुणपरवशतया तत्तद्गुणानुगुणं सकामकर्मकर्तृत्वं तत्फलभोक्तृत्वं चाभिहितम्—'गुणान्वयो यः फलकर्मकर्ता कृतस्य तस्यैव फलोपभोक्ता' इति । अगुणवश्यतया तद्वैलक्षण्यमत्रेशस्य प्रतिपिपादयिषितम्—'चेता केवलो निर्गुणश्च' इति । अत्रेव मन्त्र उक्तैः सर्वसाक्षात्कर्तृत्वसर्वस्रष्टृत्वसर्वान्तरात्मत्वादिगुणैः समुच्चयानुपपत्तेश्च 'निर्गुण' इति न गुणसामान्यनिषेधोऽभिमतः ।

श्रीविष्णुपुराणेऽपि हेयगुणादिरहितत्वं कल्याणगुणाद्याश्रयत्वं च परतत्त्वभूतस्यैव परमेश्वरस्य वासुदेवस्य प्रतिपाद्यते—'समस्तहेयरहितं विष्ण्वाख्यं परमं पदम्' 'गुणादिदोषांश्च मुने व्यतीतः' 'समस्तकल्याणगुणात्मकोऽसौ स्वशक्तिलेशाद्धृतभूतसर्गः ।
इच्छागृहीताभिमतोरुदेहः संसाधिताशेषजगद्धितोऽसौ ॥
तेजोबलैश्वर्यमहावबोधसुवीर्यशक्त्यादिगुणैकराशिः । परः पराणां सकला न यत्र क्लेशादयः सन्ति परावरेशे ॥' इति । गुणादिसामान्यनिषेधे तु दोषपदं व्यर्थम् । गुणादींश्च व्यतीत इत्येव हि तदानीं वचनं पर्याप्तम् । 'सत्त्वादयो न सन्तीशे यत्र च प्राकृता गुणाः । स शुद्धः सर्वशुद्धेभ्यः पुमानाद्यः प्रसीदतु ॥' इति प्राकृतगुणानां विशिष्य निषेधवचनं चाप्राकृतगुणसद्भावाभिप्रायेण । गुणसामान्यनिषेधे विवक्षिते च प्राकृतपदमनर्थकं स्यात् ।

श्रीमद्भागवतेऽपि ज्ञानानन्दस्वरूपस्यैव परस्य ब्रह्मणोऽनन्तगुणवत्त्वं प्रतिपादितम्--'भक्तिं लब्धवतः साधो किमन्यदवशिष्यते । मय्यनन्तगुणे ब्रह्मण्यानन्दानुभवात्मनि ॥' 'मां भजन्ति गुणाः सर्वे निर्गुणं निरपेक्षकम् । सुहृदं प्रियमात्मानं साम्यासङ्गादयो गुणाः ॥' इति । 'यो वा अनन्तस्य गुणाननन्ताननुक्रमिष्यन्स तु बालबुद्धिः । रजांसि भूमेर्गणयेत्कथञ्चित्कालेन नैवाखिलसत्त्वधाम्नः ॥' इति च ।

नित्यत्वं चैषां 'त इमे सत्याः कामाः' 'एते चान्ये च भगवन्नित्या यत्र महागुणाः । प्रार्थ्या महत्त्वमिच्छद्भिर्न वियन्ति स्म कर्हिचित् ॥' इत्यादिश्रुतिस्मृतिसिद्धम् । आविद्यत्वे तु गुणानामविद्यानिवृत्तौ निवृत्त्यवश्यंभावेन नित्यत्वायोगः । एषां निःसीमत्वं च 'योऽस्याध्यक्षः परमे व्योमन् सो अङ्ग वेद यदि वा न वेद' 'न ते विष्णो जायमानो न जातः देव महिम्नः परमन्तमाप' इत्यादिश्रुतिसिद्धम् । अभिधीयते च तस्मिन्नेव--'श्रुतिस्तथानन्दमुखान् हरेः गुणान् इयत्तया मातुमिवोद्यता सती । उवाच वाचो मनसा सहोचिता निवृत्तिमेव त्ववधेरसम्भवात् ॥' इति । हरिवाक्यसुधासिन्धावपि भगवद्गुणानां नित्यत्वम्, अपरिच्छिन्नत्वं चाभिहितमस्ति'जातो गुणेभ्यः सत्त्वो यः स्नेहः स तु भवेद्दृढः । तत्र कृष्णे नित्यसिद्धाः सन्ति ते त्वनपायिनः ॥' 'कृष्णस्तु साक्षाद्भगवान् राधालक्ष्मीपतिः प्रभुः । अनन्तकोटिब्रह्माण्डस्थित्युत्पत्त्यादिकारणम् ॥ शारदाब्रह्मशेषाद्या न पारं यान्ति यस्य च । वेदा अपि गुणान् यस्य गायन्तोऽन्तं न यान्ति च ॥' इति । सत्सङ्गिजीवने च--

'स्वरूपं च स्वभावश्च विभूतिश्च तथा गुणाः । नित्याः सन्ति हरौ ह्येतेऽन्यत्र त्वागन्तुका मताः' 'अनन्तगुणः' 'सकलगुणैकधाम' इति । एवं तत्त्वप्रकरण एव श्रुतिस्मृत्योः परस्य ब्रह्मणो निर्दोषत्वस्येव समस्तकल्याणगुणाकरत्वस्य प्रतिपादनाद्गुणानां मायिकत्वमेवेति कल्पनाया नावसर इति स्थितम् । निर्गुणश्रुतीनां तात्पर्यं च महर्षिभिरेव वर्णितम्—'योऽसौ निर्गुण इत्युक्तः शास्त्रेषु जगदीश्वरः । प्राकृतैर्हेयसंयुक्तैर्गुणैर्हीनः स उच्यते ॥' इति । निर्गुणशब्दस्य निरुक्तिश्च—'स्थितोऽपि नीरक्षीरवज्जगतोऽस्पर्शनाद्गुणैः । उक्तः स निर्गुणः' इति । सत्त्वादिगुणवश्यत्वाभावो निर्गुणत्वमिति यावत् ।

यत्तु 'यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह' इति वाङ्मनसागोचरत्वप्रतिपादनान्निर्गुणत्वं फलति । सगुणमेव हि वस्त्विदमित्थमिति गृहीतुं प्रतिपादयितुं वा शक्यत इति । तत् श्रुत्यक्षरापर्यालोचनकृतम् । 'यद्वाचो न स्पृशन्ति मनसा सहे'ति हि तदा वचनशैली साधीयसी । अत्र तु किञ्चित्स्पृष्ट्वा साकल्येन गृहीतुमत्यादरेण प्रवृत्तयोः पारानुपलम्भेन प्रतिनिवृत्तिरेव प्रतिपाद्यते । प्रतीयमानानां ब्रह्मगुणानां सीमानं तु वेदपुरुषोऽपि वाचा प्रतिपादयितुं किंबहुना मनसा चिन्तयितुमपि नाशक्नोदिति यावत् । एवं चापरिच्छिन्नगुणकत्वमेव वाङ्मनसनिवृत्तिकथनेन सिद्ध्यति न निर्गुणत्वम् । निर्गुणत्वेन ज्ञानाविषयत्वविवक्षायां तु 'ब्रह्मविदाप्नोति परम्' 'आनन्दं ब्रह्मणो विद्वान्' इति पूर्वापरवाक्यविरोधश्च ।

अनन्तत्वात्स्वरूपगुणादिभिरेतावदिति परिच्छेदायोग्यं ब्रह्म परिच्छिद्य ज्ञानवतां तदज्ञातम् । परिच्छिन्नत्वेनाजानतां च ज्ञातं

भवतीत्युच्यते—'अविज्ञातं विजानतां विज्ञातमविजानताम्' इति। परिच्छिन्नत्वेनाज्ञानं च परिच्छिन्नचिदचित्प्रपञ्चवैलक्षण्येन ज्ञानमेव भावान्तरत्वादभावस्येति विज्ञातमविजानतामिति साधूपपद्यते। ज्ञानसामान्याविषयत्वविवक्षायां तु विज्ञातत्वकीर्तनं विरुद्ध्येत। पूर्वं हि 'तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते' इति प्राकृतजनोपसेव्यमिदङ्कारगोचरं प्राकृतशब्दाभिधेयं परिच्छिन्नं वस्तु व्यवच्छिद्यापरिच्छिन्नमप्राकृतस्वासाधारणाकारं परंब्रह्मैव मुमुक्षुत्वमुपास्यमिति प्रतिपादितम्। न चात्रोपास्यसामान्यवैलक्षण्यं विवक्षितम्। तदात्वे 'नेदं यदुपासते' इत्येव पर्याप्तत्वाद्द्वितीयेदम्पदवैयर्थ्यप्रसङ्गात्। अस्माकं तु परिच्छिन्नपरतया सार्थक्यम्। ब्रह्मोपासनस्यैव निःश्रेयसहेतुत्वाद्ब्रह्मण उपास्यसामान्यवैलक्षण्यप्रतिपादनायोगश्चेति। तस्मात्परिच्छिन्नव्यावृत्तिपरप्रकरणानुगुण्येनापि ब्रह्मणः परिच्छिन्नत्वेन ज्ञानस्याज्ञानत्वमेवात्र विवक्षितम्। आवश्यकं हि पूर्वोत्तरसन्दर्भपर्यालोचनं वाक्यार्थविनिश्चये। अत एव च न्यायविदामुद्घोषः—'पूर्वापरापरामृष्टः शब्दोऽन्यां कुरुते मतिम्' इति। एवं च ब्रह्मणोऽज्ञातत्ववचनं न निर्गुणत्वात् किन्त्वपरिच्छिन्नत्वादिति सिद्धम्। एतेन शब्दागोचरत्वमपि व्याख्यातम्। शब्दा अपि हि वैदिका वेदोपबृंहणभूताश्च ब्रह्मणो गुणादीन् वर्णयितुं प्रवृत्ता यथाशक्ति विविच्य पारं गन्तुमशक्नुवन्तस्तेषामपरिच्छिन्नत्वमेव प्रतिपाद्य श्राम्यन्ति। तथा चोपवर्णितं यामुनमुनिभिः—'उपर्युपर्यब्जभुवोऽपि पूरुषान् प्रकल्प्य ते ये शतमित्यनुक्रमात्। गिरस्त्वदेकैकगुणावधीप्सया सदा स्थिता नोद्यमतोऽतिशेरते ॥' इति। अतः स्वरूपतो गुणैश्चा-

परिच्छिन्नं ब्रह्मेयत्तया शब्देन प्रतिपादयितुं मनसा चिन्तयितुं वा न शक्यमिति स्थितम् ।

हेयसामान्यशून्यत्वकल्याणगुणाकरत्वलक्षणोभयलिङ्गप्रवृत्तिनिमित्तकश्च भगवच्छब्दः परस्मिन्नेव ब्रह्मणि वासुदेवे नित्यशुद्धेऽपरिच्छिन्नविभूतिके सर्वकारणे मुख्यवृत्त इति श्रीविष्णुपुराणे प्रतिपाद्यते—'शुद्धे महाविभूत्याख्ये परे ब्रह्मणि शब्द्यते । मैत्रेय भगवच्छब्दः सर्वकारणकारणे ॥ सम्भर्तेति तथा भर्ता भकारोऽर्थद्वयान्वितः । नेता गमयिता स्रष्टा गकारार्थस्तथा मुने ॥ ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः । ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा ॥ वसन्ति तत्र भूतानि भूतात्मन्यखिलात्मनि । स च भूतेष्वशेषेषु वकारार्थस्ततोऽव्ययः ॥ ज्ञानशक्तिबलैश्वर्यवीर्यतेजांस्यशेषतः । भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः ॥' 'एवमेष महाशब्दो मैत्रेय भगवानिति । परमब्रह्मभूतस्य वासुदेवस्य नान्यगः ॥' 'तत्र पूज्यपदार्थोक्तिपरिभाषासमन्वितः । शब्दोऽयं नोपचारेण ह्यन्यत्र ह्युपचारतः ॥' इति । ( पूज्यपदार्थोक्तिर्योगः, परिभाषा रूढिः ) उपचारनिमित्तं च ज्ञानाधिक्यमिति वर्णितम्—'उत्पत्तिं प्रलयं चैव भूतानामागतिं गतिम् । वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति ॥' इति । परमते त्वविद्योपहितस्य जगत्कारणस्याशुद्धत्वात्सगुणस्य चापरब्रह्मत्वान्निर्विशेषे च ब्रह्मणि प्रवृत्तिनिमित्तानन्वयाज्जगत्कारणे शुद्धे परस्मिन् ब्रह्मणि भगवच्छब्दमुख्यवृत्ति-

१ सृष्ट्युपयोगिसम्भारसम्पादयितृत्व प्रकृतिपुरुषादेः सृष्ट्यौन्मुख्यापादनलक्षणं सम्भर्तृत्वम्, भर्तृत्वं स्वामित्वं, नेतृत्वं स्थितिकर्तृत्वम्, गमयितृत्वं लयकर्तृत्वम्, श्री शौर्यसम्पत्तिः, वैराग्यं पूर्णकामतया अनादरत्ता ।

प्रतिपादनस्यायोग । किञ्च 'अथात आदेशो नेति नेति' इति निषेधमुखेन प्रतिबोधितस्यैव परस्य ब्रह्मणो नाम कीर्त्यते—'सत्यस्य सत्यम्' इति । एतेन—परस्य ब्रह्मण शब्दागोचरत्वमेव, अविद्योपहितस्यैव ब्रह्मादिशब्दवाच्यत्वमित्यपि परास्तम्। अत्राय सङ्ग्रहः—
ज्ञानानन्दश्रुतेश्चैवममतत्वश्रुतेरपि । निवृत्तिश्रुतितो वाङ्मनसयोर्निर्गुणश्रुते ॥ निर्गुण तत्पर ब्रह्म सगुण ब्रह्म कल्पितम् । इति वादो न युक्तस्तु गुणाना सत्यताश्रुते ॥ स्वाभाविकत्वश्रुत्या चापरिच्छेदाशया मता । अमतादिश्रुतिर्बोध्य हेयाभावे च तत्परा ॥ निर्गुणत्वश्रुतिर्हेयगुणाभावस्फुटश्रुते । मानान्तरासिद्धशुद्धकल्याणगुणतत्परा ॥ विधिश्चास्याबाधिक स्यादग्नीषोमादिवाक्यवत् । सूत्रकारोऽपि कल्याणगुणेषु परमार्थत ॥ त्रय्यन्ताना हार्दमादरादलोप इति स्फुटम् । वर्णयामास किञ्चास्य ब्रह्मत्व तु स्वरूपत ॥ गुणतश्चानवधिकातिशयत्वेन सिद्ध्यति। निरुक्त ब्रह्म परिबृढ सर्वत इति ह्यत ॥ ब्रह्मत्वायाप्यस्य शुभगुणवत्ताभ्युपेयताम् । एव निर्दोषकल्याणगुणवद्ब्रह्म वर्णितम् ॥

हरिवाक्यसुधासिन्धौ सत्सञ्जिजीवनेऽपि निर्दोषत्व समस्तकल्याणगुणाकरत्व च समुपवर्णितं—'गुणातीतो निर्विकार' 'परात्पर शुद्धः' 'मायागुणैर्विहीनत्वान्निर्गुण परमेश्वरः' 'भगवान् पुरुषोत्तमः । सर्वदेवातिशुद्धोऽस्ति स्वतन्त्रोऽविक्रियस्तथा' 'अनन्तकल्याणगुणरत्नाब्धि' 'निर्गुण सद्गुणगण हरिं' 'एव हि भगवानेको भूयास सन्ति तद्गुणा ' 'निर्गुणो निर्विकारश्च सच्चिदानन्दलक्षणः' 'नित्यासङ्ख्येयकल्याणदि-

ण्यसद्गुणमण्डितः । सेवितश्च भगैः षड्भिः' 'अप्राकृतगुणो विष्णुर्निर्गुणश्चेश्वरेश्वरः' 'अनन्तकल्याणगुणः स ज्ञेयः पुरुषोत्तमः' इति ।

षाड्गुण्यविवरणम् ।

"सङ्ख्यातुं नैव शक्यन्ते गुणा दोषाश्च शार्ङ्गिणः ।
आनन्त्यात्प्रथमो राशिरभावादेव चान्तिमः ॥"
"न हि तस्य गुणाः सर्वे सर्वैर्मुनिगणैरपि ।
वक्तुं शक्या वियुक्तस्य सत्त्वाद्यैरखिलैर्गुणैः ॥"
"यथा रत्नानि जलधेरसंख्येयानि पुत्रक ।
तथा गुणा ह्यनन्तस्य ह्यसंख्येया महात्मनः ॥"
"इषुक्षयान्निवर्तन्ते नान्तरिक्षक्षितिक्षयात् ।
मतिक्षयान्निवर्तन्ते न गोविन्दगुणक्षयात् ॥"
"चतुर्मुखायुर्यदि कोटिवक्त्रो भवेन्नरः क्वापि विशुद्धचेताः ।
स ते गुणानामयुतैकदेशं वदेन्न वा देववर प्रसीद ॥"
"वर्षायुतैर्यस्य गुणा न शक्या वक्तुं समेतैरपि सर्वलोकैः ।
महात्मनः शङ्खचक्रासिपाणेर्विष्णोर्जिष्णोर्वसुदेवात्मजस्य ॥"
"गुणात्मनस्तेऽपि गुणान् विमातुं हितावतीर्णस्य क ईशिरेऽस्य ।
कालेन यैर्वा विमिताः सुकल्पैर्भूपांसवः खे मिहिका द्युभासः ॥"

इत्यादिवचनैरसंख्येयगुणवत्त्वेन प्रतिपन्नस्यापि भगवतः सृष्ट्याद्युपयोगितया प्राधान्येन षड्गुणा गण्यन्ते ज्ञानशक्तिबलैश्वर्यवीर्यशक्तितेजांसि नाम । एतद्वितततिरूपत्वं चान्येषां गुणानामुच्यते—'तवानन्तगुणस्यापि षडेव प्रथमे गुणाः । यैस्त्वयेव जगत्कुक्षौ अन्येऽप्यन्तर्निवेशिताः ॥' इति । वर्णितं च श्रीवत्साङ्कमिश्रै-

र्वरदराजस्तवे—'प्रकृष्टं विज्ञानं बलमतुलमैश्वर्यमखिलं विमर्यादं वीर्यं वरद परमा शक्तिरपि च। परं तेजश्चेति प्रवरगुणषट्कं प्रथमजं गुणानां निःसीम्नां गणनविगुणानां प्रसवभूः ॥' इति। एतेषां स्वरूपं च वर्णितम्—"अजडं स्वात्मसम्बोधि नित्यं सर्वावगाहनम्। ज्ञानं नाम गुणं प्राहुः प्रथमं गुणचिन्तकाः ॥ जगत्प्रकृतिभावो यः सा शक्तिः परिकीर्तिता। श्रमहानिस्तु या तस्य सततं कुर्वतो जगत् ॥ बलं नाम गुणस्तस्य कथितो गुणचिन्तकैः। कर्तृत्वं नाम यत्तस्य स्वातन्त्र्यपरिबृंहितम् ॥ ऐश्वर्यं नाम तत्प्रोक्तं गुणतत्त्वार्थचिन्तकैः। तस्योपादानभावे हि विकारविरहो हि यः ॥ वीर्यं नाम गुणः सोऽयमच्युतत्वपराह्वयः। सहकार्यनपेक्षा या तत्तेजः समुदाहृतम् ॥" इति। स्वाभाविकनित्यसर्वापरोक्षलक्षणं भगवतो ज्ञानम्, अघटितघटनासामर्थ्यं शक्तिः, विश्वस्य धारणसामर्थ्यं बलम्, नियमनसामर्थ्यमैश्वर्यम्, सत्यपि हेतौ विक्रियाविरहलक्षणं वीर्यम्, पराभिभवसामर्थ्यं तेजः, इत्यपि सुवचम्। नामसहस्रे च 'महोत्साहः' इति निरवधिकमैश्वर्यं, 'महाद्युतिः' इति प्रकृष्टं तेजः, 'महाबलः महाबुद्धिः महावीर्यः महाशक्तिः' इति च तथाविधा बलबुद्धिवीर्यशक्तयो भगवतः प्रतिपाद्यन्ते।

नन्वघटितं चेद्घटयेदीश्वरो नीलमरुणं कुर्याद्घटं च पटम्। वस्तुस्वभावनियमो विलुप्येतैवम्। मैवम्। परैः कल्पशतेनापि रचयितुमशक्यान् सङ्घटनाविशेषानविरुद्धतया वस्तुषु घटयति स्वसामर्थ्येनेत्येव विवक्षितत्वात्। यथोक्तं तत्त्वमुक्ताकलापे—'नीलं किञ्चित्तदानीमरुणमिति न खल्विन्द्रजालादृते स्यान्नो

चेदेवं विरोधः क्वचिदपि न भवेत् कश्च जैनोपरोधः । तस्मादीशो विरुद्धद्वितयमघटयन् सर्वशक्तिः कथं स्यान्नैवं व्याघातशून्येष्वनितरसुशकेष्वस्य तादृक्त्वसिद्धेः ॥' इति । विष्णोरचिन्त्यशक्तिकृता एव मेघोदयादयोऽन्यैर्मनसापि चिन्तयितुमशक्या विचित्रा भावाः स्मर्यन्ते—'मेघोदयः सागरसन्निवृत्तिरिन्दोर्विभागः स्फुरितानि वायोः । विद्युद्विभङ्गो गतिरुष्णरश्मेर्विष्णोर्विचित्राः प्रभवन्ति मायाः ॥' इति । जले पृथिव्या अच्छिन्नतया स्थितिः, गुरुत्ववतां द्युलोकप्रभृतीनामपततां निरालम्बने आकाशप्रदेशे स्थितिः, जलेनाग्नेर्विनाश्यत्वेऽपि मेघोदरगतविद्युदादितेजसां जलेन्धनत्वादि च भगवतोऽघटितघटनासमर्थस्य सङ्कल्पकृतमेव । नृसिंहादिरूपपरिग्रहोऽप्यघटितघटनाशक्तिकृत एव । कृष्णस्योदरे ब्रह्माण्डस्यावस्थितिरपि तथैव । भगवता स्वविग्रहविभूतीनां सङ्कोचविकासयोगादिनाऽविरुद्धावस्थान्वयस्य सम्पादनात्सर्वमुपपन्नम् । नतु अन्यत्रादृष्टत्वमात्रेणास्य विचित्रघटनाविशेषस्यैन्द्रजालिकत्वं मन्तव्यम्, तत्र तत्र पारमार्थिकताया एव प्रतिपादितत्वात् । अत एव परावरतत्त्वयाथात्म्यविदामपि भक्ताग्रेसराणां तदनुभवैकरसता सङ्गच्छते । नह्यैन्द्रजालिकत्वे विवेकिनां तदनुभवप्रवणता घटेत । यशोदा च कृष्णोदरगतं ब्रह्माण्डं पश्यन्ती किमयं स्वप्नः, उत देवमाया; आहोस्विन्मतिमोह इति वितर्कयन्ती जागरावस्थत्वान्न स्वप्नः, अन्यैः पार्श्वस्थैरनुपलभ्यत्वान्न देवमाया, विग्रुदादिकं हि दैविकं कर्म सर्वैरुपलभ्यते, निपुणं निरूपणेऽप्यविपर्यासान्न भ्रमः, रज्जुसर्पादिकं हि निपुणं निरूप्यमाणं बाधितं भवतीति तत्र तत्राऽनैर्भर्येणाऽन्ततो भावयति ममैव पुत्रस्यै-

श्वरः स्वाभाविको गुणविशेषोऽयं स्वान्तर्गतब्रह्माण्डत्वलक्षण इति। 'किं स्वप्न एतदुत देवमाया किंवा मदीयो बत बुद्धिमोहः। अथो अमुष्यैव ममार्भकस्य यः कश्चनौत्पत्तिक आत्मयोगः॥' इति। अतोऽचिन्त्यशक्तियोगप्रभवमत्यद्भुतं भागवतं कर्म परमार्थभूतमेव भक्तशिरोमणीनां रसत्वाय कल्पत इति स्थितम्। उक्तं च अक्रूरेण—जगदेतन्महाश्चर्यं रूपं यस्य महात्मनः। तेनाश्चर्यवरेणाहं भवता कृष्णसङ्गतः॥' इति। तथा च हरिवाक्यसुधासिन्धावुक्तम्—'विधृता येन पृथिवी वाराम्रुपरि तिष्ठति। ताराचक्रं चान्तरिक्षे लोकाः स्वर्गादयस्तथा॥ सूर्याचन्द्रमसौ यातः उदयास्तमने तथा। वर्षन्त्यम्बूनि वर्षासु मेघाश्चापि यदाज्ञया॥ काले काले पुष्पफलं सूयन्ते तरवोऽपि च। मर्यादां न जहात्यब्धिर्वर्षास्वपि यदाज्ञया॥ अम्बुबिन्दोः स्त्रीजठरे जायन्तेऽङ्घ्रिकरादयः। यदिच्छयेहशाश्चर्यगुणो यो भगवान् प्रभुः॥' इति।

नन्वेवमपि भागवतं चेज्ज्ञानं सदा सर्वं गोचरयति, तर्हि भविष्यदपि भविष्यत्वेन विषयीकरोति न वा। तथा विषयीकारे तस्यैव वस्तुनो वर्तमानत्वातीतत्वावस्थयोरपि तथैव विषयीकारे भ्रान्तित्वमापद्येत। न च वर्तमानत्वाद्यवस्थासु वर्तमानत्वादिनैवोल्लेखान्न भ्रान्तित्वमिति वाच्यम्। अकरणायत्तस्योल्लेखान्तरे हेतोर्दुर्वचत्वात्। उल्लेखान्तरस्वीकारे वा नित्यैकरूपत्वं तस्य न स्यात्। अत्र ब्रूमः—सत्यं भगवतो ज्ञानं करणनिरपेक्षमेव सर्वत्र सर्वदा प्रसृतं सर्वसाक्षात्कारलक्षणम्। परन्तु यदा यत्र यद्यत् यद्यदवस्थावद्भवति तत्तत्कालीनतत्तदवस्थमेव तत्तद्विषयीकरोति सर्व-

दैशं ज्ञानं, न तु कालान्तरीणावस्थां कालान्तरीणत्वेनेति न भ्रान्तित्वम्। किञ्च सत्यप्युल्लेखभेदे कालभेदेन तत्तद्वस्तुगतावस्थाभेदनिबन्धने नित्यैकरूपताव्यवहारस्तज्ज्ञानस्य सार्वत्रिकव्याप्तेः सदातनत्वाभिप्रायेण भवेत्। न हि जीवस्येव ज्ञानं कदाचित्सङ्कुचितप्रसरमभूदेतदीयं ज्ञानमिति।

सन्ति नाम भगवतः सहस्रशो गुणाः षाड्गुण्यविततिरूपाः अथाप्याश्रयणसौकर्यापादका आश्रितकार्यापादकाश्च केचन गुणा विविच्यन्ते। येषामनुसन्धानेनाश्रयणे सञ्जातरुचीनां सुकृतिनामयमस्मत्कार्यं साधयिष्यत्येवेति महाविश्वासपूर्वकं निर्भीकतया भगवत्समाश्रयणं घटेत नाम। तत्र सौशील्यवात्सल्यादय आश्रयणसौकर्यापादकाः, ज्ञानशक्त्यादयश्चाश्रितकार्यापादका इति विवेकः। (१) सौशील्यं नाम महतो मन्दैः सह नैरन्ध्र्येण संश्लेषस्वभावः। यथा श्रीरामचन्द्रस्य व्याधकपिऋक्षादिभिः। यथा वा श्रीकृष्णस्य गोगोवत्सगोपगोप्यादिभिः। इदमनुसन्धीयमानमाश्रयणे प्रवृत्तस्य स्वनिकर्षानुसन्धानेन प्रसक्तं पश्चात्पदत्वं निवर्तयति। (२) भक्तगतदोषोपेक्षादिरूपज्ञानावस्थाविशेषो वात्सल्यम्। (३) अपराधसहिष्णुत्वं क्षमा। इमे च स्वापराधभूयस्त्वानुसन्धानेन प्रसक्तं तत्। (४) सौलभ्यं नाम 'न मांसचक्षुरभिवीक्षते तम्' इत्यादिना कथितस्यातीन्द्रियस्य रूपस्य तत्तत्सजातीयसंस्थानत्वापादनेन चक्षुर्विषयत्वसम्पादनम्। इदं च दुर्लभत्वज्ञानप्रसक्तम्। (५) स्वार्थगन्धविरहितमन्यदीयं दुःखं दृष्ट्वाऽसहमानत्वं दया। 'आनृशंस्यमनुक्रोशः श्रुतं शीलं दमः शमः। राघवं शोभयन्त्येते षड्गुणाः पुरुषोत्तमम्॥' इति

हि दयादयः श्रूयन्ते । वर्णितं च श्रीकृष्णस्य परमकारुणिकत्वं सत्सङ्गिजीवने–'स हि नारायणः स्वामी धाम्नः स्वादक्षरात्परात् । आविर्बभूव भूलोके ऽऽकृतिः श्रेयसे नृणाम् ॥ रक्षार्थं च स्वाश्रययोर्दुष्टेभ्यो भक्तिधर्मयोः । जातस्य तस्य कारुण्यं को वा वक्तुं क्षमो भवेत् ॥' 'कथंकारं मे स्याद्यदि न पुरुकारुण्यपदवीं श्रयेथा नाथ! त्वं त्वयि हि तदिदं केवलमहो ॥' 'तदपि यस्त्वं दृशिगतो न जाने तद्धेतुं त्वदतितरकारुण्यत ऋते' इति। ( ६ ) सदा चेतनहितपर्यालोचनं सौहार्दम् । ( ७ ) औदार्यं नाम दानशीलत्वम् । स्वात्मपर्यन्तसर्वसदातृत्वं च भगवतो 'य आत्मदा बलदा' 'तस्मात्त्वमपि विप्रेन्द्र ! नारायणपरो भव । तदन्यः को महोदारः प्रार्थितं दातुमीश्वरः ॥' इत्यादिश्रुतिस्मृतिसिद्धम् । ( ८ ) आर्जवं नाम मनोवाक्कायवृत्तीनामेकरूपता । एते च गुणा विश्वसनीयत्वोपपादकाः । ( ९ ) आश्रितकार्यसम्पादनावश्यम्भावप्रयोजकः सम्बन्धविशेषः स्वामित्वम् । स्वभूतस्य चेतनस्येष्टसिद्धौ स्वामिनोऽतिशयाच्चेतनकार्यमीश्वरेणावश्यं करणीयमेव हि । सेवायां पुरुषार्थतोपयुक्ता चेदम् । प्राप्तस्य गुर्वादेः सेवाया एव पुरुषार्थता हि लोके दृष्टा । अप्राप्तसेवायाश्च वर्जनीयत्वबुद्धिप्राप्तत्वमेव न तु रागत इत्यपरोक्षमेवेति । भक्तगतानिष्टवर्गतन्निवर्तकोपायाविज्ञानपूर्वकतन्निवर्तनस्य सर्वविधभक्ताभिमतपूरणस्य च ( १०–११–१२ ) ज्ञानशक्तिपूर्तिकार्यत्वमित्येते कार्योपादकगुणत्वेन व्यवह्रियन्ते ।

एषां गुणानां विज्ञानेन चेतनानां भगवद्विषये स्वात्मनो रुचिपूर्विका सेवकत्वप्रतिपत्तिरविच्छिन्ना भवेत् च गुणाः

स्तोत्ररत्ने सङ्गृहीताः श्रीमद्यामुनमुनिभिः—'वशी वदान्यो गुणवानृजुः शुचिर्मृदुर्दयालुर्मधुरः स्थिरः समः । कृती कृतज्ञस्त्वमसि स्वभावतः समस्तकल्याणगुणामृतोदधिः ॥' इति । अत्र वशित्वं सर्वेश्वरत्वमाश्रितपरवशत्वं वा । 'इमौ स्व मुनिशार्दूलकिङ्करौ समुपस्थितौ । आज्ञापय यथेच्छं वै शासनं करवाव किम् ॥' इत्यादिवचनसिद्धमिदम् । पाण्डवदूतत्वादौ च प्रसिद्धम् । अर्थिभ्यः प्रियवादनपूर्वकं दानशीलत्वं वदान्यत्वम् । इदं च । 'उदाराः सर्व एवैते' 'स सर्वानर्थिनो दृष्ट्वा समेत्य प्रतिनन्द्य च' इत्यादिवचनसिद्धम् । भक्तवर्यैः पुनःपुनः गुण्यते—अभ्यस्यते इति गुणः—आश्रितचित्ताकर्षकं सौशील्यम् । अनुसन्धीयते चेदं श्रीवत्साङ्कमिश्रैः श्रीभाष्यकारमुख्यशिष्यैः—'मात्रा यदि त्वमसि दामनि सन्निबद्धः तच्छ्राविणामुदितचाक्षुषनिर्झराणाम् । वध्नासि हन्त हृदयं भगवन् कुतस्तत् सर्वो हि वश्यविषये विवृणोति वीर्यम् ॥' इति । 'मनस्येकं वचस्येकं कर्मण्येकं महात्मनाम्' इत्युक्तलक्षणं ऋजुत्वम् । शुचित्वं परमपावनत्वम्—'पावनः सर्वभूतानां त्वमेव रघुनन्दन' 'पवित्राणां हि गोविन्दः पवित्रं परमुच्यते ।' इत्यादि मुनिवचनसिद्धम् । परमपावनत्वं च स्वसम्बन्धात् क्षेत्रज्ञानां बाह्याभ्यन्तरसकलकल्मषनिबर्हकत्वं मोक्षहेतुत्वपर्यवसितम् । तच्चानन्तज्ञानशक्त्यादिगुणयोगात्पुरुषोत्तमस्यैव घटते । सन्ति नाम पुण्यानि तीर्थानि क्षेत्राणि च परःसहस्रं चेतनदुरितापहारकाणि । भगवत्सम्बन्धनिबन्धन एव तेषां स महिमा । अत एव 'पवित्राणां पवित्रं यः' इत्युच्यते । पवित्राणामपि पवित्रत्वापादक इत्यर्थः । जीवानामनादिप्रकृतिबन्धनकर्मरूपमल-

सम्बन्ध तु न तानि निवर्तयितुं क्षमाणि साक्षात्। उपासित परमपुरुषस्तु साक्षात्सर्वविधकर्मबन्धनिवर्तक श्रूयते—'तमेव विदित्वाऽतिमृत्युमेति नान्य पन्था विद्यतेऽयनाय' 'यथेषीकतूलमग्नौ प्रोतं प्रदूयेत एव हास्य सर्वे पाप्मानः प्रदूयन्ते' 'यथा पुष्करपलाश आपो न श्लिष्यन्ते एवमेवंविदि पाप कर्म न श्लिष्यते' इति। आह च वासुदेव स्वयमेव—'सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज। अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुच ॥' इति। स्मर्यते च वासुदेवस्यैव कृत्स्नपापनिवर्तकत्व मोक्षप्रदत्व च महर्षिभि—'त्वामाराध्य परब्रह्म याता मुक्तिं मुमुक्षव। वासुदेवमनाराध्य को वा मोक्षमवाप्नुयात् ॥' 'ससारार्णवमग्नाना विषयाक्रान्तचेतसाम्। विष्णुपोत विना नान्यत्किञ्चिदस्ति परायणम् ॥' 'ध्यायेन्नारायण देव स्नानादिषु च कर्मसु। प्रायश्चित्तिर्हि सर्वस्य दुष्कृतस्येति वै श्रुति ॥' 'प्रायश्चित्तान्यशेषाणि तपःकर्मात्मकानि वै। यानि तेषामशेषाणा कृष्णानुस्मरण परम् ॥' इति। योगिनां योगविरोधिसकलकर्मनिवर्तकश्च स एवेत्युच्यते—'यथाऽग्निरुद्धतशिखः कक्षं दहति सानिल। तथा चित्तस्थितो विष्णुर्योगिनां सर्वकिल्बिषम् ॥' इति। आह च स्वयमेव—'यो मामजमनादिं च वेत्ति लोकमहेश्वरम्। असम्मूढः स मर्त्येषु सर्वपापैः प्रमुच्यते ॥' इति। वासुदेवव्यतिरिक्ताना तु द्रुहिणरुद्रादीनामपावनत्वमस एव मोक्षप्रदानासामर्थ्यं च। स्मर्यते च तेषा कर्मपरवशतयाऽशुद्धिः—'आब्रह्मस्तम्बपर्यन्ता जगदन्तर्व्यवस्थिताः। प्राणिन कर्मजनितससारवशवर्तिन ॥' 'अशुद्धास्ते

समस्तास्तु देवाद्याः कर्मयोनयः ।' इति । सापराधैरपि सहसाऽऽश्रयितुं शक्यत्वं मार्दवम् । तथा च रावणं प्रति सीतादेव्या वचनम्—'विदितः स हि धर्मज्ञः शरणागतवत्सलः । तेन मैत्री भवतु ते यदि जीवितुमिच्छसि ॥' इति । दया दुःखितेषु गजेन्द्रकाकासुरप्रभृतिषु । 'स पित्रा च परित्यक्तः सुरैश्च समहर्षिभिः । त्रीन् लोकान् सम्परिक्रम्य राघवं शरणं गतः ॥ स तं निपतितं भूमौ शरण्यः शरणागतम् । वधार्हमपि काकुत्स्थः कृपया पर्यपालयत् ॥' इति श्रीरामायणे जयन्तवृत्तान्त उच्यते । माधुर्यं—निरतिशयानन्दस्वरूपत्वं 'प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म' 'रसो वै सः' इत्यादिश्रुतिसिद्धम् । वाचिकं कायिकं च माधुर्यं 'प्रियवादी च भूतानां सत्यवादी च राघवः ।' 'रूपौदार्यगुणैः पुंसां दृष्टिचित्तापहारिणम् ॥' 'तासामाविरभूच्छौरिः स्मयमानमुखाम्बुजः । पीताम्बरधरः स्रग्वी साक्षान्मन्मथमन्मथः ॥' इति महर्षिभिरुपवर्णितम् । स्थैर्यं—आश्रितरक्षणे तदपराधप्रदर्शकैरत्यन्तसुहृज्जनैरप्यक्षोभ्यत्वम् । यथाह विभीषणशरणागतौ सुग्रीवादीन् तदङ्गीकारनिषेधकान् प्रति राघवः स्वयमेव 'मित्रभावेन सम्प्राप्तं न त्यजेयं कथञ्चन' इत्यादिकम् । साम्यं—जातिवृत्ताद्यनपेक्षया सर्वैराश्रयणीयत्वम् । तथोक्तं 'देवानां दानवानां च सामान्यमधिदैवतम्' 'सर्वलोकशरण्याय राघवाय महात्मने' इति । आह च स्वयमेव 'समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः । ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहम् ॥' इति । कृतित्वं—आश्रितेष्टप्रपूरणेन कृतकृत्यंमन्यत्वम् । तथा चोक्तं श्रीरा-

मायणे—'अभिषिच्य च लङ्कायां राक्षसेन्द्रं विभीषणम् । कृत-कृत्यस्तदा रामो विज्वरः प्रमुमोद ह ॥' इति । यद्वा कृतमुप-कारः लोकोपकारार्थानुष्ठानं तद्वत्त्वम् । यथाह स्वयमेव—'न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किञ्चन । नानवाप्तमवाप्तव्यं वर्त एव च कर्मणि ॥' इति । कृतज्ञत्वं—परैः कृत उपकारलेशोऽपि बहुमन्तृत्वम् । उक्तं च 'न स्मरत्यपकाराणां शतमप्यात्मव-त्तया । कथञ्चिदुपकारेण कृतेनैकेन तुष्यति ॥' 'गोविन्देति यदाक्रन्दत् कृष्णा मां दूरवासिनम् । ऋणं प्रवृद्धमिव मे हृद-यान्नापसर्पति ॥' इति । एते कतिपयगुणा उक्ता उपलक्षणतया । सर्वेऽपि कल्याणगुणाः स्वाभाविकाः सन्तीत्युपसंह्रियते—'त्वमसि स्वभावतः समस्तकल्याणगुणामृतोदधिः' इति । अमृतशब्देन भगवत्स्वरूपस्येव कल्याणगुणानामपि भोग्यतमत्वं 'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता' इति श्रुत्युक्तं विवक्षितम् ।

लोको हि गुणिने स्पृहयति । भगवांश्च निरतिशयकल्याणगुण-गणनिधिः । अतस्तदीयकल्याणगुणानां ज्ञाने जाते चेतनानां स्वाभाविकतच्छेषत्वप्रतिपत्तिर्निरर्गलं प्रसरणमर्हति स्वरसतः । आह च लक्ष्मणो हनूमन्तं प्रति 'अहमस्यावरो भ्राता गुणैर्दास्यमु-पागतः ।' इति । भागवते च 'आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे । कुर्वन्त्यहैतुकीं भक्तिमित्थम्भूतगुणो हरिः ॥' इति । वासुदेवमाहात्म्ये च—'आत्मब्रह्मैक्यसम्पन्नैर्विनिवृत्तगु-णैरपि । क्रियते वासुदेवस्य भक्तिरित्थंगुणो हि सः ॥' इति । ज्ञातेष्वपि भगवद्गुणेषु भगवद्विषये रुच्यनुत्पत्तिस्तु दृप्तमतीनां दुष्कर्मपरिपाकबाहुल्यत इति परं शोकस्थानम् । सुकृतिनां तु भग-

वद्गुणाः कर्णाकर्णिकयाऽपि श्रूयमाणास्तद्विषये रुचिमुत्पाद्य तद्वेद-नाद्युपयुक्तां सदाचार्योपसत्तिं प्रयोजयन्ति । आचार्यप्रसादलब्ध-दीक्षादिकानां चाधिकारिणामनवरतं भगवद्गुणा एव उपासनीया भवन्ति निःश्रेयसार्थेहानुभवार्थतया च । भगवत्प्रसादनिबन्धने सर्वकर्मबन्धविनिर्मोक्षे च त एव परमानुभाव्याः । तदनुभवज-नितप्रीतिकारिताशेषशेषवृत्तिरेव च परमः पुरुषार्थः । एवमुपक्र-मप्रभृत्यामोक्षं चेतनस्य भगवद्गुणा एव परमालम्बनं भवन्ति स्वश्रेयसीति नैत उपेक्षास्थानतामर्हन्ति । न चैते गुणा अवतार-दशायामेव न परदशायामिति वाच्यम् । परदशायां षाड्गुण्यं तु वर्तत एव हि । तदेवैतेषां सौशील्यादीनां गुणानां बीजरू-पम् । न चाक्षरे धाम्नि निकृष्टाः सापराधा वा वर्तन्ते, येन तत्प्र-तिसम्बन्धिकानामेषां तत्र स्फुटप्रकाशो भवेत् । अतः परदशाया-मनुद्भूततया वर्तमानानामेव सौशील्यादीनामत्र स्फुटप्रकाशोऽन्ध-कार इव प्रदीपस्य । अत एव श्रूयते—'स उ श्रेयान् भवति जायमानः' ॥ इति अलं विस्तरेण ।

एवं हेयप्रतिभटं षाड्गुण्यप्रमुखैर्गुणैः ।
निःसीमकैरनन्तैश्च जुष्टं ब्रह्म परं स्थितम् ॥
अथोक्तगुणकार्या ये धर्मा अस्य हि विश्रुताः ।
सर्वाधारत्वादयोऽसाधारण्याल्लक्ष्मतां गताः ॥
विविच्यन्ते समासेन ते तूद्देशक्रमादिह ।
तत्र विश्वस्य भरणं महाबलनिबन्धनम् ॥
ऐश्वर्यगुणतो विश्वप्रशासनमुदीरितम् ।
तत एव च सर्वेषां शेषित्वमपि सम्भवि ॥

सर्वकर्माराध्यताऽस्य स्वामित्वान्निरुपाधिकात् ।
ज्ञानशक्त्यादित सर्वफलदत्व प्रसिद्ध्यति ॥
समस्तचिदचिद्वस्तुवपुष्ट्व यच्छ्रुत तु तत् ।
अथ शक्तेस्ततस्तेज सम्भिन्नादस्य सम्भवेत् ॥
अशेषजगतामेकहेतुता या श्रुतौ श्रुता ।
मुमुक्षूपास्यता त्वस्य पावनत्वात्प्रसिद्ध्यति ॥
मुक्तप्राप्यत्वममितमाधुर्यादस्य सम्भवेत् ।
यस्तूक्तो निखिलैर्दोषैरसङ्गोऽस्य महात्मन ॥
महावीर्यगुणेनाय प्रयुक्त इति भाव्यताम् ।
तत्र सर्वाधारताऽस्य प्रथम तूपवर्ण्यते ॥

## चतुर्थलक्षणविचार ।

### ( सर्वाधारत्वम् )

'तद्यथा रथस्यारेषु नेमिरर्पिता नाभावरा अर्पिता एव-मेता भूतमात्रा प्रज्ञामात्रास्वर्पिता प्रज्ञामात्रा प्राणेऽर्पिता स एष प्राण एव प्राज्ञ आत्माऽऽनन्दोऽजरोऽमृत ' 'अथ य आत्मा स सेतुर्विधृतिरेषा लोकानामसम्भेदाय' 'येन द्यौरुग्रा पृथिवी च दृढे' 'भर्ता सन् ध्रियमाणो बिभर्ति' 'विश्व बिभर्ति भुवनस्य नाभिः' 'ध्रुवमचलममृत विष्णुसज्ञ सर्वाधार धाम' 'एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः द्यावापृथिव्यौ विधृते तिष्ठत' 'परमात्मा च सर्वेषामाधार परमेश्वरः । विष्णुनामा स वेदेषु वेदान्तेषु च गीयते ॥' 'आधारभूत विश्वस्य' इत्यादिश्रुतिस्मृतिप्रसिद्ध नाम परस्य सर्वाधारत्वम् । अतएव 'भूत-

भृत्' इति नामाऽस्य पठ्यते नामसहस्रे। श्रुतिवाक्ये प्रज्ञाशब्दो जीववाची, ज्ञानरूपत्वात्तस्य। मात्राशब्दः सङ्घातैकदेशाभिप्रायः। विशिष्टस्य ब्रह्मण एकदेशरूपत्वाच्चिदचिताम्। तथा च भूतशब्दवाच्यानामचेतनानामाधाराः प्रज्ञामात्रशब्दनिर्दिष्टा जीवाः। तथा चोपबृंहणम्—'अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम्। जीवभूतां महाबाहो ययेदं धार्यते जगत्॥' इति। तेषामप्याधारः प्राणशब्दितः परमात्मा निरुपाधिकसार्वज्ञ्यानन्दत्वाजरत्वामृतत्वाश्रय इत्यर्थः। योऽयं दहराकाशः परमात्मा स सेतुरिव विधृतिर्विधारक एषां लोकानामसम्भेदायासङ्कराय। यद्ययं परमात्मा स्वशासनेन जगन्न धारयेत् सर्वधर्माणां साङ्कर्यमेव स्यात्। पृथिव्या गन्धवत्त्वं जलस्य शैत्यमित्यादयो हि धर्माः परमात्माज्ञया व्यवस्थिता भवन्ति। इति च द्वितीयवाक्यस्यार्थः। सिनोति—बध्नाति स्वस्मिन् चिदचिद्वस्तुजातमसङ्कीर्णमिति सेतुरुच्यते इति 'सामान्यात्तु' इति ब्रह्मसूत्रे श्रीभाष्ये स्फुटम्।

तैत्तरीयारण्यके च द्यावापृथिव्योरन्तरा वर्तमानं किंभूतं वस्तु तयोर्धारकमिति वितर्कपूर्वकं विष्णोरेव तदाधारत्वं प्रतिपादितम्—'किंस्विदन्तरा भूतं येनेमे विधृते उभे। विष्णुना विधृते भूमी' इति। गीयते च सर्वेश्वरस्य स्वस्यैव सर्वाधारत्वं श्रीकृष्णेन 'यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः' 'मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव' इति। अन्तःप्रविष्टस्यैकस्यैवान्तर्यामिणः मयैवरदृष्टस्य सर्वपदार्थधारकत्वमाधेयपदार्थानधीनस्थितिकत्वं च सूत्रमणिगणदृष्टान्तेन विवक्षितम्। अर्जुनेनापि सर्वाधारत्वं श्रीकृष्णस्य ज्ञापितम्—'त्वमस्य विश्वस्य परं निधानम्' इति।

सम्प्रदायग्रन्थे च परस्य ब्रह्मण सर्वाधारत्व निरदिश्यत—'अनेककोटिब्रह्माण्डाधारोऽनन्तोऽपि य स्वयम्' 'सर्वाश्रय सर्वपतिस्त्वमेव' 'सर्वकर्ता च सर्वत्रान्वयेन परमाश्रय' 'सर्वाधारश्च सर्वात्मा सर्वरूपस्तत प्रभु' इति। यत सर्वस्यायमाधारोऽतो नास्यान्य आधार सम्भवतीत्यनन्याधारोऽयम्। श्रूयते च 'स भगव कस्मिन् प्रतिष्ठित इति स्वे महिम्नि' इति। अनन्याधारत्वलक्षणे महिम्नि स्थित इत्यर्थः। तथा च वचनम्—'रुद्र समाश्रिता देवा रुद्रो ब्रह्माणमाश्रित। ब्रह्मा मामाश्रितो राजन् नाह कञ्चिदुपाश्रित॥ ममाश्रयो न कश्चित्तु सर्वेषामाश्रयो ह्यहम्। इद रहस्य कौन्तेय प्रोक्तवानहमव्ययम्॥' इति।

### पञ्चमलक्षणविचार'।

### ( सर्वनियन्तृत्वम् )

नियन्तृत्वलक्षणमैश्वर्य च सर्वदेशकालवर्तिसर्वचेतनाचेतनविषय निरङ्कुशमन्वाख्यायते परमात्मनो बाह्यमान्तरं च। बाह्यं—स्वशासनभूतश्रुतिस्मृत्यादिमुखेन। आन्तर—अन्तर्यामिरूपेण। तथा च श्रुतय—'ईशावास्यमिदं सर्वम्' 'अङ्गुष्ठमात्र पुरुषो मध्य आत्मनि तिष्ठति। ईशानो भूतभव्यस्य न ततो विजुगुप्सते' 'एको वशी सर्वभूतान्तरात्मा' 'एष सर्वेश्वर एष सर्वज्ञ एषोऽन्तर्यामी' 'स एष सर्वस्येशान सर्वस्याधिपतिः सर्वमिदं प्रशास्ति यदिदं किञ्च' 'ईश सर्वस्य जगत प्रभुः' 'क्षर प्रधानममृताक्षर हर क्षरात्मानावीशते देव एक' 'उतामृतत्वस्येशानः' ( मोक्षस्यापि नियन्तेत्यर्थः ) इति। अतोऽयमेवोभयविभूतिसार्वभौम। 'एक इद्राजा जगतो बभूव' 'स वा अयमात्मा

सर्वेषां भूतानामधिपतिः सर्वेषां भूतानां राजा' इति श्रुतेः । आह च मनुः—'यमो वैवस्वतो राजा यस्तवैष हृदि स्थितः । तेन चेदविवादस्ते मा गङ्गां मा कुरून् गमः' इति । नियमयतीति यमः सूर्यमण्डलमध्यवर्ती अन्तर्यामितया तव हृदि स्थितो य उभयविभूतिसार्वभौमो नारायणः, तेन सर्वशेषिणा ते यदि विवादोऽहं स्वतन्त्रोऽन्यशेषो वेत्यभिमानकृतः न स्यात् तर्हि तच्छेषित्वाध्यवसायिनस्तव तीर्थक्षेत्रयात्रादिकं कृतकरमित्यर्थः । 'शास्ता विष्णुरशेषस्य' 'कालस्यापि हि मृत्योश्च जङ्गमस्थावरस्य च । ईशते भगवानेकः सत्यमेतद्ब्रवीमि ते ॥' 'यत्किञ्चिद्वर्तते लोके सर्वं तन्मद्विचेष्टितम् । अन्यो ह्यन्यच्चिन्तयति स्वच्छन्दं विदधाम्यहम् ॥' इति च निरङ्कुशमैश्वर्यं लब्धम् । गीतं च श्रीकृष्णेन 'यो मामजमनादिं च वेत्ति लोकमहेश्वरम्' 'भूतानामीश्वरोऽपि सन्' 'अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते' 'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति । भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया ॥' इति । वासुदेवमाहात्म्ये च 'राजाधिराजाय नमोस्तु तुभ्यम्' 'नियन्तारं नमामहे' 'समस्तकल्याणगुणो निर्गुणश्चेश्वरेश्वरः' इति ।

नियन्तृत्वे च वचनानि संप्रदायग्रन्थेषु—'नियन्ता कालमायादेः सर्वकारणकारणम्' । 'कालस्य प्रकृतेश्चापि नियन्ता पुरुषस्य च ।' 'अन्तर्यामी च सर्वेषामात्मनां योऽच्युतो हरिः ।' 'स हरिस्त्वक्षरस्याथ प्रकृतेः पुरुषस्य च । प्रधानपुरुषाणां च महदादिगणस्य च ॥ कालस्य स्थूलसूक्ष्मस्य चरतोऽण्डे च तद्बहिः । एतेषां कार्यभूतस्य वैराजस्य महा-

मते ॥ तज्जातानां प्रजेशानां ब्रह्मादीनां च सर्वशः । नियन्ता ह्येक एवास्ति सम्राट् खण्डभुजामिव ॥ एषां यत्राधिकारे ये जगतस्तेन योजिताः । ते सावधानास्तद्भीतास्तदाज्ञायां सदा स्थिताः ॥ एवं हि भांत सर्वेऽपि परतन्त्रा भवन्ति हि । कृष्ण एकः स्वतन्त्रोऽस्ति सर्वसेव्यस्ततस्तु स ॥' 'सर्वात्मा चाक्षरादीनां नियन्ता चेश्वरेश्वरः' 'स्थावरे जङ्गमे चास्ते स्थूले सूक्ष्मे नियामकः ।' 'सर्वेषां प्रेरकश्चासौ स्वतन्त्रोऽस्ति नियामकः ।' इत्यादीनि । अप्रतिहतप्रसरणत्वादेतन्नियमनस्याय 'अपराजित' इति, ब्रह्मशर्वादिभिरप्यनुल्लङ्घनीयशासनत्वात् 'ऊर्जितशासन' इति च नामसहस्रे वर्ण्यते । तथा सर्वस्य नियन्तृत्वात् 'दमयिता' इति । स्व प्रति दमयितुरन्यस्य विरहात् 'अदम' इति च । 'भस्म कुर्याज्जगत्सर्वं मनसैव जनार्दनः । न तु कृत्स्नं जगत् शक्तं किञ्चित्कर्तुं जनार्दने ॥' इति च स्मृतिः ।

लोकेश्वरा इन्द्रादयोऽपि तदाज्ञोल्लङ्घनप्रसक्तानर्थशङ्काभयत स्वस्वकर्मण्यप्रमत्तप्रवृत्ता भवन्तीति श्रूयते—'यदिदं किञ्च जगत्सर्वं प्राण एजति निःसृतम् । महद्भयं वज्रमुद्यतं य एतद्विदुरमृतास्ते भवन्ति ॥' 'भयादस्याग्निस्तपति भयात्तपति सूर्यः । भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः ॥' 'भीषाऽस्माद्वातः पवते भीषोदेति सूर्यः । भीषाऽस्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः ॥' इति । अत एवेश्वरेश्वरत्वमनन्येश्वरत्वं च श्रुतिस्मृतिषु जोघुष्यते—'तमीश्वराणां परमं महेश्वरं तं दैवतानां परमं च दैवतम् । पतिं पतीनां परमं' 'न तस्येशे कश्चन तस्य नाम महद्यशः' 'न तस्य कश्चित्पतिरस्ति लोके न

चेशिता' 'तस्मिंस्तुष्टे किमप्राप्यं जगतामीश्वरेश्वरे' 'यस्येदं सेश्वरं वशे' इति।

'सर्वस्य वशी सर्वस्येशानः' इति नियमनसङ्कल्पेन सर्वं स्ववशे करोतीति श्रवणाच्च 'वषट्कार' इति नामास्य पठ्यते नामसहस्रे। अस्य निरुक्तिः—'स्वेच्छया यो वशे सर्वं वषट्कारः करोति सः' इति। तथा च वचनम्—'ससुरासुरगन्धर्वं सयक्षोरगराक्षसम्। जगद्वशेऽवर्ततेदं कृष्णस्य सचराचरम्॥' इति। यतः सर्वाधारस्य सर्वनियन्तुरस्य स्वरूपस्थितिप्रवृत्त्योरनन्याधीनत्ता, अतोऽयं व्यपदिश्यते 'ज्ञेयः स्वतन्त्र ईशोऽसौ' इति शिक्षापत्र्याम्।

## षष्ठलक्षणविचारः।

### (सर्वशेषित्वम्)

सर्वस्वामित्वं च 'स वा अयमात्मा सर्वेषां भूतानामधिपतिः' 'एष लोकाधिपतिरेष सर्वेशः' 'प्रधानक्षेत्रज्ञपतिः' 'प्रजापतिश्चरति गर्भे अन्तः' 'भूतभव्यभवन्नाथः केशवः केशिसूदनः' 'कृष्ण एव हि लोकानामुत्पत्तिरपि चाव्ययः। कृष्णस्य हि कृते भूतमिदं विश्वं चराचरम्॥' (कृष्णस्य कृते—कृष्णसेवार्थं, कृष्णशेषभूतमित्यर्थः) इत्यादिश्रुतिस्मृतिषु प्रसिद्धम्। प्रधानक्षेत्रज्ञयोः पतिः, स्वामीत्यर्थः। 'पा रक्षण' इति धातोर्निष्पन्नोऽपि पतिशब्दो रूढः शेषिणि। यथा गोशब्दो 'गमेर्डो' प्रत्ययेन निष्पन्नोऽपि चतुष्पाद्विशेषे। अत एव 'वृद्धौ च मातापितरौ साध्वी भार्या सुतः शिशुः। अप्यकार्यशतं कृत्वा भर्तव्या मनुरब्रवीत्॥' इत्युक्तरीत्या पित्रोः संरक्षकेऽपि

पुत्रे न पतिशब्दव्यवहारः । 'पत्यादिशब्देभ्य' इति ब्रह्मसूत्रे च परस्य ब्रह्मणः सर्वाधारत्वनियन्तृत्वशेषित्वादयः प्रतिपादिताः । निरुपाधिकं स्वामित्वं श्रीहरेरेव । तदुपासनाधीनतत्प्रसादप्राप्तमेव कतिपयशेषित्वं ब्रह्मरुद्रादीनामपि । तथा चार्षं वचनम्—'एक एव हरिः स्वामिशब्दवाच्योऽस्ति सर्वथा । अन्यस्तु तदुपास्त्याप्तगुणयोगात्तथोच्यते ॥' इति । 'देवर्षिभूतात्मनृणां पितॄणां न किङ्करो नायमृणी च राजन् ।' इति च जीवानां भगवदितरशेषत्वमौपाधिकमेवेति प्रतिपाद्यते । 'दासभूताः स्वतः सर्वे ह्यात्मानः परमात्मनः । नान्यथा लक्षणं तेषां बन्धे मोक्षे तथैव च ॥' इति वचनाज्जीवानां परमात्मशेषत्वं तु स्वाभाविकतया मोक्षदशायामप्यनुवर्तत इति स्थितम् । किञ्च शेषत्वलक्षणस्य यथेष्टविनियोगार्हत्वस्य भगवन्तं प्रति सर्वचेतनानामविशिष्टत्वात्सर्वं तच्छेषभूतमेव । तथा च वचनम्—'यथेष्टविनियोगार्हं शेषमित्यभिधीयते । विष्णुना च जगत्सर्वं यथेष्टं विनियुज्यते ॥' इति । 'भूतभव्यभवत्प्रभुः' इति नाम च भगवतः सर्वशेषित्वपरं पठ्यते । अस्य निरुक्तिः—'त्रिकालवर्तिनां शेषी भूतभव्यभवत्प्रभुः' इति ।

सर्वशेषित्वे चेमानि वचनान्यनुसन्धेयानि सम्प्रदायग्रन्थेषु 'जयत्येकः स्वामी स च सुरनरेन्द्रार्चितपदः' 'ज्ञातोऽस्यद्य हरे मयाऽखिलजगत्स्वामी त्वमेकः प्रभुः' 'त्वमेवैकः स्वामी सकलजगतामित्यपि हरे' 'स हि नारायणः स्वामी' 'श्रीकृष्णो भगवांस्तत्र सदा स्वामी विराजते' 'सकलैश्वर्यसम्पन्नः सर्वशेषी परात्परः' 'अनन्तकोटिब्रह्माण्डाधीशो राधारमेश्वरः'

'ज्ञेयः स सर्वकर्तैति स्वामी चैकोऽखिलात्मनाम्' 'स्वामी नारायणः सोऽयं नित्यं हृदि मयेक्ष्यते' 'शेषीकृताक्षरपर-श्रीकृष्णः' इति ।

गीतायामपि चेतनाचेतनयोः स्वशेषत्वं भगवतैव प्रत्यपादि— 'भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च । अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥ अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् । जीवभूतां महाबाहो ययेदं धार्यते जगत् ॥' इति । 'तद्धाम परमं मम' इति च मुक्तानामपि स्वशेषत्वम् । मे इति षष्ठी शेषशेषिभावपरा 'राज्ञः पुरुष' इत्यादिवत् ।

यतः सर्वस्वामित्वं वासुदेवस्यैवातो नान्योऽस्य स्वामी सम्भवति । अत एव श्रूयेते आत्मेश्वरत्वमितरनिषेधश्च 'पतिं विश्वस्यात्मेश्वरम्' 'स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः' इति ।

## सर्वस्य परब्रह्मापृथक्सिद्धत्वम् ।

आधारत्वं नियन्तृत्वं वर्णितं परमात्मनः ।
तथा सर्वपतित्वं च तत्प्रकारो विशोध्यते ॥
पृथक्सिद्धो घटादिर्वै धारकाद्भूतलादिकात् ।
भृत्यादिश्च पृथक्सिद्धो नियन्तुर्नृपतेस्तथा ॥
एवं पृथक्सिद्ध एव प्रपञ्चश्चिदचिन्मयः ।
धार्यः सर्वेश्वरेणेति प्रसक्ते त्वभिधीयते ॥
जीवापृथक्सिद्धमेव शरीरं धृतमात्मना ।
नियाम्यं शेषभूतं च यथा तस्य तथाऽत्र वै ॥
सर्वं च चिदचिद्वस्तुजातं वपुरितिश्रुतेः ।
परमात्मापृथक्सिद्धं तद्धार्यत्वादिमद्भवेत् ॥

पुत्रे न पतिशब्दव्यवहारः । 'पत्यादिशब्देभ्यः' इति ब्रह्मसूत्रे च परस्य ब्रह्मणः सर्वाधारत्वनियन्तृत्वशेषित्वादयः प्रतिपादिताः । निरुपाधिकं स्वामित्वं श्रीहरेरेव । तदुपासनाधीनतत्प्रसादप्राप्तमेव कतिपयशेषित्वं ब्रह्मरुद्रादीनामपि । तथा चार्षं वचनम्—'एक एव हरिः स्वामिशब्दवाच्योऽस्ति सर्वथा । अन्यस्तु तदुपास्त्यासगुणयोगात्तथोच्यते ॥' इति । 'देवर्षिभूताप्तनृणां पितॄणां न किङ्करो नायमृणी च राजन् ।' इति च जीवानां भगवदितर-शेषत्वमौपाधिकमेवेति प्रतिपाद्यते । 'दासभूताः स्वतः सर्वे ह्यात्मानः परमात्मनः । नान्यथा लक्षणं तेषां बन्धे मोक्षे तथैव च ॥' इति वचनाज्जीवानां परमात्मशेषत्वं तु स्वाभाविक-तया मोक्षदशायामप्यनुवर्तत इति स्थितम् । किञ्च शेषत्वलक्षणस्य यथेष्टविनियोगार्हत्वस्य भगवन्तं प्रति सर्वचेतनानामविशिष्टत्वात्सर्वं तच्छेषभूतमेव । तथा च वचनम्—'यथेष्टविनियोगार्हं शेषमि त्यभिधीयते । विष्णुना च जगत्सर्वं यथेष्टं विनियुज्यते ॥' इति । 'भूतभव्यभवत्प्रभुः' इति नाम च भगवतः सर्वशेषित्व-परं पठ्यते । अस्य निरुक्तिः—'त्रिकालवर्तिनां शेषी भूतभव्य-भवत्प्रभुः' इति ।

सर्वशेषित्वे चेमानि वचनान्यनुसन्धेयानि सम्प्रदायग्रन्थेषु 'जय-त्येकः स्वामी स च सुरनरेन्द्रार्चितपदः' 'ज्ञातोऽस्यद्य हरे मयाऽखिलजगत्स्वामी त्वमेकः प्रभुः' 'त्वमेवैकः स्वामी सकलजगतामित्यपि हरे' 'स हि नारायणः स्वामी' 'श्रीकृष्णो भगवांस्तत्र सदा स्वामी विराजते' 'सकलैश्वर्यसम्पन्नः सर्व-शेषी परात्परः'

'ज्ञेयः स सर्वकर्तेति स्वामी चैकोऽखिलात्मनाम्' 'स्वामी नारायणः सोऽयं नित्यं हृदि मयेक्ष्यते' 'शेषीकृताक्षरपर-श्रीकृष्णः' इति ।

गीतायामपि चेतनाचेतनयोः स्वशेषत्वं भगवतैव प्रत्यपादि— 'भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च । अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥ अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् । जीवभूतां महाबाहो ययेदं धार्यते जगत् ॥' इति । 'तद्धाम परमं मम' इति च मुक्तानामपि स्वशेषत्वम् । मे इति षष्ठी शेपशेषिभावपरा 'राज्ञः पुरुष' इत्यादिवत् ।

यतः सर्वस्वामित्वं वासुदेवस्यैवातो नान्योऽस्य स्वामी सम्भवति । अत एव श्रूयेते आत्मेश्वरत्वमितरनिषेधश्च 'पतिं विश्वस्यात्मेश्वरम्' 'स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः' इति ।

## सर्वस्य परब्रह्मापृथक्सिद्धत्वम् ।

आधारत्वं नियन्तृत्वं वर्णितं परमात्मनः ।
तथा सर्वपतित्वं च तत्प्रकारो विशोध्यते ॥
पृथक्सिद्धो घटादिर्वै धारकाद्भूतलादिकात् ।
भृत्यादिश्च पृथक्सिद्धो नियन्तुर्नृपतेस्तथा ॥
एवं पृथक्सिद्ध एव प्रपञ्चश्चिदचिन्मयः ।
धार्यः सर्वेश्वरेणेति प्रसक्ते त्वभिधीयते ॥
जीवापृथक्सिद्धमेव शरीरं धृतमात्मना ।
नियाम्यं शेषभूतं च यथा तस्य तथाऽत्र वै ॥
सर्वं च चिदचिद्वस्तुजातं वपुरितिश्रुतेः ।
परमात्मापृथक्सिद्धं तद्धार्यत्वादिमद्भवेत् ॥

तथाहि सर्वस्य चिदचिद्वस्तुजातस्य स्वापृथक्सिद्धत्वमगायि भग-वतैव—'न तदस्ति विना यत्स्यान्मया भूतं चराचरम्' इति। मया विना भूतं लब्धसत्ताकं किमपि वस्तु नास्ति। यथा जलस-म्बन्धाभावे मत्स्यादीनां सत्ताहानिः, एवं स्वसम्बन्धविरहे सर्वेषां सत्तैव न सिद्ध्येदिति भावः। अत एव परमसुहृत्तया स्वविरोधि-नामप्यन्तः प्रविश्य सत्तामापादयत्यहस्यरूपः। 'अहमात्मा गुडा-केश सर्वभूताशयस्थितः।' इति पूर्वमन्तरात्मतया स्वस्य सर्व-धारकत्वं यदुक्तं तदेवात्र व्यतिरेकोक्त्या दृढीकृतम्—अन्तरात्म-तया मत्सम्बन्धविरहे कस्यापि सत्ता न भवेदिति। अतः सर्वं मदविनाभूतं मदात्मकमिति फलितम्। अत एव 'नेह नानास्ति किञ्चन' इति निषेधोऽपि विनाभावविषयो बोध्यः। नाना—विना-भूतमित्यर्थः। तथा च परमात्मना विनाभूतं स्वनिष्ठं यः पश्यति लौकिकं पदार्थजातं स पुनः पुनः संसारमेव प्राप्नोतीति स्वनिष्ठ-तादर्शनस्य निन्दा चोच्यमानोपपन्नैव 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' इति। तस्यायथार्थत्वात्। पूर्वं च 'एकधै-वानुद्रष्टव्यम्' इति ब्रह्मात्मकत्वरूपैकप्रकारतयैव सर्वस्य ज्ञातव्य-त्वमुक्तम्। अतो यथोक्त एवार्थः। 'विष्णुः स्यादविनाभावाद्व्या-प्यव्यापकभावतः' इति निरुक्तिबलाच्च सर्वस्य परमात्माविना-भूतत्वं सिद्ध्यति।

## सप्तमलक्षणविचारः।

### ( सर्वचेतनाचेतनशरीरकत्वम् )

सर्वस्य चिदचित्प्रपञ्चस्य परमात्मशरीरत्वे श्रुतयश्च—'यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य

पृथिवी शरीरं यः पृथिवीमन्तरो यमयति एष ते आत्माऽन्तर्याम्यमृतः' 'योऽप्सु तिष्ठन्' 'योऽग्नौ तिष्ठन्' 'यो वायौ तिष्ठन्' 'यो दिवि तिष्ठन्' 'य आदित्ये तिष्ठन्' 'यो दिक्षु तिष्ठन्' 'यश्चन्द्रतारके तिष्ठन्' 'य आकाशे तिष्ठन्' 'यस्तमसि तिष्ठन्' 'यस्तेजसि तिष्ठन्' इत्यधिदैवमथाधिभूतम्—'यः सर्वेषु भूतेषु तिष्ठन् सर्वेभ्यो भूतेभ्योऽन्तरो यं सर्वाणि भूतानि न विदुः यस्य सर्वाणि भूतानि शरीरं यः सर्वाणि भूतान्यन्तरो यमयति एष त आत्मान्तर्याम्यमृतः' इति। अथाध्यात्मं—'यः प्राणे तिष्ठन्' 'यो वाचि तिष्ठन्' 'यश्चक्षुषि तिष्ठन्' 'यः श्रोत्रे तिष्ठन्' 'यो मनसि तिष्ठन्' 'यस्त्वचि तिष्ठन्' 'यो विज्ञाने तिष्ठन्' 'यो रेतसि तिष्ठन्'...एष त 'आत्माऽन्तर्याम्यमृतः' 'य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति' (माध्यन्दिन) 'यः पृथिवीमन्तरे सञ्चरन् यस्य पृथिवी शरीरं यं पृथिवी न वेद...योऽपामन्तरे सञ्चरन् यस्यापः शरीरं... योऽक्षरमन्तरे सञ्चरन् यस्याक्षरं शरीरं यमक्षरं न वेद...यो मृत्युमन्तरे सञ्चरन् यस्य मृत्युः शरीरं यं मृत्युर्न वेद एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः' इत्याद्याः।

शरीरात्मभावो नाम—द्रव्यत्वे सति अपृक्सिद्धाधाराधेयभावो, नियाम्यनियामकभावस्तथाविधः शेषशेषिभावश्च तादृशः। जीवो हि देहस्यान्तःप्रविश्याधारो भूत्वा तस्य सत्तामापादयति, तं यथासङ्कल्पं तत्तत्कार्ये नियोजयति, तेन च स्वभोगं सम्पादयति। यथे-

ष्टविनियोगार्हत्वात् देहस्य प्रति शेषभूत । एवं चेतनापृथक्सिद्धत्वे सति तस्याधेय नियाम्य शेषभूत च द्रव्य शरीरं भवति । तत्प्रतिस-म्बन्धी चात्मा अपृथक्सिद्धाधारनिय न्तृशेषिभूत इति यावत्।

## शरीरलक्षणम्।

श्रीभाष्ये च–'यस्य चेतनस्य यद्द्रव्य सर्वात्मना स्वार्थे नियन्तु धारयितु च शक्य, तच्छेषतैकस्वरूप च, तत्तस्य शरीरम्' इति शरीरलक्षणमभिहितम्। 'चेतन प्रत्यपृथक्सिद्ध-विशेषण द्रव्य शरीरम्' इति तु लघुलक्षण श्रीभाष्यकाराभि प्रेतम्। न च–मृतशरीरे चेतनापृथक्सिद्धत्वविरहादव्याप्तिशङ्का। चेतनोत्क्रान्तिसमय एव शरीरस्यारब्धविशरणत्वात्। शरीरतया परिक्लृप्तसङ्घातैकदेशतया पुनस्तत्र शरीरत्वव्यवहारो गौणः। न चैवमपि सौभरिप्रभृतीना नानाशरीरपरिग्रहे एकस्य शरीरस्य चेत-नापृथक्सिद्धत्वेऽपि शरीरान्तराणामतथात्वादव्याप्तिरिति वाच्यम्। तच्चैतन्यापृथक्सिद्धद्रव्यत्व तच्छरीरत्वमित्युक्तावदोषात्। अणो-रपि सौभर्याद्यात्मनो ज्ञानद्वारा नानाशरीरेषु व्याप्तिविशेषस्योपग-मात्। तथा च सर्वेषा चेतनाचेतनद्रव्याणा परमचेतनीभूतपर-मात्मापृथक्सिद्धविशेषणत्वात्तच्छरीरत्व साधीय । अत एवान्त-र्यामी परमात्मा 'शारीर आत्मा' इति श्रूयते। असङ्कुचितया वृत्त्या शारीरशब्दस्य समस्तचेतनाचेतनशरीरकपरब्रह्मवाचित्वमेव हि स्वरसम्। अत एव च तत्प्रतिपादकस्योत्तरमीमांसाशास्त्रस्य शारीरकशास्त्रमिति नाम सूपपन्न भवतीति। 'ईश्वरतज्ज्ञानव्यति-रिक्त द्रव्यं शरीर'मिति च कूटस्थलक्षण बोध्यम्।

यानि पुनर्वाधन्वरोक्तानि शरीरलक्षणानि–हस्तपादादिमत्त्व,

पञ्चवृत्तिप्राणाधीनधारणत्वं; चेतनभोगहेतुत्वं; चेष्टाश्रयत्वं; इन्द्रियाश्रयत्वं; अर्थाश्रयत्वं, कर्मफलभोगार्थत्वं; भोगायतनत्वं; इत्यादीनि तान्यव्याप्त्यतिव्याप्तिदूषणग्रस्तानि नोपादेयानि । तथा हि–

न हि पश्वादीनां हस्तादिमत्त्वम् । न वा वृक्षादेः पञ्चवृत्तिप्राणाधीनधारणत्वम् । तत्र प्राणस्य सद्भावेऽपि पञ्चधा वृत्तेरभावात् । प्राणाधीनधारणत्वमिति चेन्द्रियेष्वतिप्रसक्तम् । तेषां शरीरे स्थित्यादेः प्राणाधीनत्वात् । चेतनभोगहेतुत्वमपि तथैव । चेष्टाशब्देन चेतनकृतिप्रयोज्यक्रियामात्रस्य विवक्षणे तदाश्रयत्वं घटादावतिप्रसक्तम् । हिताहितप्राप्तिपरिहारानुकूलविजातीयक्रियाया विवक्षणे तु तदाश्रयत्वस्याहल्यादिशरीरभूतशिलादिष्वव्याप्तिरेव । इन्द्रियाश्रयत्वं चेन्द्रियसंयोगित्वं चेद्घटादावतिप्रसक्तमेव । स्वजन्यज्ञानावच्छेदकत्वसम्बन्धेनेन्द्रियवत्त्वं चाहल्याशिलादिशरीरेष्वव्याप्तमेव । अर्थाश्रयत्वं च शब्दादिभोग्याश्रयेषु भूतेष्वतिप्रसक्तम् । स्वभोगावच्छेदकत्वसम्बन्धेन तद्वत्ता तु पूर्वोक्ताव्याप्तिदूषणग्रस्ता । कर्मफलभोगार्थत्वं चेन्द्रियार्थेष्वतिप्रसक्तम् । भोगायतनत्वं नाम भोगावच्छेदकत्वं, तच्च वेश्मादिसाधारणम् । वेश्मनि मे भोग इत्यनुभवात् । विलक्षणस्य भोगावच्छेदकत्वस्य विवक्षणेऽपि परकायस्य प्रविष्टं प्रति भोगायतनस्यापि तच्छरीरत्वाभावेन तच्छरीरलक्षणस्यातिप्रसक्ततैवेति । किञ्च उक्तानां सर्वेषामेव लक्षणानां परमात्मशरीरतया शास्त्रसिद्धेष्वव्यक्तमहदहङ्कारादिषु क्षेत्रज्ञेषु चाप्रसङ्ग एवेति । अतस्तत्तचेतनापृथक्सिद्धविशेषणद्रव्यं तत्तच्छरीरमित्येव लक्षणं साधीयः । एवं च अव्यक्तपुरुषादीनां सर्वेषामेव परमात्मापृथक्सिद्धविशेषणत्वात्तं प्रति शरीरत्वं सुस्थिरम् ।

इदमेव भगवदपृथक्सिद्धविशेषणत्वं चेतनाचेतनानां शरीरतनुवपुःशक्तिरूपादिशब्दैः प्रतिपाद्यते श्रुतिस्मृतिषु। श्रुतिस्तावत् 'द्वे वा ब्रह्मणो रूपे मूर्तं चामूर्तमेव च' इति। स्मृतयश्च—'जगत्सर्वं शरीरं ते' 'यत्किञ्चित्सृज्यते येन सत्त्वजातेन वै द्विज। तस्य सृज्यस्य सम्भूतौ तत्सर्वं वै हरेस्तनुः॥' 'तानि सर्वाणि तद्वपुः' 'एकदेशस्थितस्याग्नेर्ज्योत्स्ना विस्तारिणी यथा। परस्य ब्रह्मणः शक्तिस्तथेदमखिलं जगत्॥' इत्याद्याः।

प्रकृत्यादेः परमात्मशक्तित्वं सम्प्रदायग्रन्थे चाभाणि—'कालो माया पुमान् यस्य महत्तत्त्वादयस्तथा। शक्तयः सन्त्येकमेवाद्वितीयं ब्रह्म यः प्रभुः॥' 'विश्वोत्पत्त्यादिहेतू द्वे शक्ती प्रकृतिपुरुषौ' इति। तथा सर्वस्य परमात्मापृथक्स्थितिश्च मुक्तकण्ठमुक्ता—'सर्वकारणता सर्वाधारता ब्रह्मणोऽस्ति हि। पृथङ् नाधेयमाधारात्तिष्ठेत्कार्यं च कारणात्॥' कारणं चोपादानरूपं बोध्यम्, तस्यैव हि कार्यावस्थायामन्वय इति।

यथा मणिप्रभादेर्मण्याद्यपृथक्सिद्धविशेषणतया मण्याद्यंशत्वम्, एवं चेतनाचेतनानां ब्रह्मांशत्वं 'अंशो नानाव्यपदेशादन्यथापि

---

१ सृज्यस्योत्पादकं सर्वं ब्रह्मशरीरभूतम्। यतस्तच्छरीरकं ब्रह्मैव सर्वं सृजतीत्यर्थः। 'सृष्टिं ततः करिष्यामि त्वामाविश्य प्रजापते' इति च चतुर्मुखकार्येष्वादिसृष्टेरपि हि तद्द्वारा परब्रह्मकर्तृकत्वमुच्यते।

२ यथा प्रकाशकस्याग्नेः प्रकाशनकार्योपयुक्तमपृथक्सिद्धविशेषणं तत्प्रभा। एवं परस्य ब्रह्मणः सृष्ट्यादिकार्योपयुक्तमपृथक्सिद्धविशेषणं चेतनाचेतनात्मकं सर्वं जगत् तच्छक्तिरूपम्। कार्योपयोग्यपृथक्सिद्धविशेषणस्यैव शक्तिरूपत्वादिति भावः।

दासकितवादित्वमधीयत एके' 'प्रकाशादिवत्तु नैवं परः' 'पूर्ववद्वा' इति सूत्रेषु प्रतिपादितम् । तत्र ब्रह्मांशत्वे जीवानामेकवस्त्वेकदेशस्यैवांशरूपतया ब्रह्मस्वरूपाभेदेन तद्गतदोषाणां ब्रह्मणि प्रसङ्ग इत्याशङ्क्य विशिष्टवस्त्वेकदेशत्वलक्षणमेवांशत्वमत्र विवक्षितम्, यथा प्रभादेस्तद्विशिष्टमण्याद्येकदेशतया मण्याद्यंशत्वं तद्वदिति परिहृतं 'प्रकाशादिवत्तु' इति । चेतनानां यादृशमंशत्वं तादृशमेवाचेतनानामपि ब्रह्मांशत्वमिति च अहिकुण्डलाधिकरणान्तर्गतस्य 'पूर्ववद्वा' इति सूत्रस्य भावः ।

## आत्मलक्षणम् ।

आप्नोति सर्वात्मनाऽऽधारतया नियन्तृतया शेषितया च शरीरमिति चात्मा । सर्वात्मनेत्यनेनापृथक्सिद्धत्वं विवक्षितम् । अयं च आत्मशब्दस्तत्तच्छरीरप्रतिसम्बन्धिनि तत्तज्जीवे प्रयुज्यमानोऽपि सर्वचेतनाचेतनापृथक्सिद्धाधारे तन्नियन्तरि तच्छेषिणि परमात्मन्येवासङ्कुचितवृत्तिः स्वरसवृत्तो भवति । अत एव जगत्कारणस्य परस्य ब्रह्मण आत्मशब्देन निर्देशः 'तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः' 'आत्मा वा इदमेक एवाग्र आसीत्' इत्यादौ । तथा च द्युभ्वाद्यधिकरणे श्रीभाष्येऽन्वग्राहि—'आत्मशब्दश्च निरुपाधिकः परस्मिन् ब्रह्मणि मुख्यवृत्तः । आप्नोतीति ह्यात्मा । स्वेतरसमस्तस्य नियन्तृत्वेन व्याप्तिस्तस्यैव सम्भवति' इति । अन्तःप्रविश्य नियन्तृत्वमात्मत्वमिति च 'अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा' इति श्रुतिसिद्धम् । नियमनं च धारणार्थम् । तथा च श्रुतिः—'एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ विधृतौ तिष्ठतः ।' इत्यादिः । प्रपञ्च्यतेऽयमर्थो

गीतायां भगवतैव 'मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः । न च मत्स्थानि भूतानि पश्य मे योगमैश्वरम् ॥ भूतभृन्न च भूतस्थो ममात्मा भूतभावनः ॥' इति । अयमर्थः—इमानि सर्वाणि भूतानि मदधीनधारणानि । यद्यप्यहं विभुस्वरूपतया सर्वत्र वर्ते, परं मम स्वरूपसत्ता नैतदधीना । एषां तु भूतानामहं धारको यद्यपि, तथापि न भारवाहक इव लोकदृष्टान्तेन क्लेशतः, किन्त्वैश्वर्यशक्तियोगात्सङ्कल्पैकदेशेनैवानायासतः । ममात्मा—स्वभावभूतः सङ्कल्प एव भूतानां धारणादि निर्वहतीति । तथाह्युपरि शाङ्क्ष्यते—'विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्' इति । स्मर्यते च पराशरादिभिः—'यस्यायुतायुतांशांशे विश्वशक्तिरियं स्थिता' 'द्यौः सचन्द्रार्कनक्षत्रा खं दिशो भूर्महोदधिः । वासुदेवस्य वीर्येण विधृतानि महात्मनः ॥' इति । नियमनेन सर्वपदार्थधारत्वं च परस्य ब्रह्मणः 'अक्षरमम्बरान्तधृतेः' 'सा च प्रशासनात्' 'धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः' इति सूत्रेषु निरूप्यते । सङ्कल्पेनैव जगद्विधारणाच्च न क्लेशरूपमिदं धारणमिति बोध्यम् । यथा सुषुप्तौ जीवस्य सत्तया धारकत्वं जागरादौ सङ्कल्पेनापि, एवं परमात्मनोऽपि सत्तया सङ्कल्पेनापि सर्वधारकत्वं सम्भवति । सम्भवे नान्यतरवैयर्थ्यमिति हि न्यायः ।

सर्वेषां चेतनाचेतनानामन्तःप्रविश्य नियमनेन धारकत्वाच्च पुरुषोत्तमस्यैव परमात्मत्वं गीयते—'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः । यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥' इति । लोक्यन्त इति लोकाः प्रमाणसिद्धाः पदार्थाः—अचित्, तत्सम्बद्धः क्षरपुरुषः, तत्सम्बन्धविरहितोऽक्षरपुरुषश्चेति पूर्वप्र-

स्तुताः, तेषां त्रयं, अर्थाच्चेतनाचेतनात्मकं कृत्स्नं जगत् ईश्वरोऽन्तः-प्रविश्य बिभर्ति, स उत्तमः पुरुषः, क्षराक्षरेभ्यः स्वरूपस्वभावाभ्यामुत्कृष्टतमः परमात्मेत्यर्थः । धनवान् सुखीत्यत्र सुखस्य धन-प्रयोज्यत्वमिव ईश्वरो बिभर्तीति वचनशैल्या धारणस्यैश्वर्यात्मक-नियमनसङ्कल्पाधीनत्वं लभ्यते । विष्णुनामसहस्रके परमात्मेति नाम च सर्वभूतान्तरात्मत्वमनन्यात्मत्वं चाह । निरुक्तिश्च—'येन भूतान्यात्मवन्ति नायमन्येन चात्मवान् । अतो ह्यात्मे-श्वरत्वाच्च परमात्मा प्रकीर्तितः ॥' इति । तथा च श्रुतिस्मृतयः 'अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा' 'आत्मा नारायणः परः' 'यस्मात्परं नापरमस्ति किञ्चित्' 'तस्माद्धान्यं न परः किञ्च नास' 'न तत्समश्चाभ्यधिकश्च दृश्यते' 'यस्मात्परस्मात्पुरुषादनन्तादनादिमध्यादधिकं न किञ्चित्' 'परं ह्यमृत-मेतस्माद्विश्वरूपान्न विद्यते' 'परः पराणां परमः परमात्मात्म-संस्थितः ।' 'परं हि पुण्डरीकाक्षान्न भूतो न भविष्यति' इति ।

सर्वेष्वेव चेतनाचेतनेष्वन्तर्यामितयाऽवस्थानेऽपि न कश्चिद्दोषः परमात्मन इति चोभयलिङ्गाधिकरणे 'न स्थानतोऽपि पर-स्योभयलिङ्गं सर्वत्र हि' इत्यादिसूत्रैर्निरूप्यते । अत एव सर्वा-न्तरात्मनः प्रतिपर्यायं 'अपहतपाप्मा अमृत' इति विशेषणं श्रूयते । यथा वाऽऽकाशस्य सूर्यादेश्च घटादिषु जलाशयेषु च प्रतीतौ सम्बन्धेऽपि न तद्गतदोषसंसर्गः, एवं परमात्मनोऽपि पद्म-पत्रवन्निर्लेपस्वभावस्य न तत्र तत्रावस्थानेऽपि दोषसंसर्ग इति प्रति-पाद्यते—'आकाशमेकं हि यथा घटादिषु पृथक् भवेत् । तथा-त्मैको ह्यनेकस्थो जलाधारेष्विवांशुमान् ॥' इति । पृथक्

घटादिषु सम्बध्यमानोऽप्याकाशो यथैकस्वभावः, एवं परमात्माऽपि सर्वत्र सम्बद्धेऽपि एक —एकस्वभावोऽपहतपाप्मत्वसमस्तकल्याणगुणाकरत्वस्वरूपनियतस्वभाव एवेत्यर्थः । यद्यपि सूर्यादिर्जलादौ दृश्यते केवलं न सम्बध्यते, आकाशस्तु वस्तुतः सम्बध्यते । अथाप्युभयदृष्टान्तकथनस्य त्वयं भावः—यथाऽसम्बद्धस्य सूर्यादेर्दोषहेत्वभावान्न दोषः, एवं सम्बद्धस्यापि निर्लेपस्वभावतया दोषहेत्वभावादेव न दोष इति । 'न स्थानतोऽपि परस्ये'ति सूत्रं औपाधिकमपि साकारत्वं नेति प्रतिषिध्य पुन'र्वृद्धिह्रासभाक्त्व'मितिसूत्रं औपाधिकसाकारत्वप्रतिपादनस्यासङ्गतत्वात् सर्वगतस्यापि ब्रह्मणः सर्वगतदोषास्पर्श एव सूत्रद्वयेनापि विवक्षितः श्रीभाष्यप्रक्रियया । 'उभयसामञ्जस्या'दित्यस्य चावस्थितानवस्थितदृष्टान्तद्वयसामञ्जस्यादित्येवार्थः । न तु दृष्टान्तदार्ष्टान्तिकयोः सामञ्जस्यादिति । तथात्वे उभयपदस्यानावश्यकत्वापातात् । वृद्धिह्रासपदं चोपाधिगतसर्वदोषोपलक्षणम् । तथा च यथाऽवस्थिते आकाशे चौपाधिकदोषाः प्रतीयमाना अपि न, एवं ब्रह्मणोऽपि सर्वगतस्य न दोषप्रसक्तिरिति भावः । विस्तरस्तु श्रीभाष्यादौ द्रष्टव्यः ॥ अत एव स्मर्यते—'एतदीशनमीशस्य प्रकृतिस्थोऽपि तद्गुणैः । न युज्यते सदात्मस्थैर्यथा बुद्धिस्तदाश्रया ॥' 'पश्य देवस्य माहात्म्यं महिमानं च नारद । शुभाशुभैः कर्मभिर्यो न लिप्येत कदाचन' इति । अत एव 'पूतात्मे'ति परिशुद्धं नाम पठ्यते श्रीविष्णुनामसहस्रे । एवं च सर्वचेतनाचेतनशरीरकत्वेन सर्वनियन्तृत्वादिलक्षणो महिमैव प्रसिद्ध्यति परां न दोषसम्बन्ध इति स्थितम् ।

एवमेव सम्प्रदायग्रन्थेऽपि स्वरूपतः परमात्मनः सर्वत्र व्याप्तिरथापि निर्दोषत्वं च सनिदर्शनमुपापादिषाताम् । यथा—'क्षराक्षराणां सर्वेषां हृदि साक्षितया स्थितिः । पुरुषोत्तमपर्यायकृन्व्यलक्षणम् ॥ लीलाविहरणं राधादिभिः परमव्योमनि । तिरोभावेऽपि कालादेर्व्यतिरेकोऽस्य चोदितः ॥' 'अन्तर्यामिस्वरूपेण शक्तिद्वययुतश्च सः । प्रतिजीवं स्थितो दत्ते तत्तत्कर्मफलं प्रभुः ॥' 'देहस्यान्तर्यथा जीवो जीवस्यान्तस्तथेश्वरः । साक्ष्यन्तर्यामिपर्यायस्तदुपास्यो हि वर्तते ॥' 'किन्तु स्वयं स्वरूपेण पृथगेव स्थितः प्रभुः । वर्ततेऽन्वीय सर्वत्र सामर्थ्यं तस्य हीदृशम् ॥ नास्य प्रवेशे मायायामशुद्धत्वभयं क्वचित् । धाम्ना स्वेनैव स सदा निरस्तकुहकोऽस्ति हि ॥ वृक्षस्य बीज आकाशो योऽन्वितोऽस्ति स एव हि । तच्छाखापत्रपुष्पादौ अन्वितो भवति ध्रुवम् ॥ तथाप्यसौ न वृक्षस्य छेदे दाहे च कर्हिचित् । छिद्यते दह्यते वापि यत्तद्रूपं हि तादृशम् ॥ एवं सकार्यमायायामन्वीयापि हरिस्ततः । पृथगेव स्वरूपेण वर्तते सर्वदाऽच्युतः ॥' (अत्र मायामायिकेषु स्वरूपतोऽन्वयेऽपि गगनवद्विविक्तस्वभावत्वलक्षणात्पृथग्भावाद्दोषराहित्यमुक्तं परमात्मनः) 'स्वधामस्थस्त्वयं कृष्णः स्थितो ब्रह्माण्डकोटिषु । अन्तर्यामिस्वरूपेण जीवेश्वरव्रजेष्वपि ॥ अश्मकाष्ठादिगस्यापि वह्ने रूपं यथा पृथक् । हरेस्तेषु स्थितस्यापि त्वन्यदेव तथैव तत् ॥' इति । 'क्रमेणानेन बोद्धव्यं महत्त्वं कमलापतेः । सूक्ष्मत्वं कारणत्वं च कार्यव्यापकता तथा ॥' इत्यत्र चोपादानतया सूक्ष्मतया च सर्वव्या-

पकत्वमुक्तम् । अतश्च स्वरूपेण सर्वत्र स्थितिः सिद्धा । उपादान-स्वरूपस्य कार्येषु समन्वयात् । 'मायाया परत' परश्च भगवान् सर्वेश्वर श्रीहरि स त्व पुम्प्रकृती प्रविश्य कुरुषेऽनेकाण्डसर्गादिकम् । तत्रापीश न बध्यसे प्रकृतिभिर्नित्य स्वतन्त्र' प्रभुर्निर्लेप पवनो यथाऽखिलगतश्चेष्टा' प्रकुर्वन्नपि ॥' 'और्वोऽग्निर्जलधौ वसन्नपि पराभूतिं जलैर्नाप्नुवस्तान्यश्नन्नुत वर्धते खलु यथा त्व तद्वदत्र प्रभो' 'तेषु त्व तु वसन्नपीश्वरतया नो बध्यसे नाज्यसे व्योमेव स्थिरजङ्गमस्थमघहन्न स्पृश्यसे तद्गुणै ' 'ईशत्व तव चैतदेव नृतनोर्मायागुणानञ्जनम्' 'हीनो गुणैस्त्रिभिरधीश्वर मायिकैस्त्व नृत्वेऽपि दिव्यतनुरित्यसि निर्गुणाख्य ' इत्यत्र च सर्वत्रापि प्रविष्टस्यापि असङ्गत्व निर्दोषत्व चोक्तम् । 'सर्वत्रैवान्वित शक्त्या व्यतिरिक्त' स्वत स्थित' ।' 'वासुदेव स च स्वाभि सत्यज्ञानादिशक्तिभिः । तेषु सर्वेष्वन्वितोऽस्ति व्यतिरिक्तोऽस्ति च स्वत' ॥' इत्यादौ चान्त प्रवेशपूर्वकनियमनसामर्थ्यलक्षणयाऽन्तर्यामित्वशक्त्या ज्ञानादिगुणगुणविशिष्टस्यैव परमात्मन सर्वत्रान्वयः प्रतिपादित । सर्वत्रान्वितस्यैव स्वतो व्यतिरिक्तत्व नाम विविक्तस्वभावत्व नित्याभाक्त्वस्वासाधारणदिव्यभोग्यभोगोपकरणादिसम्पत्तिमत्त्व च । अतः शक्तिरेव सर्वव्यापिका न स्वरूपमिति शङ्काया नावकाशः । आदित्यादिदृष्टान्तबलात्परमात्मनो ज्ञानादिशक्तेरपि सर्वव्यापित्वमस्तीति बोध्यम् । ज्ञानादे सर्वव्यापित्व नाम अप्रतिहतसर्वविषयसञ्चारित्वलक्षणम् । विस्तरस्त्वन्यत्र । तथा चेतनाचेतनयो परमात्मनः शरीरत्वमात्मत्व च तस्य तौ प्रति वर्णिते हरिवाक्यसुधा-

सिन्धौ—'शरीरता तयोः कृष्णव्याप्याधीनत्वधर्मतः । व्याप्यत्वं परतन्त्रत्वं शारीरो धर्म उच्यते ॥ मूर्तिमान् भगवान् कृष्णः सर्वेषामपि चात्मनाम् । तद्व्याप्यदृश्यदेहानामप्यस्त्यात्मतया स्थितः ॥' इति । शास्त्रेष्वपि क्वचिद्यत्र दृश्यरूपः स वर्णितः । भवेद् दृश्यात्मता तत्र ज्ञातव्यास्यैव वर्णिता ॥ देहद्रष्ट्रात्मरूपेण यत्रारूपः स वर्णितः । भवेद्द्रष्ट्रात्मात्मतया ज्ञेयस्तत्र तु वर्णितः ॥ वस्तुतस्तु स भिन्नोऽस्ति दृश्येभ्यः सर्वदेहतः । तद्द्रष्टृभ्योऽप्यरूपेभ्य आत्मभ्यो दिव्यविग्रहः ॥' इति च दृश्यादृश्याचिच्चेतनप्रपञ्चविलक्षणस्यैव तत्तच्छरीरकतया तत्तदभेदव्यपदेशः शास्त्रेषु कृत इत्युपपादितम् । सत्सङ्गिजीवने च बद्धमुक्तोभयात्मात्मत्वं परमात्मत्वं च श्रीकृष्णस्य वर्णितमस्ति—'दिव्यरूपोऽक्षरात्मा च' 'आत्मात्मनां चेतनानां चेतनश्च श्रुतीरितः' 'श्रीकृष्णो यः परं ब्रह्म परमात्मा स कीर्तितः' इति ।

अत्रेमे सङ्ग्रहश्लोकाः—सर्वाधारनियन्तृस्वामित्वैर्नियमतोऽस्य तु । सर्वं शरीरं चिदचिदात्मायं तस्य विश्रुतः ॥ अन्तः प्रविश्य सङ्कल्पाद्धारको ह्यात्मशब्दितः । शरीरस्य यथेच्छं तु विनियोगात्स शेष्यपि ॥ किञ्च ज्ञात्रपृथक्सिद्धद्रव्यं दृष्टं च तद्वपुः । शरीराज्जीवगमने वपुषः पतनाद् ध्रुवम् ॥ अपृथक्सिद्धता ज्ञेया स्थितेत्थं देहदेहिता । अन्तःप्रविश्याधारत्वमगायि स्वयमेव हि ॥ मयि सर्वमिदं प्रोतं सूत्रे मणिरिवेति तु । अपृथक्सिद्धता चापि सर्वद्रव्यस्य वर्णिता ॥ न तदस्ति विना यत्स्यान्मया भूतं त्विति स्फुटम् । नियमेन च

पकत्वमुक्तम् । अतश्च स्वरूपेण सर्वत्र स्थिति सिद्धा । उपादान स्वरूपस्य कार्येषु समन्वयात् । 'मायाया परत परश्च भगवान् सर्वेश्वर श्रीहरि स त्व पुप्रकृती प्रविश्य कुरुषेऽनेकाण्डसर्गादिकम् । तत्रापीश न बध्यसे प्रकृतिभिर्नित्य स्वतन्त्र' प्रभुर्निर्लेप पवनो यथाऽखिलगतश्चेष्टा प्रकुर्वन्नपि ॥' 'और्वोऽग्निर्जलधौ वसन्नपि पराभूतिं जलैर्नाप्नुयस्तान्यश्नस्तुत वर्धते खलु यथा त्व तद्वदत्र प्रभो' 'तेषु त्व तु वसन्नपीश्वरतया नो बध्यसे नाज्यसे व्योमेव स्थिरजङ्गमस्थमघहन स्पृश्यसे तद्गुणै' 'ईशत्व तव चैतदेव नृतनोर्मायागुणानञ्जनम्' 'हीनो गुणैस्त्रिभिरधीश्वर मायिकैस्त्व नृत्वेऽपि दिव्यतनुरित्यसि निर्गुणाख्य:' इत्यत्र च सर्वत्रापि प्रविष्टस्यापि असङ्गत्व निर्दोषत्व चोक्तम् । 'सर्वत्रैवान्वित शक्त्या व्यतिरिक्त' स्वत: स्थित' ।' 'वासुदेव स च स्वामि' सत्यज्ञानादिशक्तिभि । तेषु सर्वेष्वन्वितोऽस्ति व्यतिरिक्तोऽस्ति च स्वत ॥' इत्यादौ चान्त:प्रवेशपूर्वकनियमनसामर्थ्यलक्षणयाऽन्तर्यामित्वशक्त्या ज्ञानादिगुणगुणविशिष्टस्यैव परमात्मन: सर्वत्रान्वय: प्रतिपादित: । सर्वत्रान्वितस्यैव स्वतो व्यतिरिक्तत्व नाम विविक्तस्वभावत्व नित्याप्राकृतस्वासाधारणदिव्यभोग्यभोगोपकरणादिसम्पत्तिमत्त्व च । अत: शक्तिरेव सर्वव्यापिका न स्वरूपमिति शङ्काया नावकाश । आदित्यादिदृष्टान्तबलात्परमात्मनो ज्ञानादिशक्तेरपि सर्वव्यापित्वमस्तीति बोध्यम् । ज्ञानादे सर्वव्यापित्व नाम अप्रतिहतसर्वविषयसञ्चारित्वलक्षणम् । विस्तरस्त्व यत्र । तथा चेतनाचेतनयो परमात्मन: शरीरत्वमात्मत्व च तस्य तो प्रति वर्णिते हरिवाक्यसुधा-

सिन्धौ—'शरीरता तयोः कृष्णव्याप्याधीनत्वधर्मतः । व्याप्यत्वं परतन्त्रत्वं शारीरो धर्म उच्यते ॥ मूर्तिमान् भगवान् कृष्णः सर्वेषामपि चात्मनाम् । तद्व्याप्यदृश्यदेहानामप्यस्त्यात्मतया स्थितः ॥' इति । शास्त्रेष्वपि क्वचिद्यत्र दृश्यरूपः स वर्णितः । भवेद् दृश्यात्मता तत्र ज्ञातव्यास्यैव वर्णिता ॥ देहद्रष्ट्रात्मरूपेण यत्रारूपः स वर्णितः । भवेद्द्रष्ट्रात्मात्मतया ज्ञेयस्तत्र तु वर्णितः ॥ वस्तुतस्तु स भिन्नोऽस्ति दृश्येभ्यः सर्वदेहतः । तद्द्रष्टृभ्योऽप्यरूपेभ्य आत्मभ्यो दिव्यविग्रहः ॥' इति च दृश्यादृश्याचिच्चेतनप्रपञ्चविलक्षणस्यैव तत्तच्छरीरकतया तत्तदभेदव्यपदेशः शास्त्रेषु कृत इत्युपपादितम् । सत्सङ्गिजीवने च बद्धमुक्तोभयात्मात्मत्वं परमात्मत्वं च श्रीकृष्णस्य वर्णितमस्ति—'दिव्यरूपोऽक्षरात्मा च' 'आत्मात्मनां चेतनानां चेतनश्च श्रुतीरितः' 'श्रीकृष्णो यः परं ब्रह्म परमात्मा स कीर्तितः' इति ।

अत्रेमे सङ्ग्रहश्लोकाः—सर्वाधारनियन्तृस्वामित्वैर्नियमतोऽस्य तु । सर्वं शरीरं चिदचिदात्मायं तस्य विश्रुतः ॥ अन्तः प्रविश्य सङ्कल्पाद्धारको ह्यात्मशब्दितः । शरीरस्य यथेच्छं तु विनियोगात्स शेष्यपि ॥ किञ्च ज्ञात्रपृथक्सिद्धद्रव्यं दृष्टं च तद्वपुः । शरीराज्जीवगमने वपुषः पतनाद् ध्रुवम् ॥ अपृथक्सिद्धता ज्ञेया स्थितेत्थं देहदेहिता । अन्तःप्रविश्याधारत्वमगायि स्वयमेव हि ॥ मयि सर्वमिदं प्रोतं सूत्रे मणिरिवेति तु । अपृथक्सिद्धता चापि सर्वद्रव्यस्य वर्णिता ॥ न तदस्ति विना यत्स्यान्मया भूतं त्विति स्फुटम् । नियमेन च

सर्वस्य स्वशेषत्वं च कीर्तितम् ॥ भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च । अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥ अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् । इत्युक्ता प्रकृते-स्तद्बद्धात्मना च स्वशेषता ॥ मुक्तानां च स्वशेषत्वं तद्धाम परमं मम । इति सङ्कीर्त्यतेऽतोऽत्रास्थितोऽयं चिदचित्तनुः ॥

## अष्टमनवमलक्षणविचारः ।

### ( सर्वकर्मसमाराध्यत्वं सर्वकर्मफलप्रदत्वं च । )

यतः परमात्मा सर्वचिदचिच्छरीरस्तदन्तर्यामी, अतोऽयमेवे-न्द्रादितत्तद्देवान्तर्यामी सर्वकर्मसमाराध्यस्तत्फलप्रदश्च प्रथतेऽध्या-त्मशास्त्रेषु । 'इष्टापूर्तं बहुधा जातं जायमानं विश्वं बिभर्ति भुवनस्य नाभिः । तदेवाग्निस्तद्वायुस्तत्सूर्यस्तदु चन्द्रमाः' 'यज्ञैस्त्वमिज्यसे नाथ सर्वदेवमयाच्युत' 'ये यजन्ति पितॄन् देवान् ब्राह्मणान् सहुताशनान् । सर्वभूतान्तरात्मानं विष्णुमेव यजन्ति ते ॥' इति । 'पूजयन्ति तमेवेशं प्रवृत्तं धर्ममास्थिताः । तमेव पूजयन्तीशं निवृत्तं धर्ममास्थिताः ॥ वासुदेवस्याङ्गतया भावयित्वा सुरान् पितॄन् । अहिंसपूजाविधिना यजन्ते चान्वहं हि ते ॥ चतुर्वर्गे तेषु यस्य यद्यदिष्टतमं भवेत् । तत्तत्सम्पूरय-त्येव सर्वशक्तिपतिः प्रभुः ॥' इति च । तत्तद्विधिवाक्यगता इन्द्रादि-शब्दा अपि इन्द्रादिशरीरकपरब्रह्मण एव वाचका इति मनुनो-च्यते—'एनमेके वदन्त्यग्निं मरुतोऽन्ये प्रजापतिम् । इन्द्रमेके-ऽपरे प्राणमपरे ब्रह्म शाश्वतम् ॥' इति । एके वेदभागा एनं पर-

१ अग्न्यादिरूपो भुवनचक्रस्य नाभिरिवाधारभूतः परमात्मैव त्रैकालिकं यागदानहोमादि श्रौतं कूपादिनिर्माणलक्षणं स्मार्तं च कर्म स्वाराधनत्वेन बिभर्ति इत्यर्थः ।

मात्मानं अग्निशब्देन प्रतिपादितवन्त इत्येवमर्थोऽवसेयः । 'यज देवपूजायाम्' इत्यर्थनिर्देशाद्देवताराधनरूपत्वं यज्ञानां लब्धम् । 'यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् । स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः ॥' 'भोक्तारं यज्ञतपसां सर्वभूतमहेश्वरम्' इति च यज्ञदानतपोहोमादीनां सर्वेषामेव कर्मणां सर्वान्तरात्मभूतपरमपुरुषाराधनरूपत्वं प्रतिपाद्यते । यथा वा लोके स्वशरीरं परिचरत्सु दासेषु प्रसादो जायते स्वाम्यात्मनः, एवं स्वशरीरभूतेन्द्रादिपरिचारकेषु सर्वान्तरात्मनः प्रसादो भवतीति सङ्गच्छते । एवमिन्द्राद्याराधनात्मना कर्मणा तदन्तर्यामी परमात्माहं स्वयमेवाराधितोऽभीप्सितं फलमिन्द्रादिद्वारा तस्मै तस्मै प्रददामीति च गीतायां श्रीकृष्णेन स्फुटं प्रतिपादितम्—'यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति । तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् ॥ स तया श्रद्धया युक्तस्तस्याराधनमीहते । लभते च ततः कामान् मयैव विहितान् हि तान् ॥' इति । 'ये त्वन्यदेवताभक्ता यजन्ते श्रद्धयाऽन्विताः । तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकम् ॥ अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च । न तु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते ॥' इति च सर्वेषां कर्मणां सर्वान्तरात्मभगवदाराधनात्मकत्वमजानद्भिस्तत्तद्देवाराधनत्वमात्रप्रतिपत्तिपूर्वकं क्रियमाणानामपि भोक्ताऽऽराध्यः प्रभुस्तत्तत्फलप्रदश्चाहमेव । तत्त्वतो मज्ज्ञानविरहितत्वाच्च तेषामभिमतेन्द्रादिक्षयिपदप्राप्तिमात्रं भवतीति भावः ।

एतेन—आशुतरविनाशिनां कर्मणां कालान्तरभाविफलसाधनत्वार्थं द्वारतयाऽपूर्वस्य कर्तृनिष्ठतया भूतनिष्ठतया वा वाद्यन्तरैः

क्रियमाण परिकल्पनमनवसर व्याख्यातम् । कर्मणा विनाशित्वेऽपि तत्तत्कर्मजनितस्य देवताप्रसादस्यैव स्थिरस्य कालान्तरभाविफलप्रयोजकत्वसम्भवात् । देवताप्रसादस्य द्वारत्व च 'वायव्य श्वेतमालभेत भूतिकाम । वायुर्वै क्षेपिष्ठा देवता स एवैन भूतिं गमयती'ति विधिवाक्यशेषभूतार्थवादवाक्यैरेवावगम्यते । कल्पान्ते वाय्वादीना विनाशेऽपि परमात्मैव पूर्वपूर्वकल्पे वत्तद्देवताराधनत्वेन कृतैः कर्मभिः परितोषितोऽविच्छिन्नज्ञान परमकारुणिकः कल्पान्तरेऽपि तत्तद्द्वारा फल प्रयच्छतीति न कृतहानादिप्रसङ्गस्यावकाश । अत एव कर्मैवापूर्वद्वारा फल साधयतीति जैमिनिपक्ष जडत्वेन कर्मणा न स्वातन्त्र्येण फलप्रदत्व सम्भवतीति प्रतिक्षिप्य 'फलमत उपपत्ते' इति परमचेतनस्य सर्वान्तरात्मन परमपुरुषस्यैव फलप्रदत्व समर्थयामास भगवान् बादरायण । परमात्मन एव सर्वफलप्रदत्व श्रूयते च—'स वा एष महानज आत्माऽन्नादो वसुदानो विन्दते वसु' 'एष ह्येवानन्दयाति' 'नित्यो नित्याना चेतनश्चेतनानामेको बहूना यो विदधाति कामान्' इति । स्मृतिषु च विष्णो सर्वफलप्रदत्व बहुधाऽन्वाख्यायते—'भौम मनोरथ स्वर्गं स्वर्गिवन्द्य च यत्पदम् । प्राप्नोत्याराधिते विष्णौ मुक्तिमप्यतिदुर्लभाम् ॥' 'यद्यदिच्छति यावच्च फलमाराधितेऽच्युते । तत्तदाप्नोति राजेन्द्र भूरि स्वल्पमथापि वा ॥' 'रत्नपर्वतमारुह्य यथा रत्न नरो मुने । सत्त्वानुरूपमादत्ते तथा कृष्णान्मनोरथान् ॥' 'यथा कल्पद्रुमात्सर्वं प्राप्यते मनसेप्सितम् । तथा सम्प्राप्यते विष्णोरपि स्याद्दुर्लभ द्विज ॥' 'सकलफलप्रदो हि विष्णु' 'तस्मात्त्व

मपि विप्रेन्द्र नारायणपरो भव । तदन्यः को महोदारः प्रार्थितं दातुमीश्वरः ॥' इति । वासुदेवमाहात्म्ये च–'वासुदेवस्वरूपोऽहं सर्वकर्मफलप्रदः । अन्तर्यामितया वर्ते स्वतन्त्रः सर्वदेहिनाम् ॥' इति ।

सम्प्रदायप्रबन्धेषु च सर्वकर्मफलप्रदत्वं भगवत एवोक्तम्–'सर्वज्ञः सत्यसङ्कल्पः सर्वकर्मफलप्रदः । अन्तर्यामी सर्वशक्तिसेवितः परमेश्वरः ॥' 'असौ जीवेषु सर्वेषु प्रविश्य पुरुषात्मना । यथाकर्म फलं दत्ते तेभ्यः साम्यमुपाश्रितः ॥' 'यथा चिन्तामणिर्लोके कल्पवृक्षश्च कामधुक् । सेवितोऽसौ तथा कृष्णः सर्वाभीष्टफलप्रदः ॥' 'शुभाशुभानां सर्वेषां कर्मणां फलदश्च सः' 'फलप्रदाता सर्वेषां कर्मणामस्ति हीश्वरः । अतस्तदिच्छयैवैते भुञ्जते कर्मजं फलम् ॥' इति ।

विष्णोः सर्वफलप्रदत्वं द्वेधा–तत्तदन्तर्यामितया तत्तत्फलप्रदत्वमेकम्, फलान्तरकामनावद्भिरपि तपःप्रभृतिभिः साक्षादाराधितस्य चापरम् । यथा ध्रुवस्योत्कृष्टापूर्वपदप्रदत्वम् । अतः फलान्तरार्थिभिरपि श्रीहरिरेव सेव्यः । अत एवैश्वर्याद्यर्थिभिरपि साक्षाद्भजनीयत्वं स्वस्य गीयते भगवतैव–'चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन । आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ ॥' इति । भागवते च–'अकामः सर्वकामो वा मोक्षकाम उदारधीः । तीव्रेण भक्तियोगेन यजेत पुरुषं परम् ॥' इति । वासुदेवमाहात्म्ये च–'वासुदेवः परंब्रह्म श्रीकृष्णः पुरुषोत्तमः । देवोऽकामैः सकामैश्च पूज्यो मुक्तैर्नरैरपि ॥' इति । सर्वफलप्रदस्य नारायणस्यैव सकाशान्मोक्षफलेन सहैहिकं फलमपि यो

लिप्सति स सकामभक्तः । यस्तु मोक्षफलादन्यत्किञ्चिदपि परमा-त्मना दीयमानं नेच्छति सेवान्तरायत्वात्स निष्कामभक्त इति च वर्णितं सत्सञ्जिजीवने—'एवं भजन्ति' इत्यादिश्लोकपञ्चकेन ।

## दशमलक्षणविचारः ।
### ( ब्रह्मणो जगत्कारणत्वम् )

देवाद्यात्मतया सर्वकर्माराध्यत्वमीरितम् । चिदचित्तनुतः सर्वकारणत्वमिहोच्यते ॥ 'यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञास-स्व तद्ब्रह्म' इति भृगुवल्लीवाक्यं च जगज्जन्मादिकारणत्वं परस्य ब्रह्मणो लक्षणं वदति । तथा च सूत्रं—'जन्माद्यस्य यतः' इति । यद्यपि जन्मादिषु एकैकं प्रतिकारणत्वमेव कृत्स्नं जगत्प्रतीतरव्याव र्तकं भवति अथाप्येकहेतुत्वमात्रोक्तौ स्थित्यादिहेतुपदार्थान्तरसद्भा वस्य शक्यशङ्कतया लिलक्षयिषिताकारो निरतिशयबृहत्त्वलक्षणो न निश्चीयेत । कृत्स्नजगदुत्पत्त्यादिहेतुभूतैर्ज्ञानशक्त्यादिभिः परिपूर्णत्वं हि सत् । अतस्त्रितयहेतुत्वं लक्षणमुक्तम् । कृत्स्नं जगत्प्रति कर्तृत्वमुपा दानं च ब्रह्माभिमतम् । निमित्तान्तरस्य सद्भावे ह्यद्वितीयत्वश्रुति-विरोधः । कृत्स्नजगद्धेतुत्वेन समानवस्त्वन्तरसद्भावे च निरतिशय बृहत्त्वमपि न सिद्ध्येत् ।

अत्राह—कर्ता यदि स्यात्परः, उपलभ्येत । न चोपलभ्यते । सत्यम् । ततः किम् ? । नास्तीति भातम् । नेति ब्रूमः । अयोग्य-त्वात् । योग्यानुपलब्धिर्ह्यभावमनुपलब्धस्य साधयेत् । न त्वयोग्या-नुपलब्धिः । अन्यथा तु स्वपरविभागमभ्युपगच्छता त्वयाऽदृश्यस्य परात्मनोऽपि स्यात्प्रतिषेधः । ननु शरीरमेवात्मेति वदतो ममाप-

रोक्ष एव परात्माऽपि । सत्यम्, पिण्डः प्रत्यक्षः । चैतन्यं तु तस्य नैवोपलभ्यते त्वया । अन्यतो ज्ञास्यत इति चेत् ममापि जगत्कर्ताऽन्यतः सेत्स्यत्येव ।

नन्वशरीरत्वान्न कर्तेश्वरः । मैवम् । ईश्वरस्य पक्षीकारेणाकर्तृत्वसाधने धर्मिग्राहकमानबाधात् । यथा लोके समर्थानां दृष्टोपकरणसम्पत्तिशून्यानामपि विविधकार्यकर्तृत्वमुपलभ्यते । एवं परमात्मनोऽपि सर्वशक्तस्येच्छामात्रादशरीरस्यैव सर्गादिव्यापारो नानुपपन्नः । सर्गादिकार्योपयोगिप्रकृतिपुरुषादिशरीरकत्वं च शास्त्रतः प्रतिपन्नमेव ।

विगीतं जगदकर्तृकं कर्मवश्याजन्यत्वादित्यनुमानमीश्वरे बाधकमाशङ्क्येतापि यद्यनुमानेनेश्वरस्य सिद्धिमातिष्ठेमहि । नित्यनिर्दोषागम ईश्वरे प्रमाणतया शरणीकृते तु न बाधकानुमानं प्रगल्भते बाधितुमागमिकमीश्वरं स्वयमेव प्रशिथिलबन्धं मृत्पिण्डादिकमिवाश्मनि । यथा वा यागादिर्विलक्षणसुखसाधनतया 'यजेत स्वर्गकामः' इत्यादिभिरवगम्यते । यागादिर्न विलक्षणसुखसाधनं साधनत्वात् किल्विषवदिति च श्रुतिबाधितमनुमानं न तस्य श्रौतं विलक्षणसुखसाधनत्वं प्रतिरोद्धुमलम् । एवमत्रापि ।

ननु मास्त्वनुमानं बाधकं जगत्कर्तरि । आर्षेयवचनमेव स्वतन्त्रप्रधानकारणवादि तथा स्यादिति ब्रूमः । कपिलो हि महर्षिराजन्मसिद्धज्ञानः कृत्स्नशास्त्रतात्पर्यवित् । तत्त्वविदस्तस्य वचनमेव स्वतन्त्रप्रधानकारणवादि जगत्कारणवादिन्याः श्रुतेस्तत्परत्वं व्यवस्थापयतीति । स्यादेतदेवम् । यदि कपिल एवाप्तो न कणादादिरित्यध्यवसीयेत । कणादादयोऽपि योगप्रभावलब्धसार्वज्ञ्या

इति हि तत्तद्दर्शनस्थैरभ्युपगम्यते । ननु भगवदवतारत्वं कपिलस्य विशेषः । न तावताऽप्याप्ततमत्वं सिध्येत् । बुद्धस्यापि तथात्वात् । आवेशस्तत्रेति चेत्तुल्यं प्रकृतेऽपि । योगिनामपि क्षेत्रज्ञसामान्या-द्भ्रमः सम्भवत्येव कादाचित्कः कर्मविशेषतः । अतोऽन्यथासिद्धं कापिलवचनं न ब्रह्मकारणत्ववादिन्याः श्रुतेरान्यपर्यमापादयितुमलम् । उद्घोषितं च भगवता बादरायणेन कापिलस्मृतेरनादेयत्वं 'स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोष-प्रसङ्गात्' इत्यादिना । उक्तं चागमिकेश्वरसिद्धौ प्रत्यक्षादेरबाधकत्वं तत्त्वमुक्ताकलापे—'अप्रत्यक्षः परात्मा तदिह न घटते धातुरध्य-क्षबाधो योग्यादृष्टेरभावाः खलु न भवता स्वीकृतः स्वेत-रात्मा । तस्मिन् देहानपेक्षे श्रुतिभिरधिगते देहबाधाः न बाधो वेदेभ्यो नानुमानं न च पुरुषवचस्तिष्ठते बद्धवैरम् ॥' इति ।

येन वेदपूर्वभागविचारप्रवृत्ता देवतानां रूपादिपञ्चकं सर्गप्रल-यौ चापलपन्तो विश्वकर्तारं नानुमन्यन्त इव कर्मजडाः केचित् । न तेषामपि तदपलापे हार्दम् । वेदापौरुषेयत्वसुरक्षणप्रत्याशया पुनः सर्गप्रलयापलापः । कर्मसु श्रद्धातिशयस्योपपिपादयिषया च देवताया रूपाद्यपलापः 'विग्रहो हविरादानं युगपत्कर्मसन्निधिः । प्रीतिः फलप्रदानं च देवताया न विद्यते ॥' इति । सत्या हि कर्माराध्याया कर्मफलप्रदाया देवताया साक्षात्तत्प्रसादनेष्वेवार्चना-दिषु सुकरेषु प्रवर्तेरन् । तथा च श्रद्धामान्द्यं प्रसज्यते कर्मसु बहु-वित्तव्ययायाससाध्येषु । इति । जैमिनेरपि परब्रह्मसद्भावे हार्दं च 'परं जैमिनिर्मुख्यत्वात्' इत्यादिसूत्रतोऽवगम्यते । कर्माङ्गभूताया देवताया रूपाद्यभावेऽपि उपास्याया रूपादिकं स्वीकुर्वन्ति नव्यमी-मांसका इति न तेऽपि विश्वकर्तरि विद्वेषिणः ।

ये खलु श्रुतेरीश्वरोक्तत्वेन प्रामाण्यं सङ्गृणन्तो धातारं विश्वस्यानुमानत एव सिपाधयिपन्ति न तेपामप्यनुमानेनैव केवलेन विवक्षितोऽर्थः सेत्स्यति । जलबुद्बुदवद्युगपदेवाण्डानां सर्वेपामुद्गमो विलयश्च हि न शास्त्रमन्तरा शक्योऽध्यवसितुम् । नच तदसिद्धौ जीवातिरिक्तस्य विश्वसृजः कल्पनावसरः । जीवा एव विचित्रकर्मपरिपाकभुवा ज्ञानशक्त्यतिशयेन तं तं लोकादिकं स्रक्ष्यन्ति प्रत्येकं सम्भूय वेति । ननु न वयं कर्तृमात्रं जगतः सिषाधयिषामः, किन्त्वेकं कर्तारं कृत्स्नस्य जगत इति न जीवैः सिद्धसाधनम् । स्यादेतदेवम्; यदि एककर्तृकत्वनियतं लिङ्गमुपलभ्येत । कार्यत्वादिर्हि अनेकारब्धरथप्रासादादिसाधारण इति । तथा च स्वतः प्रमाणभूतेन वेदेनैव विश्वकर्ता परमेश्वरः सिद्ध्यति निराबाधम् । श्रुत्यवगतार्थदार्ढ्यसम्पादकतया मननोपकारकत्वं पुनरीश्वरानुमानानां भवेन्नाम । न तु पुरोवादित्वलक्षणमीश्वरे प्रामाण्यम् । सूत्रकृता च शास्त्रैकप्रमाणकत्वं जगत्कारणस्य परस्य ब्रह्मण उक्तं—'शास्त्रयोनित्वात्' इति । वासुदेवमाहात्म्ये च 'त्वदेवेश शास्त्राणि चैतानि भूम्नो बभूवुस्त्वदेकाश्रयाण्यादिकल्पे । रमासेव्यपादाम्बुजं शास्त्रयोनिं तमाद्यं भवन्तं भजे वासुदेवम् ॥' इति ।

## ब्रह्मणो निमित्तत्वमुपादानत्वं च ।

'अथ परा यया तदक्षरमधिगम्यते…यद्भूतयोनिं परिपश्यन्ति धीराः' 'सोऽकामयत बहु स्यां प्रजायेयेति' 'तदात्मानं स्वयमकुरुत' 'सदेव सौम्येदमग्र आसीदेकमेवाद्वितीयं तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत' 'सन्मूलाः सौम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठा ऐतदात्म्यमिदं सर्वम्'

'ब्रह्म वन ब्रह्म सवृक्ष आसीद्यतो द्यावापृथिवी निष्टतक्षु' । मनीषिणो मनसा विब्रवीमि वो ब्रह्माऽध्यतिष्ठद्भुवनानि धारयन्' इत्यादिभिश्चाभिन्ननिमित्तोपादानता ब्रह्मणो ज्ञायते । तथा हि—आद्ये—योनिशब्देनोपादानत्व ब्रह्मणो ज्ञायते । स हि उपादाने स्वारसिक । उपादानत्वसाधक च सूत्र 'योनिश्च हि गीयते' इति । एकविज्ञानेन सर्वविज्ञानप्रतिज्ञासहचाराच्चोपादानपरता सत्यैपितव्या । द्वितीये—ब्रह्मण एव नानाकार्यरूपेण बहुभवनविषयात्सत्यसङ्कल्पादुभयविध कारणत्व सिद्धम् । सङ्कल्पप्रयत्नाश्रयो हि कर्ता । कार्यावस्थामापन्नव कारणमुपादानमिति । सदेवेत्यत्र नानानामरूपस्य जगत प्रलये नामरूपविभागराहित्येन सच्छब्दितब्रह्मात्मकतयाऽवस्थानप्रतिपादनाद्द्वितीयनिमित्तप्रतिषेधाच्च ब्रह्मणोऽभिन्ननिमित्तोपादानत्वावगमः । घटशरावादे पूर्वदिने मृदात्मकतयेव जगतः प्रलये ब्रह्मात्मकतयाऽवस्थानप्रतिपादनान्मृदिव घटशरावादेर्ब्रह्म जगत्प्रत्युपादान प्रतीयते । 'सन्मूला' इत्यत्र चोक्त कारणत्व लयाधिष्ठानतैकाधिकरण्यादुपादानत्वरूपम् । उपादान एव हि कार्यस्य लयः । अन्त्ये च—ब्रह्मैव वृक्षाधिकरणदेशलक्षणमुपकरण वृक्षशब्दितमुपादान काष्ठमयपञ्जरगृहत्वादिरूपित जगत्प्रति निमित्त चाधिष्ठातृतयेति प्रतिपादनात्सर्वविध कारणत्व तस्य सिद्धमितिपराम् ।

ननु—लोकविरुद्ध निमित्तोपादानयोरैक्य न शास्त्र प्रतिपादयितुमलम्, यूपादित्यैक्यवत् । कार्याकारेण परिणामि कारण किलोपादानम् । परिणामयितृ च निमित्तम् । प्रेक्षापूर्वकारी च परिणामयति मृदाद्यचेतन घटाद्यात्मना । कथ तयोरैक्य चिदचितोर्व-

देत । अत्र ब्रूमः—न खल्वयं नियमः उपादानेन निमित्तमिन्नेनैव भाव्यमिति । आत्मन एव तत्तत्सुखसाधनसमाहरणेन स्वात्मनि सुखमुत्पादयतः स्वसुखे निमित्तत्वोपादानत्वयोर्दर्शनात् । निर्माण-कायाधिष्ठान ईश्वरस्यैव निमित्तत्वोपादानत्वयोर्न्यायाचार्यांद्यभि-मतत्वाच्च । कुलालादेर्घटादिकं प्रत्युपादानत्वविरहो मृदादेर्निमित्त-त्वविरहश्च शक्त्यभावप्रयोज्यः । न हि कुलालादिर्घटादिरूपेण परिणन्तुं समर्थः । मृदादिर्वा दण्डचक्रादिकारककलापसङ्ग्रहे । शक्त्यशक्ती हि सर्वत्र नियामिके । यस्तूभयविधसामर्थ्यवान् यत्कार्ये स तत्रोभयविधमपि कारणं भवितुमर्हत्येव । एवं च 'पराऽस्य शक्तिर्विविधैव श्रूयते' इत्यादिश्रुत्या विविधविचित्रशक्तिमत्तयाऽ-वगतस्य ब्रह्मणः सर्वविधमपि कारणत्वं सङ्गच्छत एव ।

अथैवमपि ब्रह्मणो जगत्प्रति सति निमित्तोपादानत्वे 'निष्क्रियं' 'निरवद्यं' इत्यादिश्रुतिविरोधोऽवर्जनीयः । न हि निर्व्यापारत्वेन श्रुतस्य तस्य सर्गादिकर्तृत्वं निर्विकारत्वेन श्रुतस्य वा नानाकार्यरू-पभवनेनोपादानत्वं च श्रुत्यैव प्रतिपिपादयिषितमिति सम्भवति । किञ्च 'सत्यकामः' 'तस्मिन् कामाः समाहिताः' 'सर्वमिदम-भ्यात्तोऽवाक्यनादरः' इति अवाप्तसमस्तकामत्वेन परिपूर्णत्वेन च प्रतिपन्नस्य जगत्सर्जनादिना साध्यं न किञ्चित्फलम् । जीवहिता-धानं चेत्तर्हि नानाविधदुःखबहुलं संसारं जीवस्याहितरूपं नैव सृजेत् । अत्र ब्रूमः—स्वयंप्रमाणभूतेषु श्रुतिवाक्येषु तावत् पर-स्परविरुद्धार्थप्रतिपादनमुन्मत्तवाक्यवच्छङ्कितुमपि न शक्यम् । तात्पर्यविशेषेण परस्परमविरोध एव त्ववधारयितुमुचितः । तत्र निरवद्यत्वश्रुतिर्दोषसामान्यनिषेधिका स्वरूपपरिणामलक्षणं विका-

रमपि निषेधत्येव । उपादानत्वश्रुतिस्तु चिदचिद्विशिष्टविषया । स्वरूपविकाराभावेऽपि शरीरगतावस्थाभेदेन जीवस्यैव सदेहस्य यथा 'बालो देवदत्तो युवा जात' इति जातत्वव्यवहारो लोके दृश्यते, एवं ब्रह्मणोऽपि शरीरभूतचिदचिद्गतसूक्ष्मस्थूलावस्थाभेदेन तद्विशिष्टस्य कार्यकारणभावः श्रुत्यन्तेषु व्यवह्रियते । तत्र शरीरगतजन्मजरामरणादिना आत्मा यथा न स्पृश्यते, एवं चिदचिद्गतासत्वदुःखित्वपरिणामित्वादिदोषैः परमात्मा न स्पृश्यते । ननु शरीरगतजरामरणादिधर्मानन्वयेऽप्यात्मनि शरीरसम्बन्धप्रयुक्त नानाविधसुखदुःखभोक्तृत्वं दृष्टम्, तद्वत्परमात्मनोऽपि प्रसज्येत । नैवम् । न हि चिदचिच्छरीरकेण भगवताऽवश्यमेव सुखदुःखभोक्ता भवितव्यम् । शरीरं चेत्सुखदुःखभोगं साधयत्येवेति नियमाभावात् । न च भोगायतनत्वं शरीरलक्षणम्, स्थावरशरीरेष्वव्याप्तेः । किन्तु चेतनापृथक्सिद्धविशेषणद्रव्यत्वमित्येव । एवं च ब्रह्मणश्चिदचिच्छरीरकत्वश्रुत्या न कर्मफलभोक्तृत्वादिप्रसङ्गोऽपहतपाप्मत्वादिना श्रुतस्य । किन्तु अपृथक्सिद्धसर्वचेतनाचेतनविशिष्टत्वमेव । अयं हि परमात्मनो महिमा, स्वसम्बन्धाभावे चेतनाचेतनयोर्न स्वरूपसत्ताऽपि सम्भवति । स्वयमेव तु सर्वदाऽपृथक्सिद्धाधारः शेषी च सर्वस्य सत्तां निर्वहतीति । प्रपञ्चितं चेदमधस्तात् । 'न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति' इति श्रुतिस्तु जीवविषया, बन्धस्य प्रस्तुतत्वात् । कर्मकृतशरीरविषया चेयं न शरीरसामान्यविषया । एवं च ब्रह्मणश्चिदचिद्विशिष्टस्योपादानत्वादिकं निरवद्यत्वश्रुत्यविरुद्धमेव ।

अत्राहुः—कारणश्रुतेर्विशिष्टविषयत्वं नाध्यवसितुं शक्यम् ।

यतोऽवधारणद्वयेनाद्वितीयपदेन च निर्धूता निखिला विशेषाः। तथा च सन्मात्रेऽधिष्ठानेऽविद्यया कल्पितत्वमेव भेदप्रपञ्चस्य प्रतीयते। अतश्च कारणवादिन्याः श्रुतेरविद्योपहितविषयत्वेन निर्दोषश्रुतेः पारमार्थिकदोषराहित्यपरत्वेनैव चाविरोध उन्नेय इति। मैवम्। एवमपि विशिष्टपरत्वं हि कारणवाक्यस्य प्रसज्यते, अविद्योपहितस्यैवोपादानत्वाभ्युपगमात्। अविद्योपहितपरत्वं वा तस्य कुतोऽध्यवसीयते। नह्यविद्योपस्थापकं किञ्चित्पदमत्र दृश्यते। श्रुत्यन्तरादिति चेत् किं तत् श्रुत्यन्तरम्?। **'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्' 'नासदासीन्नो सदासीत्तदानीं तम आसीत्' 'अनृतेन हि प्रत्यूढाः' 'तेषां सत्यानां सतामनृतमपिधानम्'** इत्यादिकमिति चेत्। आन्यपर्येणैषां वाक्यानां भवदभिमतसदसदनिर्वचनीयाविद्याख्यदोषविषयत्वाभावात्।

तथाहि—**'अस्मान्मायी सृजते विश्वमेतत्'** इति पूर्ववाक्ये तावदेतच्छब्दनिर्दिष्टान्मायाख्यादुपादानादचेतनप्रपञ्चस्य सर्गः प्रस्तुतः। तत्र कोऽसौ मायाख्यः पदार्थः स्रष्टा च मायी क इत्यपेक्षायां मायामायिपदविवरणार्थं **'मायां तु'** इत्यत्र मायाशब्दितस्य त्रिगुणप्रकृतित्वं मायिनश्च सर्वेश्वरत्वमेव विधेयम्। न तु जगदुपादानस्य मिथ्यात्वम्। लोके ह्यसत्यार्थप्रतिभासमात्रसाधनं मन्त्रादिर्माया, साधनानुष्ठानायत्ततत्सिद्धिमांश्चापूर्णः कश्चिज्जीवो मायी दृश्यते। नैवमत्रासत्यार्थप्रतिभासमात्रसाधनं मायाशब्दितम्। किन्त्वत्याश्चर्यविविधपरमार्थकार्यकारिणी त्रिगुणात्मिका प्रकृतिरेव तथा। मायिशब्दितश्च नापूर्णः कश्चित् क्षेत्रज्ञः, किन्तु सर्वेश्वर एवेति श्रुतेर्हार्दम्। महेश्वरमित्युक्त्या मुक्तस्यापि न जगद्व्यापार

इति सूच्यते । किञ्च मायाशब्दस्य न मिथ्यात्वमात्रं प्रवृत्ति-निमित्तम् । भूदलनाम्बुधारादौ मिथ्याभूतेऽपि मायाशब्दप्रयोगस्यादर्शनात् । नाप्याश्चर्यत्वसहितमिथ्यात्वम् । आश्चर्यत्वमात्रस्य लाघवात्प्रवृत्तिनिमित्तत्वसम्भवे मिथ्यात्वस्य प्रवृत्तिनिमित्तघटकताया अयोगात् । अत एवार्थक्रियाकारिष्वेव मेघोदयादिषु मायाशब्दः पौराणिकैः पठ्यते । मायामृगस्य च मारीचस्य रामशरवध्यत्वमप्यमिथ्यात्वादेव । मिथ्यात्वे हि 'नायं मृगः' इति लक्ष्मणवाक्यजन्यज्ञानेनैव निवृत्तिरभविष्यदिति न शरप्रयोगापेक्षा । न च मायामृगस्तु वाक्यजन्यज्ञानेनैव बाधितः, प्रतिभासते केवलम्, अधिष्ठाननिवृत्त्यर्थमेव तु शरप्रयोग इति वाच्यम् । बाधितानुवृत्तौ दग्धपटवदकार्यकरत्वप्रसङ्गात् । अत्र तु 'धावनं सुदूरं समाकर्षणमुच्चैराक्रन्दनमित्यादयो बहुधो व्यापाराः मायामृगस्य बाधकज्ञानानन्तरमपि संदृश्यन्ते इति ।

'नासदासीन्नो सदासीत् तदानीं तम आसीत्' इत्यत्रापि सदसतोः स्थूलचिदचितोः कार्यावस्थयोर्निषेधः सूक्ष्मावस्थायाश्चित्समष्टिगर्भाया मूलप्रकृतेस्तमःशब्दिताया सद्भावश्च प्रतिपाद्यते । न तु सदसदनिर्वचनीयाऽविद्या । सदसन्निषेधश्रवणमात्रेण तत्परत्वादरे तु 'अनादि मत्परं ब्रह्म न सत्तन्नासदुच्यते' इत्यत्रापि शुद्धात्मनः सदसदनिर्वचनीयत्वं निर्वाच्यं भवेत् ।

'अनृतेन हि प्रत्यूढाः' इत्यत्र च 'यथा हिरण्यनिधिं निहितमक्षेत्रज्ञाः' इत्यादिपूर्ववाक्यप्रस्तुतनित्यसर्वगतपरमात्मस्वरूपाज्ञानं प्रति हेतुभूतमनृतशब्दितसांसारिकफलपुण्यपापलक्षणकर्महेतुकमपरिच्छिन्नज्ञानत्वस्वभावविप्रतीपं सङ्कुचितज्ञानत्वं जीवानां

प्रतिपाद्यते । अनृतशब्दश्चानित्यत्वं प्रवृत्तिनिमित्तीकृत्य स्वरूपतः फलतश्चानित्ये पुण्यपापरूपे कर्मणि वर्तते । **'अनाशी परमार्थश्च'** इति भगवत्पराशरवचनपर्यालोचनया च नाशित्वलक्षणमेवापरमार्थत्वमध्यात्मशास्त्रेषु विवक्षितमिति ज्ञायते । अनृतयोरपि पुण्यपापयोः फलभोगनियमाभिप्रायेण तु **'ऋतं पिबन्तौ'** इत्यत्र ऋतशब्देन व्यपदेशः । एवं च **'अनृतेन हि'** इत्यादिश्रुतावनृतशब्दो न मिथ्यावाची किन्तु कर्मवाचीति स्थितम् । **'तेषां सत्यानां सतामनृतमपिधानम्'** इत्यत्र च भगवत इव तदीयकल्याणगुणानामपि परमार्थसतां तिरोधायकमनादिकालार्जितं कर्मैवेति विवक्षितम् ।

एवमविद्याशब्दोऽपि **'क्षरं त्वविद्या'** इत्यत्र **'क्षरं प्रधानम्'** इति वाक्यान्तरानुरोधेन प्रधानपर एव । प्रधानं च न मिथ्या । **'त्रिगुणं तज्जगद्योनिरनादिप्रभवाप्ययम्'** इत्यादौ नित्यत्वप्रतिपादनात् । प्रधानपुरुषयोर्नित्ययोर्ब्रह्मणि लयप्रतिपादनं तु नामरूपविभागप्रहाणपूर्वकं परमात्मन्यविभागेनावस्थानमभिप्रेत्य । अन्यत्र चाविद्याशब्दो विद्यान्यत्वविद्याविरोधित्वाद्याकारेण भ्रमकर्मादौ तत्र तत्र प्रयुज्यत इति न ततोऽपि भवदभिमतानिर्वचनीयाविद्यासिद्धिः ।

किञ्च—ब्रह्मणोऽविद्याकल्पनं स्वाभाविकसार्वज्ञ्यादिपरश्रुतिविरुद्धं निरवद्यत्वश्रुतिविरुद्धं च । न च—निरवद्यत्वश्रुतिः परमार्थतया दोषो नास्तीत्येवंपरा, अविद्या त्वपरमार्थ इति न विरोध इति वाच्यम् । न हि भवन्मते परमार्थतया कश्चिद्दोषो वर्तते, येन स निषिध्येत ब्रह्मणि । निरवद्यत्वश्रुतिश्च दोषत्वावच्छिन्नदोषसामान्यनिषेधिकैव स्वरसतः प्रतीयत इति न परमार्थत्वरूपव्यधिकर-

णधर्मावच्छिन्नप्रतियोगिताकदोषाभावपरत्वपरिकल्पन तस्या सञ्जाघटीति । अतो ब्रह्मण्यविद्यादोषपरिकल्पन निरवद्यत्वश्रुतिविरुद्धमेव । उक्त च तत्त्वमुक्ताकलापे—'मायाऽविद्यादिशब्दै॰ प्रकृतिरभिहिता ज्ञानकर्मादयो वेत्येतत्तत्प्रदेशे स्फुटविदितमतो न त्वदिष्टाऽस्त्यविद्या । किञ्चाविद्यादिशून्य पर इति विविधाम्नायकण्ठोक्तमर्थं क्षेप्तु मायादिशब्द क्षम इति वदत॰ स्यादविद्या तवैव ॥' इति ।

यत्तु—निरवद्यत्वश्रुत्यविरोधायेशजीवयोर्मायाविद्योपाधिभिदाकल्पन—मायोपाधिरीश्वरोऽविद्योपाधिर्जीव । तत्राविद्या स्वकल्पिताना जीवाना सत्य तिरोधाप्यासत्य सत्यत्वेन प्रतिभासयति । दुःख च दोग्धि । माया तु सत्यमसत्य च सम्यगेव दर्शयन्ती दु ख चानुत्पादयन्ती ब्रह्मणो विश्वव्यापारलीलारस केवल प्रसूते । माया परभ्रमहेतुरविद्या च स्वभ्रमहेतुरिति । तदप्यापातरमणीयम् । मोहनीयानामदर्शने मोहनप्रवृत्तेरयोगेन मोहनीयजीवदर्शनहेत्वविद्यादोषान्वयस्य ब्रह्मण्यपि प्रसक्तेः । ननु मायैव जीवदर्शनहेतुरिति चेदत्र ब्रूम । मायया क्रीडनप्रवृत्ता हि न स्वय मुह्यन्ति । किन्त्वन्यानेव मोहयन्ति केवलम् । न हि वस्तुतोऽन्ये मोहनीयाः वर्तन्ते । मोहकरणोपकरणभूतान् जीवादीन् यदि कल्पितत्वेन पश्येन्माययेश्वरस्तर्हि कथ तान् मुमोहयिषेत् तैश्चिक्रीडिषेद्वा । यदि मायैवाऽऽविद्यान् क्रीडनपरिकरभूतान् जीवादीन् सत्यत्वेन दर्शयन्ती संव्यवहारं प्रयोजयेत्तर्हि सैवाविद्या सवृत्ता । न चापुरुषार्थोपरमार्थदर्शनहेतुरेवाविद्या, माया त्वपरमार्थदर्शनहेतुरपि नापुरुषार्थहेतुरिति नाविद्यात्वमस्या इति वाच्यम् । अपुरुषार्थाहेतु-

त्वेऽनुच्छेद्यतया ब्रह्मभिन्नाया मायाया अपि नित्यत्वप्रसङ्गादद्वैतभङ्गापत्तेः। किञ्चापुरुषार्थदुःखाद्यजनकस्यापि द्विचन्द्रज्ञानहेतोर्दोषस्य यथा निरसनीयत्वं, एवमपरमार्थजीवादिदर्शनहेतोरपरमार्थभूताया मायाया अपि निरसनीयत्वमेवेति तदन्वयोऽपि हेयप्रत्यनीकत्वश्रुतिपराहत एव। उक्तं च तत्त्वमुक्ताकलापे—'निर्दोषश्रुत्यबाधप्रणयिभिरुदितो ब्रह्मजीवानुबन्धी मायाऽविद्याविभागोऽप्यफल इह परोन्मोहनार्थो हि माया। मिथ्यार्थान् दर्शयन्ती विहरणमपि तैस्तादृशं भावयन्ती मायैव स्यादविद्या न कथमितरथा स्यादनुच्छेदनीया॥' इति। अतो निर्विकारत्वादिश्रुत्यविरोधेन ब्रह्मणो जगदुपादानत्वश्रुतेर्निर्वाहोऽविद्योपाध्याश्रयणेन न सम्भवति। चिदचिद्विशिष्टत्वावलम्बनेन तु स्यादिति सिद्धम्।

चिदचिद्विशिष्टत्वं च जगत्कारणस्य ब्रह्मणः श्रुतिस्मृतिभ्यामवगम्यते। तथा हि—'यस्यात्मा शरीरम्' 'यस्य सर्वाणि भूतानि शरीरम्' 'यस्य पृथिवी शरीरम्' 'यस्यापः शरीरम्' 'यस्याव्यक्तं शरीरम्' 'यस्याक्षरं शरीरम्' 'यस्य मृत्युः शरीरम्' 'एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः' इत्यन्तर्यामिब्राह्मणसुबालोपनिषदोस्तावत्कार्यकारणोभयावस्थस्य चेतनाचेतनप्रपञ्चस्य परब्रह्मशरीरत्वमुच्यते। तैत्तरीये च 'तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः' इति आत्मशब्देन निर्देशात् कारणस्य ब्रह्मणः सूक्ष्मचेतनाचेतनशरीरकत्वमर्थसिद्धम्। आत्मशब्दश्चायं न स्वरूपवचनो मृदात्मको घट इत्यादाविव, किन्त्वन्तर्यामिवचन इति शारीरशब्देन सामानाधिकरण्यादवसीयते 'तस्यैष एव शारीर आत्मा' इति।

श्रीविष्णुपुराणे च—'स ईश्वरो व्यष्टिसमष्टिरूपोऽव्यक्तस्वरूपः प्रकटस्वरूपः । सर्वेश्वरः सर्वदृक् सर्ववेत्ता समस्तशक्तिः परमेश्वराख्यः ॥' इति स्थूलसूक्ष्मावस्थचेतनाचेतनशरीरकत्वमुक्तम् । सर्वरूपत्वं चेदं सर्वशरीरकत्वं न तु सर्वाभेदः । परमचेतनस्याचेतनस्वरूपत्वायोगात् । सर्वस्वरूपत्वे सर्वस्य नियन्तृत्वादेरयोगाच्च । चेतनाचेतनशरीरकत्वेन ब्रह्मण एव कार्यकारणभावो शुकमुनिना चोक्तः—'स एव सृज्यः स च सर्वकर्ता स एव पात्यत्ति च पाल्यते च । ब्रह्माद्यवस्थाभिरशेषमूर्तिर्विष्णुर्वरिष्ठो वरदो वरेण्यः ॥' इति । मनुस्मृतौ च प्रलयान्ते नारायणः सिसृक्षुश्चिदचिन्मिश्रं विश्वं स्वशरीरभूतादव्यक्तात्सूक्ष्मचिन्मिश्रान्महदादिक्रमेणाप पृथिवीगर्भाः सृष्ट्वा सृष्टेषु तत्त्वेषु परस्परं सम्मिश्रीकरणेनाण्डोत्पादनानुकूलं वीर्यं सम्पाद्य तस्मिन् देवादिव्यष्टिसर्गद्वारभूतं चतुर्मुखं स्वनाभिकमलादुत्पाद्य स्वयं च तदन्तर्यामितयाऽवस्थित इति प्रतिपादित आरम्भ एव सप्तश्लोक्याम् ।

ननु 'यस्याव्यक्तं शरीरम्' इत्यादिना सूक्ष्माचिद्विशिष्टत्वमेव परमकारणस्य ब्रह्मणो लभ्यते, न तु सूक्ष्मचिद्विशिष्टत्वमपि । नैवम् । महाप्रलये समुपस्थिते प्राकृतानां लोकानां महातपःशुष्मादिभिर्विनाशे पृथिव्यादितत्त्वानां च स्वस्वपूर्वतनं उत्तरोत्तरस्य लये तत्तत्संयुक्तानां भद्रात्मस्वरूपाणामपि पूर्वपूर्वतत्त्वसङ्क्रमणक्रमेणातिसूक्ष्मेऽव्यक्ते सङ्क्रमात्सूक्ष्माचित्संसृष्टानिल्सूक्ष्मविशिष्टतायाः सिद्धेः । 'अव्यक्तादिविशेषान्तं चेतनाचेतनात्मकम्' इति भगवत्पराशरवचनेन च सर्वास्वेवावस्थासु चिद्गर्भतायाः अचेतने प्रतिपादितत्वादव्यक्तत्वादि कारणावस्थायामपि सूक्ष्मचिद्गर्भतायाः लाभात् ।

'दारुण्यग्निर्यथा तैलं तिले तद्वत्पुमानपि । प्रधानेऽवस्थितो व्यापी' इति प्रधानस्य चित्समष्टिगर्भताया उक्तत्वाच्च । 'यस्याव्यक्तं शरीरम्' इति सूक्ष्माचिद्विशिष्टत्वं प्रतिपाद्य 'यस्याक्षरं शरीरम्' इति सूक्ष्मचिद्विशिष्टता च ब्रह्मणि प्रतिपादितैव । सूक्ष्मचेतनसमष्टिवाची चायमक्षरशब्दः 'अव्यक्तमक्षरे लीयते अक्षरं तमसि लीयते तमः परे देव एकीभवति' इति श्रुतौ तद्गर्भायां मूलप्रकृतावुपचरितः । अयमर्थः—कार्योन्मुखं प्रधानमव्यक्तशब्दितं महाप्रलये कार्यानुन्मुखं सत् सूक्ष्मचिद्गर्भत्वेन विवेचयितुं योग्यमक्षरशब्दितं भवति । यदाऽतिसूक्ष्मदशापत्त्या चित्समष्टिगर्भत्वस्य स्थितस्यापि विवेकायोग्यता तदा तत्तमःशब्दितं भवति । न च 'अक्षरं तमसि लीयते' इति लयश्रुत्या सूक्ष्मचिद्गर्भत्वमेव निवर्तत इति वाच्यम् । अनादीनां बद्धात्मस्वरूपाणां नित्यत्वेन तद्गर्भताया अवर्जनीयत्वात् । लयश्रुतिस्तु सूक्ष्मतरावस्थापत्त्या विविच्य ग्रहणायोग्यत्वार्थिकैव । अत्यन्तसूक्ष्मावस्था तु अविभक्ततमःशब्दिता परमात्मनि विलक्षणगाढसंयोगलक्षणा, यस्यामवस्थायां परमात्मनैव संवेद्यस्वरूपा भवति सूक्ष्मचित्समुदायगर्भा मूलप्रकृतिस्तल्लीना ।

इयमेवाचित्समष्टिभूता मूलप्रकृतिर्महामायेत्युच्यते । तद्गर्भस्थश्च सूक्ष्मचेतनसमुदायः चित्समष्टिर्महापुरुष इति च । इमौ च महामायापुरुषौ सर्वाण्डकारणभूतौ । प्रलयकाले स्वाविभक्तयोश्चैतयोर्महामायापुरुषयोः प्रारीप्सिते सर्गे विविधकार्यौन्मुख्यफलं परस्परसंश्लेषविशेषं सम्पादयति तच्छरीरी परमात्मेत्युच्यते 'प्रकृतिं पुरुषं चैव प्रविश्यात्मेच्छया हरिः । क्षोभयामास सम्प्राप्ते सर्गकाले व्ययाव्ययौ ॥' इति । तस्माच्च चिदचित्समष्ट्योः संसर्ग-

विशेषात्सर्गाऽऽद्यकालिकादनेके प्रधानपुरुषा एवंदशभूता प्रत्य-ण्डमन्तर्गता महदादिक्रमेण प्रविभक्तविविधविचित्रभोग्यभोक्तृवर्ग-भोगस्थानादिकार्यजातनिर्वाहका जायन्ते । मूलप्रकृतेरनन्तायास्तत्त-त्प्रदेशभेदेषु महदादिकार्योन्मुखावस्थाप्राप्तेः प्रधानत्वव्यवहारः, तादृशप्रधानसंयुक्ताश्च जीवा प्रधानपुरुषा उच्यन्ते । समष्टिचेत-नाचेतनाद्यभिमानिदेवताना च सृष्टिद्वारतयोल्लेख कृतोऽस्ति साम्प्र-दायिकग्रन्थेषु । एव 'प्रकृति पुरुष चैव' इतिवचनबलात्सूक्ष्मा-चित इव चित्सूक्ष्मस्यापि सर्गाद्यकालेऽवस्थान सिद्धम् । अतश्चि-दचिन्मिश्रप्रपञ्चोपादानतायां प्रह्वनिष्ठायामचित्सूक्ष्मस्येव चित्सू-क्ष्मस्याप्यवच्छेदकत्व साधीय एव ।

एतेन—अचित्सूक्ष्मभूताविद्योपहितमेव ब्रह्म विवर्तोपादानम् । न तु कारणतावच्छेदकशरीरे चित्सूक्ष्मस्यापि निवेश । प्रमाणाभा-वात् । जीवस्तु तत्तदुपाधौ प्रतिबिम्बलक्षण एवेति प्रत्युक्तम् । कारणस्य ब्रह्मणोऽचिद्विशिष्टताया इव चिद्विशिष्टताया अपि निरु-क्तश्रुतिस्मृतिवचनेभ्यो लाभात् । रूपरूपिभिन्नस्य चैतन्यस्य प्रति-बिम्बायोगाच्च ।

यत्तु ब्रह्मैव चिदचिदीश्वररूपेण परिणमतीति यादवप्रकाशमत तत्रापि ब्रह्मण्येव सर्वविकाराणा परमार्थत प्रसङ्गेन निरवद्यत्वश्रु-तिविरोधस्तदवस्थ । चिदचिदीश्वराणा सादित्वमप्यापद्येत । तद-नादित्व च 'ज्ञाज्ञौ द्वावजावीशनीशौ' 'अजामेका लोहित-शुक्लकृष्णाम्' इत्यत्र श्रूयते । ननु शक्तिरूपेणैतेषां महाप्रलयेऽ-वस्थानाच्च सादित्व प्रसज्येत । नैषम् । का नाम शक्ति ? । यदि ब्रह्मणस्तत्तद्रूपेण परिणामसामर्थ्य तर्हि घटादेरिव मृत्परिणामस्य

सादित्वमवर्जनीयम् । यदि त्रीण्येव तत्त्वानि सूक्ष्मरूपेण सन्ति शक्तिशब्देनोच्यन्ते तर्हि सूक्ष्माणां तत्तदंशानामेव स्थूले तत्रतत्रोपादानतया सर्वस्य ब्रह्मपरिणामवादो भज्येत । ननु शक्तित्रयस्य ब्रह्मणो भिन्नाभिन्नत्वस्वीकाराद्ब्रह्मणो निर्विकारत्वमुपादानत्वं चेत्युभयोपपत्तिः । मैवम् । भिन्नत्वाभिन्नत्वयोर्विरुद्धयोरेकत्रासमावेशात् । उक्तं च तत्त्वमुक्ताकलापे—'ब्रह्मोपात्तान् विकारान् कतिचिदभिदधुश्चेतनाचेतनेशान् नैतद्युक्तं यदीशादनधिकमनघं निर्विकारं श्रुतं तत् । भिन्नाया ब्रह्मशक्तेर्विकृतय इति चेद्ब्रह्मजन्यत्वभङ्गो भेदाभेदोपपाद्यं सकलमिति मते सप्तभङ्गी न दूष्या ॥' इति ।

किञ्चाविद्याविशिष्टं ब्रह्मोपादानमित्यद्वैतिनः । 'अनिर्वाच्याविद्याद्वितयसचिवस्य प्रभवतो विवर्ता यस्यैते वियदनिलतेजोऽम्बुवनयः' इति हि ते वदन्ति । 'उपाधिविशिष्टं तत्तथै'ति भास्करीयाः । 'चिदचिदंशविभक्तं ब्रह्मद्रव्यमचिदंशेन विक्रियते, तद्विकारोपहितेन चिदंशेन संसरति' इति च तेषां प्रक्रिया । यादवप्रकाशीयास्तु 'सर्वात्मकं सद्रूपं ब्रह्म चिदचिदीश्वररूपांशत्रयशक्तिविशिष्टं समुद्र इव फेनबुद्बुदतरङ्गप्रभेदेन सावान्तरप्रभेदत्रिविधव्यष्टिभावेन परिणमति' इति वदन्ति । विशेषणानां चाविद्यादीनां स्वीकारेऽपि यथा परमते 'एकमेवाद्वितीयम्' इति श्रुत्यविरोधो निरूह्यते, एवं सूक्ष्मचिदचिद्रूपविशेषणाभ्युपगमेऽपि अविरोधः सुनिर्वहः । इयांस्तु विशेषः—परमते ब्रह्मण एवाविद्याद्यपुरुषार्थभाक्त्वमवर्जनीयम् । सिद्धान्ते तु सर्वावस्थायामपि समस्तचेतनाचेतननियमनलक्षणो महिमैव प्राप्नोतीति । 'विभूतिं प्रसवं त्वन्ये

मन्यन्ते सृष्टिचिन्तकाः । स्वप्नमायासरूपेति सृष्टिरन्यैर्विकल्पिता । इच्छामात्रं प्रभोः सृष्टिरिति सृष्टौ विनिश्चिताः ॥' इति माण्डूक्यकारिकायां च विभूतिशब्दितविविधरूपपरिणामपक्षस्य विवर्तपक्षस्य चान्यदीयत्वोपन्यासपूर्वकं सर्वशक्तस्य ब्रह्मणः सङ्कल्पमात्रकृता सृष्टिः परमार्था निर्विकारस्यैवेति पक्ष एव तत्त्वविदामनुमत इति प्रतिपाद्यते । अत्र प्रभुशब्देन सर्वविधसामर्थ्यवाचिना स्वयं निर्विकारमेव जगदुपादानं भवति ब्रह्मेति विवक्षितम् । निरवयवस्यैव तथात्वं च सूक्ष्मोपकरणीभूतयोश्चिदचितोः परमात्मशक्तित्वादुपपद्यते। स्मर्यते च तत् 'एकदेशस्थितस्याग्नेर्ज्योत्स्ना विस्तारिणी यथा । परस्य ब्रह्मणः शक्तिस्तथैतदखिलं जगत् ॥' इति । कार्योपयोग्यपृथक्सिद्धविशेषणं च शक्तिः । अतश्चिदचिद्विशिष्टब्रह्मकारणवाद एव श्रुतिस्मृत्यनुगुण इति सिद्धम् ।

'त्वत्तोऽस्य जन्मस्थितिसंयमान् विभो वदन्त्यनीहादगुणादविक्रियात् । त्वयीश्वरे ब्रह्मणि नो विरुध्यते तदाश्रयत्वादुपचर्यते गुणैः ॥' इति श्रीमद्भागवते गुणमयस्याचितो गुणपरवशस्य जीववर्गस्य शरीरतया परब्रह्मनियाम्यत्वात्सत्त्वादिगुणानां तत्प्रयुक्तकार्याणां च चिदचिच्छरीरद्वारा ब्रह्मसमीपगामित्वात्स्वरूपतो निर्गुणस्याविक्रियस्यापि कारणत्वसम्भवः प्रतिपाद्यते । सर्वेश्वरत्वेनागुणवश्यतया च सर्वशरीरकत्वेऽपि न साक्षात्सुखदुःखादेः प्रसङ्गः । 'अनीशया शोचति मुह्यमानः । जुष्टं यदा पश्यत्यन्यमीशम्' इति श्रुतेः । गुणत्रयवश्यस्य कुलालादेरिव भोगतृष्णामूलव्यापारविरहिणोऽपि परिपूर्णस्य सङ्कल्पमात्रकृतः सर्गादिलीलामात्रं सार्वभौमस्य कन्दुकाद्यारम्भ इवेतीश्वरशब्देन द्योत्यते ।

अभिन्ननिमित्तोपादानत्वोपयुक्तैः सार्वज्ञ्यसर्वशक्तित्वादिगुणैः स्वरूपतश्च बृहत्त्वं ब्रह्मशब्देन विवक्षितम् ।

शरीरगतावस्थाभेदेन विशिष्टस्योपादानोपादेयभावे सङ्कल्पतो निमित्तत्वे च दृष्टान्तः श्रूयते—'यथोर्णनाभिः सृजते गृह्णते च' इति । स्मर्यते च-'यथोर्णनाभिर्हृदयादूर्णां सन्तत्य वक्त्रतः । तया विहृत्य भूयस्तां ग्रसत्येवं जनार्दनः ॥' इति । यथोर्णनाभिर्विहारेच्छुः स्वान्तर्लीनं स्वांशभूतं तन्तुमास्यान्निष्कास्य विस्तार्य च तन्तुजालेन विहरन् पुनरुपसंहरति, एवं परमात्मापि लीलारसमनुबुभूषुः स्वांशभूते चेतनाचेतने प्रलयकालेऽतिसूक्ष्मदशापन्नया स्वाविभक्ते सङ्कल्पेन विविच्य समष्टिव्यष्टिरूपेण वितन्य विहृत्य चान्तत उपसंहरति । यथा बालानां मृद्गृहादेर्निर्माणवत्तद्विध्वंसनमपि लीलारूपमेवं संहारोऽपि लीलैव । लीलाया लक्षणमुक्तं सर्वार्थसिद्धौ—'प्रीतिविशेषप्रभवः स्वयंप्रियो व्यापारो लीला' इति । प्रीतिविशेषप्रभवत्वोक्त्या पूर्णानन्दस्यैव लीलाव्यापारे प्रवृत्तिरौत्सर्गिकीति ज्ञाप्यते । स्वयंप्रियत्वोक्त्या च प्रयोजनान्तरानभिसन्धिपूर्वकत्वम् । स्मरन्ति च सर्गादेर्विहरणमात्ररूपतां व्यासादयः—'त्वं न्यञ्चद्भिरुदञ्चद्भिः कर्मसूत्रोपपादितैः । हरे विहरसि क्रीडाकन्दुकैरिव जन्तुभिः ॥' 'अप्रमेयोऽनियोज्यश्च यत्र कामगमो वशी । मोदते भगवान् भूतैर्बालः क्रीडनकैरिव ॥' इति । सूत्रं च—'लोकवत्तु लीलाकैवल्यम्' इति । 'भोगार्थं सृष्टिरित्यन्ये क्रीडार्थमिति चापरे । देवस्यैष स्वभावोऽयं आप्तकामस्य का स्पृहा ॥' इति माण्डूक्यकारिकायां च क्रीडाशब्दः क्रीडाजन्यधनप्रशंसादिप्रयोजनपरः । अयमर्थः—अपूर्णकामस्यैव भोगार्था

सृष्टिरित्येके । सम्पन्नस्यापि लोके प्रशंसादिफलान्तरकामनया यथा कन्दुकारम्भ, एवं सर्गादिक्रीडाजन्यफलान्तरकामनया सर्गादौ प्रवृत्तिरिति चापरे । अवाप्तसमस्तकामस्य प्रयोजनान्तरकामनाया असम्भवेन देवस्य क्रीडाशीलस्य ( दिवु क्रीडायाम् ) भगवतो लोकहितार्थं स्वभाव एव क्रीडारूपः सर्गादिव्यापार इति सिद्धान्तः । सर्गादेर्लीलारूपत्वस्यैव निषेध इत्यर्थस्तु श्रुतिस्मृतिसूत्रैर्विरुद्ध्येत ।

सम्प्रदायप्रबन्धेषु च निखिलजगज्जन्मादिहेतुत्वं जगद्व्यापारस्य लीलात्वं च वर्णितमस्ति—'ब्रह्माण्डकोटिप्रभवादिहेतुस्त्वं कारणानामपि कारणं हि' 'त्वं हि साक्षात्परब्रह्म क्षराक्षरपरं विभु । अनेककोटिब्रह्माण्डोदयस्थित्यन्तकारणम् ॥' 'वासुदेवोऽयमेवास्ति भगवान् जगतः प्रभुः । स्वातन्त्र्येण करोत्यस्य भवस्थित्यप्ययान् यतः ॥ कालकर्मस्वभावानां मायायाश्चैव आदितः । कर्ताऽस्तीत्युच्यतेऽनादिरादिकर्तेश्वरेश्वरः ॥' 'स्वामिंस्त्वं परमेश्वरश्च परमं ब्रह्मासि वेदोदितं धृत्वादौ पुरुषाकृतिं विधिमरीच्याद्विक्रमेणाखिलम् । विश्वं स्थावरजङ्गमात्मकमिदं शक्त्या सृजस्यात्मनः' 'मायायाः परतः परश्च भगवान् सर्वेश्वरः श्रीहरिः स त्वं सुप्रकृतौ प्रविश्य कुरुषे नैकाण्डसर्गादिकम्' 'मायापरोऽपि जगदुद्भवपालनान्तलीलार्थमात्तविधिविष्णुशिवादिरूपः' 'उक्तस्ते सम्प्रदायोऽथ श्रीकृष्णोऽस्तीष्टदेवता । परमात्मा परब्रह्म सर्वकारणकारणम् ॥' 'नैकाण्डसर्गस्थितिनाशलीलाविधायकापाङ्गनिरीक्षणं च' 'नैकाण्डजननस्थानलयलीलश्च निर्गुणः' 'तत्र स्थितोऽस्ति भगवान् सर्वकारणकारणम् । अनन्तकोटिब्रह्माण्डोत्पत्तिस्थितिलयक्रियः ॥' इत्यादौ ।

ननु लीलारसानुभवार्थश्चेत्सर्गादिव्यापारस्तर्हि भज्येतावाप्तसमस्तकामत्वम् । स्थविष्ठमिदं चोद्यम् । अवाप्तसमस्तकामत्वं हि नाम सदा स्वाधीनसर्वविधभोगोपकरणसम्पत्तिमत्त्वम् । अत एव सङ्कल्पमात्रात्सर्वेष्टसिद्धिः । नापि प्रकृतिपुरुषादिसहकारिसापेक्षे सर्गादौ ब्रह्मणः स्वातन्त्र्यहानिः । करादेरिव तेषामपि स्वरूपस्थित्यादेस्तादधीन्यात् । यथा महावीरो निरायुध एकाक्येव स्वभुजबलेन सङ्ग्रामे निरस्यन् प्रतिभटान् स्वतन्त्रो भवति विजये, एवमत्रापि भाव्यम् । निष्क्रियत्वश्रुतिस्तु पुण्यपापलक्षणगुणकर्मनिषेधार्थिका ।

ननु–एवमपि कञ्चन सुखिनं कञ्चन दुःखिनं च सृजतो वैषम्यं त्रिविधतापबहुलं संसारं सृजतो नैर्घृण्यं च स्याताम् । मैवम् । न हि साम्यकारुण्यादय एव गुणा भगवतः श्रुताः, किन्तु यथाकर्मफलप्रदत्वादयोऽपि । एवं च पूर्वपूर्वभवार्जितशुभाशुभकर्मानुगुण्येन देवादिविषमसृष्टिं कुर्वतो न वैषम्यम् । आश्रयणीयत्वे च समत्वं गीयते–'समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः । ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहम् ॥' इति । विपाकदशापन्नानां विविधविचित्रकर्मणां फलभूतेन दुर्विषहानन्तदुःखजातेन मोमुह्यतो जीवाननन्तान्विलोक्यातिमात्रप्रसृतेन कारुण्येन तदुज्जीवनार्थमवतारादिकं कृत्वा रक्षितुं प्रयतत इति न नैर्घृण्यमपि । तथा च सूत्रं–'वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथाहि दर्शयति' इति । सर्गादिव्यापारस्य लीलारूपस्य जीवेषु कारुण्यमूलत्वं च बहुलं सम्पद्यते । प्रलये ह्यतिमात्रसङ्कुचितज्ञान उपसंहृतकरणकलेवरो भोगमोक्षप्रवृत्त्यनर्होऽचित्समः प्रकृतिलीनो वर्तते जीववर्गः । तद्विषयात्कारुण्याद्भोगमोक्षप्रवृत्त्यु-

पयुक्तं ज्ञानविकासहेतुभूतं करणकलेवरग्रामं सृजति प्रभुः । तथा च शुकवचनम् 'बुद्धीन्द्रियमनःप्राणान् जनानामसृजत्प्रभुः । मात्रार्थं च भवार्थं च आत्मनेऽकल्पनाय च ॥' इति ।

हिताहितावबोधनार्थं वेदांश्च प्रवर्तयति चतुर्मुखादिद्वारा । प्राप्तकरणकलेवरं च जीवमन्तः प्रविश्य सत्तामापाद्य हिताहितप्रवृत्तिनिवृत्तिशक्त्युद्बोधनादिना रक्षति च । 'विचित्रा देहसम्पत्तिरीश्वराय निवेदितुम् । पूर्वमेव कृता ब्रह्मन् हस्तपादादिसंयुता ॥' इत्युक्तप्रकारेण स्वाश्रयणोपकरणतया प्रवृत्तं करणकलेवरादिकं पूर्वपूर्ववासनाबलेनाप्राप्तशब्दादिविषयप्रवणं कुर्वन् जीवः स्वाज्ञारूपं विधिनिषेधशास्त्रं समुल्लङ्घ्यातिमात्रविपरीतप्रवृत्तो यदा भवति, तदा भगवान् विपरीतप्रवृत्तिहेतुभूतं करणकलेवरादि संहृत्य प्रवृत्तिनिवृत्त्यक्षमं तं करोति तद्धितेच्छयैव । यथा पिता पुनमविनीतमतिमात्रविपरीतप्रवृत्तं निबध्य कारागारे विनिक्षिपति तद्वदिति । एवं च भगवत्कर्तृकस्य सर्गादिव्यापारस्य स्वार्थत्वं परार्थत्वं चेति स्थितम् । (स्वार्थो लीला परार्थो जीवरक्षा) सर्वोऽप्ययमर्थो हरिवाक्यसुधासिन्धौ स्पष्टमुक्तो भगवता ।

एवं जगत्कारणत्वं ब्रह्मणः सुनिरूपितम् । उपादानं निमित्तं च सहकार्यपि तन्मतम् ॥ सूक्ष्मावस्थाऽचिच्चिदात्मकं तूपादानमिष्यते । स्थूलावस्थाचिच्चिदात्मकं तु कार्यं जगच्छ्रुतम् ॥ अतो ब्रह्मानन्यभावात्तज्ज्ञानाज्ज्ञातताऽस्य तु ।

---

१ भीयन्त इति मात्रा शब्दादयो विषया देहा वा । भव –स्वर्गं ऐहिकामुष्मिकभोगो वा । आत्मा अध्यात्मज्ञानं आत्मसत्ता वा । अकल्पनं मोक्षः । देहादिसाध्यैहिकामुष्मिकफलभोगार्थं आत्मज्ञानसाध्यमोक्षार्थं, च जीवानां उपकरणजातं सृष्टवान् प्रभुरित्यर्थः ।

स्यान्निमित्तं च सङ्कल्पविशिष्टं स्वयमेव तु ॥ सहकारि च कालादिविशिष्टं भवति स्वयम् । कालादीनां च भगवच्छक्तित्वान्न स्वतन्त्रता ॥ पूर्णकामोऽपि जीवानां हितायैव सृजत्यसौ । जीवकर्मापेक्षया तु वैषम्यं सर्गकर्मणि ॥ नापेक्ष्य सृजतः कर्म पारतन्त्र्यं भवेत्प्रभोः । जीवगोचरसङ्कल्पो यतः कर्मेति शब्द्यते ॥ स्वाज्ञोल्लङ्घनकृद्दण्डधारणं गुण एव हि । अतो नैर्घृण्यमपि न प्रसज्येतेशितुः सदा ॥ स्याच्चानायासरूपेयं लीला सृष्ट्यादिका प्रभोः । फलान्तरानपेक्षा च क्रिया लीलेति शब्द्यते ॥ पूर्णकामस्यैव लीलाप्रवृत्तिर्दृश्यते यतः । ततश्च ब्रह्मणोऽपूर्णत्वादि न स्यात्प्रकुर्वतः ॥ कारणत्वप्रसक्तानां दोषाणां विनिवारणम् । सत्यज्ञानादिवाक्येन क्रियते परमात्मनि ॥ अतः शोधकवाक्यत्वप्रथामेतदुपैति च । तत्प्रकारं समासेन प्रसङ्गाद्ब्रूमहेऽत्र च ॥

## सत्यज्ञानादिवाक्यविचारः ।

उपादानं हि लोके विकारास्पदं जडं परिच्छिन्नं च दृष्टम् । कर्ता च सुखदुःखादिविकारान्वितः किञ्चिज्ज्ञोऽपूर्णश्च । ब्रह्मणश्चोपादानं निमित्तं चाभिमतं विश्वसर्गे । अतस्तदपि विकाराद्यास्पदं स्यादिति कारणत्वसामान्येन प्रसक्तानामाशङ्कानां निरसनक्षमं च सत्यज्ञानादिवाक्यम् ।

नानापरिणामभाक्त्वं कर्मप्रयोज्यधर्मान्वयित्वं वा विकारित्वम् । यथा मृदादेर्घटादिरूपाः परिणामभेदाः क्षेत्रज्ञकर्मानुसारिणो विकारा भवन्ति । जीवस्य तु स्वरूपतोऽपरिणामस्यापि रागद्वेषप्रयत्नादयः कर्मप्रयोज्या भवन्ति विकाराः । तत्र निर्विकारत्वपरेण तु सत्य-

पदेन ब्रह्मणः कारणत्वप्रयुक्तं विकारित्वं व्यावृत्तम् । विशेषणीभूतचिदचिद्द्वारकावस्थान्वयेन कारणत्वं निर्विकारस्यापि सम्भवतीति च सत्यपदस्य तात्पर्यम् । एवं ज्ञानपदेनासङ्कोचात्स्वरूपतः स्वभावतश्चासङ्कुचितज्ञानत्वप्रतिपादकेनोपादानत्वप्रसक्तं जडत्वं निमित्तत्वप्रसक्तं किञ्चिज्ज्ञत्वं च निरस्तं भवति । एवमनन्तपदेनोपादानताप्रसक्तं परिच्छिन्नत्वं निमित्तत्वप्रसक्तमपूर्णत्वं च व्यावर्तितं भवति । अनन्तपदं हि त्रिविधपरिच्छेदराहित्यमाह । तत्र वस्तुपरिच्छेदः सर्वात्मत्वलक्षणोऽनवगुणवत्त्वलक्षणो वा । घटपटादेर्हि वस्तुतः परिच्छिन्नस्य परस्परं व्यावृत्तबुद्धिशब्दगोचरत्वं इदमिदं नेति । ब्रह्मणस्तु सर्वात्मत्वेन सर्वैर्भावैः समानाधिकरणव्यपदेशो दृश्यते 'ज्योतींषि विष्णुर्भुवनानि विष्णुर्वनानि विष्णुर्गिरयो दिशश्च । नद्यः समुद्राश्च स एव सर्वं यदस्ति यन्नास्ति च विप्रवर्य ॥' इति । एतदनन्तरपूर्वश्लोके 'यदम्बु वैष्णवः कायस्ततो विप्र वसुन्धरा । पद्माकारा समुद्भूता पर्वताब्ध्यादिसंयुता ॥' इत्यत्र भगवच्छरीरभूताप्परिणामभूतायाः पृथिव्यास्तच्छरीरत्वमर्थसिद्धमुपक्षिप्यानन्तरं सामान्याधिकरण्यव्यपदेशः कृतो 'ज्योतींषि' इत्यादिना । अतः शरीरात्मभाव एव अस्तिनास्त्यात्मककृत्स्नचेतनाचेतनवस्तुसामानाधिकरण्ये निमित्तमवगम्यते । 'सर्वगत्वादनन्तस्य स एवाहमवस्थितः' इति प्रह्लादवचनेन च शरीरात्मभाव एव सामानाधिकरण्यव्यपदेशहेतुरन्याख्यायते । गीतायां च 'वेत्तासि वेद्यं च परं च धाम त्वया ततं विश्वमनन्तरूप' 'अनन्तवीर्यामितविक्रमस्त्वं सर्वं समाप्नोषि ततोऽसि सर्वः' इति शरीरभूते सर्वस्मिन् आत्मतया व्याप्तिरेव

ब्रह्मणः सर्ववस्तुसामानाधिकरण्यनिर्देशे सर्वशब्दवाच्यत्वे च निदानमिति प्रतिपादितम्। एवं तत्र तत्र सामानाधिकरण्यव्यपदेशे शरीरात्मभावस्तत्प्रयोजको मुक्तकण्ठं तात्पर्यवृत्त्या वा प्रतिपाद्यत इति स्थितम् ।

छान्दोग्ये च 'ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा' इति चेतनाचेतनात्मकस्य सर्वस्य जगतो ब्रह्मशरीरत्वं ब्रह्मणश्च सर्वं प्रत्यात्मत्वमुपक्षिप्य सर्वान्तर्गते श्वेतकेतौ ब्रह्मात्मकत्वस्य 'तत्त्वमसि' इति सामानाधिकरण्येनोपसंहारो दृश्यते । एतेन सच्छब्दितेन ब्रह्मणेदं प्रजासामान्यं आत्म्यं—व्याप्यम् । यथा शरीरं जीवेन । तच्छरीरमिति यावत् । तत् ब्रह्मात्मकमेवेदं चेतनाचेतनात्मकं जगत् सत्यं—प्रामाणिकम् । न तु स्वनिष्ठमब्रह्मात्मकम् । यथा मृन्मयं घटशरावादि मृदात्मकमेव प्रामाणिकं न तु मृद्भिन्नत्वेन । यद्वा तत् सच्छब्दनिर्दिष्टं ब्रह्मैव सत्यं—स्वरूपतः स्वभावतो वा कदापि विक्रियानर्हत्वात् । तदेव ब्रह्म सर्वात्मभूतमित्यर्थः । एवं शरीरात्मभावं प्रतिपाद्य सामानाधिकरण्येन व्यपदेशात् 'तत्त्वमसि' इति शरीरात्मभावपरमेव । त्वमादिसर्वनाम्नामपि ब्रह्मपर्यन्तवाचित्वख्यापनार्थश्च त्वंशब्दघटितः समानाधिकरणव्यपदेशः । अतः सर्वशरीरकत्वेन ब्रह्मणः सर्ववस्तुसामानाधिकरण्यव्यपदेशार्हत्वलक्षणो वस्त्वपरिच्छेद उपपन्नः ।

यत्तु मतम्—चेतनेन सामानाधिकरण्यव्यपदेशो ब्रह्मणः स्वरूपैक्यपरः, ब्रह्मण एवान्तःकरणोपहितस्य जीवभावात् । अचेतनेन तु बाधार्थः, सन्मात्रेऽधिष्ठानेऽविद्यापरिणामस्य वियदादेरचेतनप्रपञ्चस्याध्यस्तत्वात् । यथान्धकारे स्थाणौ चोरभ्रान्त्या भीतस्य भ्रमापनोदनार्थं 'चोरः स्थाणुः' इति प्रयुज्यमानस्य वाक्यस्य

चोरत्वेन प्रतीयमानमधिष्ठान चोरनिवृत्तिमदिति बाध एव तात्पर्यम् । एव 'सर्वं खल्विद ब्रह्म' इति सामानाधिकरण्य नानाभेदवत्तया प्रतीयमानमधिष्ठान कल्पितभेदनिवृत्तिमदिति बाधपरमेवेति । तन्न समीचीनम् । सर्वशब्देनानेन चेतनाचेतनवस्तुसमुदायस्यैव परामर्शात् । इदशब्दितो हि प्रपञ्चश्चिदचिद्रूपः । 'ऐतदात्म्यमिद सर्वम्' इति श्रुत्यन्तरे सर्वशब्देन 'सदेव सौम्येदम्' 'सन्मूला सौम्येमा सर्वा प्रजा' इति पूर्वप्रक्रान्त चेतनाचेतनोभय परामृश्योभयस्यैकरूपस्यैव ब्रह्मात्मकत्वस्य प्रतिपादितत्वादत्रापि उभयस्यैकरूपमेव ब्रह्मात्मकत्व विवक्षितम् । यथा 'ऐतदात्म्यमिद सर्वम्' इत्यत्र सर्वशब्दश्चेतनविषयोऽपि, एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाया उपपत्तये चेतनाचेतनयोर्द्वयोरेव ब्रह्मात्मकत्वस्य विवक्षितत्वात्, एव 'सर्वं खल्विद ब्रह्म तज्जलानिति शान्त उपासीत' इत्यत्र शान्त्यर्थब्रह्मात्मकत्वोपदेशे सर्वशब्दोऽपि जीवविषयोऽभ्युपेयितव्य । स्वेतरजीवगोचररागद्वेषादिमनःकालुष्यनिवृत्तिलक्षणाया शान्ते सिद्ध्यै जीवानामपि हि ब्रह्मात्मकत्वमनुसन्धेयमिति । एव चैकस्यैव सर्वशब्दस्योभयविषयत्वे स्थिते सामानाधिकरण्यमपि चेतनाचेतनयोरेकरूपमेव वक्तव्यम् ।

किञ्च बाधपरे सामानाधिकरण्ये पदद्वयलक्षणाऽवर्जनीया । सर्वपदस्य सर्वारोपविषये ब्रह्मपदस्य तन्निवृत्तिमति च लक्षणया सर्वारोपविषय सर्वनिवृत्तिमानिति बोधस्याभिमतत्वात् । सिद्धान्ते तु 'सर्वं खल्विद ब्रह्म' इत्यादौ सर्वादिशब्दाना सर्वशरीरकब्रह्मवाचितया विनैव लक्षणा सर्वशरीरकाभिन्न ब्रह्मेति बोधस्य निर्वाहे परपक्षे पदद्वयलक्षणाश्रयण न सुहृदयहृदयङ्गमम् । किञ्च बाधा-

र्थत्वं तत्रैव दृष्टम्, यत्रारोपिताकारविरुद्धाकारः शब्देनैवोपस्थाप्यते । यथा 'चोरः स्थाणुः' इत्यत्र चोरत्वविरुद्धं स्थाणुत्वं स्थाणुपदेनैवोपस्थापितम् । नैवं 'सर्वं खल्विदं ब्रह्म' इत्यत्र भेदविरोध्याकारो ब्रह्मशब्देनोपस्थाप्यते । बृहत्त्वबृंहणत्वरूपभेदोपस्थापकत्वात्तस्य । न च ब्रह्मपदलक्षणयोपस्थितं सत्स्वरूपं भेदविरोधीति वाच्यम् । सत्स्वरूपस्य भेदविरोधित्वाभावात् । प्रतिपन्न एव सत्स्वरूपेऽधिष्ठाने भेदप्रपञ्चस्यारोपात् । पदद्वयलक्षणाप्रसङ्गश्च तदवस्थः । अतो बाधार्थसामानाधिकरण्येऽपि बाध्याकारविरोध्याकारविशिष्टमेव वस्तु सिद्ध्यतीति न निर्भेदवस्तुसिद्धिप्रत्याशा । उक्तं च तत्त्वमुक्ताकलापे—'बाधार्थं यत्समानाधिकरणवचनं नाविशिष्टं वदेत्तत् तत्रैकोऽध्यासयोग्याकृति वदति परो भेदयुक्तं तु शब्दः । निर्दिष्टे वस्तुमात्रे भवतु कथमिहारोपितं बाधनीयं भ्रान्तिर्भेदाप्रतीतौ विरमतु च कथं हेतुपौष्कल्ययुक्ता ॥' इति । चेतनसामानाधिकरण्यमपि न निर्विशेषस्वरूपैक्यपरम् । विशिष्टवाचिना तत्त्वंपदद्वयेन स्वरूपमात्रोपस्थापने पदद्वयस्यापि लक्षणाप्रसङ्गात् । तत्पदोक्तसार्वज्ञ्यादेस्त्वंपदोक्ताज्ञत्वादेश्च विरोधस्यैकपदलक्षणयैव सुपरिहरत्वे पदद्वयलक्षणा ह्ययुक्ता । सिद्धान्ते तु त्वंशब्दस्यापि जीवविशिष्टब्रह्मवाचितया न लक्षणागन्धः ।

ननु वाक्यतात्पर्यानुगुणा सर्वपदलक्षणा न दोषाय । सामानाधिकरण्यस्य ह्यैक्ये तात्पर्यम् । तच्च विशेषणस्यापि विवक्षायां विशेषणविशेष्यार्थभेदेन विरुद्ध्येत । मैवम् । विशिष्टैक्य एव सामानाधिकरण्यस्य तात्पर्यात् । 'भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यम्' इति शाब्दिकाः ।

नानाप्रवृत्तिनिमित्तविशिष्टधर्म्यैक्यबोधकत्वमिति यावत्। तत्र प्रातिपदिकं नानाविशेषणविशिष्टपरं समानविभक्तिरैक्यपरेति विवेकः। विशेषणपरित्यागे तु सामानाधिकरण्यलक्षणहानिरेवेति। एवं च 'तत्त्वमसि' 'सर्वं खल्विदं ब्रह्म' इत्यादिसामानाधिकरण्यानां चिदचितोर्ब्रह्मणश्च शरीरात्मभावनिबन्धनानां विशिष्टाद्वैतपरत्वं मुख्यतयैवोपपद्यत इति सर्ववस्तुसामानाधिकरण्यार्हस्वरूपं सर्वचेतनाचेतनशरीरकत्वं वस्त्वपरिच्छेद उपपद्यत एवेति स्थितम्। यद्वा वस्तुस्वभावकृतः परिच्छेदो वस्तुपरिच्छेदः सातिशयस्वरूपगुणकत्वरूपः। यथा तुल्यकालयोस्तुल्यपरिमाणयोरपि कलधौतसुवर्णयोः कलधौतस्यापकर्षः सुवर्णात्। तद्राहित्यं वस्त्वपरिच्छेदः स्वरूपगुणेभ्यो निरतिशयोत्कर्षलक्षणः। 'नान्तं गुणानां गच्छन्ति तेनानन्तोऽयमुच्यते' इति निरुक्तिबलाच्च गुणतोऽप्यानन्त्यं सिद्धम्।

यत्तु—सत्यादिवाक्यं स्वरूपमात्रपरं न तु विशिष्टपरम्। यथा च चन्द्रस्वरूपमात्रजिज्ञासया 'कश्चन्द्रः' इति पृच्छते 'निशीथिन्यां प्रकृष्टप्रकाशो यः सः' इत्युत्तरमुच्यमानं प्रकाशविशेषोपलक्षितचन्द्रस्वरूपमात्रपरं तद्वत् इति। तन्मन्दम्। सामान्यतश्चन्द्रपदव्यपदेश्यं कञ्चनार्थं जानन्नेव हि तस्यासाधारणाकारं जिज्ञासमानः 'कश्चन्द्रः' इति पृच्छति। तदुत्तरेण चासाधारणधर्मान्वयपरेणैव भवितव्यमिति। एवं जगत्कारणत्वादिना विशिष्टं वस्तु प्रतिपन्नम्। तस्येतरसजातीयव्यावच्छेदकं च सत्यत्वादिकमेतद्वाक्यविवक्षितम्। किञ्च लक्षणवाक्यं स्वरूपमात्रपरमिति च लोकोक्तौ विरोधः। लक्षणं हि लक्ष्यसम्बद्धम्। लक्षणप्रतिपादने च तद्विशिष्टमेव प्रतिपादितं भवतीति। उक्तं च तत्त्वमुक्ताकलापे—'सत्याद्युक्तिः प्रकृष्टद्युति-

रुडुपतिरित्यादिवद्वस्तुमात्रं ब्रूते लक्ष्मोक्तिभावादिति यदि न तथा स्वोक्तिबाधादिदोषात् । रोधः सद्वाक्यभावाद्भवति च कथितोदाहृतिः साध्यहीना प्रश्नोक्तेश्चाविशिष्टं न विषय इति नापृष्टजल्पोपहासः ॥' इति ।

ननु सत्यत्वादिविशेषणमेकत्र न समावेशमर्हति, विरोधात् । ज्ञानं ह्यन्तवदेवोपलभ्यते नानन्तम् । स्वाप्नज्ञानमसत्यं, तद्दृष्टान्तेनान्यदपि ज्ञानं तथेति । मैवम् । धर्मभूतज्ञानस्यान्तवत्त्वेऽपि धर्मिण आत्मस्वरूपज्ञानस्यानन्तत्वात्सत्यत्वाच्च । स्वाप्नज्ञानमपि विषयमिथ्यात्वेऽपि सत्यस्वरूपमेव । विषयसत्यत्वं च तस्य श्रीभाष्यादौ व्यवस्थापितमेव । स्वाप्नज्ञानस्यासत्यत्वेऽपि न दृष्टान्तेन बाह्यज्ञानस्यासत्यत्वमर्थशून्यत्वलक्षणं स्थापयितुं शक्यते । सामग्रीवैलक्षण्यादर्थाबाधाच्च । 'वैधर्म्याच्च न स्वप्नादिवत्' इति सूत्रभाष्यादौ चेदं विवृतमिति नेह प्रतन्यते ।

यदपि सत्यादिवाक्यं न सत्यत्वादिगुणविशिष्टपरम् । सत्यादिपदानामसत्यादिव्यावृत्तिपरत्वात् व्यावृत्तीनां चाधिकरणस्वरूपत्वात् । असत्यादिव्यावृत्तिरूपमेव ब्रह्मस्वरूपमेतद्वाक्यविवक्षितमिति । तदपि न समीचीनम् । सत्यादिपदानामसत्यादिव्यावृत्तौ लक्षणाप्रसङ्गात् । ब्रह्मपदस्यापि बृहत्त्वादिगुणविशिष्टवाचिनः स्वरूपमात्रोपस्थापकत्वं लक्षणयैवेति सर्वपदलक्षणा च । व्यावृत्तीनां ब्रह्मरूपत्व एकेनैव पदेन ब्रह्मस्वरूपं प्रतिपन्नमिति पदान्तरप्रयोगवैयर्थ्यं च ।

ननु व्यावृत्तेर्विकारिजडपरिच्छिन्नरूपतत्पदार्थप्रतियोगिकत्वप्रतिपत्त्यर्थं पदान्तरमावश्यकम् । तत्तत्प्रतियोगिकत्वाप्रतिपत्तौ हि

तत्त्वरूपत्वशङ्का ब्रह्मणि प्रसज्येतेति । यद्येव तर्हि वस्तुप्रतियोगि भेदरूपविशेषणभेदेनार्थभेदापत्त्यैकार्थबोधकत्वलक्षणस्य सामानाधिकरण्यस्य हानि । किञ्च विकार्यादिशङ्काया इव दुःखमिश्रत्वादिशङ्काया अपि ब्रह्मणो निरतिशयपुरुषार्थत्वप्रतीतिविरोधिन्या सम्भवेन तद्वारकपदान्तराश्रवणेन न्यूनता च स्यात् सत्यादिवाक्ये । अस्मन्मते तु बद्धमुक्तनित्यरूपत्रिविधजीववैजात्यप्रतिपादनतात्पर्येण पदत्रयस्य श्रयण समञ्जसमिति स्थितम् । एव च जगत्कारण परब्रह्म निर्दोष ज्ञानशक्त्यैश्वर्याद्यनन्तकल्याणगुणक त्रिविधचेतनाचेतनविलक्षण तच्छारीरक च सत्यज्ञानादिवाक्येन प्रतिपाद्यमिति राद्धान्तसङ्क्षेप ।

## ब्रह्मणः क्षराक्षरपुरुषविलक्षणत्वम् ।

'यो मामजमनादिं च वेत्ति लोकमहेश्वरम् । असम्मूढः स मर्त्येषु सर्वपापैः प्रमुच्यते ॥' इत्यत्र च बद्धमुक्तनित्यरूपत्रिविधचेतनव्यावर्तक विशेषणत्रयमुच्यते सर्वेश्वरस्य । तत्राजत्व द्वेधाविरूपेण जायमानानां बद्धाना व्यावर्तकम् । अनादित्वेन विशेषित च तत्थाजातचराणा मुक्तानाम् । लोकमहेश्वरत्व च नित्यसूरिवर्गस्य । तेषामपि विभूत्यन्तर्भावात् । एव व्यावर्तकधर्मैस्त्रिविधचेतनविलक्षणत्वेन सर्वेश्वरस्य ज्ञानमेवासम्मोहलक्षण पापनिवर्तक चेत्युत्तरार्धेन विवक्षितम् । एवं विशेषणत्रयलभ्य क्षराक्षरपुरुषवैलक्षण्य मुक्तकण्ठ चोक्तम्—'यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः । अतोऽस्मि लोके वेदे च प्रथित पुरुषोत्तम ॥' इति । उत्तमश्चासौ पुरुषश्च पुरुषोत्तमः । राजदन्तादित्वात्परनिपात उत्तमशब्दस्य । क्षराक्षरेभ्य उत्तमत्वं फलति । केचित्तु सप्तमीति

योगविभागमाश्रित्य पुरुषेपूत्तम इति समासमाहुः । निर्धारणषष्ठ्याः समासनिषेधेऽपि शेषषष्ठ्या षष्ठीसमासोऽपि सम्भवतीत्यपरे । पुरुषेभ्य उत्तम इति पञ्चमीसमासोऽपि ज्ञापनबलात्स्वीकर्तुमुचित इत्यन्ये ।

श्रीविष्णुपुराणे च मायातत्कार्येभ्योऽचिद्भ्यो बद्धमुक्तनित्येभ्यश्चिद्भ्यश्च वैलक्षण्यमुक्तं–'स सर्वभूतप्रकृतिं विकारान् गुणादिदोषांश्च मुने व्यतीतः । अतीतसर्वावरणोऽखिलात्मा तेनास्तृतं यद्भुवनान्तराले ॥' इति । सत्त्वादिगुणसंसर्गप्रयुक्तरागद्वेषादिदोषातीतत्वेन बद्धेभ्योऽतीतसर्वावरणत्वेन कदाचिदावृतज्ञानेभ्यो मुक्तेभ्योऽखिलात्मत्वेन नित्येभ्यश्च विलक्षणता फलति । न हि नित्यानामप्यणुस्वरूपाणां व्याप्यान्तर्भूतानां सर्वात्मत्वं सम्भवति । एवं तत्त्वप्रकरण एव क्षराक्षरपुरुषवैलक्षण्यं पुरुषोत्तमत्वं च परमात्मनः श्रुतिस्मृतिषु वर्णितमस्ति । तथा च वासुदेवमाहात्म्ये–'नित्यानामात्मनां नित्य आत्मा चेतनचेतनः । क्षराक्षरेभ्यश्च परस्त्वं ब्रह्म परमं हरे ॥' इति । सम्प्रदायग्रन्थेऽपि क्षराक्षरपुरुषवैलक्षण्यं पुरुषोत्तमत्वं च बहुश उपावर्णि । यथा–'अशेषब्रह्माण्डप्रभुरपि···तमीशामीशानं क्षरपरमहं चाक्षरपरं हरिं' 'दिव्यरूपोऽक्षरात्मा च श्रुतो यश्चाक्षरात्परः ।' 'त्वमेवासि···क्षरादक्षराच्चोत्तमः पूरुषस्त्वम्' 'यो वासुदेवो भगवान् अक्षरात्पर उच्यते' 'नाकृतिर्यो भगवान् स एवास्त्यक्षरात्परः । नैकाण्डकोटिजन्मादिहेतुश्च पुरुषोत्तमः ॥' इत्यादौ ।

## एकादशद्वादशलक्षणविचारः ।

(ब्रह्मणो मुमुक्षूपास्यत्वमुक्तप्राप्यत्वे)

सकलेतरविलक्षणस्य परस्य ब्रह्मणः पुरुषोत्तमस्यैव वेदनमुपास-

तत्तद्रूपत्वशङ्का ब्रह्मणि प्रसज्येतेति। यद्येवं तर्हि तत्तत्प्रतियोगि भेदरूपविशेषणभेदेनार्थभेदापत्त्यैकार्थबोधकत्वलक्षणस्य सामानाधिकरण्यस्य हानिः। किञ्च विकारादिशङ्काया इव दुःखमिश्रत्वा विशङ्काया अपि ब्रह्मणो निरतिशयपुरुषार्थत्वप्रतीतिविरोधिन्या सम्भवेन तद्वारकपदान्तराश्रवणेन न्यूनता च स्यात् सत्यादिवाक्ये। अस्मन्मते तु बद्धमुक्तनित्यरूपत्रिविधजीववैजात्यप्रतिपादनतात्पर्येण पदत्रयस्य श्रवणं समञ्जसमिति स्थितम्। एवं च जगत्कारणं परंब्रह्म निर्दोषं ज्ञानशक्त्यैश्वर्याद्यनन्तकल्याणगुणकं त्रिविधचेतनाचेतनविलक्षणं तच्छारीरकं च सत्यज्ञानादिवाक्येन प्रतिपाद्यमिति राद्धान्तसङ्ग्रहः।

### ब्रह्मणः क्षराक्षरपुरुषविलक्षणत्वम्।

'यो मामजमनादिं च वेत्ति लोकमहेश्वरम्। असम्मूढः स मर्त्येषु सर्वपापैः प्रमुच्यते॥' इत्यत्र च बद्धमुक्तनित्यरूपत्रिविधचेतनव्यावर्तकं विशेषणत्रयमुच्यते सर्वेश्वरस्य। तत्राजत्वं देवादिरूपेण जायमानानां बद्धानां व्यावर्तकम्। अनादित्वेन विशेषितं च तत्तथाजातचराणां मुक्तानाम्। लोकमहेश्वरत्वं च नित्यसूरिवर्गस्य। तेषामपि विभूत्यन्तर्भावात्। एवं व्यावर्तकधर्मैस्त्रिविधचेतनविलक्षणत्वेन सर्वेश्वरस्य ज्ञानमेवासम्मोहलक्षणं पापनिवर्तकं चेत्युत्तरार्धेन विवक्षितम्। एवं विशेषणत्रयलभ्यं क्षराक्षरपुरुषवैलक्षण्यं मुक्तकण्ठं चोक्तम्—'यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः। अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः॥' इति। उत्तमश्चासौ पुरुषश्च पुरुषोत्तमः। राजदन्तादित्वात्परनिपात उत्तमशब्दस्य। क्षराक्षरेभ्य उत्तमत्वं फलति। केचित्तु सप्तमीति

योगविभागमाश्रित्य पुरुषेषूत्तम इति समासमाहुः । निर्धारणषष्ठ्याः समासनिषेधेऽपि शेषषष्ठ्या षष्ठीसमासोऽपि सम्भवतीत्यपरे। पुरुषेभ्य उत्तम इति पञ्चमीसमासोऽपि ज्ञापनबलात्स्वीकर्तुमुचित इत्यन्ये ।

श्रीविष्णुपुराणे च मायातत्कार्येभ्योऽचिद्भ्यो बद्धमुक्तनित्येभ्यश्चिद्भ्यश्च वैलक्षण्यमुक्तं–'स सर्वभूतप्रकृतिं विकारान् गुणादिदोषांश्च मुने व्यतीतः । अतीतसर्वावरणोऽखिलात्मा तेनास्तृतं यद्भुवनान्तराले ॥' इति । सत्त्वादिगुणसंसर्गप्रयुक्तरागद्वेषादिदोषातीतत्वेन बद्धेभ्योऽतीतसर्वावरणत्वेन कदाचिदावृतज्ञानेभ्यो मुक्तेभ्योऽखिलात्मत्वेन नित्येभ्यश्च विलक्षणता फलति । न हि नित्यानामप्यणुस्वरूपाणां व्याप्यान्तर्भूतानां सर्वात्मत्वं सम्भवति । एवं तत्त्वप्रकरण एव क्षराक्षरपुरुषवैलक्षण्यं पुरुषोत्तमत्वं च परमात्मनः श्रुतिस्मृतिषु वर्णितमस्ति । तथा च वासुदेवमाहात्म्ये–'नित्यानामात्मनां नित्य आत्मा चेतनचेतनः । क्षराक्षरेभ्यश्च परस्त्वं ब्रह्म परमं हरे ॥' इति । सम्प्रदायग्रन्थेऽपि क्षराक्षरपुरुषवैलक्षण्यं पुरुषोत्तमत्वं च बहुश उपावर्णि । यथा–'अशेषब्रह्माण्डप्रभुरपि…तमीशामीशानं क्षरपरमहं चाक्षरपरं हरिं' 'दिव्यरूपोऽक्षरात्मा च श्रुतो यश्चाक्षरात्परः ।' 'त्वमेवासि…क्षरादक्षराच्चोत्तमः पूरुषस्त्वम्' 'यो वासुदेवो भगवान् अक्षरात्पर उच्यते' 'आकृतिर्यो भगवान् स एवास्त्यक्षरात्परः । नैकाण्डकोटिजन्मादिहेतुश्च पुरुषोत्तमः ॥' इत्यादौ ।

## एकादशद्वादशलक्षणविचारः ।

(ब्रह्मणो मुमुक्षूपास्यत्वमुक्तप्राप्यत्वे)

सकलेतरविलक्षणस्य परस्य ब्रह्मणः पुरुषोत्तमस्यैव वेदनमुपास-

नात्मकमभयहेतुत्वेन श्रूयते सत्यज्ञानादिवाक्यप्रकरण एव 'यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते अथ सोऽभयं गतो भवति' इति। प्रतिष्ठाशब्देन दृढसम्बन्धवाचिनाऽनवरतभावनालक्षणः सम्बन्धश्चेतनस्य परमात्मनि विवक्षितः। अत्रापि विशेषणचतुष्टयमचितस्त्रिविधचेतनवर्गाच्च व्यावर्तकं भवति। अदृश्य इति दृश्यस्याचितः, अनात्म्य इति आत्म्यशब्दितशरीरराहित्यपरेण बद्धानां, अनिरुक्त इति देवादिनामरूपाभ्यां निरुक्तचराणां मुक्तानां, अनिलयन इति च निराधारत्वपरेण भ्रष्टाधारकाणां नित्यानां च व्यावृत्तिर्विवक्षिता। यद्यपि चरमेणैव विशेषणेन सर्वव्यावृत्तिः सिद्ध्यति। अथापि व्यावर्त्यमुख्यावतरणक्रमेण विशेषणानां क्रमनिर्देशः साधीयानेव। अभयं प्रतिष्ठामिति कार्यकारणयोरभेदनिर्देशः। एवं च पुरुषोत्तमस्यैवोपासनं मोक्षसाधनमिति पर्यवसितोऽर्थः। 'शुभाशुभैर्विनिर्मुक्त ऊर्मिषट्कात्परः प्रभुः। तं वेद्यममलं विष्णुं सदा ध्यायन् विमुच्यते॥' 'नान्यत्र मद्भगवतः प्रधानपुरुषेश्वरात्। आत्मनः सर्वभूतानां भयं तीव्रं निवर्तते॥' 'वरं वृणीष्व भद्रं ते ऋते कैवल्यमद्य नः। एक एवेश्वरस्तस्य भगवान् विष्णुरव्ययः॥' 'आलोड्य सर्वशास्त्राणि विचार्य च पुनः पुनः। इदमेकं सुनिष्पन्नं ध्येयो नारायणः सदा॥' 'विचार्याह वेदान् मुहुरुपगतो निश्चयमिमं रमारामे भक्तिस्त्वयि दृढतरा यर्ह्यसुभृताम्' इत्यादिस्मृतौ चाकर्मवश्यस्य विष्णोरेव ध्यानं मोक्षसाधनमभिधीयते। 'कारणं तु ध्येयः' इति श्रुत्या च कारणस्य परमात्मनो नारायणस्यैव मुमुक्षूपास्यत्वं सिद्ध्यति।

न तु चतुर्मुखादेः सृज्यकोटिघटितस्य । किञ्च तेषां परिमितफलप्रदान एव सामर्थ्यम् । अत एव मुमुक्ष्वनुपास्यतोच्यते–'ब्रह्माणं शितिकण्ठं च याश्चान्या देवताः स्मृताः । प्रतिबुद्धा न सेवन्ते यस्मात्परिमितं फलम् ॥' इति । गीतायां च देवतान्तरोपासकानां तत्सायुज्यं प्राप्तानां पुनरावृत्तिः; स्वोपासकानां त्वपुनरावृत्त्यानन्तफलत्वं चाभिहितं भगवतैव–'देवान् देवयजो यान्ति पितॄन् यान्ति पितृव्रताः । भूतानि यान्ति भूतेज्या यान्ति मद्याजिनोऽपि माम् ॥ मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम् । नाप्नुवन्ति महात्मानः संसिद्धिं परमां गताः ॥ आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन । मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते ॥' इति । तथा स्वस्यैव संसारनिस्तरणसाधनत्वं च 'दैवी ह्येषा गुणमयी मम माया दुरत्यया । मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥' इति । युक्तं चैतत् मुक्तिफलप्रदत्वं हि स्वत एव निरस्तनिखिलहेयस्य समस्तकल्याणगुणाकरस्यैव सम्भवति । अनादिकालप्रवृत्तानामनन्तकर्मपाशानां त्रिगुणात्मकमोहकप्रकृतिबन्धनानां मोचकत्वं च अकर्मपरवशं स्वतन्त्रमीश्वरं विना नान्यस्य सम्भवेन्नाम । न हि कारागृहनियन्त्रित एवान्यान् कारागृहेभ्यो मोचयितुमलम् । चतुर्मुखादीनां च कर्मपरवशत्वं प्रसिद्धमेव । तथा च 'तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी' 'तस्योदिति नाम' 'नो एव साधुना कर्मणा भूयान् नो एवासाधुना कनीयान्' 'पश्य देवस्य माहात्म्यं महिमानं च नारद । शुभाशुभैः कर्मभिर्यो न लिप्येत कदाचन ॥' इत्यादिनाऽकर्मवश्यतया प्रतिपन्नस्य पुण्डरीकाक्षस्यैव तु संसारव-

-घनाम्भोघनसामर्थ्यम् । मुक्तानामविच्छिन्नानवच्छिन्नानन्दसम्पादनं च स्वरूपगुणानन्त्यादेव सम्भवेत् । गुणानुभवजनितातिमात्रप्रीतिकारिताशेषशेषवृत्त्यन्वयश्च पुरुषार्थोत्तमो भवतीति सेवामुक्तिवादिनामपि गुणानुभवोऽपेक्षित एव । एवमुभयलिङ्गः परंब्रह्म वासुदेव एव मोक्षनिर्वाहक इति तस्यैव मुमुक्षुभिरुपास्यत्वं सम्पद्यतेतराम् ।

अत एव शिक्षापत्र्यां श्रीकृष्णस्यैव ध्येयत्वमुच्यते—'तस्यैव सर्वथा भक्तिः कर्तव्या मनुजैर्भुवि' 'कृष्णस्तदवताराश्च ध्येयास्तत्प्रतिमाऽपि च । न तु जीवा नृदेवाद्या भक्ता ब्रह्मविदोऽपि च ॥' इति । सत्सङ्गिजीवने प्रोक्तं—'वासुदेवो हि भगवान् साक्षान्नारायणः प्रभुः । मुमुक्षूणामुपास्योऽस्ति नान्य इत्यस्ति निश्चयः ॥' 'जीवानामीश्वराणां च भक्त्योपास्यः स एव हि । श्रीवासुदेवो भगवानेक एवास्ति नापरः ॥' 'ततो निःसंशयो भूत्वा मुमुक्षुः सर्वथा हरिम् । यो भजेत स मुक्तः स्यादितरः संसृतिं व्रजेत् ॥' इति । सुधासिन्धौ च—'एक एव हरिर्ध्येयोऽवतारास्तस्य ये च ते । देवस्य वा ब्रह्मविदोऽप्यन्यस्य स्वाकृतिस्तु या ॥ सैव फलाऽपि सा नैव ध्यातव्या पारतन्त्र्यतः ॥' 'मुख्यः कर्ता तु सर्वेषां पाता हर्ता च सर्वथा । श्रीकृष्ण एव भवतीत्येव ज्ञात्वा स सेव्यताम् ॥' इति ।

'यस्मात्परं नापरमस्ति किञ्चिद्यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित् । वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम् । 'ततो यदुत्तरतरं तदरूपमनामयम् । य एतद्विदुरमृतास्ते भवन्ति अथेतरे दुःखमेवापि यन्ति ॥' इति

श्रुतौ चाक्षरपरमव्योमनिलयनस्य परमपुरुषस्यैव सर्वोत्कृष्टत्वात्तस्यैव वेदनं मोक्षसाधनं एतदज्ञानिनां तु संसार एवेत्युच्यते । अत्र तत इति पञ्चमी नावधौ किन्तु हेतौ । सर्वत्र परिपूर्णत्वादेर्हेतोः पुरुषतत्त्वमेवोत्कृष्टतममित्यर्थः । अवध्यर्थकत्वे च तच्छब्देन व्याप्यस्य जगत एवेदंशब्दितस्य परामर्शः, न तु पुरुषस्य । ततोऽन्यस्य परस्य पूर्वं निषिद्धत्वेनात्र ततः परस्य प्रतिपादयितुमशक्यत्वात् । 'वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात् । तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' इत्यत्र महापुरुषस्यैवाप्राकृताक्षरधामनिलयनस्य वेदनं मोक्षसाधनं नान्यत्तथेति व्यवस्थापितत्वाच्च ।

ननु अत्र ज्ञानस्यैव मोक्षसाधनत्वं श्रूयते, 'ब्रह्मविदाप्नोति परम्' इत्यादौ च । सत्यम् । तच्च न वाक्यजन्यज्ञानमात्रम्, तावता बन्धनिवृत्तेरदर्शनात् । किन्तूपासनात्मकमेवेत्युक्तमेव प्राक् । वेदनादिसामान्यशब्दाश्च विशेषपर्यवसायिनः छागपशुन्यायेन । उपासनमेवात्यन्तप्रीत्या क्रियमाणं भक्तिरित्युच्यते । भक्तेरेव पर्वभेदाः सन्ति त्रयः—परभक्तिः परज्ञानं परमभक्तिरिति । इदं भक्तिपर्वत्रयमुक्तं गीतायां—'मद्भक्तिं लभते पराम् । भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः । ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम् ॥' इति । उत्कटदिदृक्षालक्षणया परभक्त्या यथावद्भगवद्दर्शनलक्षणं परज्ञानं प्राप्य तदनन्तरं तथाविधपरमात्मप्राप्त्यतिमात्रत्वरालक्षणया परमभक्त्या भगवन्तं प्राप्नोतीत्यर्थः । एवंविधभगवद्विषयकभक्तियोगः श्रवणादिभिर्नवभिः सम्पद्यत इति वर्णितमस्ति विस्तरशः सत्सङ्गिजीवनादौ—'श्रवणं कीर्तनं चैव

स्मरणं पादसेवनम् । अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम् ॥ एतैः प्रकारैर्नवभिः सेवते यस्तमादरात् । तस्य गाढं भवेत्प्रेम तस्मिन् नारायणे विभौ ॥' इत्यादिना । एवं पुरुषोत्तमस्यैव मुमुक्षुभिर्भजनीयत्वं स्थितम् ।

अहं ब्रह्मेति भावना तु स्वान्तरात्मत्वेन परमात्मनोऽनुसन्धानरूपा । सा चाहंबुद्धिशब्दयोरपि ब्रह्मपर्यन्तत्वज्ञानवतोपासकेन क्रियते । तथा च सूत्रं—'आत्मेति तूपगच्छन्ति ग्राहयन्ति च' इति । एतेन 'तत्त्वमसि' इति वाक्यजन्योऽद्वितीयब्रह्मात्मैक्यसाक्षात्कार एव मोक्षसाधनमिति वादस्य नावसरः ।

मुक्तस्य ब्रह्मप्राप्तिश्च न तत्स्वरूपैक्यलक्षणा । हेयसम्बन्धार्हस्य जीवस्य सदा तदनर्हेण परमात्मनैक्यायोगात् । 'अन्यद्द्रव्यं हि नैति तद्द्रव्यतां यतः' इति हि तत्त्वविदः । 'परात्परं पुरुषमुपैति दिव्यम्' 'परञ्ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुषः स तत्र पर्येति' 'एतमानन्दमयमात्मानमुपसङ्क्रम्य इमान् लोकान् कामान्नी कामरूप्यनुसञ्चरन्' 'येन येन धाता गच्छति तेन तेन स गच्छति' इत्यादिभिश्च मुक्तावपि भेदस्यैव वर्णनात् । सूत्रकृता च 'पत्यादिशब्देभ्यः' 'मुक्तोपसृप्यव्यपदेशाच्च' 'जगद्व्यापारवर्जं' 'भोगमात्रसाम्यलिङ्गाच्च' इति परमात्मनः स्वरूपभेदो मुक्तानां भोगमात्रसाम्यं च स्पष्टं न्यरूपि । गीतं च भगवता मुक्तानां साम्यमात्रम्— 'इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः' इति । अत एव नामसहस्रे पठ्यते 'मुक्तानां परमा गतिः' इति । 'सायुज्यं प्रतिपन्ना ये तीव्रभक्तास्तपस्विनः । किङ्करा मम ते नित्यं भवन्ति

निरुपद्रवाः ॥' इति च परमसाधर्म्यं प्राप्तानामपि भगवत्सेवकत्वं स्मर्यते नाम । अतः सविभूतिसगुणसाकारपरब्रह्मानुभवसेवा-लक्षणैव मुक्तस्य ब्रह्मप्राप्तिर्मन्तव्या । सुधासिन्धावपि—'एक एवास्ति भगवान् कृष्णो नान्योऽस्ति तत्समः। न कोऽपि तत्त्वमाप्नोति महद्भिरपि साधनैः ॥ तत्सेवामेव सम्प्राप्ताः साधनैस्तदुपासकाः । सेवास्ति दुर्लभा मुक्तेरपीत्याहुर्वि-चक्षणाः ॥' इति स्वरूपैक्यं प्रतिक्षिप्य सेवामुक्तिरुक्ता । सत्सङ्गि-जीवने च मुक्तानां वासुदेवसेवकत्वमेवेति न्यरूपि—'ब्रह्मभूतैरप्यु-पास्यः' 'ब्रह्मवित्परमाप्नोतीत्येषा श्रुतिरपि स्फुटम् । प्राह ब्रह्मविदां सेव्यं परं ब्रह्मेति सन्मते ॥' 'असंख्यैश्च महामुक्तै-र्दिव्यसुन्दरविग्रहैः । दिव्यैरनेकोपचारैः पूज्यमानपदाम्बुजः॥' 'नित्यं योऽक्षरधाम्नि...मुक्तैर्दिव्यवपुर्भिराश्रितपदोऽसंख्यैश्च तेजोमयैः' इति । शिक्षापत्र्यां च स्पष्टमेव वर्णितं श्रीहरिणा स्वयमेव 'कृष्णसेवा मुक्तिश्च गम्यताम्' इति ।

'ब्रह्म वेद ब्रह्मैव भवति' इत्यभेदव्यपदेशस्तु परमसाम्यवि-वक्षया स्वारसिक एव, लोके तथा दर्शनात् । रुमागतकाष्ठादेरप्य-त्यन्तसंसर्गात्तत्स्वाभाव्यापत्तिरेव न स्वरूपैक्यम् । अत्र चानवरत-भावनयाऽपहतपाप्मत्वादिलक्षणपरमात्मस्वभावप्राप्तिरभिधीयते । 'आत्मभावं नयत्येनं तद्ब्रह्म ध्यायिनं मुने' इति । 'विमुञ्चति यदा कामान् मानवो मनसि स्थितान् । तर्ह्येव पुण्डरीकाक्ष भगवत्त्वाय कल्पते ॥' इति प्रह्लादवाक्ये च 'भगवत्त्वाय—तत्स-मानैश्वर्याय' इति श्रीधरस्वामिनापि व्याख्यातम् । 'तद्भावभाव-मापन्नस्तदाऽसौ परमात्मना । भवत्यभेदी भेदश्च तस्याज्ञा-

नकृतो भवेत् ॥' इत्यत्रापि परमात्मनो यो भावः—स्वभावोऽप-हतपाप्मत्वादिकस्तमेव भाव स्वभाव प्राप्तो मुक्तस्तत्समानाकारतया देवादिभेदकाकारशून्यो भवति । भूतपूर्वस्तु देवादिभेदकाकारोऽ-ज्ञानशब्दितकर्ममूलो निरस्तसमस्तकर्मबन्धे मुक्ते न प्रसज्यत इत्येव प्रतिपाद्यते न तु स्वरूपाभेद । तथा सति द्वितीयभावशब्दस्य वैयर्थ्यप्रसङ्गात् । एतेन—अखण्डैकरसब्रह्मस्वरूपतापत्तिरेव मुक्ति-रित्यपास्तम् ।

मुक्ते तु ब्रह्मशब्दोऽय ब्रह्माकारोद्भवाद्भवेत् ।
अत्यन्तसाम्ये स्वरसोऽभेदनिर्देश इष्यते ॥
पुरोहितोऽय निष्पन्नो राजेत्यादिस्थलेषु च ।
मुक्तौ भेदश्रुतेरेवमबाधेनैव सम्भवी ॥
अभेदश्रुतिनिर्वाहो ह्यथः प्रेक्षावता भवेत् ।
भेदेऽभेदस्य निर्देश उपचारादिना भवेत् ॥
अभेदे भेदनिर्देशोऽगतिकः स्यादिति स्वलम् ।
मुमुक्षूपास्यता ह्येयविरोधित्वादि बोधयेत् ॥
अक्षराधिपतित्वादि मुक्तप्राप्यत्वमीशितु ।
एव तत्तल्लक्षणतो विशेषज्ञप्तिरिष्यते ॥
एव सर्वाधिक ब्रह्म लक्ष्मतः सुनिरूपितम् ।
स च नारायण इति प्रसङ्गादत्र वर्ण्यते ॥

## नारायणस्यैव परब्रह्मत्वम् ।

'वेदे भूरिप्रयोगाच्च गुणयोगाच्च शार्ङ्गिणि । तस्मिन्नेव ब्रह्मशब्दो मुख्यवृत्तो महामुने ॥' इति गारुडवाक्येन तावच्छा-र्ङ्गपाणी रमापतिर्नारायण एव ब्रह्मशब्दमुख्यार्थ इति गम्यते ॥

तैत्तरीये आनन्दवल्ल्यां प्रतिपाद्यं परंब्रह्म आनन्दमयः परमात्मा नारायण इति च तत्रैव प्रकरणे उपासकहृदयकमले ध्येयतया सन्निहितस्यास्यादित्यमण्डलान्तर्वर्तिनो हिरण्मयपुरुषस्य च 'स यश्चायं पुरुषे, यश्चासावादित्ये, स एक' इत्यैक्यप्रतिपादनादवगम्यते । 'ध्येयः सदा सवितृमण्डलमध्यवर्ती नारायणः' इत्युपबृंहणाच्च तस्य नारायणत्वं शक्यावगमम् । अन्तरधिकरणे च तस्य पुरुषोत्तमत्वं समर्थितमस्ति । किञ्च तत्र सर्वान्तरात्मन एव जगत्कारणत्वमुक्तम्—'तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः' इत्यादिना । सर्वान्तरात्मा च 'एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः' इति श्रुतिप्रसिद्धो नारायण एव । एवमानन्दमयस्य परमात्मनो नारायणत्वे स्थिते आनन्दमयत्वप्रवृत्तिनिमित्तकृष्णशब्दवाच्यत्वमपि तस्यैवाञ्जसोपपद्यते । 'कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः । कृष्णस्तद्भावयोगाच्च परंब्रह्माभिधीयते ॥' इति च कृष्णशब्दस्य निरुक्तिः ।

न च 'न सन्न चासच्छिव एव केवलः' 'शम्भुराकाशमध्ये ध्येयः' इत्यादिषु कारणत्वोपास्यत्वयोः शिवादिशब्दवाच्ये श्रवणात्कथं नारायणस्यैव परब्रह्मत्वमिति वाच्यम् । 'एको ह वै नारायण आसीन्न ब्रह्मा नेशानः' इत्यादिना मुक्तकण्ठं ब्रह्मरुद्रादिनिषेधेन नारायणस्यैव प्रलयकाले सद्भावप्रतिपादनात् । स्वयंमङ्गलरूपत्वान्यमङ्गलनिर्वाहकत्वादिगुणयोगेन शिवशम्भ्वादिशब्दानामेतस्मिन्नेवान्वयसम्भवाच्च । दृश्यते च शिवादिशब्दानां नारायण एव प्रयोगः श्रुतिस्मृतिषु—'शाश्वतं शिवमच्युतं नारायणं महाज्ञेयम्' 'शम्भुर्नारायणोऽव्ययः' 'तं द्रष्टुं देवमी-

शान्तं यतामि साम्प्रतं हरिम्' 'तदा तु भगवानीश आत्मानं सृजते हरिः' 'ददृशे कृष्णमीश्वरम्' 'महादेवं महाभागमनन्तं शिवमच्युतम्' 'रुद्रो बहुशिरा बभ्रुः' 'विष्णुर्नारायणः शिवः' इत्यादिषु । न चैवं शिवादिषु नारायणशब्दस्य प्रयोगो दृश्यते क्वापि । किञ्च नारायण इति श्रीपतेः पुरुषोत्तमस्यैव संज्ञा । संज्ञायामेव च णत्वप्राप्तिः 'पूर्वपदात्संज्ञायामगः' इति सूत्रतः । अतो वासुदेवान्वयत एव लब्धात्मकस्यास्य शब्दस्य नान्यगामिता शक्यशङ्केति ।

'अथ पुरुषो ह वै नारायणोऽकामयत प्रजाः सृजेयेति नारायणाद्ब्रह्मा जायते नारायणाद्रुद्रो जायते' इत्यादौ च नारायणस्यैव कारणत्वं श्रूयते । 'क इति ब्रह्मणो नाम ईशोऽहं सर्वदेहिनाम् । आवां तवाङ्गे सम्भूतौ तस्मात्केशवनामवान् ॥' इति केशवशब्दनिरुक्त्या च तस्य ब्रह्मरुद्रौ प्रत्यपि कारणत्वं शक्यमवगन्तुम् । 'यच्च किञ्चिज्जगत्यस्मिन् दृश्यते श्रूयतेऽपि वा । अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः ॥' 'नारायण परं ब्रह्म तत्त्वं नारायणः परः । नारायणः परं ज्योतिरात्मा नारायणः परः ॥' इत्यादीनि च नारायणपारम्यवचनानि बहूनि जाग्रति । श्वेताश्वतरे च 'महान् प्रभुर्वै पुरुषः सत्त्वस्यैष प्रवर्तकः' 'वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात् । तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' इति परमसात्त्विकदेवत्वेन प्रथितस्य महापुरुषस्य नारायणस्यैव वेदनं मोक्षसाधनमुक्तम् । पुरुषशब्दस्य च तस्मिन्नेव मुख्या वृत्तिरुक्ता भगवच्छब्दवत्—'भगवानिति शब्दोऽयं तथा

पुरुष इत्यपि । निरुपाधी च वर्तेते वासुदेवे सनातने ॥' इति । भगवता बादरायणेन च नारायणस्यैव परमतत्त्वरूपत्वं मुमुक्षुभिर्ध्येयत्वं च स्पष्टमुक्तं–'तत्त्वं जिज्ञासमानानां हेतुभिः सर्वतोमुखैः । तत्त्वमेको महायोगी हरिर्नारायणः परः ॥' 'आलोड्य सर्वशास्त्राणि विचार्य च पुनः पुनः । इदमेकं सुनिष्पन्नं ध्येयो नारायणः सदा ॥' इति । एवं कारणत्वमोक्षार्थोपास्यत्वयोरितरनिवर्तनपूर्वकं नारायणस्यैवान्वयप्रतिपादनात्कारणादिवाक्यगताः शिवादिशब्दा अपि योगेन तत्परा एव नेतव्याः । वाक्यार्थविरोधिरूढिपरित्यागेन तदविरोधियोगपरिग्रहस्य आकाशाद्यधिकरणन्यायसिद्धत्वात् । किञ्च 'दिव्यो देव एको नारायणः' इत्यत्र नारायणस्यैव समाभ्यधिकराहित्यमेकशब्देनोक्तम् । 'न तत्समश्चाभ्यधिकश्च दृश्यते' इति श्रुत्यन्तरेण च परमपुरुषस्यैव तथात्वं वर्णितम् । श्रीकृष्णं प्रति चार्जुनवाक्यं 'न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यः' इति । सुधासिन्धावप्युक्तं–'एक एवास्ति भगवान् कृष्णो नान्योऽस्ति तत्समः' इति । समस्यैव विरहेऽधिकस्य का सम्भावनेति भावः । नारायणस्यैव श्रीकृष्णत्वं च 'एष नारायणः श्रीमान् क्षीरार्णवनिकेतनः । नागपर्यङ्कमुत्सृज्य ह्यागतो मथुरां पुरीम् ॥' इत्यादिनाऽवगम्यते । वासुदेवमाहात्म्ये च 'तत्राथ कृष्णं भगवन्तमैक्षन्नारायणं निर्गुणमास्थितं सः । सर्वज्ञमीशं पुरुषोत्तमं च यं वासुदेवं प्रवदन्ति सात्त्वताः ॥' इत्यक्षरधामाधिपतेः श्रीकृष्णस्य नारायणत्वं प्रतिपाद्यते । तथा तत्रैव पुरुषो महापुरुषो नारायण इति च नाम परस्य ब्रह्मणो वर्णितमस्ति–'सत्यं ज्ञानमनन्तं यो ब्रह्मेति श्रुति-

वर्णित' । त्रिगुणव्यतिरिक्तश्च पुरुषो दिव्यविग्रह ॥ महापुरुष इत्युक्तो वासुदेवश्च य प्रभु । नारायणऋषिर्विष्णु' कृष्णश्च भगवानिति ॥' इति । अत एव नारायणपारम्यपरवचनैरपि श्रीकृष्णस्य पारम्य न्यरूपि सुधासिन्धौ । किञ्चाक्षरधामाधिपते श्रीकृष्णत्व नारायणत्व च चासकृद्वर्णितमस्ति सुधासिन्धुसत्सङ्गिजीवनयोः—'श्रीकृष्णो भगवांस्तत्र सदा स्वामी विराजते । सप्रेम राधालक्ष्मीभ्यामर्च्यमानपदाम्बुज ॥ वेदादौ प्रोच्यते यश्च परब्रह्म परात्पर । नारायणो वासुदेवस्तथा परमपूरुष ॥ परमात्मा च विष्णुश्च प्रधानपुरुषेश्वरः । परमेश्वर ईशेशः पुरुषोत्तम इत्यसौ ॥' 'आत्यन्तिके लये पूर्वं भगवानेक एव हि । आसीत्स्वय वासुदेव' स्वकीयेऽक्षरधामनि ॥ स श्रीकृष्णो दिव्यमूर्ति प्रोच्यते पुरुषोत्तम' । परमात्मा परब्रह्म विष्णुर्नारायणश्च स ॥ ज्योतीरूपोऽक्षरातीतो हरिश्च परम पुमान् । प्रोक्तः स एव वेदेषु पुराणेषु च भारते ॥' इत्यादौ । श्रीकृष्णनारायणयोरभेदे शास्त्रत स्थिते । नारायणस्य पारम्यमुक्तमस्येति गम्यताम् ॥ विशिष्य श्रीकृष्णस्य पारम्ये वचनान्यपि सन्त्येव—'कृष्ण एव हि लोकानामुत्पत्तिरपि चाप्यय' । कृष्णस्य हि कृते भूतमिद विश्व चराचरम् ॥ एवमेषोऽसुराणा च सुराणामपि सर्वशः । भयाभयकरः कृष्णः सर्वलोकमहेश्वर ॥' इत्यादीनि । अगीयत च श्रीकृष्णेन स्वयमेव—'अहं कृत्स्नस्य जगत' प्रभवः प्रलयस्तथा । मत्तः परतर नान्यत्किञ्चिदस्ति धनञ्जय ॥' इति । आह चार्जुनस्तं प्रति—'परब्रह्म परधाम पवित्र परम भवान् । पुरुष शाश्वत

दिव्यमादिदेवमजं विभुम् ॥ आहुस्त्वामृषयः सर्वे देवर्षिर्नारदस्तथा । असितो देवलो व्यासः स्वयं चैव ब्रवीषि मे ॥' इत्यादि । वासुदेवमाहात्म्ये च—'नास्ति तस्मात्परतरः पिता देवोऽथवा द्विज । आत्मा हि नौ स विज्ञेयः कृष्णो ब्रह्मपुरेश्वरः ॥' 'न वासुदेवात्परमस्ति पावनं न वासुदेवात्परमस्ति मङ्गलम् । न वासुदेवात्परमस्ति दैवतं न वासुदेवात्परमस्ति वाञ्छितम् ॥' इत्यादि । एतत्सर्वमभिप्रेत्यैव पुरुषोत्तमनारायणादिशब्दवाच्यस्य श्रीकृष्णस्यैव पारम्यमभिहितं शिक्षापत्र्यां श्रीहरिणा स्वयमेवेश्वरस्वरूपनिरूपणावसरे 'हृदये जीववज्जीवे योऽन्तर्यामितया स्थितः । ज्ञेयः स्वतन्त्र ईशोऽसौ सर्वकर्मफलप्रदः ॥ स श्रीकृष्णः परंब्रह्म भगवान् पुरुषोत्तमः । उपास्य इष्टदेवो नः सर्वाविर्भावकारणम् ॥' इति ।

निरूपितानि च परस्य ब्रह्मणो लक्षणान्येतच्छ्लोकद्वये संसूचितानि । तथा हि—'हृदये जीववज्जीवे योऽन्तर्यामितया स्थितः' इति सर्वचेतनान्तर्यामित्वकीर्तनात्सर्वव्यापकत्वं सर्वनियन्तृत्वं सर्वाधारत्वं सर्वशेषित्वं सर्वशरीरकत्वं च समसूचिषत । ज्ञातुरेव नियन्तृत्वसम्भवाज्ज्ञातृत्वमर्थलभ्यम् । 'स्वतन्त्र' इत्यनेनानन्याधारत्वमनन्यनियाम्यत्वमनन्यशेषत्वं चाविवक्षिषत । 'ईशः' इति निरूप्यनिर्देशः । 'सर्वकर्मफलप्रदः' इत्यनेन सर्वकर्मसमाराध्यत्वं चार्थादापद्यते । ईशशब्दविवक्षितो धर्मी प्रकटीकृतः 'स श्रीकृष्णः' इत्यनेन । ब्रह्मशब्देन च परशब्दविशेषितेन स्वरूपतो गुणतश्च निरतिशयबृहत्त्वं लभ्यते । भगवच्छब्देन चोभयलिङ्गम् ( निर्दोषत्वकल्याणगुणाकरत्वलक्षणम् ) । पुरुषोत्तमशब्देन क्षरा-

क्षरशब्दितबद्धमुक्तपुरुषवैलक्षण्य विलक्षणविग्रहयोगश्च । 'उपास्य इष्टदेवो न' इत्यनेन मुमुक्षूपास्यत्वमुक्तप्राप्यत्वे । व्यञ्जितश्च साम्प्रदायिकप्रसिद्ध्या हरिकृष्णाभिन्नत्वस्याभेद । 'सर्वाविर्भावकारण' मित्यनेन सर्वजगत्कारणत्वमुक्तम् । यद्वा—मुमुक्षूपास्यत्वकथनादेव तदर्थसिद्धम् । कारणस्यैव ध्येयत्वश्रुते । 'सर्वाविर्भावकारणम्' इति तु पुरुषोत्तमशब्दितस्य पररूपस्यैव सर्वावतारमूलरूपत्व विवक्षितम् । विस्तरस्तु टीकाभाष्ययोर्द्रष्टव्य ।

निर्दोषानन्तकल्याणगुणगणनिधि सर्वदा सर्वभूतत्रातस्याधार एकोऽप्रतिहतसकलव्यापिशास्तिश्च शेषी । सेव्य सर्वान्तरात्मा च सकलफलद सर्वकर्ताऽक्षरस्य श्रीकृष्णोऽस्मान्स पुष्णात्वनितरशरणान् स्वामिनारायणात्मा ॥

## परब्रह्मण साकारत्वनिरूपणम् ।

स्वरूपमुक्त धर्माश्च परमस्य परात्मन ।
वैभवातिशयज्ञप्तिहेतवच परिकीर्तिताः ॥
अथ रूप वर्णयामो विश्वरूपविलक्षणम् ।
यद्योगेनैव सर्वत्र व्याप्तस्यास्य श्रुतौ श्रुता ॥
स्थितिरप्राकृते व्योम्नि नित्यधाम्न्युपपद्यते ।
प्रशासितुरखण्डस्य मण्डलस्य भुवो यथा ॥
सार्वभौमस्य नगरे प्रधाने रूपतः स्थिति ।
एव सर्वात्मनोऽपि स्याद्विशेषस्त्वयमेव हि ॥
स्वाज्ञया केवल व्याप्तिश्चम सर्वत्र भूपतिः ।
न स्वरूपेणाणुभावात्परमात्मा क्षमेत तु ॥

स्वरूपतः स्वाज्ञया च कृत्स्नं व्याप्तुं चराचरम् ।
स्वरूपतोऽस्तु मा व्याप्तिः शक्तिमात्रात्तु सा भवेत् ॥
इत्यादिक्षुद्रचोद्यानां न स्यादवसरस्त्विह ।
अत्यन्तातीन्द्रिये ब्रह्मण्यचिन्त्यमहिमादिके ॥
यथाश्रुति हि मन्तव्या स्वरूपादिव्यवस्थितिः ।
श्रुतेस्तु शब्दमूलत्वादित्याद्याह च सूत्रकृत् ॥
अतः सर्वव्यापितया ज्ञातस्य श्रुतिभिः प्रभोः ।
स्थितिः प्रादेशिकी प्रोक्ता रूपान्वयत इष्यताम् ॥
कारणत्वमुपास्यत्वं मुक्तप्राप्यत्वमेव च ।
लक्ष्मोक्तमत्र सर्वत्र रूपयोगः श्रुतोऽस्य च ॥

तथा च श्रुतयः—'सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि' 'यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् । तदा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम् ॥' 'यथा पादोदरस्त्वचा विनिर्मुच्यते एवं हैव स पाप्मना विनिर्मुक्तः स सामभिरुन्नीयते ब्रह्मलोकं, स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षते' इत्यादयः ॥ परमात्मनः परस्य ब्रह्मणो रुक्मवर्णत्वदिव्यत्वपुरिशयत्वानि चात्र प्रतिपाद्यमानानि विलक्षणविग्रहयोगेनैव सङ्गच्छन्तेतराम् ।

'व्यूह रश्मीन् समूह तेजो यत्ते कल्याणतमं रूपं तत्ते पश्यामि' इति चात्यन्तभास्वरं निरतिशयौज्ज्वल्यसौन्दर्यलावण्यमहोदधिरूपं सर्वेश्वरस्य वर्ण्यते । 'भारूपः सत्यसङ्कल्प आकाशात्मा सर्वकर्मा सर्वगन्धः सर्वरसः' इति चातिभास्वररूपसौन्दर्यसौगन्ध्यादिवैशिष्ट्यमेतद्रूपस्याह । अत्युज्ज्वलरूपसौन्दर्यसौग-

न्ध्यसौकुमार्यादेरनेकनिदर्शनपूर्वकं च भगवतोऽसाधारणं मूर्तामूर्तप्रपञ्चविलक्षणं दिव्यं रूपं प्रपञ्च्यते—'तस्य हैतस्य पुरुषस्य रूपं यथा माहारजनं वासो यथा पाण्डवाविकं यथेन्द्रगोपो यथाऽग्न्यर्चिर्यथा पुण्डरीकं यथा सकृद्विद्युत्तम्' इति।

'परमात्मा वासुदेवो भगवान् दिव्यविग्रहः' 'अप्राकृततनुर्देवो नित्याकृतिधरो युवा' इत्यादिना च भगवतो रूपस्याप्राकृतत्वमुच्यते। इदं च पञ्चोपनिषत्संज्ञकदिव्यशक्तिरूपाप्राकृतपञ्चभूतात्मकत्वात्पञ्चोपनिषदिति भगवच्छास्त्रेषु प्रतिपाद्यते—'पञ्चशक्तिमयो देवो बहिर्लोकेश्वरेश्वरः।' 'शक्तयः पञ्च विख्याताः पञ्चोपनिषदाख्यया। परमेष्ठी पुमान् विश्वो निवृत्तिः सर्व एव हि॥ परमेष्ठी स्मृतः शब्दे स्पर्शे तु पुरुषः स्मृतः। विश्वात्मा तेजसि प्रोक्तो निवृत्त्यात्मा रसे स्मृतः॥ सर्वात्मा कथितो गन्धे॥' 'पञ्चोपनिषदाम्नातदिव्यमङ्गलविग्रहः।' इति। 'न तस्य प्राकृता मूर्तिर्मांसमेदोऽस्थिसम्भवा' इति वचनैकार्थ्याच्च 'न भूतसङ्घसंस्थानो देहोऽस्य परमात्मनः' इति वचनं प्राकृतभूतसङ्घातात्मकत्वपरम्। तथा हि तत्रैव क्षरप्राकृतप्रपञ्चविलक्षणमप्राकृतं परं रूपमुपक्षिप्य तस्यैव कृष्णरूपत्वं चोक्तम्—'अव्यक्तादिविशेषान्तं परिणामर्धिसंयुतम्। क्रीडा हरेरिदं सर्वं क्षरमित्यवधार्यताम्॥ अक्षरं तत्परं नित्यं वैरूप्यं जगतो हरेः। तद्विद्धि रूपमतुलं अमृतत्वं भजच्छिवम्॥ तदेव कृष्णो दाशार्हः श्रीमान् श्रीवत्सलक्षणः। न भूतसङ्घसंस्थानो देहोऽस्य परमात्मनः॥' इति। श्रीविष्णुपुराणे च प्रकृतिप्राकृतरूपविसजातीयस्य भगवदसाधारणस्य रूपस्य वर्णित-

मस्ति—'समस्ताः शक्तयश्चैता नृप यत्र प्रतिष्ठिताः । तद्विश्वरूपवैरूप्यं रूपमन्यद्धरेर्महत् ॥' इति ।

परमात्मनो रूपग्रहणं च न पुण्यपापकर्महेतुकं किन्त्विच्छामात्रहेतुकमिति च तत्रैव प्रतिपाद्यते—'इच्छागृहीताभिमतोरुदेहः संसाधिताशेषजगद्धितोऽसौ ।' 'जगतामुपकाराय न सा कर्मनिमित्तजा' 'नाकारणात्कारणाद्वा कारणाकारणान्न च । शरीरग्रहणं राजन् धर्मत्राणाय केवलम् ॥' इति । अकस्यारणात् प्रापकात्पापात्, कस्य सुखस्यारणात्—प्रापकात्पुण्यात्, कारणाकारणात्—मिश्रकर्मणो वा न भगवतः शरीरग्रहणं किन्तु धर्मत्राणायैव केवलमिच्छाकृतमेवेत्याशयः । अवताररूपाणामेवाकर्मनिमित्तत्वे किं वक्तव्यं पररूपस्य तथात्वे । नित्यमुक्तानां शेषत्वलक्षणस्य धर्मस्य तत्कर्तृकसेवाप्रतिसम्बन्धितया परिपालनार्थं नित्येच्छागृहीतं परं रूपं नित्यम् । अनित्येच्छागृहीतानि च स्वधर्मज्ञानवैराग्यभक्त्याद्यैकान्तिकधर्मप्रवर्तनादिफलकान्यवताररूपाण्यनित्यानीति विवेकः ।

एतेन रूपवत्त्वे परस्य ब्रह्मणो वाद्यन्तरैरुपपादिता दोषा अपि निराकृता वेदितव्याः । तथा हि—यथा जीवस्वरूपस्य ज्ञानानन्दमयस्य तु । आवारकं वपुर्दृष्टं दुःखाज्ञानादिवर्धकम् ॥ तथा च परमस्यापि पुंसोऽज्ञानादि साधयेत् । रूपवत्त्वमितीदं तु चोद्यं मन्दतरं मतम् ॥ कर्माधीनं प्राकृतं यद्रूपं तत्स्यात्तथाविधम् । बद्धात्मनः परेशस्य रूपं ह्येतद्विलक्षणम् ॥ इदं तु न प्राकृतवज्ज्ञानानन्दादिमोषकम् । शुद्धसत्त्वतया किन्तु ज्ञानादेर्वर्धकं भवेत् ॥ ज्ञानानन्दमयत्वं चावर्णि तस्मादमुष्य वै । षाड्गुण्यव्यञ्जकत्वाच्च प्रोक्तं षाड्गुण्यमित्यपि ॥

तथा च पाद्मसंहितावचनम्—'षाड्गुण्यविग्रहं सर्वशक्तिं स्वाश्रयमाश्रितम्। भूतेशं भूतकृद्भूतं तमसः परतः स्थितम् ॥' इति। रहस्याम्नाये च भगवद्रूपस्य षाड्गुण्यमयत्वमुच्यते—'किमात्मिका खल्वियं भगवतो व्यक्तिः। भगवदात्मिकैवैषा। किमात्मकश्च भगवान्। ज्ञानात्मक ऐश्वर्यात्मकः शक्त्यात्मकश्च' इति। अयं भावः—यथा ज्ञानानन्दमयस्यापि जीवस्य कर्मकृतं शरीरं ज्ञानशक्त्यादेस्तिरोधायकं, नैवं भगवतो रूपम्। किन्तु षाड्गुण्यपूर्णस्य तस्यात्र तदनुरूपं षाड्गुण्यप्रकाशकं सदेवेति। तथा च विष्णुसहस्रनामसहस्रे 'अनिर्देश्यवपुः' इति नाम्नो व्याख्यानावसरे भाषितं श्रीपराशरभट्टाचार्यैः श्रीभगवद्रामानुजाचार्यमुख्यशिष्यभूतश्रीवत्साङ्कमिश्रात्मजैः—'शुद्धसत्त्वमयेन ह्यनेन कनकदलेनेव रत्नमुन्मील्यते षड्गुणी नतु त्रिगुणमयेनेव निमील्यते' इति। 'एतन्नाम्नो निरुक्तिश्च' ज्ञानादिषाड्गुण्यमयमुपमानविवर्जितम्। वपुरस्यास्ति तेजिष्ठं अनिर्देश्यवपुर्हि सः॥' इति। विश्वरूपविलक्षणत्वादस्य रूपस्येदृशमित्युपमाननिर्देशायोग्यत्वमनिर्देश्यत्वमिति यावत्।

चोद्यान्तरमथैवं स्याद्रूपवत्त्वे परात्मनः। किमर्थो रूपयोगोऽस्य पूर्णकामस्य सर्वदा॥ स्वरूपानन्दमात्रेण नित्यतृप्तस्य चादरः। देहादौ चेत्स्वरूपानन्दस्य स्यात्न्यूनताऽपि हि॥ अमूर्तोरूपताश्रुत्या किञ्चारूपं भवेद्ध्रुवम्। परब्रह्म, तथा रूपादेर्निषेधः स्फुटं श्रुतः॥ जितन्ते नामके स्तोत्रेऽखिलज्ञत्वेन सम्मते। न ते रूपं न चाकारो नायुधानि न चास्पदम्॥ इतीत्यत्र वयं ब्रूमः पूर्णकामत्वसिद्धये। गुणरूपविभूत्यादिमन्तव्यं परमार्थतः॥ परमेशस्यान्यथा हि न

बहुधा चास्ति भोगलीलास्वरूपतः ॥ यथा नीरोगगात्रस्य स्वरूपानन्द इष्यते । सेवया स्रक्चन्दनादेर्भोगानन्दो भवेद्ध्रुवम् ॥ कन्दुकादिक्रीडनाच्च लीलानन्दः प्रजायते । एवं त्रेधाऽऽनन्दयोगात्स्यादानन्दघनः परः ॥ अनन्तानन्दरूपत्वात्स्वरूपानन्द इष्यते । अप्राकृतस्थानभोग्यरूपादेर्भोग इष्यते ॥ सृष्ट्यादिलीलाव्यापाराल्लीलानन्दश्च सम्मतः । आनन्दमयता चास्य भवेदेवं यथाश्रुति ॥ अयमर्थो 'लोकवत्तु लीलाकैवल्यम्' इति सूत्रे वेदान्तसारेऽनुगृहीतः श्रीभाष्यकारैः— 'अस्यात्मतृप्तस्यावाप्तसमस्तकामत्वं हि सदाभिमतसकलभोगोपकरणसद्भावः । आत्मतृप्तेर्भोगतृप्तिर्विसजातीया । लीलारसस्यापि तद्विलक्षणस्य त्रिगुणपुरुषाद्युपकरणं नित्यमेव' इति ।

भोग्यत्वं गुणरूपादेर्दृष्टं च स्वानुबन्धिनः । न स्वभोग्यत्वघाताय किन्तु तद्वर्धकं मतम् ॥ एवं रूपाद्यादरे स्वानन्दन्यौन्यं न सम्भवेत् । निर्दोषशुभरूपादिमत्त्वात्स्यात्पूर्तिरेव तु ॥ वेदार्थसङ्ग्रहतात्पर्यटीकायां च रूपस्याभिमतत्वे स्वरूपभोग्यत्वस्य वैकल्यमाशङ्क्येत्थं परिहृतं व्यासार्यैः—'रूपस्य भोग्यतमत्वे स्वरूपस्य निरतिशयभोग्यत्ववैकल्यं स्यादिति चेन्न । स्वरूपस्य भोग्यतमत्वं स्वसम्बन्धिनोऽपि भोग्यतमत्वावहमिति स्वरूपभोग्यत्वपूर्तिरेव' इति । श्रीभाष्यटीकायामपि 'परमात्मस्वरूपं हि निरतिशयानन्दरूपं, सर्वज्ञत्वाच्च तच्च जानात्येवेति स्वरूपादन्यत्र भोग्यत्वज्ञानं न वक्तुं युक्तम्, अतः सर्वज्ञस्य तस्य विग्रहे स्पृहणीये स्वरूपस्य भोग्यतावैकल्यं स्यात्' इत्याशङ्क्य— 'स्वसम्बन्धिभोग्यत्वं स्वस्य न भोग्यताविरोधि अपि तु स्वभो-

म्यत्वातिशयावह, यथा स्वसम्बन्धिगुणगणभोग्यत्व, नहि स्वसम्बन्धिनामप्यामोदकस्य कस्तूरिकादेरामोदवैकल्यमपि तु तत्पौष्कल्यमेव, तथा स्वसम्बन्धाद्विग्रहभोग्यत्वमपि स्वभोग्यत्वातिशयावहम्' इति परिहृतम् ।

अमूर्तत्वश्रुतिस्तावद्व्यापकत्वपरा प्रभो । अरूपत्वश्रुतिश्च स्याद्धेयधर्मनिषेधिका ॥ न ते रूप न चाकार इत्यत्र तु विवक्षित । तादर्थ्यस्य निषेधो हि तथाव्यक्तमनन्तरम् ॥ तथापि पुरुषाकारो भक्ताना त्व प्रकाशसे । इति भक्तार्थता रूपादेर्हि सम्यङ् निरूपिता ॥ वर्णित च श्रीवत्साङ्कमिश्रै भगवता स्वकीय सर्वस्व भक्तार्थ परिगृहीतमिति—'परिजनपरिबर्हाभूषणान्यायुधानि प्रवरगुणगणाश्च ज्ञानशक्त्यादयस्ते । परमपदमथाण्डान्यात्मदेहस्तथात्मा वरद सकलमेतत्सश्रितार्थं चकर्थ ॥' इति ।

तस्मान्मुक्तानन्दनाय नित्यरूपपरिग्रह । बद्धरक्षार्थोऽवताररूपग्रह इति स्थितम् ॥

## रूपस्वरूपभेद ।

केचित्तु ब्रह्मणोऽरूपत्वश्रवणात्स्वरूपमेव करचरणादिसमुदायात्मकमिति वदन्ति । एव चेत्तर्हि अद्वितीयत्वश्रवणबलाद्ब्रह्मस्वरूपस्यैव चेतनाचेतनजगद्रूपत्वमपि प्रसज्येत । तथा च विकारित्वदुःखित्वादिकृत्स्नदोषप्रसक्ति । उक्त च सर्वार्थसिद्धौ—'यत्तु नित्य निष्कलं निर्विकार च ब्रह्म अशरीरश्रुत्या स्वरूपत एव विचित्रविग्रहाकारम्, तत एव विग्रहनित्यत्वमिति, न तत्सा वनीयम् । अन्यथा विश्वाद्वैतस्यापि सन्नाह्यत्वप्रसङ्गात ।' इति । अस्त्वेवमेवेति ब्रूयुः शुद्धाद्वैतिनः । नैतद्युज्यते

ज्ञानानन्दस्य परस्यैव ब्रह्मणो जडजीवरूपपरिणामे विकारित्वादि-दोषप्रसङ्गात् । ननु सुवर्णस्येव नानापरिणामेष्वपि शुद्धत्वमेव ब्रह्मण इति न दोषप्रसङ्गः । मैवम् । सुवर्णासाधारणाकारस्य भास्वररूपादेर्हि न कार्यावस्थायामपि तिरोधिः । ब्रह्मणस्तु स्वाभाविकज्ञानानन्दादेस्तिरोधिरवर्जनीया । न च लीलार्थमैच्छिकीयं तिरोधिर्ब्रह्मण इति वाच्यम् । तथात्वेऽपि सुवर्णादेर्लोहखण्डत्वादिप्राप्तिवद्धेयत्वादिप्रसङ्गस्य तादवस्थ्यादिति दिक् । यदि च निरुक्तदोषपरिहारायाद्वितीयपदस्य समाभ्यधिकराहित्यमात्रपरत्वमभ्युपेत्य ब्रह्मप्रकारभूतं चेतनाचेतनस्वरूपमुररीक्रियते तर्हि तुल्यनयेन अरूपश्रुतेः कर्मकृतशरीरनिषेधपरत्वमुपगम्य विलक्षणरूपवत्त्वमप्युररीक्रियताम् । श्रुतिस्मृतिषु च रूपस्वरूपयोर्भेद एव प्रतिपादितः सर्वत्र । किञ्च स्वरूपस्यैव करचरणादिसङ्घातरूपत्वाभ्युपगमोऽयुक्तः । सति च तथात्वेऽङ्गुलीप्रकोष्ठादिप्रदेशभेदेन कृशत्वस्थूलत्वादिलक्षणोपचयापचययोः स्वरूप एव प्राप्त्या 'अस्थूलमनणह्रस्वम्' इत्यादिस्वरूपपरश्रुतिविरोधप्रसङ्गात् । अत एव प्रियशिरस्त्वादीनां ब्रह्मधर्मत्वमाशङ्क्य परिहृतं सूत्रकृता—'प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे' इति । श्रीभाष्यादिषु विस्तरः । किञ्च—'यदा पश्यः पश्यते रुक्मवर्णम्' 'सर्वगन्धः सर्वरसः' इत्यादिनाऽप्राकृतविलक्षणरूपरसगन्धान्वयः प्रतीयते परमात्मनः । न चाचेतनधर्मभूतानां रूपादीनां योगः परमचेतने परमात्मस्वरूपे साक्षाद्घटेत विना देहयोगेन । जीवात्मवत् । तथा च सूत्रं 'आत्मशब्दाच्च' इति । अतोऽप्राकृतमङ्गलरूपाद्यधिकरणं दिव्यं रूपमेव परमात्मन एषितव्यम् ।

किञ्च वरुणोऽधिष्ठानशक्त्याऽप्सु सन्निहितो मूर्तिमांश्च स्वे लोके। यथा वा हुताशनो वह्निशिखायां स्वे लोके च। तत्र जलाद्यपि वरुणादे रूपं, करचरणादिलक्षणं तु स्वे स्वे लोके। एवं परमात्माऽपि सर्वेष्वपि चेतनाचेतनेषु शरीरभूतेष्वन्तःप्रविश्य नियन्तृत्वलक्षणेन सामर्थ्येन स्वरूपेण सन्निहितो मूर्तिमांश्च स्वे लोके। इयांस्तु विशेषः—धर्मभूतज्ञानव्याप्तिमात्रेण जलाद्यधिष्ठानं वरुणादेः। ब्रह्मणस्तु स्वरूपतोऽपि सर्वत्र व्याप्तिरिति। समानमन्यत्। व्यापकं च स्वरूपं निरवयवमपि सर्वतः पाणिपादादिकार्यकृत्त्वात्प्रपञ्च्यते—'सर्वतः पाणिपादं तत् सर्वतोऽक्षिशिरोमुखम्' इति। (सात्वतसंहिता) विवृतं चैतत्पाद्मसंहितायां—'चराचरमिदं कृत्स्नमाक्षिप्तं परमात्मना। यतस्तत्सर्वपाणित्वं तस्य लक्षणमुच्यते॥ देशकालाविशेषेण संयुक्तं परमेष्ठिना। यौगपद्येन सततं सर्वत पात् प्रभुः स्मृतः॥ तिर्यगूर्ध्वमधश्चोर्ध्वैर्गत्या भास्यते जगत्। रविर्यथा तथा कृत्वाद्विश्वतश्चक्षुरुच्यते॥ सर्वं पुरःस्थितं तस्य वस्तुजातं यतस्ततः। विश्वतोमुखता तस्य ब्रह्मणः कमलासन॥ ज्ञानेन्द्रियाणि सर्वाणि श्रूयन्ते शिर उत्तमम्। तथा ज्ञानाश्रयत्वेन ज्ञेयः सर्वशिराः प्रभुः॥' इति। यथा वरुणादिः स्वे लोके साकार इत्युक्ते विलक्षणमूर्तिमानित्यर्थः, एवं परमात्मा स्वे लोके साकार इत्युक्तेऽपि स्वासाधारणमूर्तिमानित्युक्तं भवति। प्रयुज्यते च शरीर आकारशब्दो महाकविभिः 'आकारसदृशप्रज्ञः' इत्यादौ। श्रीभाष्यकाराश्चानुजगृहुर्वेदार्थसङ्ग्रहे—'सर्वात्मना आधेयतया नियाम्यतया शेषतया चापृथक्सिद्धप्रकारभूतमिति आकारः शरीरमिति चोच्यते'

इति । वेदान्तसारे च 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषः' इत्यादौ श्रूयमाणः पुरुषाकारः परमात्मैव । कुतस्तद्धर्मोपदेशात्' इति । आकारशरीरशब्दयोरैकार्थ्यं सुज्ञानमेवम् । जातिगुणयोरप्याकारशब्दः प्रयुज्यते—'कम्बुग्रीवाद्याकारः' 'नीलाकारः' 'पीताकारः' इत्यादौ । अतः सामान्यतोऽपृथक्सिद्धविशेषणवाच्याकारशब्दः; चेतनापृथक्सिद्धविशेषणद्रव्यवाची च शरीरशब्द इति फलति । तथा च स्वापृथक्सिद्धसर्वचेतनाचेतनविशिष्टं निर्दोषनिखिलकल्याणगुणाकरं विलक्षणासाधारणरूपवच्च परंब्रह्म साकारं व्यवातिष्ठिपन् श्रीभाष्यकृतः साकारब्रह्मवादिनः श्रीभाष्यादौ ।

अन्तरधिकरणे च श्रीभाष्ये स्वरूपतद्गुण-रूपतद्गुणा विविच्योदाहृताः, दिव्यरूपस्य स्वाभाविकत्वं च भाषितं सप्रमाणम्—'एतदुक्तं भवति—परस्यैव ब्रह्मणो निखिलहेयप्रत्यनीकानन्तज्ञानानन्दैकस्वरूपतया सकलेतरविलक्षणस्य स्वाभाविकानवधिकातिशयासङ्ख्येयकल्याणगुणाश्च सन्ति, तद्वदेव स्वाभिमतानुरूपैकरूपाचिन्त्यदिव्याद्भुतनित्यनिरवद्यनिरतिशयौज्ज्वल्यसौन्दर्यसौगन्ध्यसौकुमार्यलावण्ययौवनाद्यनन्तकल्याणनिधिदिव्यरूपमपि स्वाभाविकमस्ति' इत्यादिना । गीताभाष्येऽपि—'अनन्तज्ञानानन्दैकस्वरूपः, अनन्तगुणनिधिदिव्यरूपः' इत्येवं स्वरूपरूपयोर्विविक्ततया वर्णनं वरीवर्ति । वेदार्थसङ्ग्रहे च 'तस्यैतस्य परस्य ब्रह्मणो नारायणस्यापरिच्छेद्यज्ञानानन्दामलत्वस्वरूपवत्, ज्ञानशक्तिबलैश्वर्यवीर्यतेजःप्रभृत्यनवधिकातिशयासङ्ख्येयकल्याणगुणगणवत्, स्वसङ्कल्पप्रवर्त्यस्वेतरसमस्तचिदचिद्वस्तुजातवत् स्वाभिमतस्वानुरूपैक-

रूपदिव्यरूप–तदुचितनिरतिशयकल्याणविविधानन्तभूषण–स्वशक्तिसदृशापरिमितानन्ताश्चर्यनानाविधायुध–स्वाभिमतस्वानुरूपस्वरूपरूपगुणविभवैश्वर्यशीलाद्यनवधिकमहिममहिषी–स्वानुरूपकल्याणज्ञानक्रियाद्यपरिमेयगुणानन्तपरिजनपरिच्छद–स्वोचितनिखिलभोग्यभोगोपकरणाद्यनन्तमहाविभवावाङ्मनसगोचरस्वरूपस्वभावदिव्यस्थानादिनित्यतानिरवद्यतागोचराश्च सहस्रश श्रुतय सन्ति" इत्यादिना दिव्यरूपाभरणायुधदिव्यमहिषीनित्यपार्षदनित्यस्थानानि परमार्थतः सप्रमाण व्यवस्थापितानि ।

एवमस्त्रवस्त्रभूषणादिजुष्टाक्षरपरमव्योमनिलयनदिव्यरूपवत्साकारं परब्रह्म श्रीभाष्यकारैः व्यवस्थापितमेव स्वाभिमतत्वेन प्राचिख्यपद्भगवान् श्रीहरि स्वयमेव 'मत विशिष्टाद्वैत मे' 'शारीरकाणा भगवद्गीतायाश्चाधिगम्यताम् । रामानुजाचार्यकृत भाष्यमाध्यात्मिकं मम' इति कथयन् । अस्य च टीकायां 'अत्र स्वाभिमतभगवत्साकारत्वस्य सप्रपञ्च प्रतिपादितत्वादिदमेवास्मदध्यात्मशास्त्रमिति भवद्भिरप्येतदध्येतव्य श्रोतव्य च' इति भावो वर्णितः । 'साकारब्रह्मनिश्चयात्' इति श्रीभाष्यादीनां विशेषणादपि तत्प्रतिपादितप्रकारमेव साकारत्वमभिमत भवेत् । तथा 'मत विशिष्टाद्वैत मे गोलोको धाम चेप्सितम्' इत्यत्र भाष्ये 'नहि राजेव परिजनैः सेव्यमान कश्चित्समिन्वेऽस्य य परमात्मा, अस्य च स्वरूप 'सत्य ज्ञानमनन्त' इति श्रूयते इत्याशङ्कायां सत्यज्ञानानन्तस्वरूपस्यैवास्य दिव्यविग्रहेण विराजमानस्य नित्यमुक्तानुभाव्यस्यास्ति देशविशेषः श्रुतिसुप्रतिपः

इत्याह 'गोलोको धाम चेप्सित'मिति वर्णनाच्च रूपस्वरूपयोर्भेदोऽवगन्तुं शक्यते । सुधासिन्धावपि 'विशिष्टाद्वैतसिद्धान्तो मतो रामानुजेन तु । जीवेशमायाभेदश्च तात्त्विको नतु कल्पितः ॥ आकारो वैभवैश्वर्यं दिव्यं भगवतस्तथा । दास्येनोपासना तस्य कार्या जीवैस्तथेति च ॥' इति रामानुजाचार्यमतमुपन्यस्य स्वस्यापि तदेव मतं तदुपास्य एव च पुरुषोत्तमो दिव्यरूपोऽस्मदुपास्य इति स्फुटमवर्णि श्रीहरिणा—'प्रायो रामानुजस्वामिसिद्धान्तोऽस्ति मतो मम । ब्रह्मात्मना कृष्णसेवा भक्तिर्मुक्तिस्तथेप्सितौ ॥ रामानुजाचार्यमतश्चोपास्यः पुरुषोत्तमः ।' इति । अत्र चाकारशब्दो दिव्यविग्रह एव प्रयुक्तः । आकृतिशब्दोऽपि शरीरे प्रयुक्तस्तत्रैव—'या या आकृतयः सन्ति ब्रह्माण्डे प्राकृता हि ताः । जाताः प्रकृतिपुंयोगादस्य त्वप्राकृताऽस्ति सा ॥' इति । तथा तत्रैवाप्राकृतप्राकृताकृत्योर्दिव्यादिव्यत्वतो महद्वैलक्षण्यं भवत्येवेति प्रतिपाद्य 'अनेककोटिब्रह्माण्डाधीश्वरो दिव्यविग्रहः ।' इति प्रतिपादनात् नृशरीर इत्यर्थे त्वाकृतिरिति प्रयोगाच्च विग्रहपर्यायताऽऽकृतिशब्दस्य विवक्षितेति गम्यते । 'अस्य त्वप्राकृताऽस्ति सा' इति व्यतिरेकनिर्देशस्वारस्याच्च रूपस्वरूपयोर्भेदः सिद्ध्यति । तथा 'सच्चिदानन्दरूपोऽतिलावण्यो दिव्यविग्रहः' इत्यत्रापि प्रथमविशेषणेन स्वरूपमनन्तरविशेषणतो लावण्यामृतमहोदधि दिव्यं रूपं च विवक्षितम् । 'मायिकाकारतः कृष्णाकृतिरस्ति विलक्षणा । अतीवरमणीयाङ्ग सर्वसौन्दर्यसङ्ग्रहा । दिव्या नित्याऽकालगुणा सर्वेषां च मनोहरा ॥' इत्यत्र च कृष्णमूर्तेरक्षरधामस्थाया अप्राकृतत्वं वर्णितमस्ति मायिकत्वनिषेधपूर्वकम् । नहि ब्रह्मण एव मूर्तिरूपत्वे

मायिकत्वशङ्कायाः प्रसङ्गः । प्रसक्तस्यैव प्रतिषेधकरणस्यौचित्याच्च सर्वाङ्गसम्पन्नायाः कृष्णमूर्तेः स्वरूपतो भिन्नाया प्राकृतशरीरवद्-दुःखादिनिदानत्वानित्यत्वादेः प्रसक्तस्य प्रतिषेधपरत्वमेव । 'अक्षरे धाम्नि कृष्णस्य सन्त्याकारा च सर्वशः । याः सन्त्याकृतय-स्तास्तु सत्या दिव्याश्च भास्वराः ॥' इत्यत्र च नित्यमुक्तानामिव श्रीकृष्णस्यापि अप्राकृतरूपवत्त्वमेव प्रतिपाद्यते । ननु रूपस्वरूपयोरभेदः । सत्यम्, तथापि 'दिव्यं कृष्णस्य रूपं भवति च सततं तस्य लोकोऽपि दिव्यः' इति श्लोकेन स्वरूपापेक्षया रूपस्यापि लोकादिवत्पृथगेवाप्राकृतद्रव्यत्वमुपपादितुम् । 'इत्थं निर्दोषरूपं सकलगुणगणालङ्कृतं दिव्यमूर्तिं एकस्मिन्नद्वितीये भगवति च परब्रह्मणि द्वैतबुद्धिः कर्तव्या नैव तस्मिन्नणुरपि च कुधी सच्चिदानन्दरूपे ॥' इत्यनन्तरश्लोकेऽपि 'सच्चिदानन्दरूपे' इति स्वरूपम्, 'सकलगुणगणालङ्कृतम्' इति गुणा, 'दिव्य-मूर्तिं' इति विलक्षणरूपं च पृथगेव व्यपदिश्यन्ते । 'नराकृति परब्रह्म स्थितो योऽक्षरधामनि । निर्गुणो निर्विकारश्च सच्चि-दानन्दलक्षणः ॥' इत्यत्रापि 'नराकृति' इति रूपम्, 'सच्चि-दानन्दलक्षणः' इति स्वरूपमिति पृथगेव प्रतिपादितम् ।

गोपालानन्दस्वामिभिर्विरचिते दशोपनिषद्भाष्येऽपि रूपस्वरूपयो-र्भेदव्यपदेशा बहुलमुपलभ्यन्ते नाम । दिङ्मात्रमुदाह्रियते । 'व्यूह रश्मीन्' इत्यादिमन्त्रभाष्यं यथा–( १ ) रश्मीन्–भवदी-यदिव्यदेहरश्मीन्, व्यूह–क्षणमात्रमुपसंहर, वयमसमर्थास्त-द्दर्शने इति भावः । यत्तेजोऽस्मन्नयनसुखावहं तत्समूहं पुञ्जी-कुरु । यत्कल्याणतमं ते रूपं सकलमङ्गलावहं ते रूपं

श्यामि । कोटिसूर्यप्रकाशवदत्युग्रं तेज उपसंहृत्य मादृशजनदर्शनक्षमं सौम्यं तेजः स्वीकृत्य दिव्यामृतमत्याह्लादकं दिव्यं रूपं मम लोचनसात्कुरु इति भावः। ईदृशे दिव्यतेजसि प्रणष्टदृष्टयः कतिचन भगवत्प्रसादविमुखा अविग्रहं भगवन्तमाहुः । श्रुतिस्तु जागर्ति या भगवतः परब्रह्मणो दिव्यं रूपं बोधयति 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते' 'रुक्माभं स्वप्नधीगम्यं' 'आत्मैवेदमग्र आसीत्पुरुषविधः' 'आदित्यवर्णं तमसस्तु पारे' 'सर्वकर्मा सर्वगन्धः सर्वरसः' इत्यादिः। ( २ ) 'स एषोऽन्तश्चरते बहुधा जायमानः' इत्यस्य भाष्यं—स एष सर्वान्तरात्मैकोऽपि प्रतिहृदयं विग्रहविशिष्टवेषेणाविर्भवन् बहुधा भवतीति 'बहुधा जायमानः' इत्युक्तिः । ( ३ ) 'दिव्ये ब्रह्मपुरे ह्येष व्योमन्यात्मा प्रतिष्ठितः' इत्यस्य च भाष्यं—'अन्तश्चरति नाभैषः । प्रतिष्ठितस्तु दिव्ये व्योम्नि ब्रह्मपुरे हि । अप्राकृताकाशे ब्रह्माख्ये परे स्थानविशेषे प्रकर्षेण दिव्यमूर्त्या स्थितः' इति। अनेन च सर्वव्यापकस्य भगवत्स्वरूपस्य दिव्यविग्रहविशिष्टवेपेण स्थानविशेषे स्थितिरुक्ता भवति। ( ४ ) 'भारूपः आकाशात्मा' इत्यस्य व्याख्यानं—'अथापरमसाधारणं प्रकृतितत्संसृष्टविलक्षणं दीप्तिमयं रूपं तदसावुच्यते 'भारूप' इति । स्वयम्प्रकाशैकरसदिव्यतनुरित्यर्थः । आ—समन्तात् काशते इत्याकाशः, परितः प्रकाशमान आत्मा स्वरूपं यस्य सः पूर्वं प्रकाशमयता शरीरस्योक्ता, इह तु स्वरूपस्येति भेदः, इति ।( ५ ) 'श्यामाच्छवलं प्रपद्ये' इत्यस्य भाष्ये च 'दिव्यविग्रहयोगेनेदं श्यामत्वमभिप्रेतम्' इति वर्णितम् । नित्यानन्द-

स्वामिभिरपि शाण्डिल्यभक्तिसूत्रभाष्ये 'तच्च दिव्यं स्वशक्तिमात्रोद्भवात्' इति सूत्रव्याख्यावसरे श्रुत्यादिप्रमाणोपन्यासपूर्वकं रूपस्वरूपयोर्भेदः श्रीभाष्यादिप्रक्रिययैव समुपवर्णितोऽस्ति। मुक्तानन्दस्वामिभिश्च ब्रह्मसूत्रभाष्ये।

श्रीभागवतस्य भक्तरञ्जनीटीकायां च श्रीभगवत्प्रसादाचार्यैः— 'अमलसत्त्वधाम्नि' (स्क०—१० अ०—२ श्लो०—२९) इत्यस्य व्याख्या कृता 'शुद्धसत्त्वमयविग्रहयुक्ते' इति। 'यादृशं वा यदात्मकम्' (स्क० ११ अ०—१४ श्लो०—३१) इत्यस्य व्याख्या च 'यादृश'मिति विग्रहसंस्थानप्रश्नः, 'यदात्मक'मिति दिव्यात्मस्वरूपप्रश्नः' इति। तत्रैव 'यादृश'मित्यस्योत्तरं 'समं प्रशान्तं सुमुखं' मित्यादिनोक्तम्, 'यदात्मक'मित्यस्योत्तरं 'तत्र लब्धपदं चित्तमाकृष्य व्योम्नि धारयेत्' इत्यनेन प्रतिपाद्यते। अस्य च व्याख्या 'दिव्यात्मस्वरूपस्य व्योमोपमत्वं 'कं ब्रह्म खं ब्रह्मे'ति श्रुतिप्रसिद्धम्' इत्यादिः। एतेन परमात्मस्वरूपस्य विभुत्वं दिव्यमूर्तिमत्त्वं च सिद्ध्यति। एवमन्येष्वपि सम्प्रदायग्रन्थेषु आचार्यवर्यैः साधुवर्यैश्च कृतेषु रूपस्वरूपयोर्भेदव्यपदेशा देहात्मनोरिव सहस्रशः सन्त्येव॥

श्रीवासुदेवमाहात्म्ये च श्रीहरिणा स्वसम्प्रदायमूलप्रमाणग्रन्थत्वेनात्यन्तं समादृते रूपस्वरूपयोर्भेदनिर्देशा बहुलमुपलभ्यन्ते। यथा—'सत्यं ज्ञानमनन्तं यो ब्रह्मेति श्रुतिवर्णितः। त्रिगुणव्यतिरिक्तश्च पुरुषो दिव्यविग्रहः॥' 'तेजोमण्डलमध्यस्थदिव्यसुन्दरमूर्तये। नमामो विष्णवे तुभ्यं परात्परपराय च॥' 'वाणीमनोविप्रकृष्टमहिम्नेऽक्षररूपिणे।

बृहते च नमोनमः ॥' इत्यादयः । 'तेजपुञ्जाभिरुद्धाङ्गो गुणातीताद्भुताकृतिः । अखण्डानन्दरूपश्च सदा शुद्धोऽच्युतोऽस्ति सः ॥' 'रूपवर्णवयोवस्थाः प्राकृता नैव तस्य हि । सर्वं तस्यास्ति तद्दिव्यं सर्वोपकरणानि च ॥' 'आत्मात्मा चाक्षरात्मा च ह्येष आकाशनिर्मलः । दिव्यदृगीक्ष्यः सन्मात्रः पुरुषो वसुदेवजः ॥' 'समस्तकल्याणगुणो निर्गुणश्चेश्वरेश्वरः । परया विद्यया वेद्य उपास्यो ब्रह्मभिः प्रभुः ॥' 'दिव्यमूर्तिं तमीशानं तपसैकान्तिकेन च । यः प्रीणयति धर्मात्मा स धन्यतम उच्यते ॥' इत्यत्र च 'अखण्डानन्दरूपश्च' 'आत्मात्मा चाक्षरात्मा च' इति अनन्तज्ञानानन्दस्वरूपं सर्वान्तर्यामि निर्दिष्टम् । 'तेजःपुञ्जाभिरुद्धाङ्गो गुणातीताद्भुताकृतिः' 'दिव्यमूर्तिं' इति चाप्राकृतमत्युज्ज्वलमत्यद्भुतं रूपम् । 'रूपवर्णवयोवस्था' इति श्लोके चाप्राकृतभोगोपकरणादिवद्रूपस्यापि भगवत्स्वरूपतो भिन्नस्यैवाप्राकृतत्वमुक्तम् । निर्दोषकल्याणगुणैकतानमप्राकृतरूपवच्च परंब्रह्म परविद्याप्राप्यं मुक्तोपसेव्यं चेति वेदान्तसारार्थ एव श्रीभाष्यादिषु व्यवस्थापितोऽत्र प्रकरणे निर्दिष्टो वेदितव्यः ।

स्वरूपं निष्कलं व्यापि ज्ञानशक्त्यादिधर्मकम् ।
रूपं त्वक्षरधामस्थं दिव्यगन्धादिमच्चेत् ॥
रूपस्यैव ब्रह्मभावे हस्तपादादिभेदतः ।
भवेद्ब्रह्मबहुत्वं तु श्रुतिर्वैयाकुली ततः ॥
नातिरिक्तोऽवयव्यस्ति सङ्घातश्चेतयेष्म तु ।
सत्येव भेदे भेदस्य निषेधो ब्रह्मरूपयोः ॥
उपादेयत्वहेयत्वविशेषविषयो भवेत् ।
जीवस्य तद्धर्मणश्च यथा भेदोऽस्ति सम्मतः ॥

त्याज्योपादेयभावेन नैव भेदोऽत्र वै त्विति ।
उपादेयतमं रूपं ब्रह्मणो ब्रह्मवत्सदा ॥
एवमेव च तात्पर्यं मुक्तात्मविषयेऽपि हि ।
देहदेहिभिदायास्तु निषेधोक्तेः समं मतम् ॥
स्वरूपरूपैकत्वोक्तिरन्तरङ्गत्वतो भवेत् ।
प्रत्यासत्तिविशेषाच्च साम्यतश्च क्वचित्कृता ॥
ज्ञानानन्दात्मकत्वं हि समं रूपस्वरूपयोः ।
यथा हि भुज्यमान एव श्रीफलाद्युपलभ्यते ॥
बहिरन्तश्चैकरसं तथा ब्रह्मापि मूर्तिमत् ।
मुमुक्षूपास्यता मुक्तप्राप्यता च समा तयोः ॥
सत्यप्येवं समत्वे प्राधान्यतो रूपमेव तु ।
वर्णितं तत्र तत्रास्ति नीरूपभ्रान्तिमुक्तये ॥
शुभाश्रयो हि चित्तस्य रूपमेव प्रशस्यते ।
सेवा मुक्तिश्च रूपे हि स्वरसात्सम्भविष्यति ॥
चेतनोज्जीवने मुख्यहेतुत्वेनैवमेव तु ।
अत्यन्ताभिमतं प्रोक्तमीश्वरस्य स्वकं वपुः ॥

तथा च यामुनमुनयः 'मूर्तं ब्रह्म ततोऽपि तत्प्रियतरं रूपं यदत्यद्भुतम्' इति । यत ईश्वरस्यात्यन्ताभिमतं स्वकं रूपं, अतोऽत्यन्तभक्तायैव स्वीयं रूपं सम्यक् प्रदर्शयति स्वस्य सर्वस्वभूतं, यथा पिता प्रियायैव पुत्राय सर्वस्वं प्रकाशयति । तथा च श्रूयते—'यमेवैष वृणुते तेन लभ्यस्तस्यैष ... ...'
इति । अयमेवार्थो वासुदेवमाहात्म्ये ...

---

१ अत्र प्रमाणि बहिर्मूर्तिः, अन्तः ...

ग्रहो यस्मिन् स तेजसि समीक्षते । केवलं तेज एवान्ये पश्यन्ति न तु तं मुने ॥' इति ।

यथा ब्रह्मगुणेषूपासकस्यासक्तिरिष्यते ।
ब्रह्मणीव च भोग्यत्वं तथा रूपेऽपि भाव्यताम् ॥
रूपभिन्नं ब्रह्म परं स्याच्चेद्रूपे तु मन्दता ।
समादरस्य स्यादेवं शङ्का न प्रसजेदतः ॥
दिव्यरूपं परंब्रह्म ध्येयं प्राप्यमिति त्वपि ।
ध्यानाद्यालम्बनत्वात्स्याद्रूपमत्यादरास्पदम् ॥
एवं च मङ्गलगुणगणाढ्यं दिव्यमूर्तिमत् ।
साकारमिति निर्णीतं परंब्रह्म परात्परम् ॥

## पररूपस्य सावयवत्वं नित्यत्वं च ।

परमात्मनो रूपं च सर्वावयवोपेतम् । 'बुद्धिमनोङ्गप्रत्यङ्गवत्तां भगवति लक्षयामहे शास्त्रशब्देभ्यः' इति सहस्रनामभाष्ये वचनात्, 'इन्द्रियाकाराङ्गप्रत्यङ्गव्यञ्जनवती'ति रहस्याम्नायवाक्याच्च । अवयववैकल्यस्य कर्मनिबन्धनत्वाच्चाकर्मपरवशस्य परमात्मन इच्छामात्रपरिक्लृप्ते रूपेऽङ्गवैकल्यसम्भावना न पदमञ्चति । 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात्सर्व एव सुवर्णः, तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी' इति श्रुतपुण्डरीकलोचनश्मश्रुकेशनखाद्यधिकरणतया च शिरःकरचरणादियोगः सिद्ध्यति । कप्यासश्रुतेरयमर्थः—कं जलं पिबतीति कपिः—सूर्यः, तेनास्यते—विकास्यते इति कप्यासं, रविकरविकसितमित्यर्थः । तथाविधं पुण्डरीकमिवामलमायतं च नेत्रद्वयमित्यर्थः । पुण्डरीकस्यैव विशेषणं कप्यासमिति शोभातिशयव्य-

त्याज्योपादेयभावेन नैव भेदोऽत्र यं त्विति ।
उपादेयतमं रूपं ब्रह्मणो ब्रह्मवत्सदा ॥
एवमेव च तात्पर्यं मुक्तात्मविषयेऽपि हि ।
देहदेहिभिदायास्तु निषेधोक्ते समं मतम् ॥
स्वरूपरूपैकत्वोक्तिरन्तरङ्गत्वतो भवेत् ।
प्रत्यासत्तिविशेषाच्च साम्यतश्च क्वचित्कृता ॥
ज्ञानानन्दात्मकत्वं हि समं रूपस्वरूपयोः ।
यथा हि भुज्यमानं च श्रीफलाद्युपलभ्यते ॥
बहिरन्तश्चैकरसं तथा ब्रह्मापि मूर्तिमत् ।
मुमुक्षूपास्यता मुक्तप्राप्यता च समा तयोः ॥
सत्यप्येवं समत्वे प्राधान्यतो रूपमेव तु ।
वर्णितं तत्र तत्रास्ति नीरूपभ्रान्तिमुक्तये ॥
शुभाश्रयो हि चित्तस्य रूपमेव प्रशस्यते ।
सेवा मुक्तिश्च रूपे हि स्वरसात्सम्भविष्यति ॥
चेतनोज्जीवने मुख्यहेतुत्वेनैवमेव तु ।
अत्यन्ताभिमतं प्रोक्तमीश्वरस्य स्वकं वपुः ॥

तथा च यामुनमुनयः 'मूर्तं ब्रह्म ततोऽपि तत्प्रियतरं रूपं यदत्यद्भुतम्' इति । यत ईश्वरस्यात्यन्ताभिमतं स्वकं रूपं, अतोऽत्यन्तभक्तायैव स्वीयं रूपं सम्यक् प्रदर्शयति स्वस्य सर्वस्वभूतं, यथा पिता प्रियायैव पुत्राय सर्वस्वं प्रकाशयति । तथा च श्रूयते—'यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्' इति । अयमेवार्थो वासुदेवमाहात्म्येऽपि विवक्षितः 'कृष्णस्यानु-

---

१ अत्र ब्रह्मणि बहिर्मूर्तिः अन्तः स्वरूपम् । एकरसत्वं

ग्रहो यस्मिन् स तेजसि समीक्षते । केवलं तेज एवान्ये पश्यन्ति न तु तं मुने ॥' इति।

यथा ब्रह्मगुणेषूपासकस्यासक्तिरिष्यते ।
ब्रह्मणीव च भोग्यत्वं तथा रूपेऽपि भाव्यताम् ॥
रूपभिन्नं ब्रह्म परं स्याच्चेद्रूपे तु मन्दता ।
समादरस्य स्यादेवं शङ्का न प्रसजेदतः ॥
दिव्यरूपं परंब्रह्म ध्येयं प्राप्यमिति त्वपि ।
ध्यानाद्यालम्बनत्वात्स्याद्रूपमत्यादरास्पदम् ॥
एवं च मङ्गलगुणगणाढ्यं दिव्यमूर्तिमत् ।
साकारमिति निर्णीतं परंब्रह्म परात्परम् ॥

## पररूपस्य सावयवत्वं नित्यत्वं च ।

परमात्मनो रूपं च सर्वावयवोपेतम्। 'बुद्धिमनोङ्गप्रत्यङ्गवत्तां भगवति लक्षयामहे शास्त्रशब्देभ्यः' इति सहस्रनामभाष्ये वचनात्, 'इन्द्रियाकाराङ्गप्रत्यङ्गव्यञ्जनवती'ति रहस्याम्नायवाक्याच्च। अवयववैकल्यस्य कर्मनिबन्धनत्वाच्चाकर्मपरवशस्य परमात्मन इच्छामात्रपरिक्लृप्ते रूपेऽङ्गवैकल्यसम्भावना न पदमञ्चति। 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात्सर्व एव सुवर्णः, तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी' इति श्रुतपुण्डरीकलोचनश्मश्रुकेशनखाद्यधिकरणतया च शिरःकरचरणादियोगः सिद्ध्यति। कप्यासश्रुतेरयमर्थः—कं जलं पिबतीति कपिः—सूर्यः, तेनास्यते—विकाश्यते इति कप्यासं, रविकरविकसितमित्यर्थः। तथाविधं पुण्डरीकमिवामलमायतं च नेत्रद्वयमित्यर्थः। पुण्डरीकस्यैव विशेषणं कप्यासमिति शोभातिशयव्य-

ज्ञानार्थम् । न तु कुदृष्टिकल्पितोपमान्तरपरं तत् । यथाशब्दान्तरस्य वाशब्दस्य वा अश्रवणादिति । श्रीभागवते च उपास्यस्य पररूपस्य सर्वाङ्गसम्पन्नत्वं प्रतिपाद्यते–'ध्यायेद्देवं समग्राङ्गं यावन्न च्यवते मनः' इति । वासुदेवमाहात्म्येऽप्यस्य सर्वाङ्गपरिपूर्णत्वमवर्णि 'रूपानुरूपसंपूर्णदिव्यावयवलक्षितम्' इति । 'वेदाहमेतं पुरुषं महान्तं' इति पुरुषशब्दश्रवणात् हिरण्यश्मश्रुत्वादिश्रवणाच्च पुरुषाकारैव भगवतो मूर्तिः ।

सर्वाङ्गसम्पन्नं चेदं पररूपं नित्येच्छासिद्धं नित्यमेव । तथा च वचनानि–'नित्यं नित्याकृतिधरं तेजसा सूर्यवर्चसम् ।' 'नित्यसिद्धे तदाकारे तत्परत्वे च पौष्कर । यस्यास्ति सत्ता हृदये तस्यासौ सन्निधिं व्रजेत् ॥' 'नित्यालिङ्ग स्वभावसंसिद्धिः ।' इत्यादीनि । अत्र स्वभावसिद्धत्वान्नित्यत्वं भगवन्मूर्तेः प्रतिपाद्यते । अस्याश्च शास्त्रैकसमधिगम्यतया लिङ्गाधीनसाधनबाधनायोग्यत्वमलिङ्गेत्यनेन विवक्षितम् । लैङ्गिकार्थसिद्धौ हि सावयवत्वादनित्यत्वं, शरीरत्वात्सप्तधातुमयत्वमित्यादिप्रतितर्कसंभावना, न त्वागमिकार्थसिद्धौ । तथा चोक्तमधिकरणसारावल्या–'देहत्वात्सप्तधातु त्रिमलमघभवं दुःखकृन्नाशयुक्तं साशत्वादेश्च हेतोरिति यदि तदसद्धर्मिमानेन बाधात् । बाधः शास्त्रैकवेद्ये क्वचिदपि न भवेदन्यथाऽतिप्रसङ्गात् यत्तु स्वेच्छावतारेष्वभिनयति तदप्यासुरोपप्लवार्थम् ॥' इति । किञ्च किं नाम सावयवत्वं यदनित्यत्वे प्रयोजकमुच्यते । न तावदवयवसमवेतत्वम्, अतिरिक्तावयविनोऽनभ्युपगमात् । नाप्यवयवसंयोगित्वम्, करादिसंयोगस्य नित्यविभुसाधारण्यात् । नाप्यवयवसंहतिलक्षणम्, तस्याप्यनित्यत्वव्याप्यत्वे

प्रमाणाभावात् । जन्यत्वं ह्यनित्यत्वे प्रयोजकम् । तच्च नित्यसंहतेर्व्या-वर्तमानमनित्यत्वमपि व्यावर्तयति । नित्यसंहतिश्चास्त्येव सिद्धान्ते । गुणत्रयसङ्घातलक्षणं प्रधानं नित्यमेवामनन्ति साङ्ख्या अपीति ।

श्रीरामायणे च तमोमण्डलादुपरितने परमे व्योम्नि विलसदप्रा-कृतं लक्ष्म्याश्लिष्टं श्रीवत्सलाञ्छनं च भगवद्रूपं नित्यमभ्यधायि—'व्यक्तमेष महायोगी परमात्मा सनातनः । अनादिमध्यनि-धनो महतः परमो महान् ॥ तमसः परमो धाता शङ्खचक्रगदा-धरः । श्रीवत्सवक्षा नित्यश्रीरजय्यः शाश्वतो ध्रुवः ॥' इति । 'अनादिमध्यनिधनः' इति स्वरूपतः, 'शाश्वतः' इति गुणतः, 'ध्रुवः' इति च विग्रहतोऽपि नित्यत्वमत्र विवक्षितम् । मोक्षधर्मे च पररू-पस्य नित्यत्वमुक्तं—'नित्यं हि नास्ति जगति भूतं स्थावरजङ्गमम् । ऋते तमेकं पुरुषं वासुदेवं सनातनम् ॥' इति । नह्यत्र पर-मात्मस्वरूपस्य नित्यत्वं विवक्षितम्, स्वरूपनित्यत्वस्य जीवसाधा-रण्यात् । किन्तु अक्षरपरमव्योमनिलयनदिव्यविग्रहविशिष्टस्यैव परवासुदेवस्येति पररूपनित्यत्वं सिद्ध्यति । न च नित्यमुक्तानां नित्यं भगवत्सेवातत्पराणामपि सविग्रहाणां नित्यत्वमस्तीति वाच्यम् । तेषां भगवत्सङ्कल्पप्रयोज्यनित्यत्वेन स्वाधीननित्यताविरहात् । स्वा-धीननित्यत्वस्य त्वत्र विवक्षितस्य भगवदसाधारणत्वात् । किञ्च सूरिभिः सदा दृश्यस्य दिव्यरूपस्य सदातनत्वमवश्यमेवैपितव्यम् । स्वचरणकमलसमाश्रयणादिना निरस्तनिखिलकर्मबन्धानां मुक्तानां नित्यानुभवकैङ्कर्यलक्षणमोक्षैश्वर्यनिर्वाहकतयाऽप्येतद्रूपस्य नित्यत्व-मपरिहरणीयमेव । श्रीविष्णुपुराणादावपीदं प्रतिपादितं—'सदैकरूप-रूपाय विष्णवे सर्वजिष्णवे' 'नास्ति विष्णोः परं तत्त्वं तस्य कालात्परा तनुः ।' 'यद्रूपं ध्रुवमकृतकं' इति ।

ज्ञनार्थम् । न तु कुदृष्टिकल्पितोपमान्तरपरं सत् । यथाशब्दान्तरस्य चशब्दस्य वा अश्रवणादिति । श्रीभागवते च उपास्यस्य पररूपस्य सर्वाङ्गसम्पन्नत्व प्रतिपाद्यते—'ध्यायेद्देव समग्राङ्ग यावन्न च्यवते मनः' इति । वासुदेवमाहात्म्येऽप्यस्य सर्वाङ्गपरिपूर्णत्वमवर्णि 'रूपानुरूपसपूर्णदिव्यावयवलक्षितम्' इति । 'वेदाहमेत पुरुष महान्त' इति पुरुषशब्दश्रवणात् हिरण्यश्मश्रुत्वादिश्रवणाच्च पुरुषाकारैव भगवतो मूर्ति ।

सर्वाङ्गसम्पन्न चेद पररूप नित्येच्छासिद्ध नित्यमेव । तथा च वचनानि—'नित्य नित्याकृतिधर तेजसा सूर्यवर्चसम् ।' 'नित्यसिद्धे तदाकारे तत्परत्वे च पौष्कर । यस्यास्ति सत्ता हृदये तस्यासौ सन्निधिं व्रजेत् ॥' 'नित्यालिङ्गा स्वभावससिद्धि' ।' इत्यादीनि । अत्र स्वभावसिद्धत्वाभित्यत्व भगवन्मूर्तेः प्रतिपाद्यते । अस्याश्च शास्त्रैकसमधिगम्यतया लिङ्गाधीनसाधनबाधनायोग्यत्वमलिङ्गेत्यनेन विवक्षितम् । लैङ्गिकार्थसिद्धौ हि सावयवत्वादनित्यत्व, शरीरत्वात्सप्तधातुमयत्वमित्यादिप्रतितर्कसभावना, न त्वागमिकार्थसिद्धौ । तथा चोक्तमधिकरणसारावल्या—'देहत्वात्सप्तधातु त्रिमलमघभवं दु'खकृत्प्राशयुक्त साशत्वादेश्च हेतोरिति यदि तदसद्धर्मिमानेन बाधात् । बाध शास्त्रैकवेद्ये क्वचिदपि न भवेदन्यथाऽतिप्रसङ्गात् यत्तु स्वेच्छावतारेष्वभिनयति तद प्यासुरोपप्लवार्थम् ॥' इति । किञ्च किं नाम सावयवत्वं यदनित्यत्वे प्रयोजकमुच्यते । न तावदवयवसमवेतत्वम्, अतिरिक्तावयविनोऽनभ्युपगमात् । नाप्यवयवसंयोगित्वम्, करादिसंयोगस्य नित्यविभुसाधारण्यात् । नाप्यवयवसंहतिलक्षणम्, तस्याप्यनित्यत्वव्याप्यत्वे

प्रमाणाभावात् । जन्यत्वं ह्यनित्यत्वे प्रयोजकम् । तच्च नित्यसंहृतेर्व्यावर्तमानमनित्यत्वमपि व्यावर्तयति । नित्यसंहतिश्चास्त्येव सिद्धान्ते । गुणत्रयसङ्घातलक्षणं प्रधानं नित्यमेवामनन्ति साङ्ख्या अपीति ।

श्रीरामायणे च तमोमण्डलादुपरितने परमे व्योम्नि विलसदप्राकृतं लक्ष्म्याश्लिष्टं श्रीवत्सलाञ्छनं च भगवद्रूपं नित्यमभ्यधायि—'व्यक्तमेष महायोगी परमात्मा सनातनः । अनादिमध्यनिधनो महतः परमो महान् ॥ तमसः परमो धाता शङ्खचक्रगदाधरः । श्रीवत्सवक्षा नित्यश्रीरजय्यः शाश्वतो ध्रुवः ॥' इति । 'अनादिमध्यनिधनः' इति स्वरूपतः, 'शाश्वतः' इति गुणतः, 'ध्रुवः' इति च विग्रहतोऽपि नित्यत्वमत्र विवक्षितम् । मोक्षधर्मे च पररूपस्य नित्यत्वमुक्तं—'नित्यं हि नास्ति जगति भूतं स्थावरजङ्गमम् । ऋते तमेकं पुरुषं वासुदेवं सनातनम् ॥' इति । नह्यत्र परमात्मस्वरूपस्य नित्यत्वं विवक्षितम्, स्वरूपनित्यत्वस्य जीवसाधारण्यात् । किन्तु अक्षरपरमव्योमनिलयनदिव्यविग्रहविशिष्टस्यैव परवासुदेवस्येति पररूपनित्यत्वं सिद्ध्यति । न च नित्यमुक्तानां नित्यं भगवत्सेवातत्पराणामपि सविग्रहाणां नित्यत्वमस्तीति वाच्यम् । तेषां भगवत्सङ्कल्पप्रयोज्यनित्यत्वेन स्वाधीननित्यताविरहात् । स्वाधीननित्यत्वस्य त्वत्र विवक्षितस्य भगवदसाधारणत्वात् । किञ्च सूरिभिः सदा दृश्यस्य दिव्यरूपस्य सदातनत्वमवश्यमेवैपितव्यम् । स्वचरणकमलसमाश्रयणादिना निरस्तनिखिलकर्मबन्धानां मुक्तानां नित्यानुभवकैङ्कर्यलक्षणमोक्षैश्वर्यनिर्वाहकतयाऽप्येतद्रूपस्य नित्यत्वमपरिहरणीयमेव । श्रीविष्णुपुराणादावपीदं प्रतिपादितं—'सदैकरूपरूपाय विष्णवे सर्वजिष्णवे' 'नास्ति विष्णोः परं तत्त्वं तस्य कालात्परा तनुः ।' 'यद्रूपं ध्रुवमकृतकं' इति ।

कौमारसम्भिन्नयौवनावस्थ चेदं सदा--'नित्याकृतिधरो युवा' 'युवा कुमार ' 'नित्य तद्रूपमीशस्य परं धाम्नि स्थितं शिवम् । अमृतं शाश्वतं दिव्यं सदा यौवनमास्थितम् ॥' इत्यादिप्रमाणानुसारात् । 'य पूर्व्याय वेधसे नवीयसे' इति मन्त्रवर्णश्च नवयौवनमाह । तथाच 'क यौवनोन्मुखीभूतसुकुमारतनुर्हरिः' इति श्लोकोक्तावस्थायत्सिद्धं सदा सूरिसेव्यं पररूपम् । 'कन्दर्पसाहस्रमनोहराङ्गं सदा किशोरं करुणानिधानम्' इति अक्षरधामाधिपते श्रीकृष्णस्य सदा किशोरत्वं प्रोच्यमानं नवयौवनत्वपरमेव । सरसभक्तिजीवनसुधासिन्ध्वोः किशोरावस्था यौवनावस्था च पररूपस्य प्रतिपाद्यमानैवमेव सङ्गच्छते--'किशोरवयसं प्रभुम्' 'सदा किशोरो वयसाऽतिरम्यः' 'अतिसौम्यो नराकारः किशोरः करुणानिधि ' 'सदैव तरुणः' 'तारुण्ये वयसि स्थितम्' इति ।

## भगवद्रूपस्य घनश्यामत्वम्--

नवीनजीमूतसमानवर्णं च भगवतो रूपम् । 'तस्य मध्ये वह्निशिखा अणीयोर्ध्वा व्यवस्थितः । नीलतोयदमध्यस्था विद्युल्लेखेव भास्वरा तस्या शिखाया मध्ये परमात्मा व्यवस्थित ॥' इति भगवद्रूपस्य नीलतोयदनिदर्शनवर्णनात् । अस्यार्थो वेदार्थसङ्ग्रहे वर्णितः--'सेयं दहरपुण्डरीकमध्यस्थाकाशवर्तिनी वह्निशिखा स्वान्तर्निहितनीलतोयदाभपरमात्मस्वरूपा स्वान्तर्निहितनीलतोयदा विद्युदिवाभाति' इति । 'श्यामाच्छबलं प्रपद्ये शबलाच्छ्यामं प्रपद्ये' इति ब्रह्मविद्भिर्जप्ये मन्त्रे च श्यामशब्देन नीलवर्णविग्रहविशिष्टं भगवत्स्वरूपं विवक्षितम् । शबलशब्देन च चिदचित्प्रपञ्चविशि-

ष्टम्। ल्यब्लोपे पञ्चमी। श्यामं प्रपद्योपास्य शबलं प्रपद्ये चिदचित्प्रपञ्चविशिष्टमुपासे। शबलमुपास्य च श्याममुपास इत्यर्थः। स्वासाधारणरूपतः चिदचिद्विभूतिद्वययोगतश्च त्रिविधं ह्युपासनं सूत्रितं 'उपासात्रैविध्यात्' इति। तां त्रिविधामुपासनां निरन्तरं सम्पादयामीति भावः। 'कृष्णो वर्णश्च मे यस्मात्तेन कृष्णोऽहमर्जुन' इति कृष्णशब्दनिरुक्तिबलादपि वासुदेवस्य मेघश्यामत्वं सिद्ध्यति। 'आदिदेवो जगन्नाथो वासुदेवो जगत्पतिः। चतुर्भुजः श्यामलाभः परमे व्योम्नि निष्ठितः॥' इत्यादिवचनबलाच्च पररूपस्य घनश्यामत्वसिद्धिः। 'ऋतं सत्यं परंब्रह्म पुरुषं कृष्णपिङ्गलं' इति कृष्णपिङ्गलत्वोक्तिस्तु लक्ष्मीशोभासंवलितत्वेनाभरणादिशोभासंवलितत्वेन च घटतेऽभिनवघनश्यामाया अपि भगवन्मूर्तेः। 'आदित्यवर्णं तमसः परस्तात्' 'यदा पश्यः पश्यते रुक्मवर्णं' इत्युक्तिश्चात्युज्वलदीप्तिमत्त्वकमनीयलावण्यवत्त्वाभिप्राया। प्रतिकूलैर्दुष्प्रेक्ष्यत्वमनुकूलानां सुवर्णवन्निरतिशयभोग्यत्वं च विशेषणद्वयेन विवक्षितम्। 'सितासितं चेश्वरमीश्वराणाम्' 'श्यामं च शुक्लं बहुरूपमेकं' 'वैकुण्ठः पुरुषोऽनन्तः शुक्लः कृष्णः सनातनः' इत्यादिषु पुराणवाक्येषु कीर्त्यमानं सितासितत्वं च सितवर्णप्रभामण्डलावृतत्वात्कृष्णमूर्तेर्घटते। तथा चाभिहितं वासुदेवमाहात्म्ये—'नवीनजीमूतसमानवर्णं....निजाङ्गनिर्यत्सितभूरितेजश्चयावृतत्वात्सितवर्णमुक्तम्' इति। यथाऽत्यर्घस्य वज्रमण्यादेरेकरूपस्याप्यत्युज्ज्वलनानावर्णप्रभोक्तिरत्वेन नानारूपत्वं प्रतीयते, एवं भगवन्मूर्तेरपि दिव्याया अतिविलक्षणाया अत्युज्ज्वलनानाप्रभोक्तिरत्वेन नानावर्णत्वमुपवर्ण्यतेतरां तत्र तत्रेति

बोध्यम् । पररूपस्यैव घनश्यामत्वं स्थितम् । व्यूहादिरूपभेदानां तु नानावर्णत्वमैच्छिकमस्त्येव ।

'अथ यदितः परो दिवो ज्योतिर्दीप्यते' 'न तत्र सूर्यो भाति न चन्द्रतारकं' 'दिवि सूर्यसहस्रस्य भवेद्युगपदुत्थिता । यदि भाः सदृशी सा स्याद्भासस्तस्य महात्मनः ॥' इत्यादिश्रुतिस्मृतिभिरुच्यमानं निरतिशयज्योतिष्ट्वं च भगवद्रूपस्यात्मन्त्वभास्वरविलक्षणवर्णवत्त्वाद्घटते । इदमेवौज्ज्वल्यं नाम । लावण्य—चन्द्रादेरिव पश्यतां चक्षुरानन्दजनकं सौम्यं तेजः समुदायशोभापर्यवसितम् । उक्तं चाहिर्बुध्न्यसंहितायां—'भूयिष्ठं तेज एवाद्भिर्बहुलाभिर्मृदूकृतम् । चक्षुरानन्दजनकं तल्लावण्यमिहोच्यते ॥' इति । 'विश्वमाप्याययन् कान्त्या पूर्णेन्द्वयुततुल्यया' 'वपुषा सुन्दरेणैव दिव्येनाविष्कृतेन च । मुष्णन्तमनिशं देहादालोकं ज्ञानलक्षणम्' 'पूर्वकर्मानलार्तानां ध्यायिनां खेदशान्तये । वदनेन्दुचयोत्थेन ह्लादयन् गोगणेन तु ॥' 'शरच्चन्द्रावदाताङ्गम्' इत्यादीन्यत्रानुसन्धेयानि । सौन्दर्यं—अवयवशोभालक्षणम् । 'साक्षान्मन्मथमन्मथः' 'कन्दर्पसाहस्रमनोहराङ्गम्' 'कोटिकन्दर्पसुन्दरम्' इत्यादिप्रमाणावसेयमिदम् । सौकुमार्यं च मार्दवं पुष्पहासापरपर्यायं 'सुकुमारौ महाबलौ' इत्यादिवचनसिद्धम् । सौगन्ध्यं—स्रक्चन्दनाद्यनपेक्षसुगन्धवत्त्वं स्वसम्पर्केणान्येषामपि सुरभित्वापादकम् । माधुर्यं च द्वेषिणामपि द्वेषनिवर्तनेन सारस्यापादकत्वम् । औज्ज्वल्यसौगन्ध्यमाधुर्याणि 'भारूपः सर्वगन्धः सर्वरसः' इति वाक्यप्रतिपादितानि । सौन्दर्यलावण्यसौकुमार्याणि च 'रूपसंहननं लक्ष्मीं सौकुमार्यं' इतिवाक्योक्तानि ।

एते विग्रहगुणा वर्णिता गीताभाष्ये श्रीमद्रामानुजाचार्यैः—'स्वाभिमतानुरूपैकरूपाचिन्त्यदिव्याद्भुतनित्यनिरवद्यनिरतिशयौज्ज्वल्यसौन्दर्यसौगन्ध्यसौकुमार्यलावण्ययौवनाद्यनन्तगुणनिधिदिव्यरूप' इति ।

उपवर्णिताश्चैमे रूपगुणाः सम्प्रदायग्रन्थेषु भूरिशः—'नूतनाम्बुधरसुन्दरमूर्तिं तेजसाऽतिमहसा सितभासम् । कोटिमन्मथविमोहनरूपं' 'स्वाङ्गश्रियाऽखिलमनोनयनाभिरामं' 'कोटिकन्दर्पलावण्यं नवीनजलदासितम्' 'एकैकाङ्गस्रवत्कोटिकोटिभास्करतेजसम् । घनश्यामं पीतपटं' 'स प्रभुर्द्विभुजस्तत्र राजते श्यामसुन्दरः । निजाङ्गातिमहःपुञ्जावृतत्वाच्छ्वेतदर्शनः' 'नवीनजलदासितम् । सुधांशुकोटिसंकाशम्' 'नवीनजीमूतसमानवर्णम्' 'स देवदेवोऽस्ति हिरण्यवर्णो ह्यशेषसौन्दर्यनिकेतमूर्तिः । एकैककेऽङ्गे विधुकोटिकोटिप्रकाशतुल्योज्ज्वलकान्तिमाली । पीताम्बरो दिक्प्रसरत्सुगन्धः' 'मार्दवस्य कणिका किमु लेभे पद्मकोशनवनीतशिरीषैः' 'श्रीमाधुरीमूर्तये' 'कोटिकन्दर्पलावण्यो जलदश्यामसुन्दरः । अनेककोटिसूर्येन्दुप्रकाशातिप्रभोज्ज्वलः' 'उपमीयेत येनास्य रूपं भगवतो मुने । ब्रह्माण्डे तादृशं रूपं नैव दृष्टं न च श्रुतम् । एवं शब्दः सुगन्धश्च स्पर्शश्चापि न कुत्रचित् । सन्ति यैरुपमीयेरन् तस्य शब्दादयो बुधैः ॥' 'सच्चिदानन्दरूपोऽतिलावण्यो दिव्यविग्रहः । कोटिकन्दर्पसौन्दर्यः शान्तमूर्तिर्दयानिधिः । एकैकरोमनिर्गच्छत्कोटिकोट्यर्कतेजसा । अनैकान्तिकदुर्दृश्यः' 'स तु प्रभुर्घनश्यामोऽप्यवदातोऽतितेजसा' इत्यादौ ।

नित्य सर्वाङ्गसम्पन्न सदाप्रत्यग्रयौवनम् ।
लावण्यौज्ज्वल्यसौगन्ध्यसौकुमार्यास्पद शुभम् ॥
दिव्य रूप भगवतो वासुदेवस्य वर्णितम् ।
तस्याभरणरत्नाब्जजुष्टत्वमिह कथ्यते ॥

सर्वाभूषणजुष्टत्व चेश्वरसहितायां प्रतिपादित भगवद्रूपस्य— 'शान्त' संविरस्वरूपस्तु भक्तानुग्रहकाम्यया । अनौपम्येन वपुषा ह्यमूर्तो मूर्तता गत ॥ विश्वमाप्याययन् कान्त्या पूर्णेन्द्वयुततुल्यया । पूर्ण आभरणै सर्वैर्निर्विकाराद्विविग्रह ॥' इति । सात्त्वतसंहितायां च तन्निष्ठाभरणादेः स्वयम्प्रकाशत्वेन ज्ञानरसत्वमन्योन्यशोभाभिवर्धकत्व चेतनाधिष्ठितत्व च प्रत्यपादि— 'रत्नवस्त्राभरणैर्युक्त स्वानुरूपैरनूपमै । चिन्मयै स्वप्रकाशैश्च अन्योन्यरुचिरञ्जकैः' ॥ इति । 'विमलैर्भूषणैर्नित्यैर्भूषितो दिव्यविग्रह । पञ्चायुधैः सेव्यमान शङ्खचक्रधरो हरिः ॥' 'ध्येय सदा सवितृमण्डलमध्यवर्ती नारायण सरसिजासनसन्निविष्ट । केयूरवान् मकरकुण्डलवान् किरीटी हारी हिरण्मयवपुर्धृतशङ्खचक्र ॥' 'तमस परमो धाता शङ्खचक्रगदाधरः' 'श्याम प्रशान्त सुमुख दीर्घचारुचतुर्भुजम् । सुचारुसुन्दरग्रीव सुकपोल शुचिस्मितम् ॥ समानकर्णविन्यस्तस्फुरन्मकरकुण्डलम् । हेमाम्बर घनश्याम श्रीवत्सश्रीनिकेतनम् ॥ शङ्खचक्रगदापद्मवनमालाविभूषितम् ॥ नूपुरैर्विलसत्पाद कौस्तुभप्रभया युतम् ॥ द्युमत्किरीटकटककटिसूत्राङ्गदायुतम् । सर्वाङ्गसुन्दर हृद्य प्रसादसुमुखेक्षणम् । सुकुमारमभिध्यायेत्सर्वाङ्गेषु मनो दधत् ॥' इत्याद्युपबृंहणवचनानि चात्रा-

नुसन्धेयानि । नारायणकवचे च भगवत्स्वरूपस्येव तदीयरूपायुधाभरणपार्षदानामपि दिव्यानां आपन्निवर्तकत्वेन प्रार्थ्यमानानां सत्यत्वं प्रतीयते–'सर्वापद्भ्यो हरेर्नामरूपयानायुधानि नः । बुद्धीन्द्रियमनःप्राणान् पान्तु भूषणपार्षदाः ॥ तथा हि भगवानेव वस्तुतः सदसच्च यत् । सत्येनानेन नः सर्वे यान्तु नाशमुपद्रवाः ॥ यथैकात्म्यानुभावेन (भावानां) विकल्परहितः स्वयम् । भूषणायुधलिङ्गाख्या धत्ते शक्तीः स्वमायया ॥ तेनैव सत्यमानेन सर्वतो भगवान् हरिः । पातु सर्वैः स्वरूपैर्नः सदा सर्वत्र सर्वगः ॥' इति । सर्वचेतनाचेतनान्तर्यामित्वनिबन्धनानुभावेन स्वयं कर्मकृतनामरूपादिविकल्परहितोऽपि भगवान् हरिः स्वसङ्कल्पमात्रावक्लृप्तं स्वासाधारणं दिव्यं नामरूपादिकं यथा सत्यमेव बिभर्ति एवं स स्वविषयिणीं तत्तद्रूपेण रक्षकत्वप्रार्थनामपि सत्यां विदध्यादिति निदर्शननिदर्शनिभावोपन्यासस्य भावः । श्रीविष्णुनामसहस्रे च–'कुण्डली' 'कनकाङ्गदी' 'चन्दनाङ्गदी' 'स्रग्वी' इत्यादिमङ्गलनामभिर्दिव्यभूषणयोगो वर्णितः । 'श्रीमान्' इति नाम्ना च दिव्यभूषणसम्पदा नित्योज्ज्वलसुन्दरकान्तिमत्त्वम् । 'शङ्खभृन्नन्दकी चक्री शार्ङ्गधन्वा गदाधरः' 'रथाङ्गपाणिः' 'सर्वप्रहरणायुधः' इति नामानि च नानाविधदिव्यायुधवर्गयोगपराणि ।

श्रीविष्णुपुराणे चास्त्रभूषणाध्याये प्रक्रान्तयोगानां चेतसः शुभाश्रयतया ध्यानेऽतीवोपकारकं परस्य ब्रह्मणोऽत्यन्तान्तरङ्गभूतमप्राकृतं रूपं तत्त्वाभिमानिभूषणादिजुष्टमवर्णि–'सर्वशक्तिमयो

विष्णुः स्वरूपं ब्रह्मणः परम् । मूर्तं यद्योगिभिः पूर्वं योगारम्भेषु चिन्त्यते ॥ स परः सर्वशक्तीनां ब्रह्मणः समनन्तरम् । मूर्तं ब्रह्म महाभाग ! सर्वब्रह्ममयो हरिः ॥ क्षराक्षरमयो विष्णुर्बिभर्त्यखिलमीश्वरः । पुरुषाव्याकृतमयं भूषणास्त्रस्वरूपवत् ॥ आत्मानमस्य जगतो निर्लेपमगुणामलम् । बिभर्ति कौस्तुभमणिस्वरूपं भगवान् हरिः ॥ श्रीवत्ससंस्थानधरमनन्ते च समाश्रितम् । प्रधानं बुद्धिरप्यास्ते गदारूपेण माधवे ॥ भूतादिमिन्द्रियादिं च द्विधाऽहङ्कारमीश्वरः । बिभर्ति शङ्खरूपेण शार्ङ्गरूपेण च स्थितम् ॥ चलत्स्वरूपमत्यन्तजवेनान्तरितानिलम् । चक्रस्वरूपं च मनो धत्ते विष्णुः करस्थितम् ॥ पञ्चरूपा तु या माला वैजयन्ती गदाभृतः । स भूतहेतुसङ्घातो भूतमाला च वै द्विज ॥ यानीन्द्रियाण्यशेषाणि बुद्धिकर्मात्मकानि च । शररूपाण्यशेषाणि तानि धत्ते जनार्दनः ॥ बिभर्ति यच्चासिरत्नमच्युतोऽत्यन्तनिर्मलम् । विद्यामयं तु तज्ज्ञानमविद्याकोशसंस्थितम् ॥' इति ।

पञ्चरत्नमयत्वं च वैजयन्त्या वर्ण्यते—'भूमेर्नीलमपां मुक्ता माणिक्यं तेजसस्तथा । वायोर्भवति वैदूर्यं वज्रमाकाशसम्भ-

---

१ स्वस्य रूपं स्वरूपं, विग्रह इत्यर्थः । मूर्तं सावयवम् । ब्रह्म महत् रूपं परं ब्रह्मणः समनन्तरं अत्यन्तान्तरतमम् । अतिशुद्धस्वायुधभूषणादिमुखेन सर्वाधारत्वाच्च परमात्मनो रूपस्य मूर्तं ब्रह्मेति निर्देशः । श्रीविग्रहस्यादेरतिमहत्त्वं च 'द्यावापृथिव्योरिदमन्तरं हि व्याप्तं त्वयैकेन दिशश्च सर्वाः' इत्यादिषाक्यसिद्धम् । अनेन विग्रहव्याप्तिः फलति । 'न तत्र सूर्यो भाति' 'तस्य भासा सर्वमिदं विभाति' 'यदादित्यगतं तेजो जगद्भासयतेऽखिलम् । यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् ॥' इत्यादिश्रुतिस्मृतिसिद्धत्वाच्च विग्रहतेजसोऽपि व्याप्तिरेष्टव्येत्यास्तां तावत् ।

वम्। तत्त्वमयी माला वैजयन्ती प्रकीर्तिता।' इति। श्रीभागवते च विष्णुपुराणेऽनुक्तानामपि केषाञ्चित्तत्त्वानामभिमानितया भगवद्रूपनिष्ठानां भूषणादीनां निरूपणं दृश्यते 'वासः छन्दोमयं पीतं ब्रह्मसूत्रं त्रिवृत्स्वरम्। बिभर्ति साङ्ख्यं योगं च वेदं मकरकुण्डले। मौलिं पदं पारमेष्ठ्यं सर्वभूताभयङ्करम्॥' इति। भूषणादीनां तत्त्वाभिमानित्वं चिन्मयत्वादुपपद्यते। नित्यसूरयो ह्यस्त्रभूषणादिरूपेण परमात्मनः सेवासु निष्ठिता इति। एवमस्त्रवस्त्राभरणादिविशिष्टं पररूपं वर्णितम्। अनेन निरावरणवादो निरस्तः। यथोक्तं तत्त्वमुक्ताकलापे—'अस्त्रैर्वा भूषणैर्वा किमिह भगवतोऽवाप्तकामस्य तस्माद्देवो देहेऽपि वीतावरण इति जगुः केऽपि जैनोपजप्ताः। किंवा देहेन विश्वात्मन इति वदतां किं प्रतिब्रूयुरेते तच्चेत्तस्याश्रितार्थं तदधिकरणकं सर्वमप्येवमस्तु॥' इति।

गीताभाष्ये च भूषणादिमत्त्वं दिव्यरूपस्य वर्ण्यते—'स्वोचितविविधविचित्रानन्ताश्चर्यनित्यनिरवद्यापरिमितदिव्यभूषणः, स्वानुरूपासङ्ख्येयाचिन्त्यशक्तिनित्यनिरवद्यनिरतिशयकल्याणदिव्यायुधः' इति। शरणागतिगद्येऽपि—'स्वोचितविविधविचित्रानन्ताश्चर्यनित्यनिरवद्यनिरतिशयसुगन्ध—निरतिशयसुखस्पर्श—निरतिशयौज्ज्वल्य-किरीट-मुकुट-चूडा-अवतंस-मकरकुण्डल-ग्रैवेयक-हार-केयूर-कटक-श्रीवत्स-कौस्तुभ-मुक्तादाम-उदरबन्धन-पीताम्बर-काञ्चीगुण-नूपुराद्यपरिमितदिव्यभूषण' इति। वासुदेवमाहात्म्ये चाक्षरे धाम्नि श्रीकृष्णो नानादिव्याभरणादिविशिष्टो विराजमानो वर्णितः—'अनर्घ्यदिव्योत्तमपीतवाससम् अनेकसद्रत्नविभूष-

णाढ्यम् । निषेव्यमाणं च सुदर्शनाद्यैर्निजायुधैर्मूर्तिधरैरनेकैः' इत्यादिना । सत्सङ्गिजीवने च—'स प्रभुर्दिव्यवसनो दिव्यालङ्कारशोभनः' 'सुदर्शनादिभिः स्वास्त्रैर्मूर्तिमद्भिरुपाश्रितः' 'दिव्याभरणभूषितम् । दिव्यपीताम्बरधरं दिव्यगन्धानुलेपनम् । दिव्यैः सुरभिभिः पौष्पैः शोभितं हारशेखरैः । धृत्वा कराभ्यां मुरलीं वादयन्तं मनोहरम् । दधतं कौस्तुभं कण्ठे वनमालां च शोभनाम् । विशालहृदयद्योतच्छ्रीवत्सं सुकिरीटिनम् । कर्णयुग्मोल्लसद्दिव्यमकराकृतिकुण्डलम् ॥' 'पीताम्बरः किरीटकाञ्चीवलयाङ्गदाद्यैर्विभूषणैर्भूषित इन्दुवक्त्रः ।' 'त्वं भक्तसङ्घमवितुं स्वकनासुरेभ्यो दोर्भिर्दधद्दरगदारिसरोरुहाणि' इत्यादिना भूषणादियोगो वर्णितोऽस्ति । हरिवाक्यसुधासिन्धावपि—'अनर्घ्यदिव्यविविधवासोभूषणभूषितः । रत्नेन्द्रसारमुकुटशेखरालिविराजितः । मकराकृतिकुण्डलः । चक्रादिभिर्मूर्तिमद्भिः सेवितश्च निजायुधैः ।' 'योऽप्राकृतेन्द्रियो दिव्यवासोऽलङ्कारमण्डितः ।' इत्यादिना अक्षरधामाधिपतेः परस्यैव ब्रह्मणः पुरुषोत्तमस्य श्रीकृष्णस्य दिव्यनानाभूषणविभूषितत्वं बहुशो निरूपितमस्ति ।

एवम्भूतमेव रूपम् आदित्यमण्डलादिषूपासास्थानेष्वाविष्करोत्युपासकानुग्रहाय भगवानपारकारुण्यविवशः । तथा चादित्यमण्डलान्तर्वर्तिनो हिरण्मयपुरुषस्य परमात्मत्वं सूत्रितम्—'अन्तस्तद्धर्मोपदेशात्' इति । एतत्सूत्रस्य विवरणे च श्रीभाष्यवेदार्थसङ्ग्रहादौ दिव्यं स्वाभाविकमेवम्भूतं रूपं समर्थितं विस्तरशः प्रमाणोपन्यासपूर्वकं श्रीमद्रामानुजस्वामिभिस्तत्र एवानुसन्धेयम् । वाक्ये

'स्याद्रूपं कृतकमनुग्रहार्थं तच्चेतसामैश्वर्यात्' इति ध्यानालम्बनस्य रूपस्य कल्पितत्वमाशङ्क्य स्वाभाविकत्वं समर्थितम्—'रूपं वातीन्द्रियमन्तःकरणप्रत्यक्षनिर्देशात्' इति । कठवल्यां हि एतद्रूपस्यातीन्द्रियत्वं भक्तियोगसहकृतविशुद्धमनोग्राह्यत्वं तद्दर्शनस्यामृतत्वप्राप्तिसाधनत्वं च श्रुतम्—'न सन्दृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम् । हृदा मनीषा मनसाऽभिक्लृप्तो य एनं विदुरमृतास्ते भवन्ति' इति । अतोऽमायिकत्वेन स्वाभाविकत्वं सिद्ध्यति । न हि मायिकस्य रूपस्य दर्शनादमृतत्वसम्भवः । व्याख्यातं च द्रमिडभाष्ये—'अञ्जसैव विश्वसृजो रूपं तत्तु न चक्षुषा गृह्यते । मनसा तु साधनान्तरवता गृह्यते । न ह्यरूपाया देवताया रूपमुपदिश्यते । यथाभूतवादि हि शास्त्रम्' इति । तथा 'हिरण्मय इति रूपसामान्याच्चन्द्रमुखवत्' इति वाक्यम् । हिरण्यसाधर्म्याद्धिरण्मयोक्तिर्न विकारित्वादिति भावः । अत्र च द्रमिडभाष्यम्—'नात्र मयट् विकारार्थमादाय प्रयुज्यते अनारभ्यत्वादात्मनः' इति । परमात्मनः सविग्रहस्य नित्यत्वादित्यर्थः ।

मूर्तामूर्ताख्यरूपेभ्यो विजातीयमनुत्तमम् ।
अत्यद्भुतं दिव्यभूषाद्याढ्यमप्राकृतं वपुः ॥
परस्य ब्रह्मणो नित्यसिद्धं सर्वाङ्गसुन्दरम् ।
परमार्थतया शास्त्रसिद्धमेवं प्रकीर्तितम् ॥

परत्वादिपञ्चकम् ।

परस्य ब्रह्मणो दिव्यरूपयोगनिबन्धनः ।
पञ्चधाऽवस्थानभेदः स्फुटमत्र प्रकीर्त्यते ॥

परत्व व्यूहविभवावन्तर्यामित्वमेव च ।
अर्चावतार इत्येवं मता पञ्चप्रकारता ॥

'अम्भस्यपारे भुवनस्य मध्ये नाकस्य पृष्ठे महतो महीयान् । शुक्रेण ज्योतींषि समनुप्रविष्टः प्रजापतिश्चरति गर्भे अन्तः' इत्यत्र तावदिदं प्रकारपञ्चकं समसूचि । तथाहि—'अम्भस्यपारे' इति पद्मनाभव्यूहस्य त्रैलोक्यमुपसंहृत्य प्रलयार्णवे शयितस्य निर्देशः । 'भुवनस्य मध्ये' इति रविमण्डलमध्यवर्तिनो विष्ण्वाख्यस्य विभवस्य । 'नाकस्य पृष्ठे' इति च परमव्योमनिलयस्य पररूपस्य । शुक्रेणातिभास्वरदिव्यरूपेण ज्योतींषि सुवर्णादिधातूननुप्रविष्टः इत्यर्चायाः । 'प्रजापतिश्चरति गर्भे अन्तः' इत्यन्तर्यामित्वस्य । तथा 'यमन्तः समुद्रे कवयो वदन्ति' 'उद्धृताऽसि वराहेण कृष्णेन शतबाहुना' 'वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम्' इत्यादौ च परव्यूहादेर्निर्देशोऽस्ति ।

सात्वतसंहितायां च परव्यूहविभवा वर्णिता विशेषतः—'षाड्गुण्यविग्रहं देवं भास्वज्ज्वलनतेजसम् । सर्वतः पाणिपादं तत्सर्वतोऽक्षिशिरोमुखम् ॥ परमेतत्समाख्यातमेकं सर्वाश्रयं तथा । एतत्पूर्वं त्रयं चान्यज्ज्ञानाद्यैर्भेदितं गुणैः । विद्धि तद्व्यूहसंज्ञं वै निरायासफलप्रदम् ॥ मुख्यानुवृत्तिभेदेन युक्तं ज्ञानादिकैर्गुणैः । नानाकृति च तद्विद्धि वैभवं भुक्तिमुक्तिदम् ॥' इति । इदं चोपलक्षणमन्तर्यामित्वार्चावतारयोः । विष्वक्सेनसंहितायां तु पञ्चापि प्रकारा निर्दिष्टाः स्फुटम्—'मम प्रकाराः पञ्चेति प्राहुर्वेदान्तपारगाः । परो व्यूहश्च विभवो नियन्ता सर्व-

देहिनाम् । अर्चावतारश्च तथा दयालुः पुरुषाकृतिः ॥' इति । वासुदेवमाहात्म्ये च—'असावहमिह ब्रह्मन्नस्मिन्नक्षरधामनि । राधालक्ष्मीयुतो नित्यं वसामि स्वाश्रितैः सह ॥ वैकुण्ठाख्ये महद्धाम्नि लक्ष्म्या सह चतुर्भुजः । वसामि नन्दगरुडमुख्यैः साकं च पार्षदैः ॥' इति परत्वम्, 'कुर्वेऽनिरुद्धप्रद्युम्नसङ्कर्षण-समाह्वयैः । स्वरूपैर्नैककोट्यण्डसर्गस्थित्यप्ययानहम् ॥' इति व्यूहः, 'यदा यदा च वेदोक्तो धर्मो नाशिष्यतेऽसुरैः । प्रादुर्भावो भविष्यो मे तद्रक्षायै तदा तदा ॥' इत्यादिना विभवः, 'वासुदेवस्वरूपोऽहं सर्वकर्मफलप्रदः । अन्तर्यामितया वर्ते स्वतन्त्रः सर्वदेहिनाम् ॥' इत्यन्तर्यामित्वं च न्यरूपिपत । 'कृष्णस्य सा तु कर्तव्या द्विभुजा वा चतुर्भुजा ।' इत्यादिनाऽर्चाप्यभ्यधायि ।

सत्सङ्गिजीवनसुधासिन्ध्वोश्चेमे प्रकारभेदा वर्णितास्तत्र तत्र । 'नराकृति परं ब्रह्म स्थितो योऽक्षरधामनि । वासुदेवादयो यस्माद्व्यूहाः प्रादुर्भवन्ति च । यः क्रोडाद्यवताराणां धर्ता ।' 'आनन्ददिव्यमूर्तिश्च ...सर्वज्ञः सत्यसङ्कल्पः सर्वकर्मफलप्रदः । अन्तर्यामी सर्वशक्तिसेवितः परमेश्वरः ॥ वराहाद्यवताराणां धर्ता कृष्णः परं बृहत् ।' 'श्रीकृष्णोऽस्तीष्टदेवता । परमात्मा परं ब्रह्म सर्वकारणकारणम् । स हि राधिकया युक्तः... युक्तः स लक्ष्म्या रुक्मिण्या...श्रीवासुदेवप्रमुखाश्चतस्रस्तस्य मूर्तयः । चतुर्विंशतिसङ्ख्याकाः केशवप्रमुखास्तथा । पद्मनाभवराहाद्या भगवन्मूर्तयोऽपि च । श्रीकृष्णस्यावतारत्वान्मान्याः सन्त्येव नोऽखिलाः ॥' 'शैली दारुमयी लौही

लेप्या लेख्या च सैकती । मनोमयी मणिमयी प्रतिमाष्टविधा स्मृता ॥ यथाविध्यर्चयेद्भक्त्या यथालब्धोपचारकैः ।' 'दीक्षितैर्वैद्धयाचार्याच्छ्रीकृष्णस्याखिलैरपि । प्रतिमा नित्यपूजार्थे ग्रहीतव्या यथारुचि ॥' 'चतुर्णां ब्राह्मणादीनां वर्णानां योषितां तथा । प्रतिमापूजनं शस्तं विष्ण्वादीनां हि भक्तितः ॥' 'भास्वत्कोटिसमप्रभं सुवदनं ध्यायेद्दीर्घभुजं च पीतवसनं श्रीवासुदेवं हृदि ॥ अवतारा भगवतो वासुदेवस्य येऽभवन् । तेष्वन्यतममव्यग्रो ध्यायेद्वा योगसाधकः ॥ प्रतिमां वा यथा-दृष्टां ध्यायेद्भगवतोऽन्वहम् ॥' 'साक्षात्कृष्णो भगवति नर-नारायणादिषु । तन्मूर्तिषु च नास्त्येव भेद इत्यवधार्यताम् ॥' 'व्यूहस्य वासुदेवादेः केशवादेश्च धारकः । वराहाद्यवताराणां धर्ता भक्तजनेष्टदः ॥ वेदादौ प्रोच्यते यश्च परं ब्रह्म परात्परः । भगवानात्मनामात्मा वर्षे स भुवि भारते । प्रादुर्भवति सद्धर्म-रक्षार्थं च युगे युगे ॥' 'अतः कृष्णः स्वयं दत्ते स्वार्चां भक्त-जनाय याम् । तस्यां निजेच्छया साक्षात्प्रविश्यैव विराजते ॥' 'अवतारा भगवतो जायन्ते भुवि ये हरेः । नरोत्तमस्य कृष्ण-स्याक्षरधाम्नो जगत्पतेः ॥ प्रत्यक्षो भगवान् यर्हि न भवेद्भु-वि तर्हि तु । प्रतिमा तस्य संपूज्या यथालब्धोपचारकैः ॥' 'वासुदेवादिरूपेण चतुर्व्यूहो निरूपितः । तत्र कृष्णस्ततस्त-स्याकृतिः स्पष्टं विभाव्यते ॥ नारायणो वासुदेवः स एव स्वेच्छया प्रभुः । चतुर्भुजादिरूपेण वैकुण्ठादौ च वर्तते ॥ रामकृष्णादिरूपेण यथाकार्यं स भूतले । स्वातन्त्र्येणावतीर्णः सन् निघ्नन् दुष्टान् सतोऽवति ॥' 'वासुदेवादिरूपेण चतु-

व्यूहः स जायते । केशवाद्यात्मना चासौ चतुर्विंशतिधा प्रभुः ॥ स एव च वराहादीनवतारान् धरातले । दधाति' इत्यादौ । शिक्षापत्र्यां च–'योऽन्तर्यामितया स्थितः'...स श्रीकृष्णः परंब्रह्म...सर्वाविर्भावकारणम्...कृष्णस्तदवतारांश्च ध्येयास्तत्प्रतिमापि च' इत्यादिना ।

तत्र परत्वं नाम अप्राकृताक्षरपरमव्योमनिलयनं वस्त्रभूषणायुधभूषितं समस्तशक्तिजुष्टं सुरिसंसेवितं मुक्तप्राप्यं नित्यं रूपम् । 'वेदाहमेतं पुरुषं महान्तम्' 'आदित्यवर्णं तमसः परस्तात्' 'क्षयन्तमस्य रजसः पराके' 'स सामभिरुन्नीयते ब्रह्मलोकं स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षते' 'वैकुण्ठे परे लोके नित्यत्वेन व्यवस्थितम् । पश्यन्ति च सदा देवं नेत्रैर्ज्ञानेन चामराः ॥' 'तमसः परमो धाता शङ्खचक्रगदाधरः । श्रीवत्सवक्षा नित्यश्रीरजय्यः शाश्वतो ध्रुवः ।' इत्यादिश्रुतिस्मृतिप्रसिद्धम् ।

न चादित्यवर्णत्वमपरिच्छिन्नचैतन्यप्रकाशस्वरूपत्वेन परमात्मन्युपचरितमिति वाच्यम् । विग्रहयोगेन मुख्ये सम्भवति गौणाश्रयणायोगात् । 'तमसः परस्ता'दित्यनेन चाप्रकाशव्यावृत्तिमात्रं नोच्यते । तथा सति 'तमसः पर'मित्येव वचनव्यक्तेः पर्याप्तत्वेनास्तातिप्रत्ययस्य वैयर्थ्यापत्तेः । परस्ताच्छब्दस्य परदेशरूपाधिकरणवृत्तिरूपार्थे स्वरसत्वाच्च तमःशब्दितात्प्रकृतिमण्डलात्परदेशवर्त्युज्ज्वलं पुरुषोत्तमस्य दिव्यं रूपमेवात्र विवक्षितम् ।

यद्विग्रहावच्छिन्ने भगवति षाड्गुण्यं नित्यामिव्यक्तं तत्पररूपम् । तत्र नित्यमुक्तानुभाव्यो वासुदेवो नित्योदितसंज्ञकः पर-

वासुदेवः, तस आविर्भूत शान्तोदितसंज्ञक सङ्कर्षणादिव्यूहकारणत्वात् व्यूहवासुदेव इत्युच्यते। उभयत्रापि नित्य षाड्गुण्यमभिव्यक्तमेव। तथा चाभिधीयते विष्वक्सेनसंहितायाम्—'आदिदेवो जगन्नाथो वासुदेवो जगत्पति। चतुर्भुजः श्यामलाभ परमव्योम्नि निष्ठितः॥ नित्योदित शान्ततनुरास्ते व्योमनि षड्गुणः। शान्तोदित शान्ततनुर्द्विभुजः पुरुषाकृति॥' इति। 'नित्योदितात्सम्बभूव तथा शान्तोदितो हरि' इति। 'सम्पूर्णषड्गुणस्तेषु वासुदेवो जगत्पतिः' इति च। पाद्मसंहितायां च 'ज्ञानादिगुणसामान्ये वासुदेव प्रकीर्तित' इति व्यूहवासुदेवस्यापि षाड्गुण्यमुक्तम्।

तथा तत्रैव ज्ञानपादे द्वितीयेऽध्याये पररूप एव भुजवर्णादिभेदो वर्णितः—'द्विहस्तमेकवक्त्रं च शुद्धस्फटिकसन्निभम्। सहस्ररविवह्नीन्दुलक्षकोटिसमप्रभम्॥ मरीचिचक्रमध्यस्थ चक्राद्यायुधलाञ्छितम्। श्रीवत्सकौस्तुभोरस्क वनमालाविराजितम्॥ किरीटहारकेयूरवलयादिविभूषितम्। पीताम्बरधर सौम्य रूपमाद्यं सनातनम्॥ वासुदेवात्ततो जातो वासुदेवाह्वयोऽपरः। एकवक्त्रश्चतुर्बाहुश्चक्राद्यायुधलक्षणः॥ श्रीवत्सकौस्तुभोरस्को वनमालाविभूषित। मयूरकण्ठवच्छ्याम पीतनैसर्गिकाम्बरः॥ स वासुदेवो भगवान् सृष्टिस्थित्यन्तमुक्तिदः। आत्मान स द्विधा चक्रे पुन केनापि हेतुना॥ तयोरेको वासुदेवः शुद्धस्फटिकसन्निभः। नारायणो द्वितीयस्तु नीलाम्बुदसमप्रभ॥' इति।

तथा तत्रैव चक्रादेः परस्यचिह्नरूपत्व वर्णित सृष्ट्यादिव्यापा—

द्योतकतया—'स्थित्यै चक्रं सरसिजं दधानं सृष्टये पुनः। मुक्तये पाञ्चजन्यं च गदां संहृतये तथा॥' इति। सृष्ट्यादिचिह्नायुधधारणौपयिकत्वाच्च चतुर्भुजत्वस्यापि पारमैश्वर्यचिह्नत्वं बोध्यम्। तथा च श्रीकृष्णेन चतुर्भुजतयैव स्वीयं पारमैश्वर्यं देवक्यक्रूरादिभ्यः प्रदर्शितम्। तथा च वर्णितं हरिवाक्यसुधासिन्धौ—'सोऽसौ कृष्णः सदैवास्ते द्विभुजो मुक्तमोदनः। चतुर्दोः स्वेच्छया क्वापि क्वापि चाष्टभुजस्तथा॥ कृष्णो यथा स्वपितृभ्यामक्रूरायोद्धवाय च। अदीदृशच्च रुक्मिण्यै निजरूपं चतुर्भुजम्॥ द्विबाहुश्च चतुर्बाहु सोऽष्टबाह्वर्जुनाय तु। सहस्रबाहु रूपं च समदीदृशदिच्छया॥ अतः स सकलैश्वर्यसंपन्नो हि नराकृतिः। अस्तीत्येवावधातव्यं न ह्यसौ मर्त्यधर्मवान्॥' 'चतुर्भुजं चाष्टभुजं स सहस्रभुजं तथा। धामान्तरेषु रूपं स्वं धृत्वाऽऽस्ते च पृथक्पृथक्॥ कृष्णेनानेन केभ्यश्चिद्भक्तेभ्यश्च निजेच्छया। रूपान्तराण्यद्भुतानि दर्शितानि भवन्त्यपि॥ चतुर्भुजं चाष्टभुजं सहस्रभुजमित्यपि। यथाप्रयोजनं रूपमाविर्भावयति स्म सः॥' इति। सत्यङ्गिजीवनेऽपि—'द्विभुजः स सदा स्वामी भक्तेभ्यो निजदर्शनम्। चतुर्भुजादिरूपेण दत्ते क्वापि तदिच्छया॥' 'स च तेषु स्वभक्तेषु दिदृक्षा यस्य यादृशी। येषां स्यात्तादृशं तेभ्यो दर्शनं स्वं ददाति हि॥ केचिच्चतुर्भुजं केचित्पश्यन्त्यष्टभुजं तथा। केचित्सहस्रबाहुं तं तस्मिन् बृहति धामनि॥' इति। वेदान्ताचार्यैश्च पररूपेऽपि आगमसिद्धो भुजादिभेदनिर्देशः समर्थितो गद्यत्रयव्याख्याने—'एतेन वर्णभुजादिविप्रतिपत्तिरपि निरस्ता। अचिन्त्यशक्तेरी-

श्वरस्य स्वच्छन्दवृत्ते परसञ्ज्ञिते रूपेऽपि तत्तत्प्रतिपत्त्यर्थं तत्तत्सहितोक्ता विशेषा नान्योन्यबाधमर्हन्ति । यथा नरसिंह-रूपे सप्तसप्ततिभेदा । यथा च 'कृष्णरूपाण्यनन्तानी'त्युच्यते । एवं परव्यूहादिष्वपि यथोपदेशं सर्वस्य सत्यत्वम् । गीयते च 'पश्य मे पार्थ रूपाणि शतशोऽथ सहस्रशः' इती'ति । एवं पररूपेऽपि द्विभुजत्वचतुर्भुजत्वभेदयोगस्य प्रामाणिकत्वादेव वासु-देवमाहात्म्ये अप्राकृतगोलोकान्तर्वर्त्तीश्वरधामाधिपते श्रीकृष्णस्य परमस्य परतमस्य द्विभुजत्वं महावैकुण्ठे चाप्राकृते तस्यैव चतुर्भुजत्वं च सङ्कीर्त्यमानं साधु सङ्गच्छते ।

नित्यं च दिव्यधामस्थं मुक्तप्राप्यं सदैव तु ।
प्रोद्भूतषाड्गुण्यमयं पररूपं प्रकीर्तितम् ॥
द्विभुजं तत्कचित्प्रोक्तं चतुर्भुजमथापि च ।
स्वच्छन्दवृत्तेर्भक्तार्थं स्थितिः स्यात्तु तथा तथा ॥
अथात्र दिव्यमहिषीयोगः स्फुटमुदीर्यते ।
यद्योगेनैव भगवत्सेवा रस्यत्वमव्रजति ॥
लोकेऽपि पित्रोः सेवा हि प्रजानन्दविवर्धनी ।
तथा सेवा प्रीतिकरी भूयाद्राधारमेश्वरे ॥

## दिव्यमहिषीवर्णनम् ।

'ह्रीश्च ते लक्ष्मीश्च पत्न्यौ ।' 'महादेव्यै च विद्महे विष्णुपत्न्यै च धीमहि । तन्नो लक्ष्मीः प्रचोदयात्' 'श्रियं देवीमुपह्वये श्रीर्मा देवी जुषताम्' 'ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम्' 'हिरण्यवर्णां हरिणीं सुवर्णरजतस्रजाम् । चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो म आवह' 'अस्येशाना

जगतो विष्णुपत्नी' 'महीं देवीं विष्णुपत्नीं' 'उद्धृताऽसि वराहेण' 'वैकुण्ठे तु परे लोके श्रीसहायो जनार्दनः । उभाभ्यां भूमिनीलाभ्यां सेवितः परमेश्वरः ॥' 'देवो वैकुण्ठनाथस्तु अनन्तासनसंस्थितः । सेव्यः श्रीभूमिनीलाभिः प्रादुर्भावैस्तु चाखिलैः ॥' इत्यादिवचनैस्तावच्छ्र्यादिदिव्यमहिषीयोगोऽवगम्यते ।

सर्वत्र भगवतो रूपे सर्वमहिषीयोगेऽपि तत्रतत्र रूपे एकैका प्राधान्यमञ्चति । यथाऽक्षरधामाधिपतेः श्रीकृष्णस्य राधा, यथा वा वैकुण्ठाख्ये महद्धाम्नि लक्ष्मीः, श्रीवाराहरूपे च भूमिः । तथा च वासुदेवमाहात्म्येऽक्षरे धाम्नि श्रीकृष्णस्य प्राधान्येन राधायोग उक्तः—'असावहमिह ब्रह्मन्नस्मिन्नक्षरधामनि । राधालक्ष्मीयुतो नित्यं वसामि स्वाश्रितैः सह ॥' इति । 'जय - शीलाललितामुखानां वृन्दैः सखीनां सह राधया च । समर्च्यमानं रमया च भामाकलिन्दजाजाम्बवतीमुखानाम् ॥' इत्यत्र तु सर्वमहिषीयोगो वर्णित एव ।

सत्सङ्गिजीवने सुधासिन्धौ च तथैव—'ददर्श ब्रह्मतेजःस्थं लक्ष्मीनारायणं हृदि' 'स्ववर्णाश्रमधर्मेण युक्ता श्रीराधिकापतेः । भक्तिः कार्या दृढेत्येतल्लक्षणं ह्युद्धवाध्वनः ॥' 'सेव्यते यो राधाकमलादिभिर्भगवतोऽङ्घ्रिं तं न सेवेत कः' 'श्रीराधिकेशो भगवान् योऽस्ति सर्वेश्वरोऽनघ । इष्टदेवः स एवास्ति मम सच्छास्त्रसम्मतः ॥' 'राधारमाद्या अपि शक्तयस्तं भजन्ति सम्राजमिव स्वदास्यः' 'नमो दिव्यगोलोकधाम्नि प्रकाशे समं राधिकागोपिकाभिर्विलासम् । सदा तन्वते वेणुवाद्याय' 'उक्तस्ते सम्प्रदायोऽथ श्रीकृष्णोऽस्तीष्टदेवता । परमात्मा परंब्रह्म सर्व-

कारणकारणम् ॥ स हि राधिकया युक्तो राधाकृष्ण इतीर्यते । युक्तः स लक्ष्म्या रुक्मिण्या लक्ष्मीनारायणस्तथा ॥' 'केचिदाहुश्चिदाकाशे प्राकृततमस परे। राधालक्ष्मीयुत साक्षाद्दृष्टौ ब्रह्मपुरे ह्ययम् ॥' 'प्राकृततमस पारे महसि प्रथमाने श्रीराधासहितस्य ब्रह्मपुरेऽमाने ॥' 'भक्ता एते तु देहान्ते धाम गोलोकमुत्तमम् । लभन्ते राजते यत्र श्रीराधाकृष्ण ईश्वर ॥' 'श्रीकृष्णो य परब्रह्म नवीननीरदश्यामस्तत्र दिव्ये स्वधामनि । विभात्यतिश्वेतरुचि सूर्यचन्द्राग्नितेजस ॥ स प्रभुर्दिव्यवसनो दिव्यालङ्कारशोभनः । राधालक्ष्म्यादिभि स्वाभि शक्तिभिश्च निषेव्यते ॥' 'दिव्य कृष्णस्य रूप शक्तयस्तस्य दिव्या' 'जय देव जय देव जय मङ्गलदाता लक्ष्मीवर राधावर' 'राधालक्ष्म्यादिभिस्तत्र सेव्यमान स्वशक्तिभि' । रत्नसिंहासने रम्ये श्रीकृष्णो हि विराजते ॥' 'स्व प्राकृतास्यतमस पर एव तस्मिन् राधारमाप्रमुखशक्तिभिरानताभिर्भक्त्यानुवेलमभिसेवितपादपद्म ॥' 'कृष्णो राधारमायुत । कोट्यर्केन्दुप्रकाशस्य राधालक्ष्मीयुतस्य ते । ईक्षण भक्तिधर्मादेश्चात्यन्त दुर्लभ नृणाम् ॥' 'नवीनजीमूतसमानवर्णं श्रीराधिकाकृष्णमह नमामि ॥' 'इत्थ ये दीक्षिता भक्ता देहान्ते परम धाम विष्णोर्गोलोकसञ्ज्ञितम् । प्राप्य श्रीराधिकाकृष्णौ लभन्ते स्वेप्सित सुखम् ॥' 'सम्पूजितो राधिकया च लक्ष्म्या पश्यन् स्वभक्तं करुणार्द्रदृष्ट्या ॥' 'मुरलीं वादयन्तं च स्थित राधारमायुतम्' 'लक्ष्मीनारायण भजेत्' 'श्रीकृष्णो भगवान् तत्र सदा स्वामी विराजते । सप्रेम राधाल

क्ष्मीभ्यामर्च्यमानपदाम्बुजः ॥ गोपीगोपानन्दकरो वेणुवादन-तत्परः ॥' 'कांश्चित् श्रीकृष्णरूपं च गोलोकेऽक्षरधामनि । लक्ष्मीराधाद्युपेतं स्वं दर्शयामास स प्रभुः ॥' 'लीलाविहरणं राधादिभिः परमधामनि' 'कोट्यर्काभनखद्योतो ह्यक्षरादौ य ईश्वरः । राधालक्ष्म्यादिभिर्दिव्यसामग्र्या सेव्यतेऽनिशम् ॥' 'राधापतेः स्वरूपस्य माहात्म्यस्य च तत्त्वतः । वेदनं यत्तदेवोक्तं परमं मुक्तिकारणम् ॥' 'सर्वेभ्योऽपि वरिष्ठेभ्यो महत्त्वं राधिकापतेः । श्रुतिस्मृतिपुराणाद्यैर्वर्णितं वर्तते भृशम् ॥' 'आत्माऽहं परमात्मासौ साक्षात्कृष्णः परात्परः । अनेककोटिब्रह्माण्डाधीशो राधारमेश्वरः ॥' 'मूर्तिं तु तत्र पश्यामि यदा श्रीराधिकापतेः । तदैव तत्रातिरुचिर्जायते मे स्वभावतः ॥' 'अनन्तशक्तिकलाधिपः' 'एवं निर्गुणसद्रूपात्मनैव प्रीतिरादरात् । कार्या श्रीराधिकाकान्ते यथाशक्त्यखिलाधिका ॥' 'कृष्णस्तु साक्षाद्भगवान् राधालक्ष्मीपतिः प्रभुः । अनन्तकोटिब्रह्माण्डस्थित्युत्पत्त्यादिकारणम् ॥' 'इष्टदेवस्तु भगवान् श्रीकृष्णो राधिकापतिः । प्रत्यक्षं च परोक्षं च ज्ञेयं रूपं यदस्य तत् । परोक्षं ब्रह्मधामस्थं गोलोके द्विभुजं सदा । राधया च श्रिया जुष्टं कोटिसूर्यसमद्युति ॥' 'तस्य पादरजो मूर्ध्ना राधालक्ष्म्यादिशक्तिभिः । ईशैर्ब्रह्मादिभिः प्रीत्या योगेशैश्चोह्यतेऽखिलैः ॥' इति ।

शिक्षापत्र्यां चारम्भ एवेष्टदेवस्य श्रीकृष्णस्योपास्यभूतस्य पुरुषोत्तमस्य राधालक्ष्मीभ्यां नित्ययोगः स्फुटमुक्तः श्रीहरिणा स्वयमेव— 'वामे यस्य स्थिता राधा श्रीश्च यस्यास्ति वक्षसि । वृन्दावनविहारं

त श्रीकृष्ण हृदि चिन्तये ॥' इति । महालक्ष्म्याश्च परमात्मरूपे वक्षसि निवास पुराणप्रसिद्ध 'का चान्या त्वामृते देवी सर्वयज्ञमय वपु । अध्यास्ते देवदेवस्य योगिचिन्त्य गदाभृत' ॥ पश्यता सर्वदेवाना ययौ वक्ष स्थल हरे' 'सततमुरसि सौम्य श्रीर्वधू साकमास्ते' 'दत्ताभय च भुजदण्डयुग विलोक्य वक्ष' श्रियैकरमण च भवाम दास्य' 'तस्या श्रियस्त्रिजगता जनको जनन्या वक्षोनिवासमकरोत्परम विभूते' इति । एतच्छ्लोकटीकायामेव लक्ष्म्या अखण्डसाहचर्यं पुरुषोत्तमेन वर्णित शतानन्दमुनिना । यथा 'श्रीमन्नारायणस्मृत्या' इत्यस्य टीकायां परमपुरुषस्य नारायणस्य लक्ष्म्या नित्ययोग उक्तः—'नित्य श्री लक्ष्मीः विद्यते यस्यासौ श्रीमान् । भूमनिन्देति नित्ययोगे मतुप् । स चासौ नारायणश्च' इति । तथा 'हृदये जीववत्' 'स श्रीकृष्णः' इति श्लोकद्वयेन यः सर्वान्तरात्मा सर्वेश्वरः सर्वकर्मफलप्रद परब्रह्म भगवान् पुरुषोत्तमः सर्वाविर्भावकारण उपास्य आराध्यश्च श्रीकृष्ण प्रस्तुत तस्यैव राधालक्ष्म्यादिनित्ययोग प्रतिपादित —'स राधया युतो ज्ञेयो राधाकृष्ण इति प्रभुः । रुक्मिण्या रमयोपेतो लक्ष्मीनारायण स हि ॥' इत्यादिना तच्छब्देन परामर्शपूर्वकम् ।

जनमङ्गलस्तोत्रे च 'श्रीकृष्ण'नामव्याख्याने श्रीरघुवीराचार्यैरपि पररूपस्यैव राधालक्ष्मीयोगो वर्णितः—'श्रयते—सेवते नित्यमिति श्री', सर्वकाल सर्वभावेन परिचर्यानिरता राधिका, तया युक्त कृष्णः श्रीकृष्ण' परब्रह्मेत्युक्त पुरुषोत्तमः । श्रीभ्या राधालक्ष्मीभ्या युक्तः कृष्ण इति वा । इति मूलस्वरूपमुक्तम्' इति । तथा 'राधाकृष्णेष्टदैवतः' इति नाम्ना च राधाविशिष्टस्यैव श्रीकृष्णस्येष्टदैवतत्व श्रीहरेर्मतमिति विज्ञायते ।

एताश्च महिष्यः क्वचित्पार्श्वतो व्यक्तरूपेण सन्निदधते। क्वचिच्चा- दृश्यरूपेण भगवन्मूर्तावेवातिसंश्लिष्टा वर्तन्ते । प्रपञ्चितश्चायमर्थः शिक्षापत्र्यां-'स राधया युतो ज्ञेयो राधाकृष्ण इति प्रभुः । रुक्मिण्या रमयोपेतो लक्ष्मीनारायणः सहि ॥...एते राधादयो भक्तास्तस्य स्युः पार्श्वतः क्वचित् । क्वचित्तदङ्गेऽतिस्नेहात् स तु ज्ञेयस्तदैकलः ॥ अतश्चास्य स्वरूपेषु भेदो ज्ञेयो न सर्वथा ॥' इति । सुधासिन्धौ परमैकान्तिकभक्तानामपि लक्ष्मीव- द्गाढसंबन्धो भगवति वर्णितः "एकान्तिकस्तु यो भक्तो वासुदेवे स निश्चितम् । प्रविश्याऽऽस्ते सेवते च लक्ष्मीवत्तं सदा- दरात् ॥" इति ।

## लक्ष्मीनिरूपणम् ।

तत्र लक्ष्म्याः सर्वशक्तिप्रधानाया हरेरिव । रक्षकत्वं शर- ण्यत्वं स्वामित्वं श्रूयतेऽखिलम् ॥ तथा हि लक्ष्मीतन्त्रे-'कान्त- स्य देवदेवस्य विष्णोः सद्गुणशालिनः । दयिताऽहं सदा देवी नित्यं तद्धर्मधर्मिणी ॥ ईश्वरी सर्वभूतानां पद्माक्षी पद्ममा- लिनी । नायिका सर्वशक्तीनां सर्वलोकमहेश्वरी ॥ महिषी देवदेवस्य सर्वकामदुघा विभोः । तुल्या गुणवयोरूपैर्मनःप्रम- थनैर्हरेः ॥ करोमि सकलं कृत्यं नित्यं तद्धर्मधर्मिणी । साऽह- मङ्कस्थिता विष्णोर्देवदेवस्य शार्ङ्गिणः ॥ लालिता तेन चात्यन्तं सामरस्यमुपेयुषी । कर्मणा मनसा वाचा देवदेवं जनार्दनम् ॥ प्रपन्नः शरणं शश्वन्मां च तद्धर्मधर्मिणीम् । लक्ष्म्या सह हृषीकेशो देव्या कारुण्यरूपया । रक्षकः सर्वसिद्धान्ते वेदा- न्तेऽपि च गीयते ॥' इति । शक्तिशक्तिमद्रूपतया पतिपत्नीभाव-

तथा नित्यसम्बन्धाल्लक्ष्मीनारायणयोः कश्चिद्भेदेनान्यथा च क्वचिन्निरूपणमस्ति । उक्तं च न्यायसिद्धाञ्जने 'श्रिया सह तु दाम्पत्यं शाश्वतं तत एव तु । तयोः साम्यैक्यशक्तित्वतद्व्-स्त्वादिगिरां गतिः ॥' इति । अतो नारायणस्य जगत्कारणत्वादि-सर्वावस्थास्वपि लक्ष्मीवैशिष्ट्यं विशिष्यानुक्तमप्यनुसन्धेयमेव । तदु-क्तमहिर्बुध्न्यसंहितायां—'देवाच्छक्तिमतो भिन्ना ब्रह्मणः परमे-ष्ठिनः । एष चैषा च शास्त्रेषु धर्मधर्मिस्वभावतः ॥ भवद्भ्यां स्वस्वरूपेण तत्त्वमेकमिवोदितौ ॥' इति । ब्रह्मणः कार्योपयोग्य-पृथक्सिद्धविशेषणत्वाल्लक्ष्म्याः शक्तिरूपत्वम् । स्वरूपनिरूपकत्वेन चाह तारूप्यमुक्तम् । नैतावताऽस्याः चेतनान्तरत्वनिषेधोऽभि-मतः । पृथङ्महिषीरूपेण स्थितेस्तत्रैव वर्णितत्वात् । ये तु 'जग-दुत्पादिका शक्तिस्तव प्रकृतिरिष्यते । सैव नामसहस्रैस्तु लक्ष्मी श्रीरिति कीर्त्यते ॥' इति निर्देशात् मूलप्रकृतिरेवाचेतना लक्ष्मी-रिति वदन्ति । तन्न । 'एक एव जगत्स्वामी शक्तिमानच्युतः प्रभुः । तदंशाः शक्तिमन्तोऽन्ये ब्रह्मेशानादयो यथा ॥ तथैवैका पराशक्तिः श्रीस्तस्य करुणाश्रया । ज्ञानादिषाड्गुण्य-मयी या प्रोक्ता प्रकृतिः परा ॥' 'ज्ञानशक्तिबलैश्वर्यवीर्य-तेजःप्रभावतीम्' 'पूर्णषाड्गुण्यरूपत्वात्साहं भगवती स्मृता' इत्यादिष्वस्या ज्ञानादिमत्त्वेन प्रतिपादनात् । 'प्रकृतेः पुरुषाच्चा-न्यस्तृतीयो नैव विद्यते' इत्यादिवचनानि तु लक्ष्मीनारायणयोः प्रकृतिपुरुषरूपविभक्तविभूतिविशेषाभिमानित्वपराणि । 'यो यो जगति पुम्भावः स विष्णुरिति निश्चयः । यो यस्तु नारीभावः स्यात्तत्र लक्ष्मीर्व्यवस्थिता ॥' इत्युक्तविभूतिविभागोऽपि यथोचित

विभक्तोपयोगविशेषाभिप्रायो द्रष्टव्यः । 'मत्तः प्रक्रियते विश्वं प्रकृतिश्चास्मि कीर्तिता । स्वतन्त्रा विश्वसिद्धीनां हेतुश्चात्र महाद्भुतः ॥ शक्तिर्नारायणस्याहं नित्या देवी सदोदिता । तस्य मे पञ्च कर्माणि नित्यानि त्रिदशेश्वर ॥ स्थिरोभावः तथा सृष्टिः स्थितिः संहृतिरेव च । अनुग्रह इति प्रोक्तं मदीयं कर्मपञ्चकम् ॥' इत्यादिषु प्रतीयमानं जगत्कारणत्वमस्याः 'नैव शक्त्या विना कश्चिच्छक्तिमानस्ति कारणम् । न च शक्तिमता शक्तिर्विनैकाऽप्यवतिष्ठते ॥' इत्युक्तरीत्या ब्रह्मकारणत्वाविरोधेन नेतव्यम् । भगवतो जगद्व्यापारप्रवृत्त्युत्तम्भकत्वादेतत्प्रीत्यर्थतया जगत्करणाच्चास्या जगद्व्यापारप्रयोजकत्वपरं ईदृशवचनजातं मन्तव्यम् । 'त्वया च विष्णुना चाम्ब व्याप्तमेतच्चराचरम् ।' इति व्याप्तिवचनमपि 'सौम्यासौम्यैर्जगद्रूपैः त्वयैतद्देवि पूरितम्' इत्युक्तविग्रहव्याप्तिपरं नेतव्यम् । अणुत्वस्य भगवद्भिन्नसर्वचेतनधर्मतायाः स्वरससिद्धतया लक्ष्म्या अपि अणुस्वरूपत्वस्यैवैषितव्यत्वात् । अस्याश्च 'अस्येशाना जगतो विष्णुपत्नी' इति श्रुतिसिद्धं परमात्मशेषत्वं अन्यसर्वशेषित्वं च श्रीशब्दस्य 'श्रीयते श्रयते' इति व्युत्पत्तिद्वयतो लभ्यते । अहिर्बुध्न्यसंहितायां च श्रीशब्द एवं निरुच्यते— 'श्रयन्तीं श्रीयमाणां च शृणन्तीं शृण्वतीमपि' 'शृणाति निखिलान् दोषान् श्रीणाति च गुणैर्जगत् । श्रीयते चाखिलैर्नित्यं श्रयते च परं पदम् ॥' इति । ( शॄ हिंसायाम् ) शृणाति— हिनस्ति जीवगतं प्रातिकूल्यदोषं इति श्रीर्जीवदोषनिवर्तिका, —( श्रीञ् पाके ) श्रीणाति पचति तद्गतमन्तःकरणकाठिन्यं भगवदानुकूल्यविरहप्रयोजकं इति श्रीः आनुकूल्यव्यवसायादिगुणव-

र्थिका, ( श्रिञ् सेवायाम् ) श्रीयते सर्वैः पुरुषकारतया, श्रयते च भगवन्तं सदाऽऽश्रितकार्यनिर्वर्तनायेति श्रीः, ( श्रु श्रवणे ) शृणोति स्वयमाश्रितार्तनादं, स भगवन्तं श्रावयतीति च श्रीः, एवं श्रीशब्द-निर्वचनतोऽस्याः सर्वलोकक्षेमङ्करसकलव्यापारवत्त्वं शक्यमव-गन्तुम् । 'जगत्तया लक्ष्यमाणा सा लक्ष्मीरिति गीयते' इति निर्वचनाच्च विभूतिभूतजगद्वैशिष्ट्यमस्या लभ्यते । एतत्कटाक्षाधीनं हि वैभवं सकलम् । तथोक्तं वासुदेवमाहात्म्ये 'तत समीक्षिता प्रीत्या तया मधुरया दृशा । त्रिलोकीवासिनः सर्वे ऋद्धा आसन् यथा पुरा ॥ तस्याः श्रियाश्च भगवान् ददौ स्थानमुर-स्थकम् । तत्र स्थित्वैव सा व्यापत् त्रैलोक्यं सम्पदात्मना ॥' इति । वर्णितं च श्रीवत्साङ्कमिश्रैः श्रीस्तवे 'ऐश्वर्यं यदशेषपुंसि यदिदं सौन्दर्यलावण्ययो रूपं यच्च हि मङ्गलं किमपि यल्लोके सदि-त्युच्यते । तत्सर्वं त्वदधीनमेव यदतः श्रीरित्यभेदेन वा यद्वा श्रीमदितीदृशेन वचसा देवि प्रथामश्नुते ॥' इति । 'मातरं जगतामेतामनाराध्य महत्कुतः' । 'त्वं माता सर्वलोकानां देवदेवो हरिः पिता' 'एकासने तौ सह सन्निविष्टौ ब्रह्माण्ड-मातापितरौ मनोज्ञौ' इत्यादिना च सर्वजननीत्वमस्या लभ्यते ।

'नित्यैवैषा जगन्माता विष्णोः श्रीरनपायिनी' 'अनन्या राघवेनाहं भास्करेण यथा प्रभा' 'एका शक्तिर्हरेर्विष्णोः सर्वभावानुगामिनी । देवी षाड्गुण्यपूर्णा सा ज्ञानानन्दक्रिया-मयी ॥' इत्यादिना च भगवन्तं प्रति नित्यान्तरङ्गविशेषणत्वमस्या अवगम्यते । विष्णुनामसहस्रे च लक्ष्मीवान् श्रीपतिः श्रीनिवासः श्रीनिधिः इत्यादिनामभिः नित्यश्रीमत्त्वं भगवतो लभ्यते

निरुक्तयः—'लक्ष्म्या च नित्ययुक्तत्वाल्लक्ष्मीवानिति कथ्यते' ( नित्ययोगे मतुप् ) 'स्वयं श्रियः पतित्वेन वृतत्वात् श्रीपतिः स्मृतः' 'नित्योपपन्ननिवासत्वात् श्रीनिवासः श्रियः स्मृतः' 'श्रीरस्मिन् निहिता नित्यं श्रीनिधिः परिकीर्तितः' इति । 'सर्वभावानुगामिनी' इत्यनेन सिद्धा अवतारेष्वप्यनुवृत्तिरस्या वर्ण्यते विष्णुपुराणेऽपि—'राघवत्वेऽभवत्सीता रुक्मिणी कृष्णजन्मनि । अन्येषु चावतारेषु विष्णोरेषानपायिनी ॥ देवत्वे देवदेहेयं मनुष्यत्वे च मानुषी । विष्णोर्देहानुरूपां वै करोत्येषाऽऽत्मनस्तनुम् ॥' इति । वासुदेवमाहात्म्ये च—भगवतोऽवतारेषु लक्ष्म्या अनुवृत्तिरुक्ता—'सीताभिधाना लक्ष्मीश्च भवित्री जनकात्मजा' 'लक्ष्मीश्च भीष्मकसुता रुक्मिण्याख्या भविष्यति' इति । तथा भक्तान्तिके सदा सश्रीकः श्रीहरिः सन्निहितो वसतीति च तत्रैव व्यक्तम्—'यथा पतिव्रता नार्यो वशीकुर्वन्ति सत्पतिम् । निजैर्गुणैस्तथा भक्ता वशीकुर्वन्ति मामपि ॥ अनुयामि श्रिया साकं तानहं परवानिव । यत्र यत्र च ते सन्ति तत्र तत्राहमस्मि हि ॥' इति । तथा तत्रैव पररूपेऽपि लक्ष्मीयोगो वर्णितः—'रमासेव्यपादाम्बुजं शास्त्रयोनिं ाद्यं भवन्तं भजे वासुदेवम्' 'मायातीतं कालनियन्तारमुदारं ध्यायामः श्रीकान्तं परात्परमेकम् ॥' इति । श्रीविशिष्टस्यैव भक्तिर्निःश्रेयसकरीति च—'विचार्याहं वेदान् मुहुरुपगतो निश्चयमिमं रमारामे, भक्तिस्त्वयि दृढतरा यर्ह्यसुभृताम् । भवेत्तर्ह्येवैषां क्षयविरहिता भोगनिकरास्तथा स्युर्लोका वै परमपुरुषात्यन्तिकगतिः ॥' 'अत्याश्चर्यार्चनीयाङ्घ्रे ! राधिकाकमलादिभिः ।

त्वमेवात्यन्तिकं श्रेयोऽभीप्सितां परमां गतिम् ॥' इति । 'देव-तिर्यङ्मनुष्येषु पुन्नामा भगवान् हरिः । स्त्रीनाम्नी लक्ष्मी-र्मैत्रेय नानयोर्विद्यते परम् ॥' इति सर्वपुरुषाभिमानित्वं श्रीहरेः सर्वस्त्र्यभिमानित्वं च लक्ष्म्या निरूप्य तयोरेव सर्वापेक्षया परत्वं चावर्णि पुराणरत्ने। अतएव 'आद्या शक्तिर्भगवतो लक्ष्मी-र्देव्यस्ति नो मते' ( स प्र २ अ ३७ ) इति प्राधान्यं लक्ष्म्या वर्णितं सत्सङ्गिजीवनेऽपि । तथा पररूपेणाक्षरधामस्थेन नित्यसं-श्लिष्टयो राधालक्ष्म्योः स्त्रीरूपता च समवर्णि 'तस्यापश्यत् वाम-भागे लक्ष्मीं पद्मकरां च ते। कौसुम्भवसनां गौरीं सर्वाभरण-भूषिताम् । मन्दारपुष्पकबरीं दिव्यसीमन्तभूषणाम् । शर-त्पूर्णेन्दुवदनां पीनोन्नतपयोधराम् ॥ सुनासां सुदतीं सुभ्रूलतां चारुविलोचनाम् । पादोल्लसद्धंसकयुग्मलनूपुर-शिञ्जिताम् ॥ विशालभालविलसद्दिव्यकाश्मीरपत्रिकाम् । सुकपोलां निष्ककण्ठीं स्वेशवक्त्रैकवीक्षणाम् ॥ रत्नदण्डेन लघुना चामरेणातिभावतः । वीजयन्तीं निजपतिं तादृशीं राधिकां तथा ॥' इति ।

लक्ष्मीस्तावत् 'देव्या कारुण्यरूपया' 'तथैवैका परा शक्तिः श्रीस्तस्य करुणाश्रया' इत्युक्तप्रकारेण करुणामयमूर्तिर्भगवतः संसारदुःखार्दितेषु जीवेष्वाश्रयणप्रवृत्तेषु कारुण्यमुद्बोधयति । भूश्च क्षमासारा सापराधानामपि तेषामपराधान् क्षमापयति । राधा च स्वभोग्यताविश्याविष्कारेणाऽऽश्रितदोषा यथा न चित्ते प्रतीये-रन् तथा स्ववशीकृत्य भगवन्तं भक्तजनावनं साधयति। राधयतीति हि राधा ( राध साध संसिद्धौ ) राध्नोति संसिद्धिं प्राप्नोति

जनोऽनयेति वा । ब्रह्मवैवर्तपुराणस्थश्रीकृष्णजन्मखण्डे च राधाशब्दो निरुक्तोऽक्षरशः—'रेफो ह्यनेकजन्माघं कर्मभोगं शुभाशुभम् । आकारो गर्भवासं च मृत्युं रोगं च नाशयेत् ॥ धकार आयुषो हानिमाकारो भवबन्धनम्' इत्यादिना । तदेवं उज्जीवनोपयोगितया चेतनानामुपजीव्यतमो नाम भगवतो राधालक्ष्म्यादिदिव्यमहिषीयोग इति स्थितम् ।

## नित्यदिव्यपार्षदवर्णनम् ।

इदं च लक्ष्म्यादिविशिष्टं परं रूपं सूरिभिः सदाऽनुभूयमानमाम्नायते—'तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम् । तद्विप्रासो विपन्यवो जागृवांसः समिन्धते' इति । पद्यत इति पदं पररूपम् । सूर्य इव सर्वलोकस्य चक्षुर्ज्ञानविकासकारणं यः, तं परमात्मानमप्राकृतपरमव्योमनिलयनमतिशयितज्ञानवन्तः स्तुतिशीला अस्थानरक्षाव्यसनिनः सूरयः सदाऽनुभवन्तीति यावत् । 'यदक्षरे परमे प्रजाः' 'यस्मिन् देवा अधिविश्वे निषेदुः' 'यत्र पूर्वे साध्याः सन्ति देवाः' 'यत्रर्षयः प्रथमजा ये पुराणाः' इत्यादौ प्रजादिशब्दैश्च नित्यसूरय एव विवक्ष्यन्ते । प्रकर्षेण जायन्ते इति प्रजाः । नित्यासङ्कुचितज्ञानप्रकाशत्वाद्दीप्यमानदिव्यविग्रहयोगाद्वा देवाः । क्रान्तदर्शित्वाच्च ऋषयः, सूरय इति । अत्र चानुसन्धेयं नामसहस्रे 'प्रजापति' रिति नाम्नो भाष्यं—'बद्धमुक्तेभ्यः प्रकर्षेण जायन्ते भवन्ति ( लब्धसत्ताकाः ) इति प्रजाः—सूरयः, तेषां पतिः—स्वामी नित्यपरिचरणीयः' इति । तथा च निरुक्तिः—'बद्धादुत्कृष्टतो ये च जायन्ते सूरयः प्रजाः । तेषां यो नित्यसूरीणां पतिः स स्यात्प्रजापतिः'

इति । पररूपस्य नित्यमुक्तानुभाव्यत्वं विष्वक्सेनसंहितायामपि वर्णितम्—'वैकुण्ठे तु परे लोके श्रीसहायो जनार्दनः । उभाभ्यां भूमिनीलाभ्यां सेवितः परमेश्वरः ॥ महायोगी जगद्धाता दिव्यसिंहासनोपरि । दिव्यसंस्तरणोपेते शेषाहिफणमण्डिते ॥ अप्राकृततनुर्देवो नित्याकृतिधरो युवा । नित्यातीतो जगद्धाता नित्यैर्मुक्तैश्च सेवितः ॥ बद्धाञ्जलिपुटैर्हृष्टैर्निर्मलैर्निरुपद्रवैः । विमलैर्भूषणैर्नित्यैर्भूषितो नित्यविग्रहः ॥ पञ्चायुधैः सेव्यमानः शङ्खचक्रधरो हरिः ।' इति ।

अयमर्थो श्रीरामानुजाचार्यैः गीताभाष्ये सङ्गृह्य निरूपितः—'स्वसङ्कल्पानुविधायिस्वरूपस्थितिप्रवृत्तिभेदाशेषशेषतैकरतिरूपनित्यनिरवद्यनिरतिशयज्ञानक्रियैश्वर्याद्यनन्तगुणगणापरिमितसूरिभिरनवरताभिष्टुतचरणयुगल' इति । नित्यसूरयश्चानन्तगरुडविष्वक्सेनादयः श्रीवामनन्दसुनन्दजयविजयप्रभृतयश्च । तथा च गद्यत्रये भगवता भाष्यकृता भाषितः—'शेषशेषाशनगरुडप्रमुखनानाविधानन्तपरिजनपरिचारिकापरिचरितचरणयुगल' इति । श्रीमद्यामुनमुनिभिश्च प्राधान्यतः अनन्तगरुडविश्वक्सेनानां सेवाप्रकारोपवर्णनपूर्वकमनन्तसूरिसेवाप्रकारः प्रदर्शितः स्तोत्ररत्ने—'निवासशय्यासनपादुकांशुकोपधानवर्षातपवारणादिभिः । शरीरभेदैस्तव शेषतां गतैर्यथोचितं शेष इतीरिते जनैः ॥ दासः सखा वाहनमासनं ध्वजो यस्ते वितानं व्यजनं त्रयीमयः । उपस्थितं तेन पुरो गरुत्मता त्वदङ्घ्रिसम्मर्दकिणाङ्कशोभिना ॥ त्वदीयभुक्तोज्झितशेषभोजिना त्वया निसृष्टात्मभरेण यद्यथा । प्रियेण सेनापतिना

न्यवेदि तत्तथानुजानन्तमुदारवीक्षणैः ॥ हताखिलक्लेशमलैः स्वभावतस्त्वदानुकूल्यैकरसैस्तवोचितैः । गृहीततत्तत्परिचारसाधनैर्निषेव्यमाणं सचिवैर्यथोचितम् ॥' इति । सर्वेषां नित्यानां ज्ञानभोगयोरीश्वरेण मिथश्चात्यन्तसाम्येऽपि विग्रहाधिकारयोर्नैयत्यं केषुचित् भगवन्नित्येच्छासिद्धमिति चावर्णि एतद्भाष्ये वेदान्ताचार्यैः ।

वासुदेवमाहात्म्ये चैवमेव दिव्यपार्षदसद्भावः प्रत्यपादि— 'धर्मेण वेदैरखिलैर्भगैश्च ज्ञानादिभिः संयतपाणिपद्मैः । निषेव्यमाणं च सुदर्शनाद्यैर्निजायुधैर्मूर्तिधरैरनेकैः ॥ मसारमाणिक्यसुवर्णवर्णैः सितैश्च कैश्चिन्निजपार्षदाग्र्यैः । उपाश्रितं चक्रगदाब्जशङ्खलसद्भुजैर्नन्दसुनन्दमुख्यैः ॥ श्रीदाममुख्यैरथ गोपवेषैर्भक्त्यावनम्रैर्द्विभुजैरनेकैः । उपास्यमानं गरुडेन चाग्रतो विभूतिभिश्चाष्टभिरानताभिः ॥' 'नन्दताक्ष्यादिभिर्जुष्टं पार्षदैश्च चतुर्भुजैः' इति ।

सत्सङ्गिजीवनेऽपि—'श्रीदामविष्वक्सेनाद्यैः पार्षदैर्दिव्यविग्रहैः । सेव्यमानश्च सच्छत्रचामरव्यजनादिभिः ॥ असङ्ख्यैश्च महामुक्तैर्दिव्यसुन्दरविग्रहैः । दिव्यैरनेकोपचारैः पूज्यमानपदाम्बुजः ॥' 'श्रीदामनन्दप्रमुखैः पार्षदैर्दिव्यविग्रहैः । सेव्यमानः सितच्छत्रचामरादिभिरादरात् ॥ मुक्तैरन्यैश्चार्च्यमानो गन्धपुष्पांशुकादिभिः' 'श्रीदामविष्वक्सेनाद्यैः पार्षदप्रवरैर्निजैः । सेवितं राजचिह्नैश्च छत्रव्यजनचामरैः ॥' इति । सुधासिन्धावपि—'श्रीदामाद्यैश्च नन्दाद्यैः पार्षदप्रवरैस्तथा । अणिमादिभिरैश्वर्यैर्विद्याद्याभिश्च शक्तिभिः ॥' 'तस्मिन् हि

परमे धाम्नि सदा कृष्णो विराजते। स्वसधर्मैरसङ्ख्यातैर्महामुक्तै-रुपाश्रित ॥' 'निजेऽक्षरे परे धाम्नि कोटिसूर्यादिभास्वरे। सदा दिव्याकृति कृष्णो भगवान् पुरुषोत्तमः॥ मुक्तैर्विराजते दिव्यब्रह्मरूपैर्निषेवित।' 'दिव्याभि सर्वसम्पद्भिः पार्षदैर्दि-व्यविग्रहै। शक्तिभि सेव्यमानश्च स्वतन्त्रोऽस्तीश्वरेश्वर॥' 'परोक्ष ब्रह्मधामस्थं गोलोके द्विभुज सदा। राधया च श्रिया जुष्ट कोटिसूर्यसमद्युति॥ श्रीदामनन्दप्रमुखै पार्षदै सन्निषेवितम्।' 'अक्षरे धाम्नि कृष्णस्य तद्भक्ताना च सर्वश। या सन्त्याकृतयस्तास्तु सत्या दिव्याश्च भासुरा॥ पुरुषाकृ-तय' सन्ति स च ते तत्र धामनि। सच्चिदानन्दरूपाश्च दिव्या-म्बरस्रगभूषणा॥ तैः सेवितोऽसौ विविधै प्रेम्णा दिव्योपचा-रकै'। परमानन्ददस्तेभ्यो वर्तते तत्र सर्वदा॥' इति।

इदमेव सूरिसेव्य भगवतो दिव्य रूप मुक्तप्राप्यम्। तथा ह्याम्नायते—'भक्तिप्रपत्तिभ्या प्रसन्नस्य भगवतोऽनुग्रहाग्निदग्धकर्म-ब धनस्यान्तकाले च हार्दानुग्रहेणाभिव्यक्तमूर्धन्यनाडीद्वारतः शीर्ष-कपालभेदनेन निष्क्रान्तस्यार्चिरादातिवाहिकगणैर्देवयाने पथि सत्क-तस्यामानवेन सह गच्छत प्रकृत्यावरणादिभेदनपूर्वक प्रकृतिम-ण्डलाप्राकृताकाशयो सीमापरिच्छेदिकायां विरजायामवगाहनेन निधूतसूक्ष्मदेहस्याऽमानवकरस्पृष्टस्याऽऽविर्भूतनिर्मलदिव्यदेहस्य दि-व्यदेवतागणैर्महालङ्कारेणालङ्कृतस्य दिव्यद्वारपालाभ्यनुज्ञया पर-ब्रह्मणो भगवतो वासुदेवस्याऽऽस्थानमण्डप प्राप्य तत्र तद्दिव्यपर्य-ङ्कमधिरूढस्य तेन चाङ्के स्थापयित्वा कृतप्रश्नप्रतिवचनश्रवणत आन-न्दनिर्भरेण परिपूर्णकटाक्षामृतवर्षेणाभिषिच्य निजे स्वदास्ये नियो-

जितस्य मुक्तस्य यावदात्मभाव्यपरिछिन्नपरब्रह्मानुभवसेवालक्षणा मोक्षसाम्राज्यलक्ष्मीः कठच्छान्दोग्यतैत्तिरीयकौपीतक्यादौ—'विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः । सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम् ॥' 'शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिःसृतैका । तयोर्ध्वमायन्नमृतत्वमेति ॥' 'तेऽर्चिषमभिसंभवन्ति अर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान् षडुदङ्ङेतिमासास्तान् मासेभ्यः संवत्सरं संवत्सरादादित्यं आदित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयति ॥' 'एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुषः स तत्र पर्येति ।' 'एतमानन्दमयमात्मानमुपसङ्क्रम्य इमान् लोकान् कामान्नी कामरूप्यनुसञ्चरन् एतत्साम गायन्नास्ते' 'येन येन धाता गच्छति तेन तेन सह गच्छति' "छाया वा सत्वमनुगच्छेत् ।' 'स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति स वायुलोकं स वरुणलोकं स आदित्यलोकं स इन्द्रलोकं स प्रजापतिलोकं स ब्रह्मलोकं स आगच्छति विरजां नदीं तां मनसैवात्येति । स एष विसुकृतो विदुष्कृतो ब्रह्मविद्वान् ब्रह्मैवाभिप्रैति । स आगच्छति अपराजितमायतनम् । स आगच्छति इन्द्रप्रजापती द्वारगोपौ तावस्मादपद्रवतः । स आगच्छति प्रभुविमितम् । स आगच्छति विचक्षणामासन्दीं सा प्रज्ञा । स आगच्छत्यमितौजसं पर्यङ्कम् । तस्मिन् ब्रह्मास्ते तमित्थंवित्पादेनैवाग्र आरोहति । तं ब्रह्माह कोऽसीति तं प्रतिब्रूयात् । ऋतुरस्म्यार्तवोऽस्मि सा या ब्रह्मणो जितिर्या व्यष्टिस्तां जितिं जयति तां व्यष्टिं व्यश्नुते य एवं वेद' इति ।

परमे धाम्नि सदा कृष्णो विराजते। स्वसधर्मैरसङ्ख्यातैर्महामुक्तै-रुपाश्रितः ॥' 'निजेऽक्षरे परे धाम्नि कोटिसूर्यादिभास्वरे। सदा दिव्याकृतिः कृष्णो भगवान् पुरुषोत्तमः ॥ मुक्तैर्विराजते दिव्यब्रह्मरूपैर्निषेवितः ।' 'दिव्याभिः सर्वसम्पद्भिः पार्षदैर्दिव्यविग्रहैः । शक्तिभिः सेव्यमानश्च स्वतन्त्रोऽस्तीश्वरेश्वरः ॥' 'परोक्षः ब्रह्मधामस्थ गोलोके द्विभुजः सदा। राधया च श्रिया जुष्टः कोटिसूर्यसमद्युतिः ॥ श्रीदामनन्दप्रमुखैः पार्षदैः सन्निषेवितम्।' 'अक्षरे धाम्नि कृष्णस्य तद्भक्तानां च सर्वदा । या सन्त्याकृतयस्तास्तु सत्या दिव्याश्च भासुराः ॥ पुरुषाकृतयः सन्ति स च ते तत्र धामनि। सच्चिदानन्दरूपाश्च दिव्याद्व्यस्त्रभूषणाः ॥ तैः सेवितोऽसौ विविधैः प्रेम्णा दिव्योपचारकैः । परमानन्ददस्तेभ्यो वर्तते तत्र सर्वदा॥' इति ।

इदमेव सूरिसेव्यं भगवतो दिव्यं रूपं मुक्तप्राप्यम् । तथा ह्याम्नायते—'भक्तिप्रपत्तिभ्यां प्रसन्नस्य भगवतोऽनुग्रहाभिधूतकर्मणः घनस्यान्तकाले च हार्दानुग्रहेणाभिव्यक्तमूर्धन्यनाडीद्वारतः शीर्षकपालभेदनेन निष्क्रान्तस्यार्चिराद्यातिवाहिकगणैर्देवयाने पथि सत्कृतस्यामानवेन सह गच्छतः प्रकृत्यावरणादिभेदनपूर्वकं प्रकृतिमण्डलाप्राकृताकाशयोः सीमापरिच्छेदिकायां विरजायामवगाहनेन निधूतसूक्ष्मदेहस्याऽमानवकरस्पृष्टस्याऽऽविर्भूतनिर्मलदिव्यदेहस्य दिव्यदेवतागणैर्ब्रह्मालङ्कारेणालङ्कृतस्य दिव्यद्वारपालाद्यभ्यनुज्ञया परब्रह्मणो भगवतो वासुदेवस्याऽऽस्थानमण्डपं प्राप्य तत्र तद्दिव्यपर्यङ्कमधिरूढस्य तेन चाङ्के स्थापयित्वा कृतप्रश्नप्रतिवचनश्रवणत आनन्दनिर्भरेण परिपूर्णकटाक्षामृतवर्षेणाभिषिच्य निजे स्वदास्ये नियो-

जितस्य मुक्तस्य यावदात्मभाव्यपरिच्छिन्नपरब्रह्मानुभवसेवालक्षणा मोक्षसाम्राज्यलक्ष्मीः कठच्छान्दोग्यतैत्तिरीयकौपीतक्यादौ—'विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः । सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम् ॥' 'शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिःसृतैका । तयोर्ध्वमायन्नमृतत्वमेति ॥' 'तेऽर्चिषमभिसंभवन्ति अर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान् षडुदङ्ङेतिमासास्तान् मासेभ्यः संवत्सरं संवत्सरादादित्यं आदित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयति ॥' 'एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुषः स तत्र पर्येति ।' 'एतमानन्दमयमात्मानमुपसङ्क्रम्य इमान् लोकान् कामान्नी कामरूप्यनुसञ्चरन् एतत्साम गायन्नास्ते' 'येन येन धाता गच्छति तेन तेन सह गच्छति' 'छाया वा सत्वमनुगच्छेत् ।' 'स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति स वायुलोकं स वरुणलोकं स आदित्यलोकं स इन्द्रलोकं स प्रजापतिलोकं स ब्रह्मलोकं स आगच्छति विरजां नदीं तां मनसैवात्येति । स एष विसुकृतो विदुष्कृतो ब्रह्मविद्वान् ब्रह्मैवाभिप्रैति। स आगच्छति अपराजितमायतनम् । स आगच्छति इन्द्रप्रजापती द्वारगोपौ तावस्मादपद्रवतः । स आगच्छति प्रभुविमितम् । स आगच्छति विचक्षणामासन्दीं सा प्रज्ञा । स आगच्छत्यमितौजसं पर्यङ्कम् । तस्मिन् ब्रह्मास्ते तमित्थंवित्पादेनैवाग्र आरोहति । तं ब्रह्माह कोऽसीति तं प्रतिब्रूयात् । ऋतुरस्म्यार्तवोऽस्मि सा या ब्रह्मणो जितिर्या व्यष्टिस्तां जितिं जयति तां व्यष्टिं व्यश्नुते य एवं वेद' इति ।

सूत्रकृता चैतत्सर्वं निर्णीतम्—'तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ' 'अनारब्धकार्ये एव तु पूर्वे तदवधे' 'भोगेन त्वितरे क्षपयित्वाऽथ सम्पद्यते' 'तदोकोग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया' 'अर्चिरादिना तत्प्रथितेः' 'सम्पद्याविर्भावः स्वेन शब्दात्' 'जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च' 'भोगमात्रसाम्यलिङ्गाच्च' 'अनावृत्तिः शब्दादनावृत्तिः शब्दात्' इति।

क्वचिद्देहान्त एव दिव्यदेहप्राप्तेर्वर्णनं त्वासन्नकालत्वाभिप्रायेण नैवान्यथा। अवश्यम्भावित्वाद्विदुषो दिव्यदेहप्राप्तेः। भगवतः प्रसादविशेषात्पुरुषविशेषे सम्भवाभिप्राय वेत्यास्तां तावत्। मुक्तप्राप्यत्वादेव पररूपस्य 'मुक्तानां परमा गतिः' इति कल्याणतमं नाम परमात्मनोऽभ्याम्नायते नामसहस्रे। अत्र च बहुवचननिर्देशाद्व्यधिकरणप्रयोगाच्च मुक्तानां मिथः परमात्मनश्च भेदो व्यक्तः। अतोऽद्वितीयनिर्विशेषब्रह्मैक्यापत्तिलक्षणा मुक्तिरिति वादो न स्थाने। सर्वतो व्याप्तस्यापि परमात्मनः स्वासाधारणातिभास्वरनित्यदिव्यमङ्गलविग्रहविशिष्टस्याप्राकृतेऽक्षरे धामविशेषेऽवस्थितिः 'सर्वभूतान्तरात्मा दिव्यो देव एको नारायणः' इति श्रुतिप्रतिपन्ना। इयमेव च परावस्था मुक्तप्राप्या नाम। अत एवार्चिरादिगतिश्रुतेरप्यर्थवत्त्वमिति यावत्। अर्चिरादिगतिप्राप्यदिव्यदेशस्थितो हरिः। षाड्गुण्यमूर्तिर्लक्ष्म्यादिजुष्टो भूषणभूषितः॥ चक्रादिभिर्दिव्यमूर्तिधरैर्नित्यमुपासितः। नित्यैर्मुक्तैरनेकोपचारतोऽर्च्यः परः स्मृतः॥

## व्यूहनिरूपणम् ।

नित्याविर्भूतषाड्गुण्यं पररूपम् । सत्येव षाड्गुण्ये कार्यवशाद्यद्रूपे द्विकस्य द्विकस्याभिव्यक्तिस्तत् व्यूहसंज्ञम् । यथा सङ्कर्षणे ज्ञानबलयोः, प्रद्युम्न ऐश्वर्यवीर्ययोः, अनिरुद्धे च शक्तितेजसोः । यथाहुः पराशरभट्टार्याः—'षाड्गुण्याद्वासुदेवः पर इति स भवान् मुक्तभोग्यो बलाढ्याद्बोधात्सङ्कर्षणस्त्वं हरसि वितनुषे शास्त्रमैश्वर्यवीर्यात् । प्रद्युम्नः सर्गधर्मौ नयसि च भगवन् शक्तितेजोऽनिरुद्धो बिभ्राणः पासि तत्त्वं गमयसि च तथा व्यूह्य रङ्गाधिराज ॥' इति । एवमेव च गुणभेदनिबन्धनः कार्यभेद एषामुपवर्णितो विष्वक्सेनसंहितायाम्—'तत्र ज्ञानबलद्वन्द्वाद्रूपं साङ्कर्षणं हरेः । भगवानच्युतोऽपीत्थं षाड्गुण्येन समेधितः ॥ बलज्ञाने गुणौ तस्य स्फुटौ कार्यवशान्मुने । बलेन हरतीदं स गुणेन निखिलं मुने ॥ ज्ञानेन तनुते शास्त्रं सर्वसिद्धान्तगोचरम् । वेदशास्त्रमिति ख्यातं पाञ्चरात्रं विशेषतः ॥ ऐश्वर्यवीर्यसम्भेदाद्रूपं प्राद्युम्नमुच्यते । ऐश्वर्येण गुणेनासौ सृजते तच्चराचरम् ॥ वीर्येण सर्वधर्मांश्च प्रवर्तयति सर्वशः । शक्तितेजःसमुत्कर्षादनिरुद्धतनुर्हरेः । शक्त्या जगदिदं सर्वमनन्ताण्डनिरन्तरम् ॥ बिभर्ति पाति च हरिर्मणिसानुरिवाणुकम् । तेजसा निखिलं तत्त्वं ज्ञापयत्यात्मनो मुने ॥' इति । तथा सङ्कर्षणो रुक्माभः प्रद्युम्न इन्द्रनीलप्रतीकाशोऽनिरुद्धस्तादात्विकघनप्रभ इत्यपि तत्रैव स्फुटम् । 'तदेकान्तवपुर्धर' इति विशेषणादेषामसाधारणाप्राकृतरूपवत्त्वं च लब्धम् ।

श्रीभागवते व्यूहानां परमपुरुषादनन्यत्वं, क्षेत्रज्ञानां जाग्रदा-

प्रसुप्तिमुख्यावस्थानिर्वाहकत्वेन तद्व्यापकविश्वतैजसप्राज्ञतुरीयनाम भाक्त्वं च पठितम्—'वासुदेवः सङ्कर्षणः प्रद्युम्नः पुरुषः स्वयम्। अनिरुद्ध इति ब्रह्मन् मूर्तिव्यूहोऽभिधीयते ॥ स विश्वस्तैजसः प्राज्ञस्तुरीय इति वृत्तिभिः । अर्थेन्द्रियाशयज्ञानैर्भगवान् परिभाव्यते ॥ अङ्गोपाङ्गायुधाकल्पैर्भगवान् तच्चतुष्टयम् । बिभर्ति स चतुर्मूर्तिर्भगवान् हरिरीश्वरः ॥' इति । जाग्रदाद्यवस्थात्रयवशादवस्थितेर्नीयमानत्वादवस्थानियन्तृत्वमुपलक्ष्यैव व्यूहमूर्तयः । अस्यैव च चतुर्व्यूहस्य भगवतः समस्तव्यस्तप्रणवोपासनं निःश्रेयसफलकमाम्नायते माण्डूक्ये ।

मार्कण्डेयपुराणाद्युक्तं सङ्कर्षणादेः सगुणत्वं वासुदेवस्य निर्गुणत्वं च अनन्तब्रह्माण्डसृष्ट्याद्यधिकृतसत्त्वादिगुणाधिष्ठाननिबन्धनं कैवल्याभिमाननिबन्धनं च मन्तव्यम् । 'प्रधानक्षेत्रज्ञपतिर्गुणेशः' 'संसारबन्धस्थितिमोक्षहेतुः' इति गुणाधिष्ठानं संसारमुक्तिप्रवर्तकत्वं च भगवत एव हि श्रूयते । अत सङ्कर्षणादीनां न क्षेत्रज्ञकोटावन्तर्भावः शङ्कनीयः । 'वासुदेवात्सङ्कर्षणो नाम जीवो जायते सङ्कर्षणात्प्रद्युम्नसंज्ञं मनो जायते प्रद्युम्नादनिरुद्धसंज्ञकोऽहङ्कारो जायते' इत्यत्र च जीवाद्यभिमानी सङ्कर्षणादिर्विवक्षितः । 'विज्ञानादिभावे वा तदप्रतिषेधः' इति ब्रह्मसूत्रभाष्ये च सङ्कर्षणादेः परब्रह्मानन्यत्वं स्थापितं श्रीभाष्यकारैः । चतुर्व्यूहः परमात्मा सृष्टिस्थितिलयमोक्षनिर्वाहक इति श्रीविष्णुपुराणेऽपि स्मर्यते—'व्यूह्यात्मानं चतुर्धा च वासुदेवादिमूर्तिभिः । सृष्ट्यादीन् प्रकरोत्येष विश्रुतात्मा जनार्दनः ॥' इति । वासुदेवमाहात्म्येऽपि अक्षरमभाभिपते श्रीकृष्णस्यैव सङ्कर्षणादिमूर्त्यो

सृष्ट्यादिर्जगद्व्यापारः प्रतिपाद्यते—'कुर्वेऽनिरुद्धप्रद्युम्नसङ्कर्षण-समाह्वयैः । स्वरूपैर्नैककोट्यण्डसर्गस्थित्यप्ययानहम् ॥' इति ।

तथा चोच्यते सत्सङ्गिजीवने—'श्रीवासुदेवप्रमुखाश्चतस्र-स्तस्य मूर्तयः । चतुर्विंशतिसंख्याकाः केशवप्रमुखास्तथा ॥' 'वासुदेवादयो यस्माद् व्यूहाः प्रादुर्भवन्ति च । चत्वारः केशवाद्याश्च चतुर्विंशतिरीशितुः ॥' 'अनेकाण्डोद्भवाद्यर्थं निर्गुणः स यदा प्रभुः । मायागुणानुपादत्ते सगुणः प्रोच्यते तदा ॥ अनिरुद्धस्वरूपस्तु मायायास्तु रजोगुणम् । गृहीत्वा ब्रह्म-संज्ञः सन् ब्रह्माण्डं सृजति प्रभुः ॥ त्रैलोक्यमौदरीकृत्य लये नैमित्तिके ह्यसौ । एकार्णवजले शेते काले सृजति तत्पुनः ॥ स प्रद्युम्नस्वरूपेण वासुदेवोऽखिलं जगत् । सत्त्वं मायागुणं धृत्वा पाति विष्णुः प्रजापतिः ॥ असौ वैराजपुरुषः कथ्यते लोकपालकः । मुक्तिं चतुर्विधां दत्ते स्वभक्तेभ्यः सुरारिहा ॥ सङ्कर्षणस्वरूपेण वासुदेवस्तमोगुणम् । अङ्गीकृत्यैव मायायाः शिवाख्यः संहरत्यदः ॥ शेषरूपेण भूगोलं धत्ते सङ्कर्षणो ह्यसौ । मूर्तयो वासुदेवस्य षडेताः सगुणा मताः ॥ कार्यार्थी मूर्तयोऽप्यासां सन्त्यन्याश्च सहस्रशः । एताः सर्वे गुणत्यागे प्रोच्यन्ते निर्गुणा अपि ॥' इति ।

विष्णुनामसहस्रे च एकस्यैव परमात्मनः चतूरूपत्वं वासुदेवादिभेदतः 'चतुरात्मा चतुर्व्यूहः' इति नामभ्याममिहितम् । तथा च भाष्यम्—'इत्थं चतुरात्मा वासुदेवः सङ्कर्षणः प्रद्युम्नोऽनिरुद्ध इति । कथमेकस्य चातुरात्म्यं, तत्राह चतुर्व्यूहः । यथोक्तप्रयोजनेभ्यो ध्येयाराध्यव्यक्तये च समस्तव्यस्तेन गुणषट्केन तद्व्यञ्जकव्यवस्थिता-

प्रसुप्तिसुषुप्त्याद्यवस्थानिर्वाहकत्वेन तद्द्वारक विश्वतैजसप्राज्ञतुरीयनाम-भाक्त्वं च पठित—'वासुदेवः सङ्कर्षणः प्रद्युम्नः पुरुषः स्वयम्। अनिरुद्ध इति ब्रह्मन् मूर्तिव्यूहोऽभिधीयते ॥ स विश्वस्तैजसः प्राज्ञस्तुरीय इति वृत्तिभिः । अर्थेन्द्रियाशयज्ञानैर्भगवान् परिभाव्यते ॥ अङ्गोपाङ्गायुधाकल्पैर्भगवान् तच्चतुष्टयम् । बिभर्ति स्म चतुर्मूर्तिर्भगवान् हरिरीश्वरः ॥' इति । जाग्रदाद्यवस्थाभ्रमवशाद्यस्मिंस्तैर्नाधिष्ठितत्तदवस्थानिवृत्त्यर्थमुपास्या व्यूहमूर्तयः । अस्यैव च चतुर्व्यूहस्य भगवतः समस्तव्यस्तरूपणयोपासनं निःश्रेयसफलकमाम्नायते माण्डूक्ये ।

मार्कण्डेयपुराणोक्तं सङ्कर्षणादेः सगुणत्वं वासुदेवस्य निर्गुणत्वं च अत्र ब्रह्माण्डरक्षाद्यधिकृतसत्त्वादिगुणाधिष्ठाननिबन्धनं कैवल्याभिमाननिबन्धनं च मन्तव्यम् । 'प्रधानक्षेत्रज्ञपतिर्गुणेशः' 'संसारबन्धस्थितिमोक्षहेतुः' इति गुणाधिष्ठानं संसारमुक्तिप्रवर्तकत्वं च भगवत एव हि श्रूयते । अतः सङ्कर्षणादीनां न क्षेत्रज्ञकोटावन्तर्भावः शङ्कनीयः । 'वासुदेवात्सङ्कर्षणो नाम जीवो जायते सङ्कर्षणात्प्रद्युम्नसंज्ञं मनो जायते प्रद्युम्नादनिरुद्धसंज्ञकोऽहङ्कारो जायते' इत्यत्र च जीवाद्यभिमानी सङ्कर्षणादिर्विवक्षितः । 'विज्ञानादिभावे वा तदप्रतिषेधः' इति ब्रह्मसूत्रभाष्ये च सङ्कर्षणादेः परब्रह्मत्वं स्थापितं श्रीभाष्यकारैः । चतुर्व्यूहः परमात्मा सृष्टिस्थितिलयमोक्षनिर्वाहक इति श्रीविष्णुपुराणेऽपि स्मर्यते—'व्यूह्यात्मानं चतुर्धा च वासुदेवादिमूर्तिभिः । सृष्ट्यादीन् प्रकरोत्येष विश्रुतात्मा जनार्दनः ॥' इति । वासुदेवमाहात्म्येऽपि अक्षरधामाधिपतेः श्रीकृष्णस्यैव सङ्कर्षणादिमूर्तौ

सृष्ट्यादिर्जगद्व्यापारः प्रतिपाद्यते—'कुर्वेऽनिरुद्धप्रद्युम्नसङ्कर्षण-समाह्वयैः । स्वरूपैर्नैककोट्यण्डसर्गस्थित्यप्ययानहम् ॥' इति ।

तथा चोच्यते सत्सङ्गिजीवने—'श्रीवासुदेवप्रमुखाश्चतस्र-स्तस्य मूर्तयः । चतुर्विंशतिसंख्याकाः केशवप्रमुखास्तथा ॥' 'वासुदेवादयो यस्माद् व्यूहाः प्रादुर्भवन्ति च । चत्वारः केशवाद्याश्च चतुर्विंशतिरीशितुः ॥' 'अनेकाण्डोद्भवाद्यर्थं निर्गुणः स यदा प्रभुः । मायागुणानुपादत्ते सगुणः प्रोच्यते तदा ॥ अनिरुद्धस्वरूपस्तु मायायास्तु रजोगुणम् । गृहीत्वा ब्रह्मसंज्ञः सन् ब्रह्माण्डं सृजति प्रभुः ॥ त्रैलोक्यमौदरीकृत्य लये नैमित्तिके ह्यसौ । एकार्णवजले शेते काले सृजति तत्पुनः ॥ स प्रद्युम्नस्वरूपेण वासुदेवोऽखिलं जगत् । सत्त्वं मायागुणं धृत्वा पाति विष्णुः प्रजापतिः ॥ असौ वैराजपुरुषः कथ्यते लोकपालकः । मुक्तिं चतुर्विधां दत्ते स्वभक्तेभ्यः सुरारिहा ॥ सङ्कर्षणस्वरूपेण वासुदेवस्तमोगुणम् । अङ्गीकृत्यैव मायायाः शिवाख्यः संहरत्यदः ॥ शेषरूपेण भूगोलं धत्ते सङ्कर्षणो ह्यसौ । मूर्तयो वासुदेवस्य षडेताः सगुणा मताः ॥ कार्यार्थं मूर्तयोऽप्यासां सन्त्यन्याश्च सहस्रशः । एताः सर्वे गुणत्यागे प्रोच्यन्ते निर्गुणा अपि ॥' इति ।

विष्णुनामसहस्रे च एकस्यैव परमात्मनः चतूरूपत्वं वासुदेवादिभेदतः 'चतुरात्मा चतुर्व्यूहः' इति नामभ्यामभिहितम् । तथा च भाष्यम्—'इत्थं चतुरात्मा वासुदेवः सङ्कर्षणः प्रद्युम्नोऽनिरुद्ध इति । कथमेकस्य चातुरात्म्यं, तत्राह चतुर्व्यूहः । यथोक्तप्रयोजनेभ्यो ध्येयाराध्यव्यक्तये च समस्तव्यस्तेन गुणषट्केन तद्व्यञ्जकव्यवस्थिता-

वयववर्णभूषणप्रहरणवाहनध्वजादिभिर्जाग्रदाद्यवस्थाचतुष्टयविशि-ष्टाभिर्मूर्तिभिश्चतुर्धा व्यूहत' इति । तत्तत्कार्यानुगुणगुणाभिव्यक्ति-व्यञ्जकविचित्रवर्णायुधाद्युपेतमूर्तिभेदत एकस्य चातुरात्म्यमिति 'चतुर्व्यूह' इत्यस्य तात्पर्यम्। एवमेकेऽपि व्यूहे जीवीयजाग्रदाद्यव-स्थानिर्वाहकावान्तररूपभेदश्चातुरात्म्यशब्दितो भगवच्छास्त्रसिद्धः।

"चातुरात्म्यमथापीत्थं कृपया परमेष्ठिन । उपासकानु-ग्रहार्थं य परश्चेति कीर्त्यते ॥ शान्तोदितात्मवृत्तं च चातुरा-त्म्यत्रयं तथा। उपासकानुग्रहार्थं सेनेश मम तत्पुन ॥ सुषुप्ति-स्वप्नसंज्ञं यज्जाग्रत्संज्ञं तथा परम्। चातुरात्म्यं महाभाग पञ्चमं पारमेश्वरम् ॥" इत्यादिकमत्र भाष्यम् । सङ्गृह्य च वर्णितमिदं श्रीपराशरभट्टाचार्यैः 'जाग्रत्स्वप्नात्यलसतुरीयप्रायध्यातृक्रमवदु-पास्य । स्वामिंस्तत्तत्सहपरिवर्हश्चातुर्व्यूहं वहसि चतुर्धा॥' इति।

संहिताभेदेषु दृश्यमाने व्यूहेऽभिन्ननाम्नो विभिन्नमूलकत्व वर्णभुजायुधकार्यादिवैषम्यं च कल्पभेदेन निर्वाह्यं, यथा रुद्रस्य ब्रह्मानुजत्वब्रह्मपुत्रत्वादिकं तद्वत् । तथा चोक्तं तत्त्वमुक्ताकलापे— मूर्तीनां मूलमूर्तिप्रभृतिषु बहुधा वैपरीत्यप्रतीतेर्वर्णादौ बीज-तादिव्यवहृतिवदियं वर्णना भावनार्था । नैवं कालादिभेदा-त्प्रशमितविहतौ कल्पितत्वं न कल्प्यं नोचेद्ब्रह्माद्युदन्तेष्व-पि विषमकथाभेदवैयाकुली स्यात् ॥' इति। तथा भगवच्छास्त्रे तत्र तत्र व्यूहभेदस्य प्रतिपाद्यमानं शिष्याचार्यभावादिकं पुरुषभेद-मन्तरा न घटेतेत्याशङ्क्य तत्रैव परिहृतं 'युक्ति' प्रश्नोत्तरादेर्न हि पुरुषभिदा बुद्धिभेदं च मुक्त्वा तस्माद्व्यूहादिभेदे कतिचन पुरुषा स्युः परेणानुषक्ता । तत्र स्वच्छन्दलीलः स्वयमभि-

नयति स्वान्यतां सर्ववेदी तद्वच्छिष्यादिवृत्तिप्रसृतिमिह सतां शिक्षयन् सानुकम्पः ॥' इति । सङ्कर्षणादेर्धामविशेषोऽपि वात्स्यवरद्गुरुभिरुपवर्णितः समासतः । यथा—'आमोदे भुवनेप्र मोद उत सम्मोदे च सङ्कर्षणं प्रद्युम्नं च तथाऽनिरुद्धमपि तान् सृष्टि स्थिती चाप्ययम् । कुर्वाणान् मतिमुख्यषड्गुणवरैर्युक्तांस्त्रियुग्मात्मकैः व्यूहाधिष्ठितवासुदेवमपि तं क्षीराब्धिनाथं भजे ॥' इति ।

अत्रायं सङ्ग्रहः—तत्र ज्ञानबलाभ्यां युक्तः सङ्कर्षणः कुर्यात् । संहारं बलतोऽयं ज्ञानाच्छास्त्रप्रवर्तनं चापि ॥ प्रद्युम्नश्चैश्वर्यात्सृष्टिं वीर्यात्प्रवर्तनं तनुते । धर्मस्य त्वनिरुद्धः शक्त्या सर्वस्य रक्षणं कुरुते ॥ प्रतिपक्षनिरासं वै करोति तेजोगुणेन भक्तानाम् । पुंसा परमेणैवं तत्तत्कार्याय तत्तदाकाराः ॥ स्वेच्छातो लीलायै धृताश्च कल्याणसिद्धये जगतः । ज्ञेया अगुणाः सर्वा ध्यातव्या मुक्तिकामनावद्भिः ॥

वासुदेवादयो व्यूहाश्चत्वारः परिकीर्तिताः । एकैकमूर्तितो मूर्तित्रितयं च तथा स्मृतम् ॥ तथा च पाद्मसंहितायां वचनम्—'ज्ञानादिगुणसामान्ये वासुदेवः प्रकीर्तितः । सङ्कर्षणो वासुदेवात्तस्मात्प्रद्युम्नसंज्ञितः ॥ प्रद्युम्नादनिरुद्धोऽभूत्सर्वे एते चतुर्भुजाः । मूर्तिभ्यश्च चतुर्भ्यश्च चतुर्विंशतिमूर्तयः ॥ जायन्ते क्रमशो ब्रह्मन् दीपाद्दीपान्तरं यथा । सर्वे चतुर्भुजाः पद्मशङ्खचक्रगदाधराः । वासुदेवादादिदेवात्प्रथमात्केशवस्तथा ॥ नारायणो माधवश्च जज्ञिरे भूसुरोत्तम ॥ सङ्कर्षणाच्च गोविन्दो विष्णुश्च मधुसूदनः । त्रयस्ते समजायन्त प्रद्युम्नाच्च त्रिविक्रमः ॥ वामनः श्रीधरश्चैते जज्ञिरे मुनि-

सत्तम। अनिरुद्धात् हृषीकेश पद्मनाभश्च सुव्रत॥ दामोदरश्च तेनेत्थ द्वादशाद्या प्रजज्ञिरे॥' इति। 'वासुदेवाच्च तन्नाम्ना तथा सङ्कर्षणादपि। प्रद्युम्नादपि तन्नाम्ना तन्नाम्नैवानिरुद्धकात्॥ अभूवन् क्रमश तेभ्यश्चतुर्भ्य पुरुषोत्तम। अधोक्षजो नृसिंहश्च चतुर्थश्चाच्युतो मत॥ चतुर्भ्य एव तेभ्योऽमी जज्ञिरे च यथाक्रमम्। जनार्दनस्तथोपेन्द्रो हरि कृष्ण समाह्वया॥' इति च। तत्र केशवादयो मार्गशीर्षादिशुक्लपक्षैकादश्यधिदेवता वासुदेवादयश्च कृष्णपक्षैकादश्यधिदेवता। मलमासे तूभयोरप्येकादश्योः साक्षात्पुरुषोत्तम एवाधिदेवता भवति। तथा च सरसङ्गिनीवने वर्णित—'मूर्तीना केशवादीनां वासुदेवस्य वो जनाः। कथयामि यथाशास्त्र लक्षणानि पृथक् पृथक्॥ चतुर्विंशतिरूपिण्या एकादश्या' प्रियाय स। चतुर्विंशतिमेकोऽपि विष्णुर्मूर्तीर्दधाति वै॥ शङ्खचक्रगदाब्जाना स्थानभेदेन धारणात्। नामान्युक्तानि तासा वै चतुर्विंशतिरेव हि॥' इत्यादिना। अत्र 'चतुर्विंशतिमेकोऽपि विष्णुर्मूर्तीर्दधाति वै' इत्युक्त्या तावतीषु मूर्तिषु चेतनैक्य तावत्सुनिश्चेयम्। एवमन्यत्रापि बोध्यम्। वासुदेवादीना केशवादीना चोर्ध्वपुण्ड्रस्थानेषु स्थित्यादि चाभिधीयते 'एतदन्तर्गता सर्वे मूर्त्यन्तरसमाह्वया। केशवाद्या द्वादश च ललाटादिषु निष्ठिता। शरीररक्षका सर्वे ध्यायिना तापशान्तये॥' 'तत्र तत्र स्मरन् मन्त्री केशवादीन् न्यसेत्क्रमात्।' 'ललाटे हृदि बाह्वोश्च वासुदेवादिसञ्ज्ञया। धारयित्वोर्ध्वपुण्ड्राणि तन्मध्ये कौङ्कुम विधुम्॥' 'वासुदेव स्मरेन्भाले हृदि सङ्कर्षण तथा। प्रद्युम्नमनिरुद्ध च दक्षे वामे च दोषणि॥' इति दिक्।

## विभवः ।

पूर्णषाड्गुण्याभिव्यक्तेः परत्वम् । मूर्तिभेदेनाभिव्यक्तविभक्तगुणद्विकत्रयतयाऽवस्थानं व्यूहः । विभूतिभूतेषु देवादिषु तत्तत्सजातीयनामरूपादिमत्तया प्रादुर्भावो विभवोऽवतार इति चोच्यते । अवतारशब्दश्चाऽवतीर्यत इति भावे व्युत्पन्नः प्रादुर्भाववाची । अवतरत्यनेनेति करणे व्युत्पन्नश्च येन रूपेण प्रकटीभवति तद्रूपवाची बोध्यः ।

## प्रादुर्भाववर्णनम् ।

"अजायमानो बहुधा विजायते" इति श्रुतिस्तावत् प्राकृतजनजनिविलक्षणां भगवतो जनिं प्रादुर्भावलक्षणां प्रतिपादयति । लौकिकी हि सा कर्मफलभोगार्था कर्मकृता प्राकृतशरीरग्रहणात्मिका । इयं तु परार्थैकवेषा केवलमिच्छाकृताऽप्राकृतस्य स्वासाधारणस्य विग्रहस्यैवेतरसजातीयसंस्थानतापादनलक्षणा । उक्तं च प्राकृतजनिविलक्षणत्वमुक्तरीत्या स्वप्रादुर्भावस्य गीतायां भगवता स्वयमेव—'अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन् । प्रकृतिं स्वामधिष्ठाय संभवाम्यात्ममायया ॥ यदा यदा हि धर्मस्य ग्लानिर्भवति भारत । अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥ परित्राणाय साधूनां विनाशाय च दुष्कृताम् । धर्मसंस्थापनार्थाय संभवामि युगे युगे ॥ जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः । त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन ॥' इति । आत्मनो माया—सङ्कल्पात्मकं ज्ञानं, कृपा वा । 'माया वयुनं ज्ञानम्' 'माया दम्भे कृपायां च' इति कोशात् । प्रकृतिं स्वां—स्वासाधारणीं दिव्यप्रकृतिमेवाधिष्ठाय-मनुष्यादिसजा-

तीयतामापाद्य, सम्भवामि-प्रादुर्भवामीत्यर्थः । अत्र पूर्वार्धेन निखिलचेतनव्यावृत्तिरभिमता । यथा—अज इति बद्धस्य देवादिरूपेण जनिमतो व्यावृत्तिः, अव्ययात्मेति मुक्तस्य भूतपूर्वसङ्कोचलक्षणव्ययार्हस्वभाववतः, भूतानामीश्वर इति च लब्धसत्ताकानां सर्वेषां नियन्तृत्वस्वामित्ववाचिना नित्यानामिति । एवं क्षराक्षरपुरुषविलक्षणोऽप्यहं परमैश्वर्यादिस्वस्वभावमजहदेव कृपया केवलं स्वेच्छयैव स्वमेव रूपं मनुष्यादिसजातीयं कृत्वा प्रादुर्भवामि युगेयुगे साधुपरित्राणादिप्रयोजनसिद्धये । मदीयं तात्त्विकमेव दिव्यं जन्म कर्म चेतरजन्मकर्मभ्यामत्यन्तविसजातीयमनुसन्धीयमानमनुसन्धातृणां भवारण्यजनिभ्रमणादिजनितसमस्तक्लेशहरमिति परमार्थः प्रकटीकृतो भगवताऽत्र प्रकरणे । एवं भगवतैव स्वीयजन्मादेर्दिव्यत्वपारमार्थिकत्वयोरभिधानेन पुरुषोत्तमो नैवावतरति, अवतरन्नपि वा मायिकेनैव रूपेणेत्याद्यवतारविद्वेषिवादस्य नावसरः । अत एवोक्तं श्रीहरिणा शिक्षापत्र्यां

प्सयेशः काले दधत् स भगवान् मम केन तुष्येत्' 'मूर्तिं नः पुरुकृपया बभार सत्त्वम्' 'कृपयाऽवतीर्य' 'सुरेष्वृषिष्वीश तथैव नृष्वपि तिर्यक्षु यादःस्वपि तेऽजनस्य । जन्मासतां दुर्मदनिग्रहाय प्रभो विधातः सदनुग्रहाय च' ॥ इत्यादिना ।

अवताराणां शापादि व्याजमात्रं इच्छैव हेतुरिति च व्यक्तं—'सर्वावर्तेषु वै विष्णोर्जननं स्वेच्छयैव तु । ऐरकास्त्रच्छलेनैव स्वेच्छया गमनं हरेः ॥' 'द्विजशापच्छलेनैवमवतीर्णोऽपि लीलया ॥' (लैङ्गे) इति ।

'स श्रीकृष्णः परंब्रह्म भगवान् पुरुषोत्तमः । उपास्य इष्टदेवो नः सर्वाविर्भावकारणम्' इति च शिक्षापत्र्यां पररूपस्यैव सर्वाविर्भावमूलत्वमुक्तम् । तथा च टीका शतानन्दमुनिकृता—'सर्वेषामाविर्भावानां वासुदेवादिकेशवादिव्यूहानां वराहाद्यवताराणां च कारणं, यस्मात्सर्वे प्रादुर्भावा भवन्तीत्यर्थः । एवंभूतः स ईशः परमेश्वरः श्रीकृष्ण एव ज्ञेयो न त्वन्यः' इति । तत्रैव (२९) श्लोकटीकायां—'श्रूयते हि परस्य ब्रह्मणः स्वेनैव रूपेण स्वेच्छयाऽवतरणम्' इति प्रादुर्भावरूपाणामप्राकृतमूलरूपांशत्वं च व्यञ्जितम् । शाण्डिल्यभक्तिसूत्रभाष्ये नित्यानन्दमुनिना च 'तद्वाक्यशेषात्प्रादुर्भावेष्वपि सा' 'तच्च दिव्यं स्वशक्तिमात्रोद्भवात्' इति सूत्रयोः रूपरूपिभेदोऽवतारावतारिणोरनन्यत्वं च स्पष्टमेव भाषितम्—'एतदुक्तं भवति—दृश्यते ह्यवतारेषु अवतारिण ऐश्वर्यं अवतारिकार्यकरत्वं च । न चावताराणामवतारिस्वरूपतो भेदः, यावत्प्रयोजनमैश्वर्यस्य प्रकाशनात्' इति । 'अस्य परस्य ब्रह्मणो निखिलहेय-

प्रत्यनीककल्याणैकतानस्वरूपस्यानवधिकातिशयासङ्ख्येयकल्याणगुणस्य स्वाभिमतानुरूपैकरूपाचिन्त्यदिव्याद्भुतनित्यनिरवद्यनिरतिशयौज्ज्वल्यसौन्दर्यसौगन्ध्यसौकुमार्यलावण्ययौवनाद्यनन्तगुणनिधि दिव्य रूपमपि स्वाभाविकम् । अपारकरुणानिधिरयमुपासकजनानुग्रहाय तदेव रूप तत्तदनुरूपसंस्थानयोगेन प्रकाशयति तत्तल्लोकेषु' इति । 'श्रुतिश्च निखिलजगदेककारणतयाऽवगतस्य परस्य ब्रह्मण 'सत्य ज्ञानमनन्त ब्रह्म' 'विज्ञानमानन्द ब्रह्म' इत्यादिभि स्वरूपम्, 'अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपास॰ सत्यकाम सत्यसङ्कल्प' 'परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' इत्यादिभिः कल्याणगुणयोगम्, 'वेदाहमेत पुरुष महान्तमादित्यवर्णं तमस परस्तात्' 'विद्युत पुरुषादधि' 'तस्य यथा कप्यास पुण्डरीकमेवमक्षिणी' इत्यादिभिर्दिव्याकारयोग च वदति । अजायमानो बहुधा विजायते' इति च प्रादुर्भावम् । तस्मादवतारेषु भक्तिर्नि श्रेयसायेवेत्यनवद्य'मिति च ।

सत्सङ्गिजीवनेऽपि परमपुरुषस्यैव तत्तद्रूपेण प्रकटीभावोऽवताररूपाणां मुमुक्षूपास्यत्व च बहुशो वर्णितमस्ति—'वराहाद्यवताराणा धर्ता कृष्ण पर बृहत्' 'उक्तस्ते सम्प्रदायोऽथ श्रीकृष्णोऽस्तीष्टदेवता । परमात्मा पर ब्रह्म सर्वकारण कारणम् ॥ श्रीवासुदेवप्रमुखाश्चतस्रस्तस्य मूर्तयः । चतुर्विंशतिसङ्ख्याका केशवप्रमुखास्तथा ॥ पद्मनाभवराहाद्या भगवन्मूर्तयोऽपि च । श्रीकृष्णस्यावतारत्वात् मान्या सन्त्येव नोऽखिला ॥' 'नि श्रेयसाय जीवाना श्रीविष्णुर्भगवान्

स्वयम् । आविर्भवति भूलोके स्वतन्त्रः करुणानिधिः ॥ नरनारायणो दत्त ऋषभः कपिलादयः । रामकृष्णादयश्चा-स्यावताराः सन्ति भूरिशः ॥ ते निहत्यासुरान् दुष्टान् धर्म-साधुसुरद्रुहः । धर्मं प्रवर्तयन्त्यत्र सेव्यास्ते मोक्षकाङ्क्षिभिः ॥ प्रवृत्तिमार्गमाश्रित्य भगवान् यर्हि वर्तते । रामकृष्णादिरूपेण तदा तान् हन्ति हेतिभिः ॥ क्वचित्क्वचिच्च तन्निष्ठान् कामा-दीनान्तरासुरान् । ज्ञानोपदेशखड्गेन स हन्ति न तु तत्तनूः ॥ निवृत्तिमार्गमाश्रित्य भगवान् यर्हि वर्तते । नारायणादि-रूपेण तदा हन्त्यान्तरान् रिपून् ॥ स्वाभाविकान् हन्ति दोषान् कामादीनसुरस्थितान् । सांसर्गिकांश्च देवस्थान् नतु तेषां तनूः क्वचित् ॥ स एव भगवान् पुम्भिर्धृतमानुष-विग्रहः । उपासनीयः श्रेयोर्थमज्ञानतिमिरापहः ॥' 'यदे-तत्परमं धाम श्रीकृष्णस्योदितं जनाः । अतर्क्यं तदगम्यं च सदानन्दरसात्मकम् ॥ तदीया येऽवताराः स्युस्तेषामेव ह्युपा-सया । भक्तैः स्वधर्मनिरतैस्तत्प्रसादात्तदाप्यते ॥' इति ।

अवतारा अवताररूपाणीत्यर्थः । तत्रैव तृतीयप्रकरणे श्रीहरिस्तुतौ च परब्रह्मभूतस्य श्रीहरेः सर्वावताररूपधारकत्वमवताररूपा-णामप्राकृतत्वं परमेश्वरलक्षणलक्षितत्वमजहत्स्वस्वभावत्वं चाभ्य-धायिषत—'स्वामिंस्त्वं परमेश्वरश्च परमं ब्रह्मासि वेदोदितं धृत्वादौ पुरुषाकृतिं विधिमरीच्यादिक्रमेणाखिलम् । विश्वं स्थावरजङ्गमात्मकमिदं शक्त्या सृजस्यात्मनः पातुं तत्ति-मिकूर्मशूकरमुखा धत्ते स्वतन्त्रस्तनूः ॥ देवान् साधु-जनांश्च धर्ममभितो रक्षंश्च धर्मद्रुहो दैत्यान् हंसि धृताकृतिः

प्रतियुगं धर्मप्रियस्त्वं विभो । सर्वास्तास्तनवस्तवाखिलनिजैश्वर्येण युक्तास्तथा चक्राद्यायुधदर्शितातिमहसः सन्ति प्रतापश्रुता ॥' इति । सर्वेष्वपि प्रादुर्भावेषु सर्वैश्वर्यं परिपूर्णमेव । ऐच्छिकमेव तस्य प्रकटीकरणं यथायथं तिरोधापनं चेत्ययमर्थः पुराणेषु व्यक्तः—'रामकृष्णादिरूपाणि परिपूर्णानि सर्वदा । न चाणुमात्रं भिन्नानि तथाप्यस्मान् विमोहसि ॥" (नारदीये) "परिपूर्णानि रूपाणि समान्यखिलरूपत । तथाप्यपेक्ष्य मन्दानां दृष्टिं त्वामूपयोऽपि हि । परावरं वदन्त्येव ह्यभक्तानां विमोहनम् ॥' (गारुडे) इति । अवताररूपाणामपि गुणपूर्णत्वं तस्य च भक्तजनैकगम्यत्वं भगवता गीतायामुक्तं स्वयमेव—'नाहं प्रकाशः सर्वस्य योगमायासमावृतः । मूढोऽयं नाभिजानाति लोको मामजमव्ययम् ॥' 'अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम् । परं भावमजानन्तो मम भूतमहेश्वरम् ॥' 'महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः । भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम् ॥' इति । तथा चानुसन्धीयते यामुनाचार्यैः 'त्वां शील रूपचरितैः परमप्रकृष्टसत्त्वेन सात्त्विकतया प्रबलैश्च शास्त्रैः । प्रख्यातदैवपरमार्थविदां मतैश्च नैवासुरप्रकृतयः प्रभवन्ति बोद्धुम् ॥ उल्लङ्घितत्रिविधसीमसमातिशायिसम्भावनं तव परिव्रढिमस्वभावम् । मायाबलेन भवतापि निगुह्यमानं पश्यन्ति केचिदनिशं त्वदनन्यभावाः ॥' इति ।

सुधासिन्धौ चाक्षरधामाधिपते पुरुषोत्तमस्यैवाजहत्स्वैश्वर्यास्य-कृतनानावताररूपधारणेन सर्वजीवोद्धारकत्वमवताररूपाणां गुणपू-

क्षूपास्यत्वं चास्ति वर्णितं भूरिशः—'निजेऽक्षरे परे धाम्नि कोटि-सूर्यादिभास्वरे । सदा दिव्याकृतिः कृष्णो भगवान् पुरुषोत्तमः ॥ मुक्तैर्विराजते दिव्यब्रह्मरूपैर्निषेवितः । स एव कृपया भूमौ जायतेऽत्र नराकृतिः ॥ ब्रह्मरूपो हि तद्देहो दृश्यते भौतिको यथा । न त्वसौ भौतिकः किन्तु दिव्य इत्यवधार्यताम् ॥' 'प्रोवाच तं हरिः साधोऽनन्तैश्वर्यनिधिर्हरिः । मत्स्यकूर्मादिरूपश्च जायते क्वापि कार्यतः ॥ यावदर्थं तत्र तत्र स्वैश्वर्यं दर्शयत्यपि । स्वयं तु द्विभुजो नित्यं वर्तते न्राकृतिः प्रभुः ॥ साक्षाद्भगवतः प्राप्त्या श्रेय आत्यन्तिकं भवेत् । इति तु श्रेयसो रीतिः सर्वत्रैकविधास्ति हि ॥' 'स एव हि वराहादि रूपं रामादि चेच्छया । तत्तत्कार्याय धत्ते स्वं सकलैश्वर्यमत्यजन् ॥ यथोपयोगं स्वैश्वर्यं तत्र तत्र निजेच्छया । आविष्कृत्य पुनः स्वस्मिन् तत्तिरोधापयत्यसौ ॥' 'भेदस्तु सर्वथा नास्ति मूलैतद्रूपयोर्हरेः । सकलैश्वर्ययुक्तत्वे' 'अतितेजोमये स्वीये धाम्नि ब्रह्मणि सर्वदा । कृष्णोऽक्षरात्मभिर्मुक्तैरास्ते सेवितपत्कजः ॥ तत्रस्थ एव कृष्णस्तु प्रतिब्रह्माण्डमात्मनः । योगैश्वर्येण रूपैः स्वैरास्ते कार्यस्य सिद्धये ॥ यथैव रासलीलायामेकोऽपि स निजेच्छया । भिन्नभिन्नस्वरूपेण प्रतिगोपि बभूव ह ॥ यथोपयोगमत्रापि स तथैवाखिलेश्वरः । स्वभक्तसुखदानार्थमास्ते रूपैरनेकधा ॥' 'तथा स्वाभाविकानन्तैश्वर्यसम्पन्न ईश्वरः । स्थित एवाक्षरे धाम्नि व्याप्नोत्यण्डानि कोटिशः ॥ यदा यदा यत्र यत्र दातुमिच्छेत्स्वदर्शनम् । तदा तदा तत्र तत्र स्वेच्छयाविर्भवत्यसौ ॥ एकोऽप्यनेकरूपोऽसौ स्वसामर्थ्येन जायते ।'

'तमुवाच हरिर्योऽत्र भगवान् वर्तते भुवि । सर्वावतारधर्ताऽसौ सर्वजीवोद्धृतिक्षमः ॥' 'साक्षात्कृष्णोऽत्र मर्त्यानां श्रेयसे जायते नृषु । राजरूपः क्वचित्स स्यात्साधुरूपश्च कर्हिचित् ॥ उभयोऽपि स्वसम्बन्धान्नृणां श्रेयः करोति हि । सकलैश्वर्यपूर्णः स्यान्नराकारोऽपि स ध्रुवम् ॥ अतो न प्राकृतनरैस्तुल्यता तस्य सम्भवेत् ॥' 'भूतानां श्रेयसे भूमाववतीर्णस्य तस्य च । द्विविधानि स्वरूपाणि नराकारस्य सन्ति वै ॥ कानिचिद्राजरूपाणि साधुरूपाणि कानिचित् । तत्राद्यानां भागवते प्रोक्तानि स्कन्ध आदिमे । लक्ष्माणि सत्यमुख्यानि संवादे भूमिधर्मयोः ॥ स्कन्ध एकादशेऽन्येषां कृपालुप्रमुखानि च । लक्ष्माण्युक्तानि तान्यादौ ज्ञेयानि श्रेय इच्छता ॥ उभयेषां च साधर्म्यं न देहक्रियया त्विह । भवत्यथ प्रपन्नानामस्ति श्रेयोविधौ त्विदम् ॥ एवं हि लक्षणैः कृष्णं ज्ञात्वाश्रित्य च तं दृढम् । स्थित्वैव तस्य चाज्ञायां कार्या तद्भक्तिरुत्तमा ॥ अनेनैव ह्युपायेन मुमुक्षोः पुरुषस्य तु । आत्यन्तिकं भवेच्छ्रेयो नान्यथेत्यस्ति निश्चयः ॥' इति । एतैश्च वचनैर्नानावताररूपेष्वपि चेतनैक्यं शक्यमवगन्तुम् । तथा—'अवतारा भगवतो जायन्ते भुवि ये हरेः । नरोत्तमस्य कृष्णस्याक्षरधाम्नो जगत्पते ॥ धर्मसंस्थापनार्थास्ते सन्त्यधर्मोच्छिदस्तथा । स्वधर्मज्ञानवैराग्यभक्तिमद्रक्षणाय च ॥ यथा सीता रघुपतौ साध्वी निष्ठां दृढां व्यधात् । तथैव तेषु सा कार्या वर्तमाने विशेषतः ॥ कृष्णस्यैवेह कर्तव्या सदा भक्तिर्मुमुक्षुणा । न ह्यन्यदेवतायास्तु साध्वीधर्मच्युतिर्यतः ॥ कृष्णस्य वा तदर्चाया

ध्यानं कार्यं च चेतसि । न त्वन्यदेवताया वा सिद्धमुक्तस्य कर्हिचित् ॥' इति कृष्णतदवतारतदर्चानिष्ठानामेकविषयत्वेनानैकान्त्यविरहप्रतिपादनाच्च सर्वत्रावताररूपेषु परमात्मन एवाभिमानित्वं शक्यमवगन्तुम् । एतेन रामकृष्णाद्यवतारेषु चेतनभेदवादस्य नावसरः । वासुदेवमाहात्म्ये च स्थानभेदनिबन्धने मूर्तिभेदे प्रादुर्भावमूर्तिभेदे वा परमात्मस्वरूपभूताहमर्थस्यैव साक्षात्सर्वत्रानुवृत्तिः प्रतिपादिताऽत्रानुसन्धेया ।

'वेषान्तरं प्राप्तमिवात्मतन्त्रं नरोत्तमं सन्ददृशुः सहर्षम् ।' 'नराकृतिस्तथा कृष्णो ज्ञातव्यो दिव्यविग्रहः । दिव्यविग्रह एवासौ नरनाट्यधरश्च वै ॥' 'गोलोकाधिपतिर्यो हि स एवास्त्यत्र नेतरः । स्वतन्त्रः स्वेच्छयैवासौ नराकारेण दृश्यते ॥ वेषान्तरं धृतवतो नटस्येवास्य सर्वथा । स्वरूपभेदो नास्त्येव ज्ञेयमित्थं मनीषिभिः ॥' 'यमाहुरक्षरं ब्रह्मानन्तं कृष्णस्य धाम च । अस्ति तत्र स्वयं साक्षाद्भगवान् पुरुषोत्तमः । अवतारा भवन्त्यत्र तस्मादेवाखिला अपि ॥ अक्षरे धाम्नि या मूर्तिर्वर्तते परमात्मनः । तस्याः साक्षात्तु कृष्णस्य मूर्तेश्चास्ति सदृक्षता ॥' 'नटो वेषान्तरमिव लोकान् दर्शयते प्रभुः ।......यादृशं तु भवेत्कार्यं स धृत्वा तादृशं वपुः । तद्विधाय पुनः स्वेन रूपेणास्ते विहाय तत् ॥' इत्यादिना चाप्राकृतमूलरूपत एवावताररूपाणां प्रादुर्भावोऽत एव तत्सदृक्षता, नटस्येव वराहत्वादिसंस्थानलक्षणभूमिकापरिग्रहस्तत्तत्कार्यानुगुणः, निष्पन्ने चावतारप्रयोजने तत्तत्संस्थानलक्षणभूमिकाप्रहाणेन नित्यसिद्धाक्षरव्योमनिलयनाकारेणावस्थितिश्च प्रत्यपादिषत । अत्रेमे सङ्ग्रहश्लोका अनुसन्धेयाः—

न स्वरूपं विभिद्येत रूपं वा भूमिकामहे । नटस्य किन्तु तद्रूपं स्वरूपं च तदेव हि ॥ अपूर्वाकारमात्रं च कल्पितं प्रतिभासते । तथा प्रादुर्भावरूपेष्वपि बोध्यं स्वरूपतः ॥ रूपतश्चाद्वैतमेवाऽऽकारयोगः परं नव । गृहीतः कार्ययोग्यस्तन्निवृत्तौ त्यज्यते स्वयम् ॥ एतदाशयवानेव श्लोको भागवते स्फुटः । 'भूभारः क्षपितो येन तां तनुं विजहावजः ॥ कण्टकं कण्टकेनेव द्वयं चापीशितुः समम् । यथा मत्स्यादिरूपाणि धत्ते जह्याद्यथा नटः ॥' कण्टकीभूतासुरादिनिरासार्थं परिग्रहात् । कार्यान्ते त्यागतः साम्यात्कण्टकत्वोक्तिरञ्जसा ॥ अवतारस्वरूपेषु नतु हेयस्वभावतः । कण्टकत्वं विनिर्दिष्टं किञ्च मूलस्वरूपतः ॥ अप्राकृतत्वसर्वैश्वर्यजुष्टत्वैच्छिकत्वतः । साम्यं प्रादुर्भावरूपेष्वस्त्युपास्यत्वतोऽपि च ॥ इति ।

मुख्यावतारयाथात्म्यं मूलग्रन्थानुसारतः । यथाशास्त्रं विनिर्दिष्टमथ गौणो निरूप्यते ॥ सर्यते च भगवच्छास्त्रेषु प्रादुर्भावस्य द्वैविध्यं गौणमुख्यभेदेन । तत्र गौणो नामाविश्य जीवविशेषे कस्यचिदैश्वर्यादेः प्रकटीकरणम् । मुख्यस्तु जीवमद्वारीकृत्य प्राकृतरूपस्यैव मनुष्यादिसजातीयसंस्थानतापादनेन प्रकटीकरणमिति भिदा । क्वचिच्चेतनमाविश्यालौकिकक्रियानिर्वहणं क्वचित्कदाचित्स्वेनैव रूपेण प्रकटीभूयेत्यत्र चेच्छैव भगवतो नियामिका । तदुक्तम्—'मदिच्छया हि गौणत्वं मनुष्यत्वमिवेच्छया' इति । तत्र मुख्यानां प्रादुर्भावानां मुमुक्षूपास्यत्वं नामुख्यानामिति च तत्रैव स्पष्टम्—'प्रादुर्भावास्तु मुख्या ये मदंशत्वाद्विशेषतः । अजहत्स्वभावविभवा दिव्याप्राकृतविग्रहाः । दीपाद्दीपा इवोत्पन्ना

जगतो रक्षणाय ते। मुख्या उपास्याः सेनेश अनर्च्या-नितरान् विदुः॥' इति। गौणमुख्यविशेषा अप्युद्देशतः परिगणिताः सन्ति तत्रैव 'ब्रह्मरुद्रार्जुनव्याससहस्रकरभार्गवाः। ककुस्था-त्रेयकपिलबुद्धाद्या ये सहस्रशः। शक्त्यावेशावतारास्तु विष्णो-स्तत्कालविग्रहाः। अनुपास्या मुमुक्षूणां यथाग्नीन्द्रादि-देवताः॥' 'अनर्च्यानपि वक्ष्यामि प्रादुर्भावान् यथाक्रमम्। चतुर्मुखस्तु भगवान् सृष्टिकार्ये नियोजितः॥ शङ्कराख्यो महारुद्रः संहारे विनियोजितः। मोहनाख्यस्तथा बुद्धो व्यासश्चैव महान् ऋषिः। वसूनां पावकश्चापि वित्तेशश्च तथैव च। एवमाद्यास्तु सेनेश प्रादुर्भावैरधिष्ठिताः॥ जीवात्मानः सर्व एते नापास्तिर्वैष्णवी हि सा। आविष्टमात्रास्ते सर्वे कार्यार्थममितद्युते॥' इति। 'पद्मनाभादिकाः सर्वे वैभवीयास्तथैव च। षट्त्रिंशत्सङ्ख्यासङ्ख्याताः प्राधान्येन गणेश्वर॥ षट्त्रिंशद्भेदभिन्नास्ते पद्मनाभादिकाः सुराः। अनिरुद्धात्समुत्पन्ना दीपाद्दीपा इवेश्वराः॥' इति च। षट्त्रिं-शति च मत्स्यादीनां समावेशो भवति। कपिलदत्तात्रेयपरशुराम-सङ्कलनेनैकोनचत्वारिंशत्सङ्ख्याऽपि वैभवीया वर्णिताऽस्ति संहिता-न्तरे। एतेषां गौणत्वे मुख्येषु परिगणनं छत्रिन्यायाद्बोध्यम्। कल्प-भेदेन मुख्यत्वमप्येषां नासम्भवीति च बोध्यम्।

क्वचिच्च पुराणादाववतारस्यानेकधा विभागोऽस्ति कृतः। यथा— 'अंशांशोऽशस्तथावेशः कला पूर्णः प्रकथ्यते। व्यासाद्यैश्च स्मृतः षष्ठः परिपूर्णतमः स्वयम्॥' इति। (गर्गसंहिता) विवव्रेच तत्रैव 'अंशांशस्तु मरीच्यादिरंशा ब्रह्मादयस्तथा।

कलाः कपिलकूर्माद्या आवेशा भार्गवादयः ॥ पूर्णो नृसिंहो रामश्च श्वेतद्वीपाधिपो हरिः । वैकुण्ठोऽपि तथा यज्ञो नरनारायणः स्मृतः ॥ परिपूर्णतमः साक्षाच्छ्रीकृष्णो भगवान् स्वयम् । असंख्यब्रह्माण्डपतिर्गोलोके धाम्नि राजते ॥ कार्याधिकारं कुर्वन्तः सदंशास्ते प्रकीर्तिताः । तत्कार्यभारं कुर्वन्तस्तेऽशांशा विदिताः प्रभो ॥ येषामन्तर्गतो विष्णुः कार्यं कृत्वा विनिर्गतः । नानावेशावताराश्च विद्धि राजन् महामते ॥ धर्मं विज्ञाय कृत्वा यः पुनरन्तरधीयत । युगे युगे वर्तमानः सोऽवतारः कला हरेः ॥ चतुर्व्यूहो भवेद्यत्र दृश्यन्ते च रसा नव । अतः परं च वीर्याणि स तु पूर्णः प्रकथ्यते ॥ यस्मिन् सर्वाणि तेजांसि विलीयन्ते स्वतेजसि । तं वदन्ति परे साक्षात्परिपूर्णतमं स्वयम् ॥ पूर्णस्य लक्षणं यत्र संपश्यन्ति पृथक्पृथक् । भावेनापि जनाः सोऽयं परिपूर्णतमः स्वयम् ॥ परिपूर्णतमः साक्षाच्छ्रीकृष्णो नान्य एव हि । एककार्यार्थमागत्य कोटिकार्यं चकार ह ॥' इति । भागवते च 'एते' चांशकलाः विष्णोः कृष्णस्तु भगवान् स्वयं' मिति श्रीकृष्णस्य परिपूर्णत्वं अन्येषामंशत्वं कलात्वं च यथासम्भवं विनिर्दिष्टम् ।

अत्रेदं बोध्यम् । सप्तमभगस्य चतुर्थो भागोंऽशः, षोडशो भागश्च कला । यत्र यत्र परमैश्वर्यस्य षोडशो भागः प्रकटीकृतः स स कलावतारः । यत्र यत्र चतुर्थः स स अंशावतारः । यत्र तु समग्रमैश्वर्यं स परिपूर्णः षोडशकल इति । एषु च गौणमुख्यावताराणां भवति समावेशः । इति ।

इदन्तु तत्त्वम् । यथेच्छं यथाकार्यमैश्वर्याविष्करणतारतम्येऽपि

मुख्यप्रादुर्भावेषु वस्तुतः सर्वैश्वर्यवत्त्वादप्राकृतरूपवत्त्वाच्च मुमुक्षूणामुपास्यता मुक्तिफलप्रदता चाक्षुण्णैव । एतदभिप्रेत्यैव श्रीहरिणाऽनुशिष्यते 'कृष्णस्तदवताराश्च ध्येयास्तत्प्रतिमाऽपि च । नतु जीवा नृदेवाद्या भक्ता ब्रह्मविदोऽपिच ॥' इति । अत्र भाष्यं 'कृष्णः सर्वस्मात्परोऽक्षरनिलयः पुरुषोत्तमः परंब्रह्म । तदवताराश्च रामकृष्णादयः' इति । अतः सिद्धं परमपुरुषानन्या मुख्यप्रादुर्भावा मुमुक्षूपास्या इति मतं श्रीहरेः ।

## कृष्णावतारश्रैष्ठ्यम् ।

अत्र च श्रीकृष्णरूपं सर्वैश्वर्यप्रकाशनात् । विशिष्टमिष्टदेवत्वेनोक्तं श्रीहरिणा स्वयम् ॥ तथा च वचनानि—'स श्रीकृष्णः परंब्रह्म भगवान् पुरुषोत्तमः । उपास्य इष्टदेवो नः सर्वाविर्भावकारणम् ॥' 'उक्तस्ते सम्प्रदायोऽथ श्रीकृष्णोऽस्तीष्टदेवता । परमात्मा परंब्रह्म सर्वकारणकारणम् ॥' 'अस्माकमिष्टदेवोऽस्ति श्रीकृष्णः पुरुषोत्तमः । व्रतं तस्यैतदस्तीति सर्वैः कार्यं प्रयत्नतः ॥' 'इष्टदेवस्तु भगवान् श्रीकृष्णो राधिकापतिः ।' 'मया व्यासकृता ग्रन्थाः सन्ति सर्वेऽपि संश्रुताः । तदर्थो निश्चितश्चास्ति पौर्वापर्यविचारतः ॥ तत्रावताराः कृष्णस्य मत्स्यकूर्मादयोऽखिलाः । आविर्भूता यथाकार्यं कृष्णस्तु भगवान् स्वयम् ॥ अतोऽवतारी कृष्णोऽन्येऽवतारा इति निश्चयः । स हीष्टदेवोऽस्त्यस्माकमुद्धवाध्वनि तिष्ठताम् ॥' 'अवतारा भगवतो भवन्त्येव सहस्रशः । तत्र कृष्णसमो नान्योऽवतारः सर्वशक्तिधृत् । अन्येषां स्वस्वरूपाणां भावा ये तेऽखिला अपि । अत्र सन्दर्शितास्तेन कृष्णः स्वयमितीः-

र्येते ॥ स्वजन्मकाले मथुरापुर्यां लक्ष्मीशतात्मन । चतुर्भुजेन रूपेण पितृभ्या तेन दर्शिता ॥ गोकुले च यशोदायै विश्वरूपत्वमात्मन । प्रदर्शित चार्जुनाय वैराजत्व महामृधे ॥ अर्जुनायैव दत्त च भूमरूपस्य दर्शनम् । पुरुषोत्तमता चोक्ता स्वमुखेनैव ते प्रति ॥ राधादिसहितत्वेन गोलोकेश्वरता तथा ॥ यमुना प्रति गोप्युक्त्या दर्शिताऽऽद्यर्पितात्मन ॥ अक्रूरेण च कालिन्द्या दर्शिता शेषशायिता । नैकाण्डदर्शनेनैव ब्रह्मणेऽक्षरता तथा ॥ एव स्वस्य स्वरूपाणि भिन्नस्थानगतान्यपि । तदैश्वर्याणि च स्वस्मिन् शक्तयश्च प्रदर्शिता ॥ अतः सर्वावतारेभ्य कृष्ण एव महानिति । दृढ निश्चित्य तद्भक्ति कार्या सर्वैर्मदाश्रितै ॥' इति । सर्वैश्वर्यविभूतियोगप्रकाशनादभिव्यक्तपूर्णषाड्गुण्याच्च 'कृष्णस्तु भगवान् स्वयं' इत्यभिहितमित्याशय श्रीहरेः ।

'वामे यस्य स्थिता राधा श्रीश्च यस्यास्ति वक्षसि । वृन्दावनविहार त श्रीकृष्ण हृदि चिन्तये ॥' इति श्रीराधिकाकृष्णसोपासत्यकीर्तनाच्च तत्क्रतुन्यायेन प्राप्यमपि तादृग् रूप गोलोकमध्यवर्त्यक्षरधामनिलयन दिव्यवृन्दावनविहारकृद्विवक्षितम् । तथा च वासुदेवमाहात्म्ये गोलोकमध्यवर्त्यक्षरधामनिलय श्रीकृष्णो वर्णितः—'सुगन्धिसच्चन्दनचर्चिताङ्गं श्रीवत्सलक्ष्माङ्कितहृत्कपाटम् । निनादयन्तं मधुरं च वेणुं कृत्वा मुखाग्रेऽम्बुजचारुदोर्भ्याम् ॥' इति । 'इष्टदेवस्तु भगवान् श्रीकृष्णो राधिकापति । प्रत्यक्ष च परोक्ष च ज्ञेय रूप यदस्य तत् । परोक्ष ब्रह्मधामस्थे गोलोके द्विभुज सदा । राधया च श्रिया जुष्ट

कोटिसूर्यसमद्युति ॥ श्रीदामनन्दप्रमुखैः पार्षदैस्तन्निषेवितम् । स कृष्णोऽनन्तकोट्यण्डसर्गस्थित्यन्तकारकः ॥ चतुर्भुजं चाष्टभुजं स सहस्रभुजं तथा । धामान्तरेषु रूपं स्वं धृत्वाऽऽस्ते च पृथक्पृथक् ॥ वासुदेवादिरूपेण चतुर्व्यूहः स जायते । केशवाद्यात्मना चासौ चतुर्विंशतिधा प्रभुः ॥ स एव च वराहादीनवतारान् धरातले । दधाति सर्वशास्त्राणां तात्पर्यं चास्ति तत्र वै ॥ परोक्षं रूपमित्थं हि ज्ञेयं कृष्णस्य तत्त्वतः । प्रत्यक्षं तु नराकारं वर्तमानं धरातले ॥' 'श्रीकृष्णो यः परंब्रह्म स्वयंज्योतिः परात्परः । ज्ञेयो नारायणो विष्णुर्भगवान् पुरुषोत्तमः ॥ महेश्वरो वासुदेवो भूमा च परमेश्वरः ।...दिव्याङ्गो निर्गुणो ह्येष देवक्यां वसुदेवतः । प्रादुर्बभूव कृष्णाख्यो भूतले मनुजाकृतिः ॥ दिव्यमूर्तिनराकृत्योस्तस्य भेदो न कश्चन । इति जानीहि सद्बुद्धे वैष्णवाचार्यनिश्चयम् ॥' इत्यादावक्षरधामाधिपतेः श्रीकृष्णस्यैव वसुदेवदेवकीतः प्रादुर्भावेन मूलावताररूपयोरेकत्वकीर्तनाच्च कृष्णावतारस्य सर्वावतारधारकत्वकीर्तनं समञ्जसम् । अवतारान्तरेष्ववतारित्वकीर्तनमप्येवमेवाप्राकृतत्वेनैकद्रव्यतया सर्वरूपाणामधिष्ठातुः परमात्मन एकत्वेन सर्वत्र वस्तुतः सर्वैश्वर्यविशिष्टत्वेन च निर्वहणीयम् । तथाहि श्रीरामचन्द्रस्यैवावतारित्वं स्मर्यते 'अवतारी रघूत्तमः' 'भवान्नारायणो देवः श्रीमान् चक्रायुधः प्रभुः । एकशृङ्गो वराहस्त्वं भूतभव्यसपत्नजित् ॥ अग्निः कोपः प्रसादस्ते सोमः श्रीवत्सलक्षणः । त्वया लोकास्त्रयः क्रान्ताः पुरा स्वैर्विक्रमैस्त्रिभिः ॥ महेन्द्रश्च कृतो राजा बलिं बद्ध्वा सुदारुणम् । सीता लक्ष्मीर्भवान्

विष्णुर्देवं कृष्णं प्रजापतिं ॥" इत्यादौ । एवमवतारान्त-रेष्वपि विभाव्यम् ।

अत्रेदं तत्त्वम् । नानावताररूपनिदानं मूलरूपमवतारि । देवादिसजातीयसंस्थानतया प्रादुर्भूतं च रूपमवतारः । उभयं चाप्राकृतमेव । तत्तद्रूपावच्छेदेनैक एव परमात्मा परमेश्वरोऽवतारी अवतार इति चोच्यते । अवतारेषु चेतनान्यत्वावभासकमिव यद्यदाचरणं दृश्यते तत्तु लोकशिक्षणलीलादिप्रयोजनं मन्तव्यम् । मूलरूपस्य प्रादुर्भावे परिशुद्धत्वकीर्तनं च संहितायां यवशत्वादिना घटते । अवताराणां सर्वैश्वर्यशक्तिसम्पन्नतया परमात्मानन्यत्वेन चावतारित्वादिमहिमा पररूपगतोऽविशेषतो वर्ण्यतेऽवतारेऽपि तत्र तत्र पुराणादौ । एवमेव श्रीहरिकृष्णस्यापि अवतारित्वादिमहामहि-मानुवर्णनं सत्सङ्गिजीवनादिगतं साधु सङ्गच्छतेतराम् । इति ।

औद्धवे चास्मिन् सम्प्रदाये श्रीकृष्णरूपमेव मूलरूपत्वेनाभिमत-मक्षरधामस्थम् । स एव च श्रीकृष्णः साक्षाद्धरिकृष्णरूपेण पुन-र्धरातलेऽस्मिन् प्रादुर्भूतो धर्मभक्तिभ्यां साधुपरित्राणादिप्रयोज-नाय । एतत्प्रादुर्भावयाथात्म्यं चात्रैव सम्प्रदायपरिचये प्रपञ्च-यिष्यत इत्यास्तां तावत् ।

श्रीकृष्णोऽक्षरदिव्यधामनिलयः सर्वेश्वरो ब्रह्मभू-
तानन्तात्मभिरीडितस्वचरणोऽवाङ्मनसगम्यप्रथः ।
कारुण्यात्परमाश्रिताश्रितजनान् रक्षन् स धर्मद्विषो
नानारूपधरो निरस्य परमं धर्मं च पाति स्वयम् ॥
वर्णिवेषरमणीयदर्शनमाश्रिताभयदपाणिपङ्कजम् ।
दर्शितस्वविभवं दयावशं भक्तिधर्मतनयं स्मरामि तम् ॥

इति विभवः ।

## अन्तर्यामिनिरूपणम् ।

बाह्यरक्षां हि जगतो विधत्ते विभवात्मना ।
आन्तरीं तु विधत्तेऽन्तर्यामित्वेन परः पुमान् ॥

प्राणिनां हृदयकमले नियन्तृतया स्थितिरन्तर्यामित्वम् । इदं च स्वरूपतो रूपतश्चेति भवति द्वेधा । स्वरूपतस्तावज्जीवानां वैमुख्यदशायामपि स्वयं तदन्तः प्रविश्य सत्ताधायकतया स्थितिः सुहृद्भावतः । 'य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति स त आत्मान्तर्याम्यमृतः ॥' 'अहमात्मा गुडाकेश सर्वभूताशयस्थितः' । इत्यादि वाक्यजातमत्रानुसन्धेयम् । प्राप्ताभिमुख्यानां च योगे प्रवृत्तानां हृदयकमले रूपतोऽपि सन्निधानविशेषो ध्येयरूपाभिव्यञ्जनेनानुग्रहार्थः । अयोगिनां हृदयकमलेऽपि विग्रहतः सन्निधानं स्याद्वा मा वा, न तत्र समस्ति प्रयोजनम् । इदं च रूपमङ्गुष्ठमात्रमुशन्ति प्राज्ञाः । 'मध्ये वामनमासीनं विश्वे देवा उपासते ।' 'अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये सन्निविष्टः' इत्यादिश्रुतेः स्वरसार्थपर्यालोचनया । 'स यश्चायं पुरुषे यश्चासावादित्ये स एकः' इति च हृदयकमल उपास्यत्वेन सन्निहितस्य हिरण्मयपुरुषत्वमाह । वात्स्यवरदगुरुभिरेवं द्विविधमप्यन्तर्यामिस्वरूपमनुसंहितं परत्वादिपञ्चके—'यो देवादिचतुर्विधेष्टजनिषु ब्रह्माण्डकोशान्तरे सम्भक्तेषु चराचरेषु निवसन्नास्ते सदान्तर्वहिः । विष्णुं तं निखिलेष्वणुष्वणुतरं भूयःसु भूयस्तरं स्वाङ्गुष्ठप्रमितं च योगिहृदयेष्वासीनमीशं भजे ॥' इति । तथा हि—'पुरश्चक्रे द्विपदो पुरश्चक्रे चतुष्पदः । पुरः स पक्षी भूत्वा

पुरः आविशदिति स वा अयं पुरुषः सर्वासु पूर्षु पुरिशयो नानेन किञ्चनानावृतं नानेन किञ्चनासंवृतम् ॥' इत्यत्र तावत्स्वरूपतोऽन्तर्यामित्वमुक्तम् । अयमर्थः । द्विपाच्चतुष्पाद्रूपशरीरेषु 'अनेन जीवेनात्मना' इत्युक्तरीत्या संसरणहेतुकाम्यविद्याकर्माख्यपक्षवज्जीवशरीरकः परमात्मा प्रविष्टः निरुपाधिकपुरुषशब्दवाच्यो भवति । अनेन न किञ्चिद्बहिरनावृतमन्तश्चासंवृतं वाऽस्ति । यथा च श्रुत्यन्तरं 'अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः' इति । तत्रैव मधुब्राह्मणेऽनन्तरमग्रे रूपव्याप्तिश्चोक्ता—'रूपं रूपं प्रतिरूपो बभूव तदस्य रूपं प्रतिचक्षणाय । इन्द्रो मायाभिः पुरुरूप ईयते युक्ता ह्यस्य हरयः शता दशेति तदेतद्ब्रह्मेति' । रूप्यते इति रूपं दृश्यं वस्तु, तत्तद्वस्त्वनुरूपतयाऽन्तर्यामित्वेन तत्रतत्र रूपवत् प्रतिष्ठितः । प्रतिचक्षणाय— व्यवहाराय यथायोग्यं तत्सर्वमस्य शरीरमेव । परमेश्वरः सङ्कल्पात्मकज्ञानैरेवानन्तान्तर्यामिविग्रहो भवति । योगेश्वरस्यास्य शता दश अनन्ता हरयः अन्तर्यामिविग्रहास्तत्तद्वस्तुनियमनोपयोगिनः सम्भवन्तीत्यर्थः । सर्वशक्तः सर्वत्र परिपूर्णोऽपि भगवान् देवेषु तद्योन्यनुगुणं ज्ञानशक्त्यादिविकासमुद्भावयति मनुष्यादिषु च तथैवेति तत्तद्वस्तुसङ्ख्यावस्थानमन्तर्यामिणो मन्तव्यम् । परमयोगिभिर्गोपालानन्दस्वामिभिश्चैवमेव दशोपनिषद्भाष्येऽन्तर्यामिप्रकारभेदो भावितः । यथा—'तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम्' । इत्यत्र अनुप्रविष्ट—सृष्टेषु सृष्टिमनुप्रविष्टम् । गूढमन्तर्यामितया । गुहाहित—हृदयगुहासन्निहितम् । एव तु विग्रहतोऽपि' इति । तथा 'स एषोऽन्तश्चरते बहुधा जायमानः' इत्यत्र स एष सर्वान्तरा-

त्मैकोऽपि प्रतिहृदयं विग्रहविशिष्टवेपेणाविर्भवन् बहुरूपो भवतीत्यभिप्रायेण बहुधा जायमान इत्युक्ति'रिति। सुधासिन्धौ च साकारस्यैव परब्रह्मणः सर्वव्यापकत्वमनन्तरूपग्रहणाद्घटत इत्युक्तम्—"तथा स्वाभाविकानन्तैश्वर्यसम्पन्न ईश्वरः। स्थित एवाक्षरे धाम्नि व्याप्नोत्यण्डानि कोटिशः ॥ यदा यदा यत्र यत्र दातुमिच्छेत्स्वदर्शनम्। तदा तदा तत्र तत्र स्वेच्छयाऽऽविर्भवत्यसौ ॥ एकोऽप्यनेकरूपोऽसौ स्वसामर्थ्येन जायते। एवं व्यापकता तस्य ज्ञातव्या न त्वरूपतः ॥ एवं स व्यापको ज्ञेयो नित्यदिव्यतनुः प्रभुः ॥ अप्राकृतस्वरूपत्वादरूपः क्वचिदुच्यते ॥" इति । अनेनान्तर्यामिरूपभेदोऽप्युपपादितो वेदितव्यः । अन्तर्यामी चाष्टाङ्गयोगाभ्याससंस्कृतचेतसां निष्पन्नभक्तियोगानामेव ग्राह्यो भवति । नान्येषामिति कृतं विस्तरतः ।

## अर्चावर्णनम् ।

अतः परं वर्णयामो ह्यर्चारूपस्य वैभवम्। देशकालादिनियमो न ह्यस्यास्ति परादिवत्। असमाकं नास्ति पररूपस्य व्यूहस्य वार्चने। सामर्थ्यं विप्रकर्षाच्च देशतो मांसचक्षुषाम् ॥ विभवो भिन्नकालस्थो नास्माभिः प्राप्यते ध्रुवम्। अन्तर्यामी तु हृस्थोऽपि न गम्योऽयुक्तचेतसाम्। अतः सर्वापाश्रयोऽर्चावतारोऽयं समीरितः। सर्वैरर्च्यत्वयोगाच्च कथितोऽर्चेति खल्वयम् ॥ तथा चोक्तं श्रीहरिणाऽपि—'प्रत्यक्षो भगवान् यर्हि न भवेद्भुवि तर्हि तु। प्रतिमा तस्य सम्पूज्या यथालब्धोपचारकैः ॥' इति। अर्चावतारो नामाश्रिताभिमतमूर्तिषु विशिष्टप्रतिष्ठाविधिना पूर्णषाड्गुण्यस्य भगवतो वासुदेवस्य दिव्यरूपेणाविर्भूय सन्निधा-

नम्, आश्रिताभिमतद्रव्यस्यैवात्यन्तादरेण शरीरत्वेन परिग्रहणं च। तथा च वचनं—'सर्वातिशायि षाड्गुण्यं संस्थितं मन्त्रबिम्बयोः। मन्त्रे वाच्यात्मना बिम्बे कृपया समुपस्थितम्॥ तेनार्च्यो भगवान् साक्षान्नोपचारधिया क्वचित्॥' इति। कुर्याद्यावाहनविधिना देवपित्रादीनां सन्निधाने प्रामाणिके किं वक्तव्यं सर्वव्याप्तस्य परमात्मनः। 'न तस्य प्रतिमाऽस्ति' इति च नार्चाया निषेधः। किन्तु 'अप्रतिमप्रभावे' त्यादिवदुपमानस्यैव। 'प्रतिमास्वप्रबुद्धानाम्' इत्येतत्तु अप्रतिबुद्धानामपि प्रतिमासु इति योज्यम्। श्रीभागवतेऽपि प्रतिमाया अर्च्यत्वमुक्तम्—'लब्धानुग्रह आचार्यात्तेन सन्दर्शितागमः। महापुरुषमभ्यर्चेन्मूर्त्याभिमतयात्मनः॥' इति। प्रतिमायां देवतासान्निध्ये निदानं चान्यत्र व्यक्तम्—'अर्चकस्य तपोयोगादर्चनस्यातिशायनात्। आभिरूप्याच्च बिम्बानां देवः सान्निध्यमृच्छति॥' इति। 'सौलभ्यतो जगत्स्वामी सुलभो ह्युत्तरोत्तरः।' इत्युक्तं निरवधिकं सौलभ्यमर्चायाः। तथैव सौशील्यं क्षमा वात्सल्यं चात्राप्यक्ष्यन्ते सर्वैरपि। वर्णितं चेदं गुणजातं विष्वक्सेनसंहितायामर्चावतारस्य—'अर्चावतारः सर्वेषां बान्धवो भक्तवत्सलः। स्वतन्त्रः स जगन्नाथोऽप्यस्वतन्त्रो यथा तथा॥ सर्वशक्तिर्जगद्धाताप्यशक्त इव चेष्टते। सर्वान् कामान् ददत्स्वाम्यप्यशक्त इव लक्ष्यते। अपराधानभिज्ञः सन् सदैव कुरुते दयाम्॥' इति। अनुसंहितश्चार्चाप्रकारः श्रीपराशरभट्टार्यैः—'आस्तां ते गुणराशिवद्गुणपरीवाहात्मना जन्मनां सङ्ख्या भौमनिकेतनेष्वपि कुटीकुञ्जेषु रङ्गेश्वर। अर्च्यः सर्व-

सहिष्णुरर्चकपराधीनाखिलात्मस्थितिः प्रीणीषे हृदयालुभिस्तव ततः शीलाज्जडीभूयते ॥' इति । शौनकभगवताऽपि अर्चावतारस्य रुचिजनकत्वमुपास्यत्वं प्राप्यत्वं चोपवर्णितम्—'सुरूपां प्रतिमां विष्णोः प्रसन्नवदनेक्षणाम् । कृत्वात्मनः प्रीतिकरीं सुवर्णरजतादिभिः ॥ तस्यां ब्रह्म समारोप्य मनसा तन्मयो भवेत् । तामर्चयेत्तां प्रणमेत्तां भजेत्तां विचिन्तयेत् ॥ विशत्यपास्तदोषस्तु तामेव ब्रह्मरूपिणीम् ॥' (वि. ध.) इति । स्वयंव्यक्तदिव्यासुरार्षमानुषभेदेन तत्र तत्र स्थले सन्निहितोऽयमर्चावतारः सकलगुणसम्पन्नो यथारुचि सकलपुरुषार्थप्रदो जीवानुग्रहैकप्रवणो महीयते ।

अर्चावैभवादि शिक्षापत्र्यादौ निरूपितं तत्र तत्र—'कृष्णस्तदवताराश्च ध्येयास्तत्प्रतिमापि च' 'प्रणम्य राधाकृष्णस्य लेख्यार्चां तत आदरात्' 'शैली वा धातुजा मूर्तिः शालग्रामोऽर्च्य एव तैः' 'शैली दारुमयी लौही लेप्या लेख्या च सैकती । मनोमयी मणिमयी प्रतिमाष्टविधा स्मृता ॥ एतास्वपि भवेच्छ्रद्धा यस्य यत्र स तां नरः । निश्छद्म पूजयेद्भक्त्या यथालब्धोपचारकैः ॥ चतुर्णां ब्राह्मणादीनां वर्णानां योषितां तथा । प्रतिमापूजनं शस्तं विष्ण्वादीनां हि भक्तितः ॥' 'सामान्यां सविशेषां वा दीक्षामुद्धववर्त्मनि । प्राप्ता ये तैः प्रतिदिनं कार्यं श्रीकृष्णपूजनम् ॥ दीक्षितैरौद्धवाचार्याच्छ्रीकृष्णस्याखिलैरपि । प्रतिमा नित्यपूजायै ग्रहीतव्या यथारुचि ॥' 'वासुदेवीमिमां दीक्षां गृहीत्वाऽथानुवासरम् । पूजनार्थं च कृष्णार्चा ग्राह्या स्वस्वगुरोर्जनाः ॥ यथाधिकारं कर्तव्यं यथार्हं च तदर्चनम् । स्थित्वा सर्वैः स्वधर्मेषु नान्यथा

तु मदाश्रितैः ॥' 'साक्षात्कृष्णो भगवति नरनारायणादिषु । तन्मूर्तिषु च नास्त्येव भेद इत्यवधार्यताम् ॥' 'अतः कृष्णः स्वयं दत्ते स्वार्चां भक्तजनाय याम् । तस्या निजेच्छया साक्षात्प्रविश्यैव विराजते ॥ अतः साक्षाद्भगवतो मर्यादा पाल्यते यथा । तथैव पालनीयाऽत्र तस्या अपि च पूजकैः ॥' इति ।

निरूपितं सावत्परत्वादिपञ्चकम् । सर्वत्र च भगवान् सकलसद्गुणसुपूर्ण एव । तथा च श्रुतिः 'इदं पूर्णमदः पूर्णं पूर्णात्पूर्णमुदच्यते । पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते । सर्वं पूर्णं सहोम्' इति । इदमिति अन्तर्यामिरूपं विवक्षितम् । तत्पूर्णं गुणगणेन । अदः पररूपं च पूर्णमेव । तस्मात्पूर्णं व्यूहरूपमुद्भवं भवति । व्यूहरूपमुपादाय च विभवरूपं कल्याणगुणपूर्णं विशिष्यते । सर्वमर्चारूपमपि पूर्वोक्तैः सह गुणपूर्णमेव । इदं पञ्चविधमपि पूर्णं वस्तु ओङ्कारवाच्यं परंब्रह्मैवेत्यर्थः । तथा च सर्वस्य गुणपूर्णत्वं भक्तानेकगम्यत्वं च श्रीवत्साङ्कमिश्रैरनुसंहितम्—'परो वा व्यूहो वा विभव उत वार्चावतरणो भवन् वान्तर्यामी वरवरद यो यो भवसि वै । स स त्वं सन्नेशान् वरवरगुणान् बिभ्रदखिलान् भजद्भ्यो भास्येवं सततमितरेभ्यस्त्वितरथा ॥' इति ।

भगवतो विभूतिद्वययोगः ।

परत्वादिस्वरूपेण विभूतिद्वयमच्युतः ।
बिभर्त्यच्युतभावं यत्तत्प्रकारोऽत्र कथ्यते ॥

पररूपेण सावत्परमात्मा नित्यमुक्तानानन्दयन् नित्यां विभूतिं निर्वहति । व्यूहादिभिश्च लीलाविभूतिम् । तत्र व्यूहमूर्तिभिरनन्ताण्डोत्पत्तिस्थितिलयान्निर्वहति । शास्त्रप्रणयनधर्मप्रवर्तनतत्त्वप्रकाशनैश्चोपकरोति जगताम् । लोकशास्त्रमर्यादापरिपालको भवति लोक

रक्षको विभवरूपी । अन्तर्यामी नरकादिप्रवेशेऽपि जीवानत्यजंस्त-त्कर्मफलप्रदः स्वोपासादौ रुच्युत्पादनायावसरप्रतीक्षो वत्सलत-याऽन्तः प्रविश्य स्वरूपसत्तां निर्वहति परमसुहृद्भूतः । तत्करणाना-मपि च शक्त्युद्बोधकः। येनैव जीवो यत्किंचिदपि कर्म कर्तुं क्षमते । अर्चारूपी च मन्दानामप्यर्चनीयत्वेन स्थितः सकललोकक्षेमङ्करः ।

'पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि' इतिश्रुत्या च विभूतिद्वयसिद्धिः । विभूतिर्नामैश्वर्यं नियन्तृत्वलक्षणम् । तत्प्रतिसम्बन्धिनः प्रधानपुरुषपरमव्योमनित्यमुक्ता अपि विभूतित्वेन संशब्द्यन्ते नाम । तत्र प्रकृतिमण्डलस्य सृष्टिसंहारादिलीलोपकरण-तया लीलाविभूतित्वम् । परमव्योम्नस्तु सृष्टिसंहारागोचरतया नित्य-त्वाद्भगवदसाधारणदिव्यभोगोपकरणत्वान्नित्यमुक्तानामविच्छेदेन भगवदनुभवस्थानत्वाच्च नित्यविभूतिरक्षरं धाम भोगविभूतिरित्यपि व्यपदेशः । पाद्मोत्तरखण्डे च त्रिपाद्विभूतेर्नित्यत्वं लीलाविभूतेर-नित्यत्वं चोक्तम्—'त्रिपाद्व्याप्तिः परं धाम पादोऽस्येहाभवत्पुनः त्रिपाद्विभूतिर्नित्या स्यादनित्यं पादमैश्वरम् ॥' इति । महाभार-ते च मोक्षधर्मे 'अव्यक्तादिविशेषान्तं परिणामर्धिसंयुतम्। क्रीडा हरेरिदं सर्वं क्षरमित्यवधार्यताम् ॥' इति प्रकृतिमण्डलस्य लीला-विभूतित्वमुक्त्वा 'अक्षरं तत्परं ब्रह्म' इत्यादिना नित्यविभूतिरभि-हिता । अस्याश्च लीलाविभूत्यपेक्षयाऽतिमहत्त्वं 'महाविभूतिसंस्थान नमस्ते पुरुषोत्तम' इति विष्णुपुराण उक्तम् । अतएव ब्रह्मशब्देनास्या व्यपदेशः । तथा तत्रैव भगवद्रूपधामादेर्नित्यत्वं चोक्तं—'कलाकाष्ठा-मुहूर्तादिकालसूत्रस्य गोचरे । यस्य शक्तिर्न शुद्धस्य स नो विष्णुः प्रसीदतु ॥' 'कलामुहूर्तादिमयश्च कालो न यद्विभूतेः परिणाम-हेतुः । अजन्मनाशस्य सदैकमूर्तेरनामरूपस्य सनातनस्य ॥'

इति । महाभारते च—'एते वै निरयास्तात स्थानस्य परमात्मनः । काल स पचते तत्र न कालस्तत्र वै प्रभु ॥' इति अप्राकृतभोग्यादिसमृद्धिशालित्वाकालकाल्यत्वे भगवद्धाम्न उक्ते, चतुर्मुखसुरेन्द्रप्रजापत्यादिस्थानानां सर्वकामसमृद्धानामपि निरयप्रायत्वं च । श्रीभागवते 'कालोऽयं परमाण्वादिर्द्विपरार्धान्त ईरित । नैवेशितु प्रभुर्भूम ईश्वरो धाममानिनाम् ॥' इति सत्यलोकान्तधामाभिमानिनां चतुर्मुखादीनां प्रभुरपि काल सर्वेश्वरस्य परमपुरुषस्य न प्रभुरित्युक्त्या च भगवद्धामादेर्नित्यत्वं सिद्ध्यति । भगवद्यामुनमुनिभिश्च विभूतिद्वयं सव्यान्तर्वर्तिभिर्भावैर्विभूतिभूतैः सङ्गृहीतं स्तोत्ररत्ने—'यदण्डमण्डान्तरगोचरं च यद्दशोत्तराण्यावरणानि यानि च । गुणा प्रधानं पुरुषः परं पदं परात्परं ब्रह्म च ते विभूतय ' इति । अत्र परात्परं ब्रह्मेति भगवतोऽसाधारणं नित्यं रूपं विवक्षितम् । चकारेण नित्यमुक्तमहिष्यादयोऽप्राकृतभोग्यभोगोपकरणादयश्च । तत्र लीलाविभूतिसंस्थानप्रकारो जडपरिच्छेदे निरूपितो नाम समासतः । नित्यविभूतिप्रकारमत्र विवृणुमः समासतः ।

## नित्यविभूतिनिरूपणम् ।

नित्यविभूतिस्तु प्रकृतिमण्डलादुपरिष्टादवस्थिता रजस्तमस्का विलक्षणसत्त्ववती निरवधिकतेजोरूपा नित्यमुक्तसञ्जुष्टा परमव्योमाक्षरब्रह्मपुरपरमपदादिशब्दवाच्याऽर्चिरादिगम्या मुक्तप्राप्या च । तथाच श्रुतिस्मृतय —'क्षयन्तमस्य रजस पराके' (पराके—परस्तादित्यर्थ ) 'आदित्यवर्णं तमसस्तु पारे' 'तदक्षरे परमे व्योमन्' 'विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः । सोऽध्वन पारमाप्नोति तद्विष्णो परमं पदम्' 'न तत्र सूर्यो भाति न चन्द्रतारकम्' 'तद्विष्णो परमं पदं सदा पश्यन्ति सूरयः ।' 'ते ह नाकं महिमानः

सचन्ते यत्र पूर्वे साध्याः सन्ति देवाः' 'अत्यर्कानलदीप्तं तत्स्थानं विष्णोर्महात्मनः । स्वयैव प्रभया राजन् ! दुष्प्रेक्ष्यं देवदानवैः ॥' 'प्राप्यावध्यं ब्रह्मपुरं राजेव स्यामहं सुखी' 'विशुद्धसत्त्वं तव धाम शान्तं तपोमयं ध्वस्तरजस्तमस्कम् । मायामयोऽयं गुणसंप्रवाहो न विद्यते तेऽग्रहणानुबन्धः ॥' 'दर्शयामास लोकं स्वं गोपानां तमसः परम्' 'क्षेमं विन्दन्ति मत्स्थानं यद्ब्रह्म परमं विदुः' 'यद्गत्वा न निवर्तन्ते तद्धाम परमं मम' 'स्थानं प्राप्स्यसि शाश्वतम्' 'ओंकाररथमारुह्य मनः कृत्वा तु सारथिम् । ब्रह्मलोकपदान्वेषी याति विष्णोः परंपदम्' 'कालातीतमनाद्यन्तमप्राकृतमचञ्चलम् । प्राप्यमर्चिःपथात्सद्भिर्मयि सन्न्यस्तमानसैः ॥' 'एकान्तिनः सदा ब्र ध्यायिनो योगिनो हि ये । तेषां तत्परमं स्थानं यद्वै पश्यन्ति सूरयः ॥' 'अमृतं शाश्वतं दिव्यमनन्तं परमं पदम् । शुद्धसत्त्वमयं दिव्यमक्षरं ब्रह्मणः पदम् । अनेककोटिसाहस्राग्निवर्चं ध्रुवमव्ययम् ॥ सर्ववेदमयं शुभ्रं सर्गप्रलयवर्जितम् ॥' 'सत्त्वेककालसम्भूतकोटिकोट्यर्कसन्निभम् । स व्यचष्ट महत्तेजो दिव्यं सिततरं मुने ॥' इत्याद्याः ।

'प्रकृतेः परस्तात्' इति प्रकृतिमण्डलादूर्ध्वस्थत्वप्रतिपादनादर्चिरादिगतिप्राप्यत्वकीर्तनाच्चास्या अपरिच्छिन्नत्वं वर्ण्यमानमूर्ध्वपर्यन्तप्रदेशतो व्यवस्थाप्यम् । सर्वव्याप्तिप्रतिपादनमपि क्वचिदस्य प्रभादिद्वारकं घटते नाम । 'सत्त्वं यद्ब्रह्मदर्शनम्' 'सत्त्वं सुखे सञ्जयति' 'सत्त्वात्सञ्जायते ज्ञानम्' इत्याद्युक्तप्रकारेण ज्ञानसुखजननस्वभावो हि सत्त्वम् । नित्यविभूतेः सर्वदा सर्वेषां तत्रत्यानां मुक्तादीनां ब्रह्मज्ञानानुभवानन्दाभिवर्धकत्वाच्च विशुद्धसत्त्वतोक्तिः । प्राकृत-

सत्त्वबद्रजस्तमःसम्भेदराहित्यं च सत्त्वस्य विशुद्धत्वम् । सत्त्वस्य प्राकृतसुखसङ्गद्वारा मोहकत्वमपि गुणान्तरसम्भेदकारितमेव । इदं तु प्राकृतसत्त्वाद्विलक्षणमेव गुणान्तरासंमिश्रत्वात् स्वयंप्रकाशाश्रयत्वाच्च । तथा च वचनम्—' सत्त्वं गुणसत्त्वाद्विलक्षणम् ।' इति । अतोऽस्य प्राकृतसत्त्ववन्न बन्धकत्वम्, किन्तु स्वाभाविकभगवज्ज्ञानानुभवाप्यायकत्वमेव । अत एव शुद्धसत्त्वस्य निर्गुणत्वोक्तिः । बन्धकगुणवत्त्वं हि सगुणत्वं हेयम् । तदभावश्च विशुद्धसत्त्वस्याऽप्राकृतस्य निर्गुणत्वकीर्तनं भूरिशो वरीवर्ति पुराणादिषु । अतो विशुद्धसत्त्वनिर्गुणत्वयोर्न विरोधः । अत एव 'अमलसत्त्वधाम्नि' इत्यस्य पदस्य 'शुद्धसत्त्वमयविग्रहयुक्ते' इति व्याख्यानं कृतं भक्तरञ्जनीटीकायां श्रीभगवत्प्रसादाचार्यैः । एतेन प्रकृतिमण्डलान्तर्गत एव कश्चनाकारशब्दितः प्रकृतेः परिणतिभेदो नित्यमभिभूतरजस्तमस्कः शुद्धसत्त्वनामा ईश्वरस्य मुक्तानां च भोगप्रदेश इति यादवप्रकाशमतं न साधीयः । पाद्मोत्तरखण्डे—'प्रधानपरमव्योम्नोरन्तरा विरजा नदी । वेदाङ्गस्वेदजनिततोयैर्विप्लाविता नदी ॥ तस्याः पारे परे व्योम्नि त्रिपाद्भूतिः सनातनी । अथातो ब्रह्मणो लोकः शुद्धसत्त्वः सनातनः ।' इति भगवत्स्थानस्य प्रकृतिमण्डलोत्तीर्णत्रिपाद्विभूतिस्थत्वप्रतिपादनात् । विष्णुपुराणे—'एकं तदाक्षयं परमं पदं यत्' इत्यत्रैकमन्यमिश्रणेन केवलाप्राकृतत्वस्य वर्णितत्वाच्च । (अग्रे प्रकृतिमण्डलादूर्ध्वे भवमक्षयम्) साम्प्रदायिकग्रन्थेषु च भगवत्स्थानस्य विशुद्धसत्त्वात्मकस्यापि निर्गुणत्वमेवोक्तं बहुशः ।

निःशेषाविद्यानिवृत्तिदेशविजातीयान्यत्वं, रजोरहितत्वे तमोरहितत्वे वा सत्त्ववत्त्वमित्यादीन्येतल्लक्षणानि । एतद्विभूतेः स्वयम-

नदी, तिल्यो वृक्ष सालज्य संस्थानम् ( पुरोबहि-र्भागः ) अपराजितमायतन इन्द्रप्रजापती द्वारगोपौ विभुप्रमित ( सभास्थानम् ) विचक्षणा असन्दी ( धर्मादिपीठ ) अमितौजा पर्यङ्कः' इत्यादिना। छान्दोग्ये चाष्टमे प्रपाठके—'अरश्च ह वै ण्यश्चार्णवौ, ब्रह्मलोके तृतीयस्यामितो दिवि, तदैरम्मदीयं सरः, तदश्वत्थ सोमसवन , अपराजिता पूर्ब्रह्मण' इति सरश्वत्थवृक्षनगरसभास्थानानि न्यरूपयत। 'दिव्ये ब्रह्मपुरे ह्येष व्योमन्यात्मा प्रतिष्ठित ' 'देवाना पूरयोध्या तस्या हिरण्मयः कोश' ( मन्दिर ) 'हिरण्मये परे कोशे विरज ब्रह्म निष्कलम्। तच्छुभ्रं ज्योतिषा ज्योतिस्तद्य आत्मविदो विदुः' 'प्रजापतेः सभा वेश्म प्रपद्ये सहस्रस्थूणे विमिते दृढ उग्रे यत्र देवानाम धिदेव आस्ते' इत्यादिश्रुतिवाक्येषु च नित्यमुक्तजुष्टा अयोध्याऽ-पराजितादिनाम्नी परस्य ब्रह्मणो दिव्यनगरी, तत्र हिरण्मय भगवन्मन्दिर, तत्र च सभास्थानं, तत्र च नित्यमुक्तानामधिदैवतस्य भगवतो निवास इत्यादिकं समासतो निरूपितमस्ति।

मायासीमविरजापारे परमपदपरमाकाशचिदाकाशाक्षरवैकुण्ठगो-लोकादिशब्दितायां त्रिपाद्विभूतावनन्तदिव्यभोग्यभोगोपकरणभोग-स्थानसमृद्धानन्ताश्चर्यानन्तपरिमाणदिव्यलोकानन्त्य नित्यमुक्तानां यथेष्टभगवद्भोगैकान्त सम्भवतीति चोपबृंहणतोऽवगम्यते। 'अथ यदत' परो दिवो ज्योतिर्दीप्यते सर्वत' पृष्ठेषु विश्वत'पृष्ठेष्वनुत्त-मेषूत्तमेषु लोकेषु' इति श्रुत्या चाप्राकृतलोकानन्त्यं व्यञ्जितम्। श्री-भाष्ये च कार्याधिकरणे भगवतः स्वेच्छामात्रसिद्धा अप्राकृता लोका बहवः सन्तीति वर्णितम्। यथा—'परस्य ब्रह्मण परिपूर्णस्य सर्वगतस्य सत्यसङ्कल्पस्य स्वेच्छाकल्पिताः स्वासाधारणा अप्राकृताश्च लोका नासन्तीति न शक्यं। श्रुतिस्मृतीतिहासपुराणप्रामाण्या' दिति।

तत्राप्राकृतो महावैकुण्ठलोको विष्वक्सेनसंहितादौ वर्णितः—'भक्त्या परमया चैव प्रपत्त्या वा महामुने । प्राप्यं वैकुण्ठमासाद्य न निवर्तन्ति तेऽव्ययाः ॥' इति । 'वैकुण्ठे तु परे लोके श्रीसहायो जनार्दनः । उभाभ्यां भूमिनीलाभ्यां सेवितः परमेश्वरः ॥ महायोगी जगद्धाता दिव्यसिंहासनोपरि । दिव्यसंस्तरणोपेते शेषाहिफणमण्डिते ॥ अप्राकृततनुर्देवो नित्याकृतिधरो युवा । नित्यातीतो जगद्धाता नित्यैर्मुक्तैश्च सेवितः ॥ चतुर्भुजः श्यामलाङ्गः श्रीभूम्यां सह लीलया ॥ विमलैर्भूषणैर्नित्यैर्भूषितो नित्यविग्रहः ॥ पञ्चायुधैः सेव्यमानः शङ्खचक्रधरो हरिः । सहस्रस्थूणसंयुक्ते मण्डपे परमेश्वरः ॥ विन्यस्य वामकं बाहुमासने वामपार्श्वके । दक्षिणं जानुके न्यस्तं लम्बयन् जगतां पतिः ॥' इति च श्रीवैकुण्ठनाथः ।

श्रीभागवते च श्रीकृष्णेन गोपानां स्वलोकः प्रकृतेः परतः स्थितः प्रदर्शित इत्यभ्यधायि—'दर्शयामास लोकं स्वं गोपानां तमसः परम् ।...यद्धि पश्यन्ति मुनयो गुणापाये समाहिताः ॥' इति । अयं च लोको विकुण्ठशब्दितः 'लोकं विकुण्ठमुपनेष्यति गोकुलं स्म' इति कृष्णचरितानुवर्णनसमये विकुण्ठशब्देनास्य निर्देशात् । विगतः कुण्ठः—ज्ञानादिप्रसरणप्रतिरोधो यत्र स लोको विकुण्ठो मुक्तिस्थानत्वात् । अयं विकुण्ठस्य भगवतो विकुण्ठानां नित्यमुक्तानां च निवासस्थानतया वैकुण्ठनामाऽपि भवति । तथा चतुर्मुखस्य तपस्यतः समाधौ वैकुण्ठलोकः, तत्र च सपत्नीपरिजनपरिवारस्य स्वस्य स्वरूपं च प्रादर्शि भगवतेति श्रीभागवते वासुदेवमाहात्म्ये चान्ववर्णि—'तस्मै स्वलोकं भगवान् सभाजितः सन्दर्शयामास परं न यत्परम् । व्यपेतसंक्लेशविमोह-

साध्वसं स्वदृष्टवद्भिः पुरुषैरधिष्ठितम् ॥ प्रवर्तते यत्र रजस्तमस्तयोः सत्त्वं न मिश्रं न च कालविक्रमः । न यत्र माया किमुतापरे हरेरनुव्रता यत्र सुरासुरार्चिताः ॥ भ्राजिष्णुभिर्यः परितो विराजते लसद्विमानावलिभिर्महात्मनाम् । विद्योतमानः प्रमदोत्तमाद्युभिः सविद्युदभ्रावलिभिर्यथा नभः ॥ श्रीर्यत्र रूपिण्युरुगायपादयोः करोति मानं बहुधा विभूतिभिः ॥ प्रेङ्खाश्रिता या कुसुमाकरानुगैर्विगीयमाना प्रियकर्म गायती ॥ ददर्श तत्राखिलसात्वतां पतिं श्रियः पतिं यज्ञपतिं जगत्पतिम् । सुनन्दनन्दप्रबलार्हणादिभिः स्वपार्षदमुख्यैः परिषेवितं विभुम् ॥ भृत्यप्रसादाभिमुखं दृगासवं प्रसन्नहासारुणचारुलोचनम् । किरीटिनं कुण्डलिनं चतुर्भुजं पीताम्बरं वक्षसि लक्षितं श्रिया ॥ अभ्यर्हणीयासनमास्थितं परं वृतं चतुःषोडशपञ्चशक्तिभिः । युक्तं भगैः स्वैरितरत्र चाध्रुवैः स्व एव धामन् रममाणमीश्वरम् ॥' इति । 'पद्मे तपस्यते तस्मै तपःशुद्धात्मने ततः । समाधौ दर्शयामास धाम वैकुण्ठमच्युतः ॥ प्राधानिका गुणा यत्र त्रयोऽपि रजआदयः । न भवत्यल्पमपि यत्कालमायामयं नव ॥ सहोदितार्कायुतप्रभास्वरे तत्र तेजसि । वासुदेवं ददर्शासौ रम्यदिव्यासिताकृतिम् ॥ चतुर्भुजं गदापद्मशङ्खचक्रधरं विभुम् । पीताम्बरं महारत्नकिरीटादिविभूषणम् ॥ नन्दतार्क्ष्यादिभिर्जुष्टं पार्षदैश्च चतुर्भुजैः । सिद्धिभिश्चाष्टभिः पद्भिर्बद्धाञ्जलिपुटैर्भगैः ॥ सिंहासने श्रिया साकमुपविष्टं तमीश्वरम् । प्रणम्य प्राञ्जलिस्तस्थौ विरिञ्चो हृष्टमानसः ॥' इति च । लोकोऽयं प्रकृतिमण्डलाद्बहिर्भूतः, मायात्यतीतत्वप्रतिपादनात् । रमारुचये कल्पितश्च रमा-

वैकुण्ठः प्रकृतिमण्डलान्तर्गतः । यथोच्यते भागवते 'वैकुण्ठः कल्पितो येन लोको लोकनमस्कृतः' इति । सत्सङ्गिजीवनेऽपि एवमेवोक्तमस्ति ।

तथा भूम्नः पुरुषस्य भवनं च प्राकृतान्धतमसात्परपारवर्ति निरवधिकतेजोरूपं भ्राजन्मणिस्तम्भविराजितं वर्णितं भागवते वैदिकपुत्रानयनवर्णने-'द्वारेण चक्रानुपथेन तत्तमः परं परं ज्योतिरनन्तपारम् । समश्नुवानं प्रसमीक्ष्य फाल्गुनः प्रताडिताक्षोऽपिदधेऽक्षिणी उभे ॥ ततः प्रविष्टः सलिलं नभस्वता बलीयसैजद्बृहदूर्मिभीषणम् । तत्राद्भुतं वै भुवनं द्युमत्तमं भ्राजन्मणिस्तम्भसहस्रशोभितम् ॥' इति । तत्र च भूमा पुरुषोऽनन्तभोगिनि सुखासीनोऽष्टभुजः श्र्यादिसहितो वर्णितः । इदं च भवनं अव्याकृतधामब्रह्मपुरादिनामभिः सत्सङ्गिजीवनतट्टीकादावनूदितम् । महावैकुण्ठे चतुर्भुजस्यैवात्राष्टभुजत्वं कीर्त्यमानमुपपद्यत एव । महावैकुण्ठाभिन्नत्वे त्वेतत्स्थानस्य कादाचित्कैच्छिकाविष्करणाशयकमेतदधिपतेरष्टभुजत्वकीर्तनमुन्नेयम् । किञ्चाऽप्राकृतेषु बहुषु स्थानेष्ववयवार्थयोगतो वैकुण्ठादिनाम्नामन्वय उपपन्न एव । अतो भूमभवनस्य महावैकुण्ठस्थानाद्भिन्नत्वेऽपि तन्नाम्ना व्यपदेशोऽपि नानुपपन्नः ।

स्कान्दे च वासुदेवमाहात्म्ये गोलोकोऽप्राकृतः विरजानदीपरपारवर्ती प्रतिपादितः, तन्मध्यस्थं चाक्षरं धाम, तत्र च भगवान् पुरुषोत्तमः श्रीकृष्णो राधालक्ष्मीवल्लभो द्विभुजो वेणुवादनतत्परो नटवर्यवेषः । 'भूम्यप्तेजोनिलाकाशाहंमहत्प्रकृतीः क्रमात् । क्रान्त्वा दशोत्तरगुणाः प्राप गोलोकमद्भुतम् ॥' इत्यादिना । ( अ. १६ श्लो. १२. प्रभृति अ. १७ श्लो. २२ पर्यन्तमत्रानु-

सन्धेयम्) ब्रह्मवैवर्तपुराणे श्रीकृष्णजन्मखण्डेऽपि गोलोको निरुक्त-प्रकारेणैव वर्णितः। तत्र च मन्दिरान्तरास्थानमण्डपे दिव्यसिंहासनोपरि दिव्य तेजः, तन्मध्ये च श्रीकृष्णो राधया सह। यथा 'तत्र तेज समूह च सूर्यकोटिसमप्रभम्। प्रभया ज्वलित ब्रह्मन्नाश्चर्यं महदद्भुतम्॥ सप्ततालप्रमाण तद्व्यासमूर्ध्वं समन्ततः। तेजोमुप च सर्वेषां महाश्रमविवर्जितम्॥ सर्वव्यापि सर्वबीजं चक्षूरोधकरं परम्॥' इति। 'ददृशुस्तेजसो मध्ये शरीर कमनीयकम्। सजलाम्भोदवर्णाभ सस्मित सुमनोहरम्॥ परमाह्लादकरूप त्रैलोक्यचित्तमोहनम्। गण्डस्थलकपोलाभ्या ज्वलन्मकरकुण्डलम्॥ सद्रत्ननूपुराभ्या च चरणाम्भोजराजितम्। वह्निशुद्धहरिद्राभामूल्यवस्त्रविराजितम्॥ मणिरत्नेन्द्रसाराणा स्वेच्छाकौतुकनिर्मितै। भूषित भूषणै रम्यैस्तद्रूपेणैव भूषितैः॥ विनोदमुरलीयुक्तबिम्बाधरमनोहरम्। प्रसन्नेक्षणपश्यन्त भक्तानुग्रहकातरम्॥ सद्रत्नगुटिकायुक्तवक्षोरःस्थलोज्ज्वलम्। कौस्तुभासक्तसद्रत्नप्रदीप्ततेजसोज्ज्वलम्॥ तत्र तेजसि चार्वङ्गीं ददृशू राधिकाभिधाम्। पश्यन्त सस्मित कान्त पश्यन्तीं वक्रचक्षुषा॥ ॥ भूषितां भूषणै सर्वैः सौन्दर्येण विभूषितैः॥ इति च। (अ ६) वासुदेवमाहात्म्ये धामतेज उक्तम्। अत्र तु स्वरूपतेज इति भिदा।

तत्रैव गोलोके द्विभुजत्व वैकुण्ठे चतुर्भुजत्व च स्पष्टमुक्तमन्यत्र। यथा—'शुद्धसत्वस्वरूपेण द्विधा रूपो बभूव ह। दक्षिणांशश्च द्विभुजो गोपबालकरूपकः॥ नवीनजलदश्याम शोभितः पीतवाससा। श्रीवत्सवदनः श्रीमान् सस्मित पद्मलोचनः॥ सोऽय गोलोकनाथश्च राधेशो नन्दनन्दन। गोकुले गोपवेषश्च

पुण्ये वृन्दावने वने ॥ चतुर्भुजश्च वैकुण्ठे महालक्ष्मीपतिः स्वयम् । नारायणश्च भगवान् यन्नाम मुक्तिकारणम् ॥ सुनन्दनन्दकुमुदैः पार्षदैः परिवारितः । शङ्खचक्रगदापद्मधरः श्रीवत्सलाञ्छनः ॥ कौस्तुभेन मणीन्द्रेण भूषितो वनमालया' इति। (अ. १२९) स्कान्दे वासुदेवमाहात्म्येऽप्येवमेवास्ति वर्णितम् ।

श्रीकृष्णस्यैवेष्टदेवत्वेन तद्धाम गोलोकसंज्ञकं स्वाभिमतं कथितं शिक्षापत्र्यां श्रीहरिणा 'मतं विशिष्टाद्वैतं मे गोलोको धाम चेप्सितम् । तत्र ब्रह्मात्मना कृष्णसेवा मुक्तिश्च गम्यताम्'॥ इति । निरतिशयदीप्तियोगात् गोलोक इति प्रसिद्धं तत् । तथा च श्रूयते-'यत्र गावो भूरिशृङ्गा अयासः, अत्राह तदुरुगायस्य वृष्णः परमं पदमवभाति भूरि' इति। विवृतश्चायं मन्त्रः शिक्षापत्रीभाष्ये-"यत्र गावो रश्मयः, भूरिशृङ्गा बहुशृङ्गा अत्यन्तोन्नताः, अयासः अतिविस्तृताः, अत्राह अत्र खलु लोके, उरुगायस्य नित्यसूरिभिरभिष्टुतस्य, वृष्णः कामानां वर्षितुः परमपुरुषस्य, तत् मुक्तप्राप्यतया श्रुतिस्मृतिप्रसिद्धं परमंपदं भूरि अनन्तायामं, अवभाति सर्वदा व्रयं स्फुरति" इति । गोलोकमध्यवर्ति अक्षरधामाख्यं सर्वोत्कृष्टं भगवतः स्थानं मुक्तप्राप्यं निरतिशयतेजोमयमवभातीत्यर्थः ।

औद्धवेऽस्मिन् सम्प्रदाये दीक्षितानां प्राप्यतया चेदमेव गोलोकधाम निर्दिष्टम् 'भक्ता एते तु देहान्ते धाम गोलोकमुत्तमम् । लभन्ते राजते यत्र श्रीराधाकृष्ण ईश्वरः ॥' इति । श्रीहरिस्तुतावपि 'स्वभक्तगोलोकनय' इति गोलोकनेतृत्वं तस्यावर्णि। श्रीहरेरैकान्तिकभक्तोऽभयाख्यो राजापि देहान्ते गोलोकमवाप्तवानित्येवोक्तं-'विहाय दिव्यं प्रतिपद्य देहं तद्धाम गोलोकमवाप भूप' इति । अत्र तद्धामेत्युक्त्या श्रीहरेर्धाम गोलोक इति लभ्यते। तदुक्त-

मेष, गोलोकाधिपतिरेव हि श्रीहरिरूपेण प्रादुर्भूतः । तथा च वचन— 'गोलोकाधिपतिर्यो हि स एवास्त्यत्र नेतर' । इति ।

भगवतोऽक्षरधामस्थत्ववर्णन मुक्तानामक्षरधामप्राप्तिवर्णनं च गोलोकमध्यवर्त्यक्षरधामाभिधभवनविषय बोध्यम् । तथा च वचनानि—'आत्यन्तिके लये पूर्वं भगवानेक एव हि । आसीत्स्वय वासुदेव स्वकीयेऽक्षरधामनि ॥' 'नारायणोऽक्षरे धाम्नि वासुदेवो व्यराजत' 'श्रुतिस्मृतीतिहासेषु मूलभूत सनातनम् । प्रोक्त रूप हरेर्दिव्यमित्येवाक्षरधामगम् ॥' 'अतो योऽस्त्यक्षरे धाम्नि गुणातीतो हरि स्वयम् ।' 'स्वीय धाम तम पर नयति तान् देहावसानेऽक्षरम्' ( स्वधर्मज्ञानवैराग्योपेता भक्तिर्दृढा तु या । सैवास्ति भगवत्तोपहेतुरित्यवगम्यताम् ॥ साङ्गैषा भक्तिरेवात्र धर्म एकान्त उच्यते । तद्वन्त साधवो ह्यत्र सत्सङ्गे सन्ति साम्प्रतम् ॥' ) 'भक्ता एकान्तधर्मस्था ब्रह्माख्य धाम वैष्णवम् । अक्षर यान्ति देहान्ते यद्गत्वा न पुनर्भवः ॥' ( 'अतो गृहस्थैरपि मे धर्म एकान्त आदर' । कर्तव्य सर्वदा येन सर्वदुःखक्षयो भवेत् ॥' ) 'प्राप्यमेकान्तिकेनैव ब्रह्मधामार्चिरध्वना' 'द्वेधोक्तमक्षर ब्रह्म मूर्त चामूर्तमित्यद । मूर्तं तत्रास्ति कृष्णस्य सेवाया दिव्यविग्रहम् ॥ अमूर्तं धाम कृष्णस्य स नित्य तत्र राजते । चिदाकाशादिपर्यायैस्तदेवान्यत्र सूचितम् । भक्ता एकान्तिका येऽत्र देहान्ते तेऽपि धाम सत् । प्राप्याक्षरसधर्माणः सेवन्ते कोटिशो हरिम् । अतः सत्सङ्गिभिः सर्वैः प्राप्यं धामाक्षर बृहत् । तन्मुक्तपङ्क्तौ स्यास्याम इति कार्योऽत्र निश्चय' ॥' इत्यादिना । अत्र मुक्तप्राप्यमक्षर ब्रह्म द्वेधोक्तम् । तत्र मूर्तं साकारं भगवत्सेवानिरत मुक्तवृन्दम् । करचरणाद्याकाररहित चामूर्तं धाम । तदुभयमपि हि मुक्तप्राप्यम् ।

'तन्मुक्तपङ्क्तौ स्थास्यामः' इति च मूर्तं अक्षरं ब्रह्म मुक्तवृन्दलक्षणमेव विवक्षितमिति गमयति । गोपालानन्दस्वामिभिर्भागवतदशमस्कन्धान्तर्गतवेदस्तुतिटीकायां—"अक्षरब्रह्मसंज्ञास्त्रयः सन्ति । तत्राद्यं प्रकृतिसम्बन्धरहितं पुरुषोत्तमस्य निवासभूतमक्षरब्रह्माभिधं ब्रह्मपुरं धाम बोध्यम् । द्वितीयं पुरुषोत्तमोपासकं तद्धामस्थं मुक्तकोटिवृन्दं च । तृतीयः पुरुषोत्तमेच्छया ब्रह्माण्डोत्पादकः प्रकृत्यधिष्ठाताऽक्षरपुरुषश्च" इति कथनाच्च मूर्तामूर्तयोरक्षरब्रह्मणोः स्थानमुक्तवृन्दरूपत्वमेव प्रत्येतव्यम् ।

एवमक्षरधाम्नो मुक्तप्राप्यत्वकीर्तनान्मुक्तप्राप्यतया निर्दिष्टे केवलेऽपि गोलोकशब्दे 'तात्स्थ्यात्ताच्छब्द्यम्' इति न्यायाद्गोलोकमध्यवर्त्यक्षरं धामैव विवक्षितम् । तथा च गोलोकान्तर्वर्तिनोऽक्षरधाम्नो भगवत्स्थानत्वं मुक्तप्राप्यत्वं च मुक्तकण्ठमेव वचनान्तरैः प्रतिपादितम् । यथा—'गोलोक एवाक्षरधाम्नि दिव्ये' 'नमो दिव्यगोलोकधाम्नि प्रकाशे' 'तेजोमण्डलमध्यस्थो गोलोके यः स एव हि' 'परोक्षं ब्रह्मधामस्थं गोलोके द्विभुजं सदा । राधया च श्रिया जुष्टं कोटिसूर्यसमद्युति ॥' इति । गोलोकान्तर्वर्तित्वेऽप्यक्षरधाम्नो गोलोकतः तस्य पार्थक्येन सहोपादानं च कचित्सामान्यविशेषभावतो भवनस्थितिवाह्योपवनादिविहरणादिविशेषाकारविवक्षातश्च सङ्गच्छते नाम । यथा 'केचिदाहुश्चिदाकाशे प्राकृतात्तमसः परे । राधालक्ष्मीयुतः साक्षाद्दृष्टो ब्रह्मपुरे ह्ययम् ॥ अनेकभूतिसञ्जुष्टे गोलोके राधिकेश्वरः । कृष्णमूर्तिरसावेव रासमण्डलभूषणम् ॥ नारायणमुनिर्दृष्टो गोपगोपीनिषेवितः ।' इत्यादौ । अक्षरे धाम्न्यपि सर्वदा श्रीराधादिवैशिष्ट्यं च बहुभिः सत्सङ्गिजीवनसुधासिन्ध्वादिवचनैः स्पष्टमेवावगम्यते इति त्ववधेयम् ।

इदमेवाक्षरं धाम चिदाकाशब्रह्मपुरामृतधामब्रह्मपदशब्दैरप्युक्तं तत्र तत्र—'धामाक्षरं तु यत्तस्य तद्ब्रह्मपुरमुच्यते। यदुच्यते चिदाकाशं ध्रुवमाकाशवत्सदा।' 'विमलामृतधामवास' 'तदेतत्परम धाम श्रीकृष्णस्य सनातनम्। गोलोक इति यत्प्राहुर्गोपगोपीगणावृतम्॥ तन्मध्येऽस्ति महत्तेज कोटिकोट्यर्कभासुरम्। मनोहरमतिश्वेत घन सच्चित्सुखात्मकम्॥ यदाहुरक्षरं ब्रह्म सर्वाधार तथामृतम्॥''परम याति तद्धाम यद्ब्रह्मेत्याहुरागमा।' 'प्राप्स्यन्त्येव हि तत्पदम्' इत्यादौ। इदमेव गोलोकस्थमक्षरं धाम वैकुण्ठशब्देनाप्युच्यते इति वर्णित 'मोक्त नामान्तरेण च' इति। तथा च शिक्षापत्र्या 'कृष्णकृष्णावताराणा' इति श्लोकटीकायां अक्षरधाम्नोऽनेकपर्यायनामान्तरप्रदर्शनपूर्वकं 'एतदेव धाम वैकुण्ठशब्देनाप्युक्तम्' इत्युक्तं शतानन्दमुनिना सप्रमाणम्।

श्रीभाष्यकारैरपि परमपदपरमाकाशचिदाकाशाक्षरवैकुण्ठादिशब्दैर्भगवद्धाम वर्णितं—'अक्षरपरमव्योमनिलय' 'चिद्व्योमनिलयः' 'परमस्वपद' 'वैकुण्ठनाथ' इत्यादौ।

क्वचिदक्षरब्रह्मचिदाकाशादिशब्देन दिव्यप्रकृत्याख्या नित्यविभूतिः क्वचिच्च तद् वर्तितिं भगवद्भवनादि विवक्ष्यते यथासन्दर्भमित्यप्यवधेयम्।

सत्यप्यप्राकृतभुवनानन्त्ये सर्वत्रैक एव भगवान् सर्वेश्वरः सर्वस्वामी पुरुषोत्तमो नारायणः श्रीकृष्णो गोलोकवर्त्यक्षरधामाधिप राधालक्ष्म्यादिमहिषीनन्दसुनन्दगरुडविष्वक्सेनप्रभृतिपार्षदपरिवारयुक्त ऐच्छिकभुजायुधादिविकल्पवान् नित्यमुक्तान् तत्तद्रुचिभेदानुगुणमानन्दयन् विराजते इति धामिन एकत्वमपि व्यक्तं साम्प्रदायिकग्रन्थेषु—'चतुर्भुज चाष्टभुज स सहस्रभुज तथा। धामान्तरेषु रूपं स्वं धृत्वास्ते च पृथक् पृथक्॥ 'आत्माऽहं पर-

मात्मासौ साक्षात्कृष्णः परात्परः । अनन्तकोटिब्रह्माण्डाधीशो राधारमेश्वरः ॥ गोलोकवैकुण्ठबृहत्पुरश्वेतादिधामपः ।' इति । गोलोकान्तर्वर्त्यक्षरधाम्न्येव च भक्तेच्छानुगुण्येन कदाचिच्चतुर्भुजादि-रूपेण दर्शनं ददातीति च व्यक्तं सत्सङ्गिजीवने—'स च तेषु स्वभ-क्तेषु दिदृक्षा स्वस्य यादृशी । येषां स्यात्तादृशं तेभ्यो दर्शनं स्वं ददाति हि ॥ केचिच्चतुर्भुजं केचित्पश्यन्त्यष्टभुजं तथा । केचि-त्सहस्रबाहुं तं तस्मिन् बृहति धामनि ॥' इति । यथा स्थानैक्ये रूपभेदेऽपि न धर्मिभेदः एवं स्थानभेदेऽपि न धर्मिभेदः सौभर्यादेरिव कायव्यूहाधिष्ठातुः । अयमेवाशयः 'चतुरादिभुजत्वं च द्विबाहो-स्तस्य चैच्छिकम्' इत्यनुशासता श्रीहरिणा प्रकटीकृतः । अत एव सर्वधामाधिपश्रीकृष्णानन्यतया श्रीहरिकृष्णस्यापि 'गोलोकरमणः, वैकुण्ठनायकः, अक्षरस्थः, महाक्रीडः' इत्यादीनि नामानि शुभानि प्रथन्तेतराम् । अत एव च धामभेदानादरेण श्रीकृष्णसेवनात्मैक-पुरुषार्थान्वय एव वर्णितः श्रीहरिगीतायां—'गोलोके वाऽक्षरे धाम्नि वैकुण्ठे वापि भक्तराट् । कृष्णस्य वर्ततेऽखण्डं सेवायां शर्म-वन्दितः ॥ तेन कृष्णेन दत्तानि ह्यनन्तान्यक्षयाणि च । तत्र दिव्यानि सौख्यानि प्राप्नोति जननि ! ध्रुवम् ॥' इति । तस्मात् धामानन्त्ये सर्वेषां भक्तानामर्चिरादिकया गत्यैकस्मिन्नेव धाम्नि भग-वदुपसम्पदनानन्तरं आविर्भूतस्वस्वरूपाणां यथेष्टं तत्तल्लोके भगवत्से-वारागानुभवलक्षणा मुक्तिसाम्राज्यलक्ष्मीरप्रतिहतेति तु परमार्थः ।

मायातत्कार्यकथनालीलाभूतिर्निरूपिता ।
पररूपप्रसङ्गेन नित्या भूतिश्च वर्णिता ॥
विभूतिद्वयनाथोऽसौ श्रीकृष्णः पुरुषोत्तमः ।
प्रभुः सर्वस्य जगतः स्वामी नारायणः स्मृतः ॥

इति ईश्वरपरिच्छेदः ।

---

## सम्प्रदायपरिचयः।

प्रावर्तयत्सम्प्रदायमौद्धवाख्यं यमादरात्।
स्वामिनारायणः साक्षाद्धरिस्तद्रीतिरुच्यते॥

प्रत्यक्षेण भगवता श्रीस्वामिनारायणेन प्रवर्तितोऽयं सम्प्रदाय उद्धवसम्प्रदाय इत्याख्यायते स्वामिनारायणसम्प्रदाय इति च प्रवन्धकनाम्ना प्रवर्तकनाम्ना च। तत्र 'सम्प्रदीयते' इति सम्प्रदायो गुरुपरम्परागतः सदुपदेशः। स चायं गुरुपरंपरागर्भः। 'सम्प्रदायो गुरुक्रमः' इत्यत्र तु सदर्थोपदेष्टृगुरुपरम्परा सम्प्रदायशब्दार्थ उच्यते। विशेष्यविशेषणभावे व्यत्यासमात्रम्। विवक्षितार्थस्त्वनुगत एव। सम्यक्त्वं नाम दाने गुरुपरंपरागतत्वलक्षणम्। प्रकर्षश्च वेदवेदान्तार्थगोचरत्वरूपः। वैष्णवमन्त्राद्युपदेशस्यैव निःश्रेयससाधनत्वलक्षणप्रकर्षवत्त्वमभिप्रेत्य चैव निरुक्तः सम्प्रदायशब्दः—'मन्त्रादीनां श्रीहरेर्यद्गुरुशिष्यक्रमागतम्। सम्यक् प्रकर्षवद्दानं सम्प्रदायः स उच्यते॥' इति। गुरुपरंपरोपदेशप्राप्तस्यैव मन्त्रस्य सर्वफलसाधनत्वमन्यस्य निरर्थकत्वं च स्मर्यते—'धर्मार्थकाममोक्षाणामालयः साम्प्रदायिकः। सम्प्रदायविहीना ये मन्त्रास्ते निष्फला मताः॥' इति। अत एव श्रुतिस्मृत्योराचार्यत एव मन्त्रविद्याग्रहणं निःश्रेयससाधनमुच्यते—'आचार्यवान् पुरुषो वेद। तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्ये।' 'आचार्याद्धैव विद्या विदिता साधिष्ठं प्रापयति'। 'तस्माद्गुरुं प्रपद्येत जिज्ञासुः श्रेय उत्तमम्। शाब्दे परे च निष्णातं ब्रह्मण्युपशमाश्रयम्॥' 'पुस्तकप्रत्ययाधीतं नाधीतं गुरुसन्निधौ। भ्राजते न सभामध्ये जारगर्भ इव स्त्रियाः॥' इत्यादौ। तथा गुरूपदेशप्राप्तकृष्णमन्त्रतो वैष्णवत्वं वैष्णवस्यैवाचार्यत्वाधिकारश्च स्मर्यते—'कृष्णमन्त्रो

द्विजमुखाद्यस्य कर्णं प्रविशति। तं वैष्णवं जगत्पूतं प्रवदन्ति पुराविदः॥ महाकुलप्रसूतोऽपि सर्वयज्ञेषु दीक्षितः। सहस्रशाखाध्यायी च न गुरुः स्यादवैष्णवः॥ अवैष्णवोपदिष्टेन मन्त्रेण नरकं व्रजेत्। पुनश्च विधिना सम्यक् गृह्णीयाद्वैष्णवाद्गुरोः॥ आचार्यं संश्रयेत्पूर्वं अनिन्द्यं वैष्णवं द्विजः। शुद्धसत्त्वगुणोपेतं नवेज्याकर्मकारकम्॥ सत्सम्प्रदायसंयुक्तं मन्त्ररत्नार्थकोविदम्। ज्ञानवैराग्यसंपन्नं वेदवेदाङ्गपारगम्॥ शासितारं सदाचारैः सर्वधर्मविदांवरम्। महाभागवतं विप्रं सदाचारनिषेविणम्॥ आलोक्य सर्वशास्त्राणि पुराणानि च वैष्णवः। तदर्थमाचरेद्यस्तु स आचार्य इतीरितः॥' इति।

सम्प्रदायघटकगुरुपरम्परानिष्ठाभूतश्च श्रीमन्नारायण एव। तथा च वचनानि—'पितासि लोकस्य चराचरस्य त्वमस्य पूज्यश्च गुरुर्गरीयान्' 'चराचरगुरुं हरिम्' 'ममाप्यखिललोकानां गुरोर्नारायणो गुरुः' 'हरिं गुरुं यज्ञभुजामधीश्वरम्' 'प्रसन्नो भगवान् येषामपवर्गगुरुर्हरिः' इत्यादीनि। अत एवाचार्यपरम्परया आभगवतोऽनुसन्धेयत्वं श्रूयते 'स चाचार्यवंशो ज्ञेयः, आचार्याणामसावसावित्याभगवत्तः' इति। सत्सम्प्रदायत एव वेदवैदिकसनातनधर्मब्रह्मविद्यादेरविच्छेदस्रोतोवृत्त्या प्रवृत्तिरिति चापरोक्षमेव। सचायं सम्प्रदायो बहुधा गुरुशिष्यपारम्पर्यक्रमेण भगवतः प्रवर्तमानः पारम्पर्यघटकातिशयितवैभवव्यक्तिविशेषाधिष्ठानविशेषेण बहुधा व्यपदेशमभजत् रामानुजसम्प्रदायो वल्लभसम्प्रदायो मध्वसम्प्रदाय इत्यादिरूपतः। एवमेवोद्धवाधिष्ठानविशेषितः प्रथते स्वोद्धवसम्प्रदाय इति।

एतत्सम्प्रदायघटकगुरुपरम्पराया ज्ञेयत्वं च स्वयमेवावोचच्छ्री-

हरि । यथा सुधासिन्धौ वृत्तालयप्रकरणे अष्टादशतरङ्गे—'सम्प्रदा-यस्तथाभीष्टग्रन्था गृहिसता कृपा । इष्टदेवश्चेति सम्यक् बोध्य सत्सङ्गिपुरुषै ॥ तत्राद्य सम्प्रदायस्तु स्वगुरूणा परम्परा । गुरुस्तत्रादिमो ज्ञेय उद्धवोऽध्वप्रवर्तनात् ॥ बोध्य: स रामानन्दो हि कृष्णार्पितगुरुत्वधू । स्वामिनस्तस्य च ज्ञेय साक्षाद्रामानुजो गुरु ॥ श्रीरङ्गाख्ये महाक्षेत्रे समाधौ स गुरोस्तत । प्राप्तवान् वैष्णवीं दीक्षा तस्य शिष्यो भवाम्य-हम् ॥ मयाऽयोध्याप्रसादे च रघुवीरे सुते स्विका । धर्म-वश्येऽस्ति निहिता गुरुतेति गुरुक्रम ॥' इति । उद्धवस्य कृष्णा-र्पितगुरुत्वधूर्वहत्व श्रीकृष्णाज्ञया बदरीवनगमन च भागवत उक्त—'ब्रह्मशापापदेशेन कालेनामोघवाञ्छित । संहृत्य स्वकुल स्फीत त्यक्ष्यन् देहमचिन्तयत् ॥ अस्माल्लोकादुपरते मयि ज्ञान मदाश्रयम् । अर्हत्युद्धव एवाद्धा सम्प्रत्यात्मविदा वर ॥ नोद्धवोऽण्वपि मन्न्यूनो यद्गुणैर्नार्दित प्रभु: । अतो मद्वयुन लोक ग्राहयन्निह तिष्ठतु' ॥' 'एव त्रिलोकगुरुणा सन्दिष्ट शब्दयोनिना । बदर्याश्रममासाद्य हरिमीजे समाधिना ॥' इति ।

बदरिकाश्रमे चोद्धवेन ससेव्यमानचरणनलिनस्य नरना-रायणस्य सदर्शनार्थं मरीच्यादीना धर्मप्रजापतेश्च समू-र्तिकस्य समागमन, ऋष्युक्तासुरधर्मगुरुश्रवण श्रायाचर्यमाण-साधुधर्मद्रोहपरिजिहीर्षोद्भवसङ्कल्पस्य नारायणस्य छन्दतो दुर्वा-सस समागमन, नारायणवार्ताश्रवणतत्परस्य सर्वस्य सभास-दलोकस्यानवधानेन कुपितस्य दुर्वासस शापसिषतश्च मरीच्यादेर्म-हर्षिगणस्य स्वपित्रोश्च धर्ममूर्त्योर्द्विजातिषु प्रादुर्भावाज्ञापन, उद्धवस्य च पूर्वमेव कृष्णरूपस्यार्पितगुरुपदस्याचार्यरूपेण प्रकटीभावप्रेरण,

स्वभक्तधर्मरक्षणायासुराधर्मविनाशाय च प्रादुर्भूयोद्धवशिष्यतामनुभूय सद्धर्मप्रवर्तनादिलीलायाः स्वेन करिष्यमाणायाः प्रतिपादनं चैतत्सम्प्रदायोपोद्घातरूपम्।

तथैवोद्धवस्य रामानन्दरूपेण प्रादुर्भूयाचार्यपदमधिष्ठाय कृष्णभक्तिप्रवर्तनं, भगवतश्च धर्मभक्तिभ्यां हरिकृष्णसमाख्यया प्रादुर्भूय रामानन्दस्वामिनः सकाशात्प्राप्तदीक्षागुरुपदस्यौद्धवाध्वप्रवर्तकत्वं, मरीच्यादेश्च साधुवर्ण्यादिवेषेण प्रत्यक्षस्य भगवतोऽनुवर्तनप्रकारः, आसुरप्रकृतिनिरसनपूर्वकमैकान्तिकधर्मप्रवर्तनं च साम्प्रदायिकग्रन्थेषु स्पष्टतरमुपापादि। हरिवाक्यसुधासिन्धौ यथा—'महर्षयो मरीच्याद्या एकदा बदरीवने। दर्शनार्थमुपाजग्मुर्नरनारायणप्रभोः॥' (उपोद्घात. श्लोक २९ तः ४८ पर्यन्तम्) इत्यादिना।

सत्सङ्गिजीवनेऽपि श्रीहरिकृतं स्वस्य रामानन्दस्वामिसकाशाद्दीक्षागुरुपदप्राप्तिप्रकारवर्णनं 'कः सम्प्रदायस्तव को विष्णुदीक्षाप्रदो गुरुः' इति शिवरामद्विजकृतप्रश्नोत्तरतयोपनिबद्धम्। 'चिन्तयन् कृष्णमेवैकमहं तीर्थानि भूरिशः। सेवमानो रैवतकं सौराष्ट्रेष्वाप्तवान् गिरिम्॥ उपत्यकासु तस्याहं ग्रामे पिप्पलसंज्ञके। रामानन्दस्वामिसंज्ञमपश्यं वैष्णवेश्वरम्॥' 'व्युत्थायाथास्य शिष्यत्वं प्राप्तोऽहं द्विजसत्तम। सहजानन्द इति मे नाम कृत्वा स आह माम्॥ महतो बाल्पकात्पुंसो गुणः सारश्च शास्त्रतः। दत्तात्रेयवदादेय इति मेऽनुग्रहं व्यधात्॥' 'स गुरुर्मम विप्रेन्द्र साक्षादुद्धव एव हि। कृष्णादप्यणुरन्यूनः कृष्णभक्तिप्रवर्तकः॥ तदाश्रितानथावोचं तत्र सर्वांश्च वैष्णवान्। एष नः सद्गुरुः साक्षादुद्धवोऽस्ति स्वयं किल॥ अतो नः सम्प्रदायोऽयं सर्ववैष्णवसम्मतः। औद्ध-

घाख्योऽस्तिनति श्रुत्वा तथोचुस्तेऽखिला अपि ॥ स गुरुर्मयि सन्न्यस्य निजधर्मधुरं प्रभुः । तिरोदधे तत्प्रतापान्मया सैवोह्यतेऽधुना ॥' इति ।

श्रीरामानन्दस्वामिना श्रीहरये दीक्षाप्रदानं, सहजानन्दस्वामी नारायणमुनिरिति च दीक्षाङ्गनामकरणं, स्वीयाचार्यपदे तस्य प्रतिष्ठापनं च सत्सङ्गिजीवने प्रथमप्रकरणे द्रष्टव्यम् । तत्रैव स्वीयाचार्यपदप्रतिपादनसमये रामानन्दस्वामिनः श्रीहरिं प्रति समादेशः—'नारायणमुने धीमन् शृणु मद्वाक्यमादरात् । श्रुत्वा च तत्तथैव त्वं कर्तुमर्हसि सर्वथा ॥ एते मदाश्रिताः सन्ति कृष्णभक्ता नराः स्त्रियः । स्थापनीयास्त्वया धर्ममर्यादायां तु तेऽखिलाः ॥ श्रीवासुदेवमाहात्म्यं यत्त्वया पठ्यतेऽन्वहम् । वर्णाश्रमवतां धर्मास्तत्र स्त्रीणां च सन्ति हि ॥ यथाधिकारं तेष्वेव स्थापनीयास्त्वया जनाः । ग्राह्यं श्रीविठ्ठलेनोक्तं कृष्णसेवनवर्त्म तु ॥ व्रतानामुत्सवानां च सर्वेषां राधिकापतेः । प्रवर्तनीयस्तत्प्रोक्तो निर्णयो वैष्णवोचितः ॥ सम्प्रदाये स्थितिः पूर्वमासीद्रामानुजस्य मे । उपद्रवो महांस्तत्र वैष्णवैर्मत्सराकृतः ॥ ततो हित्वा चाह्यमेव तद्धर्मेदं मया भुवि । नूत्नं प्रवर्तितं वर्त्म सच्छास्त्राण्यनुसृत्य वै ॥ अध्यात्मज्ञानसिद्ध्यै तु रामानुजकृता मया । ग्रन्थाः संस्थापिताः सन्ति कृष्णोपासनपोषकाः ॥ अतो रूपाणि निश्चेतुं जीवमायापरात्मनाम् । रामानुजाचार्यकृतभाष्यादि त्वं प्रवर्तये ॥ इत्याज्ञां मम पाल्यां ते सर्वशास्त्रार्थवेदिनः । त्वमेक एव मत्स्थाने स्थातुमर्होऽसि साम्प्रतम् ॥ यस्मिन्दिने भवान् दृष्टस्तत आरभ्य मे त्वयम् । मनोरथो भवति तं त्वं पूरयितुमर्हसि ॥' इति । अनेन

च बाह्यचिह्नेषु ऊर्ध्वपुण्ड्रसन्निवेशकण्ठमालिकादिषु भेदो रामानुजसंप्रदायात्, न तु तत्त्वांश इति ज्ञायते।

बाह्यचिह्नेषु भेदकल्पनमपि सत्यामावश्यकतायां नूत्नवर्त्मप्रवर्तनविषयकरामानुजगुर्वनुमतिपूर्वकं श्रीकृष्णाज्ञामूलकं चेति हरिदिग्विजये प्रतिपादितम्। तत्र ह्युद्धवावतारस्य रामशर्मण आजन्मसिद्धकृष्णभक्तेः कृष्णदर्शनलालसतया गृहान्निर्गतस्य रैवताचले आत्मानन्दयोगिनः सकाशाल्लब्धयोगविद्यस्यापि योगे तेजोमात्रनिरीक्षणेनातृप्तस्य साकारब्रह्मप्रतिपादकगुर्वन्वेषणया श्रीरङ्गप्राप्तिर्वर्णिता। यथा—'तेज एव हि कृष्णोऽस्तीत्युक्तस्तेनापि सोऽन्तरे। तुष्टिमप्राप्य तं नत्वा श्रीरङ्गक्षेत्रमाययौ॥' इति। अथ च तत्र रहसि निध्यायतोऽस्य समाधौ प्रादुर्भूय रामानुजस्वामिभिरस्मै दीक्षा प्रदत्ता। कृतश्च स्वसम्प्रदायस्थवैष्णवकृतोपद्रवप्रसङ्गे नूत्नवर्त्मप्रवर्तनादेशः। तथा विशेषाकाराश्च नूत्नवर्त्मनः प्रतिपादिता इति वर्णितम्। यथा—'तत्र ध्यायन् कृष्णमेव निषण्णो रहसि क्वचित्। साक्षाद्रामानुजाचार्यं वैष्णवेन्द्रमवैक्षत॥ कृष्णाप्तिहेतुं स प्राप्य तस्माद्दीक्षां च वैष्णवीम्। साक्षात्कृष्णेक्षणायैनं प्रार्थयत्स तदाह तम्॥ न त्वं साधारणो मर्त्यः कृष्णैकान्तिक उद्धवः। न प्राकृतमनुष्यस्य जायते दर्शनं मम॥ सम्प्राप्तो वैष्णवीं दीक्षां भज कृष्णं द्वयं जपन्। ततः प्रीतः स ते कृष्णः साक्षाद्दास्यति दर्शनम्॥ रामानन्द इति ख्यातो वर्णीन्द्रो वैष्णवोत्तमः। स्वधर्मदृढनिष्ठस्त्वं मुमुक्षून् बोधयंश्चर॥ मत्तो दीक्षां प्राप्तमपि त्वां मदध्वस्थवैष्णवाः। क्लेशयिष्यन्ति धर्मिष्ठं मानमत्सरिणो ध्रुवम्॥ उपद्रवं यदा कुर्युस्ते तदा त्वं ततः पृथक्। भूत्वा प्रवर्तयेः स्वीयं सम्प्रदायं

मदाज्ञया ॥ पञ्च चत्वारि वा कुर्याः सौम्यपुण्ड्राणि तत्र च । श्रीस्थाने चन्द्रकं कुर्या ललाटादिषु शोभनम् ॥ स्वकण्ठ-परिवर्तिन्यौ स्रजौ सूक्ष्ममणी उभे । धारये सर्वदैयेति मेदोऽसत्सम्प्रदायत ॥ इत्युक्त्वाऽन्तर्दधे साक्षाद्यतीन्द्र" सोऽथ विस्मित । लब्ध समाधौ त साक्षात्प्रणम्य व्यचरत्क्षितौ ॥" इति ।

अथ च रामानुजाचार्यैर्लब्धदीक्षस्य रामानन्दस्य तत्र तत्र तत्सम्प्रदायप्रवर्तन एतस्य ज्ञानवैराग्यादिसम्पत्त्यतिशयाद्बहूनामेव समाश्रयणमेतद्वैभवयशःप्रसृतिमसहमानै श्रीवैष्णवजनैः कृत विविधपीडनादि पर्यालोच्य परित्यज्य बाह्यलिङ्गमस्य वृन्दावन प्रति गमनमुक्तम् । तत्र चैवत्कृतार्चनादिना प्रसन्नस्य श्रीकृष्णस्य प्रत्यक्षी भूय नूतनाध्वप्रवर्तनप्रेरण, स्वस्य च नरनारायणाश्रमे दुर्वास कृत-शापव्याजेन साधुपरित्राणायावतीर्णैतत्समागमकरणीयताप्रतिपादनमेतस्मै स्वमन्त्रद्वयोपदेशन च प्रत्यपादि—'अलक्ष्यलिङ्ग स ततो वृन्दावनमुपागमत् । वसंस्तत्राभजत्कृष्ण स्वस्थो भूत्वा महामतिः ॥ श्रीकृष्णमाराधयतस्तस्य भक्त्याऽनुवासरम् । साक्षात्कृष्णेक्षणमभूत्समाधौ स्वाभिवाञ्छितम् ॥ तमाह भगवान् प्रीत स्वमेद विनयानतम् । मम प्रियोऽसि भो वर्णिन् दुर्जनैस्त्वमुपद्रुत ॥ तच्चिन्ता नैव कर्तव्या क्षय यास्यन्ति ते द्रुतम् । त्वमुद्धवोऽसि मे भक्तो नरोऽस्यात्रेयशापत ॥ सम्प्रदायं नवीन त्व भिन्न रामानुजाध्वन । प्रवर्तय त्वयि मम प्रीतिरस्त्येव भूयसी ॥ मन्त्रद्वय गृहाणेद मदीय त्वमुपादिशे । स्वशिष्येभ्योऽथ मन्त्रर्किं धर्मोपेता प्रवर्तय ॥ नारायणर्षिरूपस्य मम ते च सहर्षिभिः । शापो जातोऽस्त्यतोऽहं च भविष्यामि नरो

भुवि ॥ सौराष्ट्रदेशे भविता सङ्गमो मे त्वया सह । अतस्तीर्थानि विचरंस्तत्र गत्वा सुखं वस ॥ मुमुक्षवो हि बहवस्तत्र सन्ति तथाऽन्यतः । आयास्यन्तीति तान्सर्वान् मद्भक्तिं त्वमुपादिशेः ॥ इत्युक्त्वा स मनुद्धन्द्वं तस्मै दत्वा तिरोदधे । अपश्यंस्तमसौ सद्यः समाधेर्व्युत्थितोऽभवत् ॥' इति ।

ततः श्रीकृष्णानुग्रहतः कृष्णं प्रत्यक्षतोऽनुभवतः समाधिपूजनादौ, दुर्वासःशापनिमित्तं पीडनादिकमनुसन्धाय समाहितचेतस एतस्य श्रीकृष्णनिदेशतो नूत्नाध्वप्रवर्तनप्रकारः समनुवर्णितः—'साक्षात्कृष्णेक्षणानन्दो निराधिश्च स वर्णिराट् । कृष्णेच्छयैव स्वमवैदुद्धवं तस्य सेवकम् ॥ दुर्जनोपद्रवं तं च दुर्वासःशापसम्भवम् । ज्ञात्वा खेदमकुर्वाणो भेजे कृष्णं सुखाम्बुधिम् ॥ ततो हिताय जीवानां कृष्णेनाज्ञापनं कृतम् । तदेव सर्वथा कार्यमित्यन्तर्निश्चिकाय सः ॥ सच्छास्त्रसारमादाय कृष्णवाक्यानुसारतः । बबन्ध सम्प्रदायं स्वधर्मयुग्भक्तिलक्षणम् ॥' इति । दीक्षायां श्रीराधाकृष्णमन्त्रोपदेशः सचन्द्रकोर्ध्वपुण्ड्रधारणं गोपीचन्दनेन द्विसरसूक्ष्मतुलसीमणिमालिकायाः सदा कण्ठधार्यत्वं चेत्यादिरेतत्सम्प्रदायस्य विशेषः ।

विशेषाश्चात्रत्याः प्रोक्ताः शिक्षापत्र्यां सङ्ग्रहतः 'देवतापितृयागार्थमप्यजादेश्च हिंसनम् । न कर्तव्यमहिंसैव धर्मः प्रोक्तोऽस्ति यन्महान् ॥ न भक्ष्यं सर्वथा मांसं यज्ञशिष्टमपि क्वचित् । न पेयं च सुरामद्यमपि देवनिवेदितम् ॥ देवतायै भवेद्यस्यै सुरामांसनिवेदनम् । यत्पुरोजादिहिंसा च न भक्ष्यं तन्निवेदितम् ॥ दृष्ट्वा शिवालयादीनि देवागाराणि वर्त्मनि । प्रणम्य तानि तद्देवदर्शनं कार्यमादरात् ॥

भक्तिं वा ज्ञानमालम्ब्य स्त्रीद्रव्यरसलोलुपा । पापे प्रवर्तमाना स्यु कार्यस्तेषा न सङ्गम ॥ कृष्णकृष्णावतारणा खण्डन यत्र युक्तिभि । कृत स्यात्तानि शास्त्राणि न मान्यानि कदाचन ॥ धर्मेण रहिता कृष्णभक्ति कार्या न सर्वथा । अज्ञनिन्दाभयान्नैव त्याज्य श्रीकृष्णसेवनम् ॥ उत्सवाहेषु नित्य च कृष्णमन्दिरमागतै । पुम्भि स्पृश्या न वनितास्तत्र ताभिश्च पूरुषा ॥ कृष्णदीक्षा गुरो प्राप्तैस्तुलसीमालिके गले । धार्ये नित्य चोर्ध्वपुण्ड्र ललाटादौ द्विजातिभि ॥ ('चक्रादिमुद्राधारणमपि वैष्णवाना निजवंशात्समुन्नीयते' इति टीका ।) तत्त गोपीचन्दनेन चन्दनेनाथवा हरे । कार्य पूजावशिष्टेन केसरादियुतेन च ॥ तन्मध्य एव कर्तव्य पुण्ड्रद्रव्येण चन्द्रक । कुङ्कुमेनाथवा वृत्तो राधालक्ष्मीप्रसादिना । सच्छूद्रा कृष्णभक्ता ये तैस्तु मालोर्ध्वपुण्ड्रके । द्विजातिवद्धारणीये निजधर्मेषु सस्थितै ॥ भक्तैस्तदितरैर्माले चन्दनादीन्धनोद्भवे । धार्ये कण्ठे ललाटेऽथ कार्य केवलचन्द्रक ॥ त्रिपुण्ड्ररुद्राक्षधृतिर्येषा स्यात्स्वकुलागता । तैस्तु विप्रादिभिः क्वापि न त्याज्या सा मदाश्रितै ॥ (स्वकुलक्रमागत त्रिपुण्ड्रधारणादि वैष्णवराजशङ्करलिङ्गत्वान्न स्वाश्रयणविरोधीति हार्दं हरे ) ऐकात्म्यमेव विज्ञेय नारायणमहेशयोः । उभयोर्ब्रह्मरूपेण वेदेषु प्रतिपादनात् ॥ (अत्र नारायणो विष्णववतारो बोध्य ) आचार्येणैव दत्त यत् यच्च तेन प्रतिष्ठितम् । कृष्णस्वरूप तत्सेव्य वन्द्यमेवेतरत्तु यत् ॥ भगवन्मन्दिर सर्वै साय गन्तव्यमन्वहम् । नामसङ्कीर्तन कार्य तत्रोच्चै राधिकापतेः ॥ एकादशीना सर्वासा कर्तव्य व्रतमादरात् । कृष्णजन्मदिनाना च शिवरात्रे-

श्च सोत्सवम् ॥ सर्ववैष्णवराजश्रीवल्लभाचार्यनन्दनः । श्रीविठ्ठलेशः कृतवान् यं व्रतोत्सवनिर्णयम् ॥ कार्यास्तमनुसृत्यैव सर्वे एव व्रतोत्सवाः । सेवारीतिश्च कृष्णस्य ग्राह्या तदुदितैव हि ॥ विष्णुः शिवो गणपतिः पार्वती च दिवाकरः । एताः पूज्यतया मान्या देवताः पञ्च मामकैः ॥ (अत्र विष्णवङ्गतया समर्चनीयत्वादितरेषां नैकान्त्यभङ्गप्रसङ्ग इति भाष्यम्) भूताद्युपद्रवे क्वापि वर्म नारायणात्मकम् । जप्यं च हनुमन्मन्त्रो जप्यो न क्षुद्रदैवतः ॥ हृदये जीववज्जीवे योऽन्तर्यामितया स्थितः । ज्ञेयः स्वतन्त्र ईशोसौ सर्वकर्मफलप्रदः ॥ स श्रीकृष्णः परंब्रह्म भगवान् पुरुषोत्तमः । उपास्य इष्टदेवो नः सर्वाविर्भावकारणम् ॥ तस्यैव सर्वथा भक्तिः कर्तव्या मनुजैर्भुवि । निःश्रेयसकरं किञ्चित्ततोऽन्यन्नेति दृश्यताम् ॥ गुणिनां गुणवत्ताया ज्ञेयं ह्येतत्परं फलम् । कृष्णे भक्तिश्च सत्सङ्गोऽन्यथा यान्ति विदोऽप्यधः ॥ कृष्णस्तदवताराश्च ध्येयास्तत्प्रतिमापि च । न तु जीवा नृदेवाद्या भक्ता ब्रह्मविदोऽपि च ॥ निजात्मानं ब्रह्मरूपं देहत्रयविलक्षणम् । विभाव्य तेन कर्तव्या भक्तिः कृष्णस्य सर्वथा ॥ मतं विशिष्टाद्वैतं मे गोलोको धाम चेप्सितम् । तत्र ब्रह्मात्मना कृष्णसेवा मुक्तिश्च गम्यताम् ॥' इति ॥ (विवरणं तु टीकाभाष्ययोर्बोध्यम्)

दीक्षायामुपदेश्यस्य कृष्णमन्त्रद्वयस्य द्वयमन्त्रैकार्थ्यं च पूर्वमेवोक्तम् । सत्स्वपि कतिपयविशेषेषु गुरुपरंपरायां प्रथमतया रामानुजस्वामिनः परिगणनात् 'मतं विशिष्टाद्वैतं मे' इति मुक्तकण्ठं प्रतिपादनाच्च रामानुजसम्प्रदायानुगतत्वमेव स्वप्रवर्तितस्योद्धवसम्प्रदायस्य श्रीहरिकृष्णभगवदभिमतमित्यन्यत्र विस्तरः । सोऽयमुद्धव-

सम्प्रदायशब्दार्थं स्फुटमुपवर्ण्यते । यथा—'कृष्णाल्लब्धप्रबोधो जगदुपकृतये तन्निदेशानुसारात् श्रीरामानन्दरूपः पुनरपि धरणावुद्धवः प्रादुरासीत् । स श्रीकृष्णश्च भूयः प्रकटितसहजानन्ददिव्यस्वरूपस्तं मेने स्वं गुरुं यत्तदयमिति मतो ह्यौद्धवः सम्प्रदायः ॥' इति ।

उद्धवावतारश्रीरामानन्दस्वामिना व्यवस्थापितश्चायं सम्प्रदायः श्रीस्वामिनारायणेन साक्षाद्भगवता विश्वतोमुखतया प्रवर्तितत्वादेव प्राग्नैव प्रसिद्धिभूमानमगमत्तमाम् । अथ चैतत्प्रादुर्भावप्रकारं प्रपञ्चयामः समासोक्त्यैव ।

## हरिकृष्णप्रादुर्भाववर्णनम् ।

श्रीकृष्ण एव यावदासुरराक्षसप्रकृतिकैर्नृपधर्मगुरुभूमिकाधरैः प्रतिहते धर्मपथेऽखिलजीवकल्याणकारिणि परमवैदिकेऽधर्मप्रवर्तने चाधिक्रियमाणे धर्मसिषेण प्रसृतेऽपि प्रबले कलौ स्वीयेनैव सर्वैश्वर्यजुष्टेन रूपेण प्रकटीबभूव पुनर्धर्माद्रूपिमातृतः स्वैकान्तिकभक्तजनानवितुं धर्मद्रुहोऽभिभवितुं च । अयं च हरिकृष्णः हरिः कृष्णः घनश्यामः सहजानन्दस्वामी नारायणमुनिः स्वामिनारायण इत्यादिभिर्दिव्यनामभिः पप्रथेतराम् । एतत्प्रादुर्भावश्च 'अन्योऽपि धर्मरक्षायै देहः संध्रियते मया । विरामायाप्यधर्मस्य काले प्रभवतः क्वचित् ॥' इति श्रीकृष्णवचनात्समसूचि । विवृतश्चैतत्प्रादुर्भावविषयतयैवाऽयं श्लोको गूढार्थदीपिकाप्रकरणग्रन्थो गोपालानन्दस्वामिभिः भगवत्प्रसाक्षाच्यार्यैश्च । तथा 'कलौ खलु भविष्यन्ति नारायणपरायणाः' इति वचनमेतत्प्रादुर्भावाश्रितभक्तजनताविषयं च विवृतं तत्रैव ॥ वासुदेवमाहात्म्ये चाथ प्रादुर्भावोऽभिव्यञ्जितः—'मया कृष्णेन निहता सार्जुनेन रणेषु ये ।

प्रवर्तयिष्यन्त्यसुरास्ते त्वधर्मं यदा क्षितौ ॥ धर्मदेवात्तदा मूर्तौ नरनारायणात्मना । प्रवृत्तेऽपि कलौ ब्रह्मन् भूत्वाहं सामगो द्विजः ॥ मुनिशापान्नृतां प्राप्तं सर्षिं जनकनात्मनः । ततोऽविता गुरुभ्योऽहं सद्धर्मं स्थापयन्नज ॥' इति । सुधासिन्धोरुपोद्घात एतत्प्रादुर्भावरीतिः समनुवर्णिता नाम—'अस्ति श्रीमति गोलोके सर्वलोकविभूषणे । नित्याविर्भूतममलं कार्ष्णं धामोत्तमोत्तमम् ॥ श्रीकृष्णो भगवांस्तत्र सदा स्वामी विराजते । सप्रेम राधालक्ष्मीभ्यामर्च्यमानपदाम्बुजः ॥ भगवानात्मनात्मा वर्षे स भुवि भारते। प्रादुर्भवति सद्धर्मरक्षायै च युगे युगे ॥ साम्प्रतं च कलेः प्राप्य बलं भुवि समेधितैः । असुरांशगुरुक्ष्मेशैः क्लिष्टं धर्मं सुरक्षितुम् ॥ अधर्मं चोन्मूलयितुं पातुं भक्तानृषींश्च सः । निजभक्तिं प्रथयितुं सर्वाभीष्टप्रदां पराम् ॥ स्वदिव्यमूर्तौ जनताचेतसां च समाधये । सकलैश्वर्यजुष्टेन जीवकल्याणकारिणा ॥ आत्मीयेनैव रूपेण जज्ञे हरिरिति श्रुतः । जन्मकर्माणि तस्यादौ कथयामि समासतः ॥' इत्यादिना । सत्सङ्गिजीवनशास्त्रं च कृत्स्नमेतच्चरित्रामृतसम्भृतमेव सत्सङ्गिनां जीवनभूतं वरीवर्ति । तत्र च 'नारायणावतारोऽत्र हरिरस्ति गुरुर्हि नः । सहस्रशो जनैस्तस्य मया चैश्वर्यमीक्षितम् ॥' इति श्रीनारायणावताररूपत्वं श्रीहरेरुक्तं मुक्तानन्दमुनिना । तथा वादिविवादशमनपूर्वकं कलावपि श्रीविष्णोरवतारसम्भवश्च विस्तरशस्तत्रैव समर्थितः । तत्रैव श्रीहरेः प्रादुर्भाववर्णने निजेनाप्राकृतेनैव कृष्णरूपेण प्रादुर्भाव उक्तः 'गोलोक एवाक्षरधाम्नि दिव्येऽनन्ते च यादृग्रमते स नित्यम् । तं तादृशं ते ददृशुर्द्विहस्तं निनादयन्तं मुरलीं मुकुन्दम् ॥ वृन्दावने यादृश

आत्मना मागाराध्य दृष्ट परिवारयुक्त । त तत्र तौ तादृशमेव दृष्ट्वा निश्चिक्यतु कृष्ण इति स्वचित्ते ॥' इति । श्रीहरिस्तुतौ राधिकावल्लभत्वेन स्तुतिरपि श्रीकृष्णानन्यत्वमेवोपोद्बलयति–'त्व हि साक्षात्परब्रह्म राधिकारमण स्वयम् ॥' 'प्राकृततमस पारे महसि मुरलीरवकर्ता' इति । किञ्च श्रीरामानन्दस्वामिनमुद्धवरूप प्रति स्वस्य श्रीकृष्णानन्यत्व साधुधर्मरक्षणार्थं नूनाट्यानुकरणमात्र च प्रकटीकृत श्रीहरिणा । ( सत्सङ्गिजीवने प्रथमप्रकरणे ५९ अध्याये )

शिक्षापत्रीटीकायां च शतानन्दमुनिना श्रीकृष्णानन्यत्व हरिकृष्णस्य मुक्तकण्ठ प्रकटित 'स श्रीकृष्ण परब्रह्म' इति श्लोकव्याख्याने –'यः साक्षात् भगवान् क्षराक्षरपर कृष्ण स एव स्वय भक्तौ धर्मत आस भूरिकृपया श्रीस्वामिनारायण । मानुष्य भुवि नाटयन् निजजनाचार्यत्वधर्मे स्थित कृष्ण प्राह परोक्षवत्तु ततोऽन्य सोऽस्ति यत्स स्वयम् ॥' इति । श्रीकृष्णानन्यभूते चास्मिन् अवतारित्वसर्वोत्कृष्टत्वादिविषयो विस्तरश समुपवर्णितो नाम साम्प्रदायिकग्रन्थेषु । हरिदिग्विजयेऽपि कलावपि भगवदवतारसम्भवोपपादनपूर्वक विशेषत श्रीकृष्णानन्यत्व बहुभिर्युक्तिभि समर्थित श्रीहरे ( उल्लास–४२ ) श्रीकृष्णहरिकृष्णरूपयोर्विशेषोऽपि तत्रैवोक्त –'एतावास्त्वत्र भेदोऽपि ज्ञातव्य कृष्णयोर्द्वयो । एको गृही क्षत्रधर्मा वर्ण्यन्यो ब्रह्म धर्मभाक् ॥' इति ।

किञ्च श्रीकृष्णलक्ष्माणा पाद्मोक्तानां पादपद्मयो रेखारूपाणामेतस्वरकमलयोर्दर्शनादप्यस्य श्रीकृष्णानन्यत्व शक्यमभ्यूहितुम् । पाद्मवचनानि तावत् विरिञ्चिनारदसंवादे–'अवतारा

कथिता मे तवानघ। परं सम्यक् प्रवक्ष्यामि कृष्णस्तु भगवान् स्वयम् ॥ यैरेव ज्ञायते देवो भगवान् भक्तवत्सलः। तानि लक्ष्माण्यहं वेद सत्यमेतन्मयोदितम् ॥ षोडशैव तु चिह्नानि मया दृष्टानि तत्पदोः। दक्षिणे नव चिह्नानि इतरे सप्तसंख्यया ॥ ध्वजः पद्मं तथा वज्रमङ्कुशो यव एव च। स्वस्तिकश्चोर्ध्वरेखा च अष्टकोणं च जाम्बवम् ॥ इन्द्रचापस्त्रिकोणं च कलशश्चार्धचन्द्रकः। अम्बरं मत्स्यचिह्नं च गोष्पदं चेति षोडश ॥' इति। एतानि च चिह्नानि श्रीहरेश्चरणकमलयोरुपवर्णितानि सद्गुरुभिः साक्षात्कृतान्येव—'सत्स्वस्तिकादिनवलक्षणदक्षपादं मत्स्यादिसप्तकसुलक्षितवामपादम्' इति। 'कृष्णस्यैव हि दृश्यन्ते लक्ष्माण्यस्मिन्नशेषतः। ध्वजवज्राङ्कुशादीनि रेखाचिह्नानि षोडश। पादयोरस्य वर्तन्ते कृष्णस्यैव स्फुटानि हि' इति च। अन्यान्यपि चिह्नान्यधिराज्यसूचकानि तत्र तत्र निर्दिश्यन्ते नाम—'शङ्खध्वजातपत्रैश्च चिह्नितं चरणद्वयम्' (गोपालतापि-) 'चक्राङ्कितपदा तेन' (वराह) 'भृङ्गारासनवाजिकुञ्जररथश्रीवत्सचापेषुभिर्मालाकुण्डलचामराङ्कुशयवैः शैलध्वजैस्तोमरैः। मत्स्यस्वस्तिकवेदिकाव्यजनकैः शङ्खातपत्राम्बुजैः पादे पाणितले नरा नृपतितां यान्ति स्त्रियो राज्ञिताम् ॥' इत्यादौ। एतेषु कतिपयचिह्नान्येव सार्वभौमादिषु प्रायशः सम्भावितानि। सर्वाण्यपि तु सर्वेश्वर एव स्वेच्छागृहीतदिव्यमङ्गलविग्रहे सङ्गच्छन्तेतराम्।

श्रीभागवतादौ च उपलक्षणतया कतिपयानि चिह्नान्युपवर्णितानि भगवतश्चरणारविन्दयोः—'सञ्चिन्तयेद्भगवतश्चरणारविन्दं वज्राङ्कुशध्वजसरोरुहलाञ्छनाढ्यम्।' 'शङ्खचक्रगदापद्मैरङ्कितं

पादपङ्कजम् ।' इत्यादौ । पूर्वाचार्यैरप्येवमेवानुसहितानि 'कदा पुन' शङ्खरथाङ्गकल्पकध्वजारविन्दाङ्कुशवज्रलाञ्छनम् । त्रिविक्रम त्वच्चरणाम्बुजद्वय मदीयमूर्धानमलङ्करिष्यति ॥' 'वज्राङ्कुशध्वजसरोरुहशङ्खचक्रमत्सीसुधाकलशकल्पककल्पिताङ्कम् । त्वत्पादपद्मयुगल विगलत्प्रभाभिर्भूयोऽभिषेक्ष्यति कदानु शिरो मदीयम् ॥' 'शिञ्जानश्रुतिशिञ्जिनीमणिरवैर्वज्रारविन्दध्वजच्छत्रीकल्पकशङ्खचक्रमुकुरैस्तैस्तैश्च रेखामयै । ऐश्वर्येण जय त्रिविक्रममुख घुष्यद्भिराम्रेडित श्रीरङ्गेशयपादपङ्कजयुग वन्दामहे सुन्दरम् ॥' इत्यादौ । एव परमपुरुषचिह्नाना सर्वेषा श्रीहरेश्चरणारविन्दयोर्दर्शनात्परमपुरुषत्व शक्यमवधारयितुम् । किञ्च श्रीवत्सशङ्खचक्रादे परमपुरुषासाधारणचिन्हभूतस्य श्रीहरिणा तत्र तत्र स्वस्वरूपे प्रदर्शितत्वाच्च परमपुरुषत्वं सुस्थिरमेव । विस्तरस्तु साम्प्रदायिकग्रन्थतोऽवसेय ।

## स्वामिनारायणशब्दनिरुक्ति ।

अस्य च स्वामिनारायणेति शुभ नाम सुतरा प्रसिद्धिमुपगत ध्यानजपादौ विनियुज्यते नाम । इद नाम व्यस्त समस्त च प्रयुज्यते श्रीहरौ 'स्वामिनारायणाख्यया । प्रसिद्धोऽस्ति' 'स्वामिनारायणाख्यश्च स्वाम्याख्यश्च विराजते' 'भक्तौ धर्मत आस भूरिकृपया श्रीस्वामिनारायण ' 'स्वामिनारायण स्वामी' 'स्वामी ब्रह्म परब्रह्म ॥' इत्यादौ । स्वामी चासौ नारायणश्च स्वामिनारायण । स्वामी—सर्वस्य पतिः सर्वैश्वर्यसम्पन्न । 'स्वामिन्नैश्वर्ये' इति सूत्रात् । नारायणः—सर्वान्तर्यामी सर्वाधारः । नरस्य नराकारस्य धर्मस्यापत्यमिति वा । सर्वैश्वर्यसम्पन्न सर्वशेषी सर्वान्तर्यामी

सर्वाधारः साक्षाद्धर्मनन्दनः स्वामिनारायणशब्दार्थ इति यावत्। 'स्वामिनारायणे' ति षडर्णो मन्त्रश्च सदा जप्योऽस्त्यस्मिन् सम्प्रदाये। अक्षरधामाधिपतेः श्रीकृष्णस्यैव साधुधर्मरक्षार्थमधर्मनिरासाय च साक्षात्प्रादुर्भावरूपत्वादस्यैव ध्यानार्चनादि विशेषतो निःश्रेयसार्थमनुष्ठीयते चास्मिन् सम्प्रदाय इति स्थितम्। एतत्सम्प्रदायमहत्ता चोक्ता हरिदिग्विजये 'स्तेयं मांसं परस्त्रीगमनमथ सुरापानमुन्मूलयानो मानं मोहं च लोभं मदमदनरुषः कर्षयन् जीवहिंसाम्। शुष्कज्ञानं सकौलं भुवि चरमदशां प्रापयन् भक्तिधर्मौ पुष्यन् व्यभ्राजदूर्ध्वं सकलमतवतामौद्धवः सम्प्रदायः॥' इति।

एतत्सम्प्रदायेऽत्यन्ताभिमतानां प्रमाणग्रन्थानामिष्टदेवस्य च विवरणं सुधासिन्धौ कृतम्—'ग्रन्थास्त्वभीष्टा अष्टौ हि भवन्त्युद्धववर्त्मनि। वेदाश्च व्याससूत्राणि श्रीमद्भागवतं तथा॥ विष्णुनामसहस्राख्यं स्तोत्रं भगवतोदिता। गीता विदुरनीतिश्च भारतस्थमिदं त्रयम्॥ श्रीवासुदेवमाहात्म्यं तथा स्कन्दपुराणगम्। याज्ञवल्क्यस्मृतिश्चेति ग्रन्था अष्टौ प्रकीर्तिताः॥ त्यागिनां च गृहस्थानां धर्मा ये च पृथक्पृथक्। श्रीवासुदेवमाहात्म्याद्विज्ञातव्या अशेषतः॥ इष्टदेवस्तु भगवान् श्रीकृष्णो राधिकापतिः।' इत्यादिना।

अभीष्टग्रन्थाष्टके च विशेषांशा उक्ताः शिक्षापत्र्यां 'तत्राचारव्यवहृतिनिष्कृतानां च निर्णये। ग्राह्या मिताक्षरोपेता याज्ञवल्क्यस्य तु स्मृतिः॥ श्रीमद्भागवतस्येषु स्कन्धौ दशमपञ्चमौ। सर्वाधिकतया ज्ञेयौ कृष्णमाहात्म्यबुद्धये॥ दशमः पञ्चमः स्कन्धो याज्ञवल्क्यस्य च स्मृतिः। भक्तिशास्त्रं योग-

शास्त्र धर्मशास्त्र क्रमेण मे ॥ एतेषु यानि वाक्यानि श्रीकृष्णस्य वृषस्य च । अत्युत्कर्षपराणि स्युस्तथा भक्तिविरागयो । मन्तव्यानि प्रमाणानि तान्येवेतरवाक्यत । धर्मेण सहिता कृष्णभक्ति कार्येति तद्रह ॥' इति । तथा तत्रैव व्याससूत्रभगवद्गीताशास्त्रयो श्रीमद्रामानुजाचार्यभाष्यसहितयोरेव स्वाभिमताध्यात्मशास्त्रत्वमिति च प्रकटीकृत श्रीहरिणा । तथा 'मत विशिष्टाद्वैत मे' इति कीर्तनात्स्वप्रवर्तितस्योद्धवसम्प्रदायस्य श्रीरामानुजार्यप्रवर्तितश्रीविशिष्टाद्वैतसिद्धान्तमूलकत्वमपि समसूचि । तथा "रामानुजाचार्यमतश्चोपास्य पुरुषोत्तम ॥" इति परतत्त्वविषये रामानुजमतान्न स्वमतस्य भेद इति च व्यक्तीकृत सुधासिन्धो । अवान्तरविषयेष्वाचरणेषु चेषाल्पो भेदो दृश्यते नाम । अत्रेदमनवेयम् । यथा पूर्वतन एव स स सिद्धान्तस्तीर्थकरैस्तैस्तैर्देशकालाधिकारिभेदेन तदा तदा कतिपयविशेषांशपूरणादिना परिष्कृत्य प्रवर्तितः, तथा पूर्वतन एव विशिष्टाद्वैतसिद्धान्तोऽपि प्रकृतदेशकालस्थास्तिकजनतामनोरञ्जकैः कतिपयैर्विशेषैर्विशेषित परिष्कृत्य प्रवर्तितः सत्सङ्गिजनावनाय श्रीसहजानन्दस्वामिनेति । विशेषांशाश्चात्रत्याः विस्तरतोऽवसेया साम्प्रदायिकग्रन्थत । इत्यल विस्तरेण ।

चातुर्वर्ण्यकृतव्यवस्थ इह सद्गुर्वादिसशीलित
श्रुत्यादिप्रथिताष्टशास्त्रघटितो बोधप्रबन्धोज्ज्वलः ।
धर्मज्ञानविरागशोभिभगवद्भक्तिं च सम्पापयन्
अध्वा ह्यौद्धव एष सर्वसुखदो जागर्ति सद्भि' श्रितः ॥
गोलोके दिव्यलोके प्रकृतिघनतमःपार ऊर्ध्वं च चित्खे
तीरे वै दिव्यधुन्या भगवति नियत भक्तिमद्भिस्तु गम्ये ।

गत्या नाम्नार्चिराद्या बहुतरमहसि ज्ञानशक्तेररोधात्
वैकुण्ठाख्येऽक्षरे धाम्न्यनिशमभिचकास्ति श्रिया कृष्णदेवः ॥
स एव राधारमणो युगेयुगे स्वेनैव रूपेण जगद्धितार्थम् ।
धृत्वाऽवतारान् बहुभक्तवर्गाञ्निनाय धाम स्वमकुण्ठधामा ॥
स एव कालेऽपि कलौ सुरद्विड्वर्गैस्तु धर्मे प्रतिहन्यमाने ।
महीतले धर्मगुरुक्षितीशबन्ध्वादिवेषैः प्रकटो बभूव ॥
वैराग्यपूर्वं निजभक्तियोगं विस्तारयन् देशिकवेषरम्यः ।
ऐश्वर्यमुख्यैश्च गुणैः सुपूर्णः श्रीस्वामिनारायण एष नोऽव्यात् ॥

## उपसंहारः ।

मानं च मेयं द्विविधं पदार्थजातं विभक्तं खलु तत्र चाद्यम् ।
मतं त्रिधाऽन्त्यं तु मतं द्विधा च द्रव्यं च तद्भिन्नमिहादिमं तु ॥
धर्मित्वमाप्नोत्यपरं च नित्यं द्रव्यस्य धर्मो ह्यपृथक्स्थितत्वात् ।
अतोऽप्रधानानविवक्षयित्वा षड्द्रव्यमात्रं जगदुः परे तु ॥
तत्रापि मायीयपदार्थजातावच्छेकत्वेन पृथग्विवक्षा ।
यदा न कालस्य तथा च बुद्धेः पुंधर्मतातोऽक्षरदिव्यधाम्नः ॥
परस्य रूपस्य विशेषकत्वात्तदा तु तत्त्वं त्रिविधं मतं वै ।
माया पुमानीश्वर इत्ययं च तत्त्वस्य संख्यानविधिः प्रसिद्धः ॥
तत्रैव पुंसः खलु धर्मभेदविवक्षया पञ्चविधं च तत्त्वम् ।
निरूपितं ह्यौद्धवसम्प्रदाये ग्रन्थे सुधासिन्धुमुखे विविच्य ॥
तत्त्वत्रयं चैव हरिस्तु शिक्षापत्र्यां सुबोध्यं स्वयमन्वशास्त ।
अत्रापि तच्छैल्यनुशीलनाद्वै तत्त्वत्रयं विस्तरशो व्यशोधि ॥
मायापुमांसावपि धर्मभावात्पृथग्विवक्षां न यदा भजेते ।
तदा तु सर्वेश्वर एक एव सर्वप्रकारः परिनिष्ठितः स्यात् ॥

अथ विशिष्टैक्यमतस्य सारः एवं क्वचिद्ब्रह्मण एव कीर्त्या ।
शास्त्रेषु भेदस्य सतो निषेधो जीवेश्वरादेर्न विवक्षितः स्यात् ॥
एकः समासादयमर्थसारो ह्येतत्प्रबन्धस्य च धारणाय ।
मानस्य मेयस्य च तत्त्वभेदसुखावबोधाय कृतिस्त्वियं स्यात् ॥
मूलं च सम्प्रदायस्य प्रकारा अपि वर्णिताः ।
औद्धवाख्यस्य सत्सङ्गिजीवनादौ तु विस्तरः ॥
भूयात्प्रकरणं ह्येतद्विशिष्टाद्वैतगोचरम् ।
औद्धवाध्वानुगचित्तरञ्जनाय सुमेधसाम् ॥
लघुवाक्कुसुमस्तोमेन स्वपदार्पितेन च ।
भगवान् सहजानन्दस्वामी सम्प्रीयतां हरिः ॥

पञ्चव्योमखनेत्राङ्के ( २००५ ) वैक्रमाब्दे प्रकाशिका ।
वसन्ताख्यदिने सेयं प्रकटा राजतां चिरम् ॥

इति श्रीमद्भगवत्सहजानन्दस्वामिचरणकमलैकपरायणस्य

( परमसद्गुरुवर्यशुकानन्दस्वामिशिष्यसद्गुरुश्रीघनश्यामचरणदासशिष्यस्य )

सद्गुरुशास्त्रिश्रीहरिजीवनदासस्य कृतिः

मानमेयप्रकाशिकानामकं प्रकरणं

समाप्तिमगमत् ॥

---

# शुद्धिपत्रिका ।

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २ | ६ | फलमिति | फलमित्येव तु |
| ३ | २१ | 'यदिदं | य 'दिदं |
| ११ | ४ | मालज | मालाज |
| १२ | ६ | नेति अश्व | नेति । अश्व |
| ,, | १७ | तत्तदेश | तत्तद्देश |
| १३ | १९ | न्याश्चक्षु | न्या अस्याश्चक्षु |
| ,, | २० | नापि स्मर | नापीदं स्मर |
| ,, | ,, | लब्धिसहकृतं चाक्षुष | लब्ध्यादिसहकृताक्षज |
| १४ | ३ | वधृते | वधृतं |
| १५ | १६ | गृह्यते । न च | गृह्यते, न च |
| १७ | ३ | वगतः | धिगतः |
| १७ | ४ | तदवगमः | तदधिगमः |
| १८ | १८ | प्रभा | प्रमा |
| २२ | १९ | पक्षमा | प्रथमा |
| २३ | १७ | यादिप्रस | यादि प्रस |
| २६ | १८ | भवति | धर्मिणि |
| ३० | २ | प्रसङ्गश्च | प्रसङ्गश्चेति । |
| ३२ | १५ | विघटकस्व | विघटकत्व |
| ३५ | १ | दिति । नेतर | दिति नेतर |
| ३६ | ९ | वादिन | वादिनः |
| ४२ | १४ | ऐन्द्रियकत्वात् | ऐन्द्रियिकत्वात् |
| ४५ | १८ | कालान्यया | कालात्यया |
| ४८ | १७ | भावाग्राहि | भावग्राहि |
| ५० | ७ | योऽस्तु | योस्तु |

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ५५–१९ | | चैषा | चैषां |
| | ,, | माख्या स्मृत | चाख्या स्मृत |
| ५६ | ११ | प्रणनयना | प्रणयना |
| ६१ | १७ | गो प्रमेय | गो प्रमेय |
| ७८ | ११ | त्रष्टाके | त्राष्टके |
| ८० | ५ | चेतत् त्रिका | चेवत्रिका |
| ८७ | ७ | प्रोक्त | मोक्त |
| ९१ | ११ | खासाधा | खासाधा |
| ,, | | तथाच । न | तथा । न च |
| ९४ | २२ | चलतीति | चलतीतीति |
| ९५ | ६ | प्रत्यक्ष | प्रत्यक्ष |
| ९६ | १४ | पृथिव्यादि | पृथिव्यादि |
| ,, | २२ | त्स्फटिका | त्स्फटिका |
| ९८ | १६ | भिघात | भिघात |
| ९९ | १४ | सा ध्य | साध्य |
| १०१ | १७ | दनात् । सर्वज्ञः | दनात् 'सर्वज्ञः |
| १०५ | ३ | चा विभु | वा विभु |
| १०५ | ४ | तात्पर्यात् । | तात्पर्यम् । |
| १०८ | ९ | यथा | यथा– |
| १११ | २३ | चेतनवजीव | चेतनश्चेज्जीव |
| ११३ | १६ | वृन्दं, कपि– | वृन्द कपि – |
| ११५ | ४ | सङ्ख्याया | सङ्ख्या |
| ११६ | २३ | प्रकरो | प्रकारो |
| ११८ | २३ | । गच्छति–चनयति | चनयति । गच्छति– |
| १२६ | १७ | बोध्यम् | बोऽध्यम् |
| | २० | बहुत्व | बहुत्व |

| पृ० | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १२८ | २ | द्रव्यत्वात् | द्रव्यत्वात्। |
| ,, | १२ | सङ्ख्यवि- | सङ्ख्यावि- |
| ,, | १३ | कार्यद्रव्यारब्धत्वं | अवयवसङ्ख्या च |
| १२८– | १५ | महत्त्वेऽ- | महत्त्वादाव |
| ,, | १७ }<br>१८ } | महत्त्वस्य— | महत्त्वादेः |
| १२८– | १८ | महत्त्वप्र- | महत्त्वादिप्र |
| १३२ | १३ | वादः नैया | वादो नैया |
| १३३ | ९ | मधिकता | मधिकतो |
| ,, | ,, | स्वकार्यें | स्वकार्य |
| १३५ | २० | ननूधः | स तूधः |
| १३६ | १ | ननुन्यग्रोध | किञ्च न्यग्रोध |
| १३७ | ७ | चित्ताख्ये | चिन्ताख्ये |
| १४४ | ५ | त्रैविध्यम्। हरि | त्रैविध्यं हरि |
| ,, | २२ | किं | किमिति |
| १४९ | १३ | भवन्तुराज- | भवन्तु मनोवद्राज- |
| १५५ | १९ }<br>२३ } | त्कामणं | त्क्रमणं |
| ,, | २२ | नारायणेन | बादरायणेन |
| ,, | २४ | अभ्यादिश्रु | अभ्यादिगतिश्रु |
| १५८ | १ | नि.सा | निस्सा- |
| ,, | २ | देतत् पक्ष | देतत्पक्ष |
| १६७ | ९ | तत्यत्र | इत्यत्र |
| १७१ | ७ | लभ्यं | लभ्भं |
| १७२ | १९ | भामस्येव | भागस्येव |
| १७७ | २० | भास्वरशुक्रम् | भास्वरं रूपम् |
| १८८ | १२ | न्विच्छत् | न्विच्छन् |

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १९१ | ४ | वर्णिता | वर्णिता |
| १९२ | ४ | कवचा | कवचा॰ |
| १९२ | ७ | शीर्ष्णा | शीर्ष्णां |
| १९२ | २३ | योजनानि | योजनानां |
| १९६ | १६ | मानीभि | मानिनीभि |
| १९७ | २१ | ज्ञातवेदस | जातवेदो |
| २०० | २० | सुपर्णोदय | सुपर्णोदय॰ |
| २०३ | १ | स्थारा | स्थावरा |
| २०४ | २० | आर्यभट्टेन | आर्यभठेन |
| २०५ | ७ | खिलाद्यो | खिलादय॰ |
| २०६ | ६ | र थ | रथ |
| २१२ | १० | सहस्रदिने | सहस्र दिन |
| २१२ | २३ | धंपर्या तावधि | धान्तावधि |
| ,, | ,, | मथा | मथा |
| २१३ | २३ | करणत्वं च | करणत्वं च न |
| २१५ | २ | प्रकृता | आकृता |
| २१९ २२० | १५ १६ | शालिकनाथ.— | शालिकनाथ॰ |
| २२२ | १० | निर्विकार | निर्विकार |
| २२४ | ११ | वितत्वात् | वितत्वाकारा प्राण॰ । |
| | २० | दर्पोपरक्ता | दर्पाकारा |
| , | २२ | विषयोपरक्ता | विषयाकारा |
| २२५ | ३ | सत्स्वपि | सत्स्वपि वा |
| २२९ | ८ | विवदतो | विवदमानयो |
| २३२ | ९ | कृत्स्नो | कृत्स्नः |
| २३४ | १० | प्रवर्तेते | प्रवर्तेत |

| ` | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २३५ | १२ | वचसां | वचसा |
| ,, | २३ | यत्व | यत्वव |
| २३६ | ५ | भ्रम । इति | भ्रम इति |
| २३८ | १९ | पञ्चत्वस्य | पञ्चस्वस्य |
| २३९ | १८ | शक्त्यापाद | शक्त्युद्बोधापाद |
| २४४ | ४ | परमि | परिमि |
| ,, | ७ | परमि | परिमि |
| २४७ | ३ | व्यवदेशा | व्यपदेशा |
| २५१ | ७ | वृति | वृत्ति |
| २५२ | १० | चिच्छन्द | चिच्छन्दः |
| २५३ | ७ | ( अनादिः ) | ( अनादिमुक्तः ) |
| २५४ | १४ | •रशीति स | रशीतिलक्षस |
| २५९ | १५ | दब्रुति | दब्रेति |
| २६० | २३ | सम्पाद | सम्पद |
| २६३ | २० | वेंत्तुं | वेंत्तु |
| २६७ | २१ | मुक्ति | मुक्ते |
| २७५ | ७ | विहीनान् | विहीना |
| २७६ | ६ | वृतत्व | वृत्तत्व |
| २७८ | ११ | तथापि च' | तथापि तु' |
| २८० | १२ | देहमानं | देहभानं |
| २८० | १९ | पालयस्तं | पाल्यंस्तं |
| २९१ | १७ | यथा । | तथा । |
| २९८ | १७ | क्लिष्टम् । | क्लिष्टमयुक्तं च । |
| ३०० | २२ | रुपाधि | रुपधि |
| ३०३ | २० | युगलः' | युगल' |
| ,, | २२ | लङ्कर्तुं | लङ्कर्तुं |
| ३०४ | १९ | स्वास्तै | स्वास्त्रै |

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ३०९ | १८ | वर्तत इति । | वर्तते । |
| ,, | २० | व्यवहार । | व्यवहार इति । |
| ३१२ | ७ | न्तृका | न्तुका |
| ,, | २० | ही | हीं |
| ३२३ | ९ | यामयथ | यामथ |
| ३२४ | १८ | मह्यति | मुह्यति |
| | १९ | ब्रह्मण | बृह्मण |
| ३२९ | ९ | मह्नल | मङ्गल |
| ,, | १६ | न्वर्मो | न्वर्भो |
| ३३७ | २३ | ज्ञानवता | ज्ञातवता |
| ३४२ | १० | भावे हि | भावेऽपि |
| ,, | ११ | तत्त्वपरा | तत्त्वापरा |
| ३४७ | ७ | वादन | वदन |
| | | इव च । | इद च |
| ३५२ | ४ | प्रज्ञामात्र | प्रज्ञामात्रा |
| ३५५ | ७ | पित्वा | मत्वा |
| ३६५ | २३ | विभूती | विभूते |
| ४०४ | ९ | तच्छारीरकं | तच्छरीरकं |
| ४२० | २० | च्छ्रूतम् | च्छ्रुतम् |
| ४२२ | २० | नेऽखिल | ने खिल |
| ४२५ | ५ | मेच्छिकी | ऐच्छिको |
| ४३७ | १९ | सुरि | सूरि |
| ४५१ | ७ | सुरि | सूरि |
| ४६१ | १६ | प्रकाशाति | प्रख्याति |
| ४६२ | ८ | माजुणी | मानुषी |
| ४७३ | १६ | कार्योर्थो | कार्योर्थो |
| ,, | २३ | षड्डेन | षड्केन |

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ४७५ | १३ | सर्वा | सर्वे |
| ४८६ | ६ | भूभारःक्षयितो येन— | ययाहरद्भुवो भारं |
| ४८८ | १६ | कला विष्णोः | कला पुंसः |
| ४८९ | १ | रूपत्त्वाच्च | रूपत्वाच्च |
| ४९० | ६ | यर्पिता | यर्पिता |
| ,, | ,, | अक्रूरेण | अक्रूराय |
| ५१९ | १५ | जाचार्यं | जाचार्यं |
| ५२२ | १० | तत्त | तत्तु |
| ५२६ | २२ | लक्ष्माणां | लक्ष्मणा |

अतिस्फुटोपलम्भा याः काश्चिदत्र त्वशुद्धयः।
न ता विशोधितास्त्वन्याः प्रायशोऽत्र विशोधिताः॥
गच्छतः स्खलनं क्वापि भवेदिति समाहितैः।
सर्वा अशुद्धयोऽप्येवं शोध्याः प्राज्ञैर्दयापरैः॥